आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः ८३

अग्निचित्पुरुषोत्तममिश्रकृतसुबोधिनीटीकया रामतीर्थविरचितान्वयार्थ-
प्रकाशिकया टीकया च समेतं

# संक्षेपशारीरकम्



अस्य प्रथमाध्यायरूपः प्रथमो भागः ।

एतत्पुस्तकं
वे० शा० रा० रा० वैद्योपाह्वरङ्गनाथशास्त्रिभिः
संशोधितम् ।

तच्च
हरि नारायण आपटे
इत्येतैः
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३९
खिस्ताब्दाः १९१८



मूल्यं सार्धरूपकचतुष्टयम् ( ४।।८ ) ।

## आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८३

अग्निचित्पुरुषोत्तममिश्रकृतसुबोधिनीटीकया रामतीर्थविरचितान्वयार्थप्रकाशिकया टीकया च समेतं

# संक्षेपशारीरकम्

अस्य प्रथमाध्यायरूपः प्रथमो भागः ।

एतत्पुस्तकं

वे० शा० रा० रा० वैद्योपाह्वरङ्गनाथशास्त्रिभिः

संशोधितम् ।

तच्च

**हरि नारायण आपटे**

इत्येतैः

पुण्याख्यपत्तने

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३९

खिस्ताब्दाः १९१८



मूल्यं सार्धरूपकचतुष्टयम् ( ४।८ ) ।

# प्रस्तावना ।

टीकाद्वयसमेतस्य संक्षेपशारीरकस्य संक्षेपतः प्रस्तावनाऽभिलिख्यते ।

यत्प्रसादाज्जगदिदं परमानन्दमश्नुते ।
तं श्रीयतीश्वरं साक्षादत्रिसूनुं नमाम्यहम् ॥ १ ॥

भो भो महाशयाः पण्डितवरा विदितमेवैतद्भवतां यदस्मिंस्तापत्रयपरिप्लुते निःसारे संसारे सच्चिदानन्दं परब्रह्म विहायान्यद्वस्तु न किंचिदपि विद्यते । तथाऽपि नैतत्प्रथममेव कृतशास्त्रपरिश्रमेणापि केनचिज्ज्ञातुं शक्यते । कुतः पुनरनधिगतशास्त्रैर्मन्दधीभिः । यतोऽयं संसारो धनवनितारूपभ्रमाधिष्ठितबहिर्मुखसकलमानवः प्रायो गुरुशास्त्रोपदेशसमासादितात्मसाक्षात्कारवद्भिरनलंकृतः । ईदृशेऽतिकष्टमये विधातृविनिर्मिते प्रपञ्चे दुर्लभैव प्रथममन्तर्मुखवृत्तिः । कदाचित्कस्यचित्पूर्वोचरितपुण्यपुञ्जस्य तत्परिपाकवशाद्गृहादिषु जातानादरस्याऽऽदरतः श्रौतस्मार्तकर्मानुष्ठानक्षपितमनोमलस्यैव श्रेयःसाधने मतिरुदेति । यदि न विघ्नबाहुल्येन भग्नोत्साहस्तदा प्रयतते च स तत्त्वज्ञानसंपादनाय । नातिचिरं भगवत्कृपयैव निरस्तसमीहितप्राप्तिविघ्नः सद्गुरूपदिष्टमार्गेणैव स समधिगतपरमार्थतत्त्वः कृतकृत्यो भवति । एतादृशो हि कश्चिन्महात्मा निजकर्मवशात्संसारवारांनिधौ पुनः पुनर्निमज्जतो जनानुद्धर्तुकामः श्रुतिनिगूढमात्मतत्त्वं बोधयितुं स्वानुभवपूर्वकं ग्रन्थं निर्मायोपदिशति । गुरूपदेशं विना नैतदात्मतत्त्वं तर्केणाऽऽकलयितुं शक्यं ' नैषा मतिस्तर्केणापनेयेति श्रुतेः । तादृशः किल भगवान्बादरायणो जनानुग्रहायोपनिषत्सु प्रदर्शितमात्मतत्त्वं ख्यापयितुं सूत्राध्यायचतुष्टयीं प्रणिनाय । ततश्च व्याससूत्राणां दुर्विज्ञेयतामाकलय्य भगवद्भिः शंकरगुरुभिः शारीरकमीमांसाभिधं भाष्यं निरमायि । सूत्रभाष्यस्यापि काठिन्यं विज्ञाय तत्रभवद्भिः सुरेश्वरशिष्यैः सर्वज्ञात्ममहामुनिभिर्मुमुक्षुबोधाय भाष्याशयं व्यक्तं कर्तुं संक्षेपशारीरकाख्योऽयं पद्यमयोऽध्यायचतुष्टयात्मको ग्रन्थो निर्मितः । ग्रन्थेऽस्मिन्नमुना विदुषा प्रमेयविचारोऽतिस्पष्टतया निरूपितः । अनतिरमणीयोऽप्ययं ग्रन्थो न मन्दधियां बुद्धिपथमवतरिष्यतीत्यतो महाव्रताग्निचिन्मिश्रपुरुषोत्तमपण्डितैः सुबोधिन्या टीकया विभूषितः । तथाच रामतीर्थस्वामिभिरन्वयार्थप्रकाशिकया व्याख्यया च समलंकृतः । मयाऽल्पधिया टीकाद्वयोपेतोऽयं ग्रन्थः सहजतयाऽध्येतृणां रसिकप्रेक्षकाणां च मनः संतोषयेदिति विचार्य वे० शा० काशीनाथशास्त्री आगाशे इत्येतेषां साहाय्येन संशोधितः । यथामति शोधितेऽप्यत्र पुंदोपसुलभतया जायमानानि स्खलितानि सहन्तां दयालवो गुणैकपक्षपातिनो महान्तः सहृदया इति साञ्जलिबन्धं प्रार्थ्यते ।

वैद्योपनामक-
रङ्गनाथशर्मा.

# आदर्शपुस्तकोल्लेखपत्रिका ।

सटीकस्यास्य संक्षेपशारीरकग्रन्थस्य शोधनावसरे यैर्महाशयैः परोपकृतये पुस्तकानि प्रदत्तानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

अग्निचित्पुरुषोत्तमपण्डितकृतसुबोधिनीटीकायाः पुस्तकानि—

( क. ) इति संज्ञितम्—पुण्यपत्तननिवासिनां रा० रा० मोरोबादादा फडणीस इत्येतेषाम् ।

( ख. ) इति संज्ञितम्—पुण्यपत्तननिवासिनां रा० रा० तात्यासाहेब खाजगिवाले इत्येतेषाम् ।

( ग. ) इति संज्ञितम्—पुण्यपत्तननिवासिनां रा० रा० मोरोबादादा फडणीस इत्येतेषाम् ।

स्वामिरामतीर्थकृतान्वयार्थप्रकाशिकाटीकायाः पुस्तकानि—

( क. ) इति संज्ञितम्—यवतमाळनिवासि रा० रा० दत्तात्रेय गणेश द्रविड स्कूलमास्तर इत्येतेषाम् ।

( ख. ) इति संज्ञितम्—केवलचतुर्थाध्यायमात्रं पुण्यपत्तनस्थडेक्कनकालेजस्थम् ।

मूलपुस्तकानि—

( क. ) इति संज्ञितम्—पुण्यपत्तनस्थ रा० रा० मोरोबादादा फडणीस इत्येतेषाम् ।

( ख. ) इति संज्ञितम्—यवतमाळस्थ रा० रा० दत्तात्रेय गणेश द्रविड स्कूलमास्तर इत्येतेषाम् ।

( ग. ) इति संज्ञितम्—पुण्यपत्तनस्थ रा० रा० मोरोबादादा फडणीस इत्येतेषाम् ।

( घ. ) इति संज्ञितम्—पुण्यपत्तनस्थदामले इत्युपाह्वानां वे० शा० रा० केशवशास्त्रिणाम् ।

ग्रन्थस्यास्य प्रथमाध्यायमुद्रणोत्तरं संकेश्वरमठस्थशंकराचार्याणामन्वयार्थप्रकाशिकाटीकापुस्तकं समूलं काश्यां मुद्रितं समागतम् ।

तत एव प्रथमाध्यायस्य त्रुटिः परिशिष्टरूपेणास्माभिः पूर्णतामापादिता । अस्य मुद्रणकालः इसवी सन १९१२ ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।




ॐ तत्सद्ब्रह्मणे नमः ।

सर्वज्ञात्ममहामुनिविरचितं

# संक्षेपशारीरकम् ।

अग्निचित्पुरुषोत्तममिश्रकृतसुबोधिनीकृष्णतीर्थविरचि-
तान्वयार्थकाशिकाभ्यां समेतम् ।

सु०टी०—खेलया करनिरुद्धभूधरं हेलया दलितमत्तकुञ्जरम् ।
छद्मना विजितपद्मसंभवं केशवं किमपि शैशवं भजे ॥ १ ॥
आदरेण भगवत्परायणं मूर्तिमन्तमिव बादरायणम् ।
रामतीर्थमिह नौमि तं गुरुं श्रद्धया दिव इवाऽऽगतं गुरुम् ॥ २ ॥
उपकाराय धीराणामग्निचित्पुरुषोत्तमः ।
श्रीमत्संक्षेपशारीरे निबध्नाति सुबोधिनीम् ॥ ३ ॥

शास्त्रारम्भे सदाचारप्राप्तमिष्टदेवतातत्त्वानुस्मरणात्मकं मङ्गलमाचरन्नेव तत्र श्रोतृप्रवृत्त्यङ्गविषयप्रयोजनसंबन्धानाद्यैश्चतुर्भिः श्लोकैर्दिदर्शयिषुराचार्यः प्रथमं विषयोक्तिपरं श्लोकद्वयमवतारयति—

अनृतजडविरोधि रूपमन्तत्रयमलबन्धनदुःखताविरुद्धम् ।
अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमि ॥ १ ॥

अनृतेत्यादि । अत्र हि प्रत्यग्ब्रह्मणोरैक्यमज्ञातं विषयस्तच्च प्रथमश्लोके तत्पदार्थप्राधान्येनोच्यते । द्वितीये त्वंपदार्थप्राधान्येन । तृतीये जीवब्रह्मभेदकबुद्धिमायाद्युपाधितिरस्कारेण पदार्थद्वयशोधनपूर्वकं प्रत्यग्ब्रह्मैक्यमेव ज्ञातं सत्प्रयोजनीभूतमभिधीयते । चतुर्थे तु वाग्देवताप्रणतिप्रसङ्गेन विषयफलाभ्यां सह शास्त्रस्य संबन्धः प्रतिपाद्यते । अत्र मुरारिः सत्त्वप्रधानमायाप्रतिबिम्बितं चैतन्यं जगत्पालकं विष्ण्वाख्यं तस्य परमं मायासंबन्धरहितं बिम्बात्मकं पदं पद्यते गम्यते ज्ञायते वा मुमुक्षुभिरिति तदभिष्टवीम्याभीक्ष्ण्येन स्वग्रन्थे निरूपयामीत्यर्थः । 'तुरुस्तुशम्यमः सार्वधातुके' इति स्तौतेरीडागमः । यद्वा 'मुर संवे-

१ क. °स्तत्वा° । २ क. ग. स्वयं प्र° ।

ष्टने' इति तौदादिकस्येगुपधकप्रत्ययान्तस्य रूपं मुराति संवेष्टते स्वस्वरूपमिति मुरोऽज्ञानं तन्निवृत्तिरूपत्वेन तद्विरोधिभूतं तत्पदलक्ष्यं बिम्बचैतन्यमेव मुरारिस्तस्य परमपदं स्वरूपमेव यथा राहोः शिर इति । तच्च परमं माभ्यः परं सर्वप्रमाणपथातीतम् । यद्वा परा मा परिमाणं यस्य तत्परममपरिच्छिन्नमित्यर्थः । तच्च पद्यते मोहादप्राप्तमिव प्राप्यत इति पदमभिष्टवीम्याभिमुख्येन प्रत्यगभेदेन तदेकाग्रचित्तः स्मरामीत्यर्थः । अत्र गुणकीर्तनात्मकस्तुतेर्निर्गुणे वस्तुन्यसंभवादुपचाराश्रयणम् । तस्य तथा स्मरणे हेतुमाह—प्रणयादिति । प्रकृष्य नयः प्रणयः प्रत्यगर्थस्य भागलक्षणया विरुद्धांशात्प्रकृष्य तत्पदार्थं प्रति नयनादित्यर्थः । यद्वा प्रणयो भक्तिस्तया हि प्रत्यगभिन्ने ब्रह्मणि चित्तमेकाग्रं भवति, 'भजतां प्रीतिपूर्वकं ददामि बुद्धियोगं तम्' [ गी० १० । १० ] इत्यादिभगवद्गीतोक्तेः । ननु यदि मुरारेः परमपदं सकलप्रमाणपथातीतमपरिच्छिन्नं च तर्हि कुतस्तस्य प्रमाणाननुभूतस्यानन्तस्याहमिहैवास्मीत्यात्मानो व्युच्चरन्ति, इत्यनुभवश्रुतिबोधितान्तत्रयवत्प्रत्यगभेदः स्मरणं वा स्यादित्याशङ्क्य तस्य स्वप्रकाशचिद्रूपतया प्रमाणावेद्यत्वेऽपि वेदान्तवाक्यजब्रह्माकारवृत्त्यभिव्यङ्ग्यतया चिद्वदनुभवगोचरत्वान्न स्मृत्यनुपपत्तिः । नापि प्रत्यगभेदासंभवस्त्वंपदलक्ष्यस्य निकृष्टोपाधेरनन्तत्वादित्यभिप्रेत्य वेदान्तसिद्धं तत्स्वरूपं दर्शयति पूर्वार्धेन । तत्रानृतजडविरोधीति च्छेदः । अनुपलब्धिबाधात्खपुष्पकल्पं तदित्यवैदिकस्याऽऽशङ्कामुद्धर्तुं विशिनष्टि—रूपमिति । जगतो वास्तवं रूपमित्यर्थः । रूप्यते ह्यनेन सर्वं जगदिति सर्वाधिष्ठानत्वात्साक्षितया सर्वसाधकत्वाच्च, तदभावे हि निःस्वरूपमसाक्षिकं सन्न किंचित्सिध्येदित्यवश्याभ्युपेयं तदिति भावः । ननु कुत एतत्सत्यस्य जगतोऽधिष्ठानानपेक्षत्वादित्याशङ्क्य युक्तिभिः प्रपञ्चमिथ्यात्वस्याग्रे प्रपञ्चनीयत्वात्तदुपेक्ष्य 'ब्रह्मैवेदं सर्वम्' [ नृसिं० उ० ७ ] इति । 'इदं सर्वं यदयमात्मा' [ नृ० उ० ५ ] इति ।

'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्' ॥

---

१ ख. मा मानं प॰ । २ क. °मि भक्तियो॰ । ३ क. ग. °जत्रय॰ । ४ क. ग. °दृवेद्यस्य । ५ क. ग. °र्थादिग्गुनत्वा° । ६ क. ग. य इ° ।

इत्यादिश्रुतिपुराणप्रामाण्यात्परत्र पराध्यासत्वादिलक्षणयोगाच्च ब्रह्मण्यध्यस्तमेव सर्वं जगन्न सत्यमिति वेदयितुं ब्रह्मणः प्रपञ्चविलक्षणमधिष्ठानस्वरूपमध्यस्तप्रपञ्चाद्विविच्योपन्यस्यत्यनृतेत्यादिना । अत्रानृतत्वं बाध्यत्वं जडत्वमचेतनत्वमन्तत्वं देशकालस्वरूपपरिच्छेद इति प्रपञ्चधर्माः। ब्रह्म तु 'सत्यं ज्ञानमनन्तम्' [तैत्ति० २।१।१] इति श्रुतेर्बाधावधित्वचेतनत्वनित्यत्वविभुत्वसर्वात्मैकत्वैस्तद्विपरीतमिति, तत्रैव सर्वः प्रपञ्चोऽध्यस्त इति । (* तथा मलो रागादिर्बन्धनमस्वातन्त्र्यं दुःखमेव दुःखता प्रतिकूलवेदनीयो रजःपरिणाम इति) जीवधर्माः । तद्विरुद्धं च ब्रह्म शुद्धबुद्धमुक्तानन्दमिति, तत्रैव जीवत्वं कल्पितमित्यर्थः । ननु तत्पदार्थभूत ईश्वरस्तटस्थ इति तार्किकाः कुतस्तस्य प्रत्यगभेद इत्याशङ्क्याऽऽह—अतिनिकटमिति । विषयशरीरेन्द्रियबुद्ध्यविद्याभ्योऽपि प्रत्यासन्नं परमपदमात्मनः, 'एष त आत्मा सर्वान्तरः' [बृहदा० ३।४।१] इत्यादिश्रुतेरित्यर्थः । तथाऽपि तस्य जगदुपादानत्वेन परिणामित्वात्कथमुक्तलक्षणत्वमित्यत्राऽऽह—अविक्रियमिति । अपरिणामीत्यर्थः । यद्वा जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावविकारास्तच्छून्यमित्यर्थः । 'न जायते म्रियते' [कठ० २।१८] इति 'न वर्धते कर्मणा' [बृह० ४।४।२३] इति, 'अपूर्वमनपरम्' [बृह० २।५।१९] इति, 'अविनाशि' [सर्वो० ३] इत्यादिश्रुतिभ्यः । उपादानत्वं च मायाद्वारकत्वान्न कौटस्थ्यविरोधीति वक्ष्यते ॥ १ ॥

अ० टी०—यस्माद्विश्वमुदेति येन विधिधं संजीव्यते लीयते
यत्रान्ते गगने घना इव महामायिन्यसङ्गेऽद्वये ।
सत्यज्ञानसुखात्मकेऽखिलमनोवस्थानुभूत्यात्मनि
श्रीरामे रमतां मनो मम सदा हेमाम्बुजे हंसवत् ॥ १ ॥

यच्चैतन्यमनन्यसिद्धममलं प्राणेन वै पात्मना
साकं नादमयीं तनुं तनुतरां बिभ्रत्क्रमेणोद्गताम् ।
वाग्देशे स्फुटवर्णतामुपगतं सर्वार्थविद्योतनं
वेदाख्यं दहनं गतोऽस्मि शरणं रामाभिधानं महः ॥ २ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके नास्ति ।

---

१ ख. 'वाल्मिक°' । २ क. ग. 'द्धमु°' ।

याऽऽदिक्षान्तविनिर्मिताङ्गविभवा यस्याः प्रसन्नेक्षण-
प्रान्तालोकनवर्त्मगः कविवरः संजायते तत्क्षणात् ।
या वीणावरपुस्तकाक्षविलसद्दोर्भिश्चतुर्भिर्युता
सा वाणी हृदये मुखे वसतु मे सर्वार्थसंदर्शिनी ॥ ३ ॥

सोमः सोमकलाविभूषितजटाजूटः प्रसन्नेक्षणो
विद्यार्थां [ दि ] भिरादरेण परितः संसेव्यमानो जनैः ।
अज्ञानान्धतमोविदारणपटुर्ब्रह्मात्मविज्ञानदो
मच्चित्तान्तरवस्थितः करुणया कुर्यादभीष्टं मम ॥ ४ ॥

आरम्भाः सफला भवन्त्यपि नृणां यस्मिन्प्रसन्नानने
देवानामपि यत्प्रसादविरहे मोघा भवन्त्युद्यमाः ।
स प्रीतो नतिमात्रतो गजमुखो देवोऽस्मदिष्टां क्रिया-
मर्थेनोपचितां करोतु विविधां विध्वंस्य विघ्नाटवीम् ॥ ५ ॥

यः सर्वश्रुतिमौलिपद्मनिकरं दोधूयमानं महा-
वादिव्रातसमीरणैः स्वकृतसत्सूत्रावनद्धं स्थिरम् ।
चक्रेऽनेकविनेयतोयनिभृतं विष्णोः पदैकायनं
वेदव्यासगिरेरिताय मुनये तस्मै नमो विष्णवे ॥ ६ ॥

येनाद्वंद्वमखण्डमक्षयपदं प्रादर्शि तापापहं भाष्य-
ग्रन्थनिबन्धनैः श्रुतिशिरोवाक्यार्थविद्योतिभिः ।
नित्यो यत्र समस्तसद्गुणगणस्तं शंकराचार्यगी-
र्विख्यातं मुनिमौलिलालितपदद्वंद्वं सदा संश्रये ॥ ७ ॥

यत्पादद्वयवन्दनेन सकला दोषा विनेशुः क्षणा-
द्यद्धस्ताम्बुजसंगमेन शिरसि श्रीः प्रादुरासीन्मम ।
यद्वक्त्रोदितवेदमौलिवचनस्याऽऽकर्णनेनाऽऽत्मन-
स्तत्त्वाज्ञानमलीयताऽततमहं वन्दे हरिं श्रीगुरुम् ॥ ८ ॥

यैर्ग्रुत्पादित आदरेण कृपया ग्रन्थप्रचारो धियो
येनैषां मम नूतनानपि बहुग्रन्थान्विशन्त्यश्रमाः ।
तेऽस्मत्प्रत्युपकारनिस्पृहधियस्तुष्यन्तु पुण्यैषिण-
स्तानुद्दिश्य नमस्करोमि मनसा नान्यद्विधातुं क्षमः ॥ ९ ॥

संक्षेपशारीरकमादरेण तदर्थबोधाय यथामनीषम् ।
विविच्यते यत्कृपयन्तु सन्तः श्रमं मदीयं समुदीक्षमाणाः ॥ १० ॥

प्रसन्नगंभीरमवेक्ष्य भाष्यं तदर्थजिज्ञासुहिते प्रवृत्तः ।
सर्वज्ञनामा मुनिरातनोत्सत्पद्यौघबन्धैः प्रथितं प्रबन्धम् ॥ ११ ॥
तस्याहमत्रर्जुपथेन सम्यक् पदान्वयार्थं प्रकटी करोमि ।
सिद्धान्तदीपोक्तिमवेक्ष्य मूलशास्त्रं श्रुतीर्मूलनिबन्धनं च ॥ १२ ॥

इह हि सर्वज्ञात्मगिरा प्रसिद्धनामा महामुनिरखिलश्रुतिमौलितत्त्वार्थविचारशास्त्रश्रीमच्छारीरकाभिधस्य श्रीवेदव्यासमहामुनिकृतसंदर्भात्मकस्य भगवत्पादाभिधानश्रीमच्छंकराचार्यकृतभाष्यप्रकटीकृतार्थस्यापि गम्भीरस्य संक्षेपतस्तात्पर्यार्थजिज्ञासूनुपलभ्य तदनुग्रहाय श्रीमच्छारीरकशास्त्रप्रकरणवार्तिकमारभमाणस्तत्राविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टशिष्टाचारानुमितस्मृतिश्रुतिप्रमाणकस्वेष्टदेवतानुसंधानात्मकं मङ्गलमाचरन्नर्थाच्छास्त्रीयाभिधेयप्रयोजने दर्शयति श्रोतृप्रवृत्तिसिद्धयेऽनृतजडेत्यादिना पद्यत्रयेण । अयं ग्रन्थः शास्त्रं च भवति प्रकरणं च वार्तिकं च यतो वक्ष्यति ' श्रीमच्छारीरकार्थप्रकटनपटुताशालि शास्त्रं विदध्मः ' इति ' विमृशन्त्विदं प्रकरणं मनसा ' इति च । वार्तिकत्वमप्यस्यार्थतोऽवसीयते तत्कचिद्व्याख्यानावसरे प्रदर्शयिष्यामः । अस्मिन्हि शास्त्रे तत्त्वंपदार्थतत्त्वं च प्रतिपाद्यो विषयः । तज्ज्ञानाच्च तद्गताविद्यातत्कार्यात्मकसंसारबन्धबाधः स्वस्वरूपपरमानन्दाविर्भावः प्रयोजनमिति स्थितिः । तदुभयमिह मङ्गलाचरणव्याजेन पदत्रयेणाऽऽदौ संगृह्णाति । तत्राप्यनृतेत्याद्येन लक्ष्यपदार्थमनुक्रामति । एषाऽक्षरयोजना—**मुरारेः परमपदमभिष्टवीमीत्यन्वयः** । मुरनाम्नोऽसुरस्य हन्ता श्रीकृष्णो मुरारिरिति सर्वपुराणेषु प्रसिद्धम् । स च जगत्पालनाय कृतावतारो भगवान्विष्णुरेवेति च तत्रैव निर्णीतम् । तथा च मुरारेर्विष्णोर्विष्णुशब्दवाच्यस्य यत्परमं निरतिशयं निर्विशेषमतिशयरूपविशेषहेतुमायासंबन्धाभावात्सर्वोत्कृष्टं पद्यते गम्यते प्राप्यते मुमुक्षुभिरिति पदं स्वरूपं तदहमभिष्टवीम्यभितः सर्वात्मना श्रुतिस्मृतीतिहासपुराणैस्तात्पर्येणोपपादितस्वभावेनाऽऽभिमुख्येन वा प्रत्यगभेदलक्षणेन स्तवीमि स्तवनं करोमि तत्स्वरूपनिरूपणपरं ग्रन्थं करोमीत्यर्थः । तत्किं ख्यातिलाभपूजोद्देशेन नेत्याह—**प्रणयादिति** । प्रणयः प्रीतिः परमपदैकप्रवणचित्तता तस्मात्प्रणयान्निमित्तादित्यर्थः । चित्तस्य विष्णोः परमपदैकनिष्ठारूपभक्तिविच्छेदपरिहाराय तत्प्रेमप्रेरितः सन् ग्रन्थकरणे प्रवृत्तोऽस्मीत्यभिप्रायः । किं तत्परमपदं यदभिष्टवनं प्रतिज्ञायत इत्यपेक्षायां तस्य वाचामगोचरत्वादिदं तदिति निर्देष्टुमशक्तेः सत्यज्ञानादिपदैर्वेदान्तेषु यथा तदावेद्यते तथा लक्षणया तत्स्वरूपं ज्ञापयत्यनृतजडविरोधिरूपमित्यादिपदद्वयेन । अनृतं तद्यदस्तीति यत्र येनाऽऽत्मना प्रतीतं सत्तदेव तत्र तेनाऽऽत्मना नास्तीति प्रतीतिगोचरः । यथा पुरोदेश इदमित्युल्लिख्यमाने रजतमिदमिति प्रतीतं सत्समयान्तरे शुक्तिरियं न रजतमिति पूर्वप्रतीतविपरीतस्वभावतया गृह्यते तदा तत्र पूर्वदृष्टमनृतमिति प्रसिद्धं लोके । तथा च प्रतिपन्नोपाधौ निषेधप्रतियोगितया व्यवह्रियमाणमनृतमित्यर्थः । जडमिति तदभिधीयते

यत्स्वव्यवहारे स्वविलक्षणस्वभावं प्रकाशं नियमेनापेक्षते यथा घटपटादि स्वविलक्षणस्वभावं चित्प्रकाशं स्वप्रतिबद्धव्यवहारेऽपेक्षते। अनृतं च तज्जडं चेत्यनृतजडम्। न हि जाड्य-मनृतत्वं व्यभिचरति विकारस्य जडात्मनो वाचारम्भणत्वश्रवणात्। नाप्यनृतत्वं जाड्यं व्यभिचरति मिथ्यारजतादेरुक्तजाड्यलक्षणयोगात्। तथा च बुद्ध्यादिदेहान्तमध्यात्ममधि-दैवं च जडं स्वविलक्षणस्वभाववेद्यत्वात्तथा त्वस्य चाग्रे निरूपयिष्यमाणत्वात्। तथाऽनृतं चैतच्छुक्तिरजतादिवदागमापायित्वात्। तथा चानृतविरोधिरूपं सत्यपदलक्ष्यम्। सत्यशब्दो हि लोके प्रतीतानृतबाधावधिभूतेषु शुक्तीदमंशादिषु प्रसिद्धोऽतः शुक्तिः सत्या रज्जुः सत्या मरीचिका सत्येत्येवमिदं सत्यमिदं सत्यमिति शुक्त्यादिविशेषोपरक्तस्येदमः सत्यशब्द-वाच्यत्वं तत्तद्विशेषांशापोहेन स्वरूपेण तस्यैवेदमः सत्यशब्दलक्ष्यत्वमिति स्थितेः। सर्वेष्वपि व्यवह्रियमाणेषु बाह्याध्यात्मिकेष्वर्थेषु यदनुगतमवभासतेऽस्त्यस्मीत्येवंरूपेण तदेव तत्तद्देहादिविशेषितं सत्सत्यशब्दवाच्यं तदपोहेन स्वरूपतः सत्यपदलक्ष्यं च भवति। ततश्च यद्विकारजातमनृतं बाध्यलक्षणं तद्विरोधि विरोधनस्वभावं सर्वानुस्यूतं सन्मात्रं यत्तत्सत्यपदलक्ष्यं परमं पदमित्यर्थः। तथा जडविरोधि-रूपं चैतत्परमं पदम्। यथा सर्वेषु पूर्वोक्तार्थेषु यत्स्फुरणमनुगतमवभासते तत्तत्तदर्थविशे-षितबुद्धिवृत्तिविशिष्टं सज्ज्ञानशब्दवाच्यं भवति। तदेव तत्तदर्थाकारबुद्धिवृत्तिविशेषणांशापो-हेनानुगम्यमानं प्रकाशमात्रस्वभावं ज्ञानशब्दस्य लक्ष्यं भवति। तदिदमुच्यते—**जडवि-रोधिरूपमिति**। तथा चानृतजडरूपप्रपञ्चविरोधित्वेन विलक्षणस्वभावत्वेन रूप्यते लक्ष-णया ज्ञाप्यते सत्यज्ञानपदाभ्यामित्यनृतजडविरोधिरूपमित्यर्थः। सत्यज्ञानात्मकं परमं पदमित्युक्तं भवति। यत एवमुक्तलक्षणं परमपदस्वरूपमत इदमेव परमपुरुषार्थरूपमपीत्य-भिप्रेत्य तद्विशिनष्टि—**अन्तत्रयमलबन्धनदुःखताविरुद्धमिति**। अन्तत्रयविरु-द्धमिति श्रुतिगतानन्तपदलक्ष्यत्वं परमपदस्योक्तम्। देशतः कालतो वस्तुतश्च यस्यान्तो निरूप्यते तदन्तत्रयवत्। यथा घटादि देहादि वाऽन्तत्रयवत्। अभूत्वा भावित्वाद्भूत्वा चाभावित्वात्तत्कालतोऽन्तवत्। मूर्तत्वाद्देशतोऽप्यन्तवत्। वस्तुतोऽप्यन्तवदन्योन्याभाव-प्रतियोगित्वात्। आकाशकालदिशामप्यन्तवत्त्वं वस्त्वन्तरकृतपरिच्छेदलक्षणं प्रसिद्धमेव। देशतः कालतश्चान्तवत्त्वं तु तेषामुत्पत्तिप्रलयश्रुतिनिरूप्यम्। तथा चेदमेवमन्तवदिति यस्मि-न्ननुगते सत्यज्ञानात्मके व्यवह्रियते तत्रान्तवतामवधितयाऽनुस्यूताकारमन्तविरोधितयाऽ-नन्तपदेन तदेव परमपदमावेद्यत इत्यर्थः। अत्रान्तनिषेधात्मकत्वादनन्तत्वस्यान्तत्वस्यान्त-पदव्युत्पत्त्यैव तद्व्युत्पत्तिरवगता प्रतियोगिप्रसिद्धिव्यतिरेकेण तदभावे पृथग्व्युत्पत्त्यनपे-क्षणात्। तथा चानन्तपदमन्तवद्वस्तुनिषेधं वदत्सर्वनिषेधानुगतमवधिं लक्षयतीति युक्त-मनन्तपदस्य परमपदज्ञापकत्वमिति। तथा मलविरुद्धं चैतत्परमपदम्। मलशब्देन तत्प्र-सिद्धं यद्वस्तु याथात्म्यप्रतीतिप्रतिबन्धकृद्यथा पङ्कादिधर्मादर्शादि। तद्विरुद्धं चापगत-मलत्वेन व्यवह्रियमाणं शुद्धमिति प्रसिद्धम्। तथा च परमपदस्वरूपावभासप्रतिबन्धकृद-

नाद्यनिर्वचनीयाऽविद्या 'अनृतेन हि प्रत्यूढा' [ छा० ८ । ३ । २ ] इत्याद्यनेकश्रुतिषु परमात्मवस्तुयाथात्म्यावभासप्रतिबन्धकत्वेन प्रसिद्धा । सैव तस्याशुद्धिकरी चेत्यात्मनि मलस्तस्यां हि सत्यामशुद्धोऽस्मीति प्रत्यक्पदार्थो मन्यतेऽप्रक्षालितमिव वस्त्रादि । तथा च 'शुद्धमपापविद्धम्' [ ईशा० ८ ] इत्यादिश्रुतिपदं क्षालनादिना संस्कृतेषु पदार्थेष्वयं शुद्धोऽयं शुद्ध इति शुद्धपदवाच्यतयाऽवगम्यमानेषु गृहीतव्युत्पत्तिकं सच्छुद्धपदं तत्तद्विशेषांशपरित्यागेनानृताविद्यादिमलरहितं परमं पदं विशदयति । तदिदमुच्यते—मलविरुद्धमिति । तथा बन्धनविरुद्धं चैतत्परमं पदम् । बन्धनं हि रज्जुकाष्ठलोहादिभिर्निग्रहणं प्रसिद्धम् । तच्चार्थानां स्वातन्त्र्यविघाति । तद्विरुद्धं मुक्तत्वं स्वातन्त्र्यम् । तदिदमुच्यते—बन्धमविरुद्धमिति । तथा च . मुच्यमानगोवत्सादौ व्युत्पन्नं 'विमुक्त[ श्च ] विमुच्यते' [ कठ० । ५ । १ ] इत्यादिश्रुतिगते मुक्तपदं तत्तदर्थानुगतसच्चिन्मात्रं परमपदं लक्षणया बोधयतीति नित्यमुक्तपरमपदमित्यर्थः । तथा दुःखताविरुद्धं चैतत्परमपदम् । स्वार्थे तद्धितः । दुःखविरुद्धमेतत् । दुःखविरुद्धं हि सुखमिति लोके प्रसिद्धं निरुपाधिकप्रेमास्पदम् । तच्च लोके विषयविशेषभोगनिबन्धनतया नानाव्यपदेशास्पदं भवत्यन्नसुखं पानसुखं शयनसुखमित्यादिना । तत्र सर्वत्र सुखमित्यनुस्यूतं दुःखविरुद्धाकारं तत्तद्विषयोपरक्तान्तःकरणवृत्तिविशिष्टाकारेण सुखशब्दवाच्यं विशेषांशपरित्यागेनानुगतमविशेषमनवच्छिन्नम् 'आनन्दो ब्रह्म' [ तै० ३ । ६ । १ ] इत्यादावानन्दपदेन लक्ष्यत इत्यर्थः । तथा चानृतजडपरिच्छिन्नाशुद्धास्वतन्त्रनिरुपाधिप्रेमानास्पदप्रपञ्चविरोधि सत्यज्ञानानन्तशुद्धमुक्तपरमानन्दरूपं विष्णोः परमपदमिति तत्पदलक्ष्यं वस्तु निर्दिष्टमिति । अत्र तत्प्रपञ्चाकारविरोधित्वेन लक्ष्यमाणत्वाल्लक्ष्याकारभेदप्रतीतावपि न तस्मिन्नाकारभेदो वा परमार्थतोऽस्ति तदनिरूपणात् । अतः सत्यज्ञानादिपदकदम्बेनाखण्डैकरसं वस्त्वावेद्यत इति तात्पर्यार्थः । इदानीमुक्तलक्षणपरमपदस्य ताटस्थ्यशङ्कां वारयंस्तस्य प्रत्यगेकात्मत्वं तत्त्वमस्यादिवाक्यसिद्धं याथात्म्यमाह—अतिनिकटमिति । ज्ञातुरात्मनोऽतिसंनिहितं तस्य स्वरूपत्वमेव न तटस्थं तदित्यर्थः । अत्र निकटमित्युक्ते कृत्तिकोदये रोहिण्यादिसंनिधिवत्सामीप्यमात्रमुक्तमित्याशङ्कावारणायातीत्युक्तं तेन च संनिधानं तादात्म्यमेवेति सूच्यते । न ह्यमूर्तयोः स्वतन्त्रयोः प्रत्यग्ब्रह्मणोर्लोकप्रसिद्धं नैकट्यं संभवति । तथा च प्रत्यगव्यवहितस्वरूपमेवेहातिनिकटशब्दार्थः । ननु कथमविकारिपरमपदस्य कर्तृत्वादिविकारवदात्मतेत्याशङ्कायामाह—अविक्रियमिति । प्रत्यगभिन्नत्वेऽप्यविक्रियं कूटस्थमित्यर्थः । न हि प्रत्यगात्मनोऽपि स्वतो विकारित्वमस्ति पराध्यासमन्तरेण तस्मिंस्तदनिरूपणादिति भावः । एतदुक्तं भवति—मुरारिशब्दनिर्दिष्टः सत्त्वगुणप्रधानकारणमायायां विक्षेपलक्षणायां प्रतिबिम्बितश्चिद्धातुस्तद्गताभासाविविक्ततया तत्पदवाच्य ईश्वरो भवति । रजस्तमःप्रधानाविद्यादिपदनिर्दिष्टकार्यावस्थाज्ञान आवरणलक्षणे प्रतिबिम्बितः स एव चिद्धातुस्तद्गताभासाविविक्ततया त्वंपदवा-

च्यो जीवो भवति । तत्रोभयत्र कार्यकारणलक्षणोपाध्यंशपरित्यागेनान्विष्यमाणं स्वतोऽविक्रियं कूटस्थसच्चिदानन्दाद्यात्मकप्रत्यग्ब्रह्मरूपं परमं पदं सिध्यतीति । अत्रानृतजडविरोधिरूपमविक्रियमिति च तत्पदार्थकोटौ निर्विशेषोऽवान्तरवाक्यार्थो दर्शितः । अतिनिकटमविक्रियमिति च तस्य कूटस्थप्रत्यगात्मभेदो महावाक्यार्थो दर्शितः । द्वितीयविशेषणेन यथानिर्दिष्टस्यैव परमपदस्य परमपुरुषार्थत्वमविद्यात(ता)यंबन्धास्पृष्टानवच्छिन्नपरमानन्दत्वलक्षणं निर्दिष्टमिति श्रोतृप्रवृत्त्यङ्गतया शास्त्रीये विषयप्रयोजने उक्ते वेदितव्ये ॥ १ ॥

सु०टी०—तदेवं तत्पदार्थपरं 'जन्मादि' [ १।१।२ ] इत्यादि सूत्रमर्थतः संक्षिप्य जीवपरं प्रथमसूत्रार्थं संक्षेप्तुं द्वितीयं पद्यं विषयोक्तिपरमेव प्रस्तौति—

स्वाज्ञानकल्पितजगत्परमेश्वरत्व-
जीवत्वभेदकलुषीकृतभूमभावा ।
स्वाभाविकस्वमहिमस्थितिरस्तमोहा
प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥ २ ॥

प्रत्यक्चितिरहंकारोपलक्षितं जीवचैतन्यं त्वंपदलक्ष्यं सा विजयते सर्वस्मादुपरि तत्पदलक्ष्येऽभेदेनैव वर्तत इत्यर्थः । ननु जीवः संसारी पूर्वोक्तब्रह्मविलक्षणः कुतोऽस्य तत्पदार्थेनाभेद इत्याशङ्क्याऽऽह—भुवनैकयोनिरिति । यैव हि कार्योपाधिना जीवत्वापन्ना प्रत्यक्चितिः सैवाऽऽमासद्वारा कारणोपाधिस्था सती भुवनैकयोनिरीश्वर इति न तयोर्भेद इत्यर्थः, 'अनेन जीवेनाऽऽत्मना' [ छा० ६ । ३ । २ ] इति श्रुतेः । कथं तर्हि तस्य दुःखित्वपरिच्छिन्नत्वादिप्रतिमास इत्यत्राऽऽह—स्वाज्ञानेति । स्वाश्रयविषयानादिभावरूपाज्ञानेन कल्पितो यस्त्रिविधो भेदस्तेन कलुषीकृत आच्छादितो भूमभावः पूर्णानन्दस्वरूपता यस्या इति त्वंपदवाच्योक्तिः । तथा चौपाधिको भेदप्रतिमास इति भावः । ननु कलुषीकृतब्रह्मभावा चेत्कथं निरवद्यब्रह्मरूपा स्यादित्याशङ्क्याऽऽह—स्वाभाविकेति । स्वाभाविकेऽनागन्तुके स्वे महिम्नि पूर्णानन्दरूपे स्थितिर्यस्याः संसारदशायाम(*पीति शेषः। कल्पिताब्रह्मत्वेन पारमार्थिकब्रह्म-

---

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तकस्थः ।

---

१ क. ग. °विसू° । २ क. °न्दस्वरू° ।

**भावस्य न काऽपि क्षतिरिति भावः । नन्व)ज्ञानमनादित्वाज्जीवस्य ब्रह्मभावं दूषयेदित्यत आह—अस्तमोहेति । अज्ञानस्याऽऽविद्यकत्वेन मिथ्यात्वान्नैष दोष इत्यर्थः ॥ २ ॥**

अ० टी०—ननु प्रत्यग्ब्रह्मणोर्भेदात्प्रपञ्चस्य परमार्थत्वात्कथं परमपदस्यानृताद्यात्मकप्रपञ्चविरुद्धसत्याद्यात्मता प्रत्यगेकरसता चेति चेत्तत्राऽऽह—स्वाज्ञानकल्पितेति । यद्वा सत्यज्ञानादिपदैरनृतादिप्रपञ्चविरुद्धाकारं स्ववाच्यसत्यत्वाद्यनुगतं प्रत्यगभिन्नं परमं पदं लक्षणया बोध्यत इति यदुक्तं तदयुक्तं वाच्यार्थलक्ष्यार्थयोः संबन्धासंभवात् । न हि विरुद्धस्वभावयोस्तेजस्तिमिरयोः संबन्धो विद्यते । असंबन्धे च न लक्ष्यलक्षणभाव इति चेन्नैवं वस्तुतः संबन्धाभावेऽपि यथाकथंचित्संबन्धोपपत्तेर्नोक्तदोषावकाश इत्यभिप्रेत्याऽऽह—स्वाज्ञानकल्पितेति । स्वशब्देन पूर्वश्लोकनिर्दिष्टं परमपदं गृह्यते । तदाश्रयं तद्विषयं चाज्ञानं स्वाज्ञानं तेन कल्पितं जगत्कार्यकरणसंघातरूपमाधिदैवमध्यात्मं च तस्मिञ्जगति यदुपादानत्वेन निमित्तत्वेन चानुगतं तत्परमे[श्वरत्वं] संघातद्वयात्मके जगत्यहंममाभिमानतयाऽनुप्रवेशेन व्यवहारयोग्यतापत्तिर्जीवत्वं तथा च स्वाध्यस्तानाद्यज्ञानकल्पितानि यानि जगत्परमेश्वरत्वजीवत्वान्येतान्येव भेदा विशेषास्तैः कलुषीकृतो मलिनीकृतो भूमभावो ब्रह्मभावः पूर्वोक्तलक्षणो यस्याः प्रत्यक्चितेः सा स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावा, अत्र भूमशब्दो न भाववचनः किं तु ' भूमा संप्रसादादध्युपदेशात्, [ब्रह्म० १ । ३ । ८] इतिन्यायेनाखण्डब्रह्मवचन इति विवक्षित्वा भूमभावेत्युक्तमिति द्रष्टव्यम् । तथा च प्रत्यक्चितिः पूर्वश्लोकोक्तपरमपदलक्षणा स्वाज्ञानद्वारा जीवेश्वरजगदाकारेण विक्रियमाणा सती त्रिविधस्य भुवनस्य कार्यकरणतदुपाधिसंसृष्टत्वात्मना भवनधर्मकस्य योनिरभिव्यक्तिस्थानमधिष्ठानं भूत्वा विजयते सर्वत्र सत्तास्फूर्तिप्रदत्वेनानुगतोत्कर्षेण स्वे महिम्नि वर्तत इति योजना । जगज्जीवेश्वरत्वानामज्ञानकल्पितत्वमुत्तरत्र स्पष्टी भविष्यति । एवं सति प्रपञ्चस्य परमार्थत्वाभावात्कार्यकारणोपाधिमन्तरेण स्वतो जीवेश्वरभेदाभावाच्च न प्रथमचोद्यस्यार्थवत्ता । तथा यथोक्तप्रपञ्चस्य स्वाविद्याद्वारा कारणत्वेनानुगमात्परमपदस्य वाच्यार्थसंबन्धे सति लक्ष्यत्वोपपत्तेर्द्वितीयमपि चोद्यं निरवकाशीकृतमेव । नन्वेवं स्वाविद्याद्वारा विक्रियमाणायाः प्रत्यक्चितेः कथमविक्रियत्वमुक्तं संगच्छत इति तत्राऽऽह—स्वाभाविकस्वमहिमस्थितिरिति । स्वाभाविकोऽन्यानधीनो यो महिमा कूटस्थसच्चिदानन्दलक्षणस्तस्मिन्नेव स्थितिरवस्थानं यस्याः सा । तथा ' स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि ' [छा० ७ । २४ । १] इति श्रुतेः । तथा च कल्पितप्रपञ्चाश्रयत्वेन भासमानमपि

---

१ क. ग. °भेर दा° ।

परमपदं स्वभावतः सदा कूटस्थमेवेत्यर्थः । नन्वविद्यावतः कूटस्थत्वं विरुद्धमविद्यायाः स्वाश्रयविकारहेतुत्वादित्यत आह—अस्तमोहेति । परमार्थतो निरस्तमोहा मोहशब्द-वाच्याज्ञानस्य सूर्ये दिवान्धपरिकल्पितान्धकारवदवस्तुत्वात् । न ह्यारोपितेनावस्तुभूतेन परमार्थवस्तुस्वभावो विहन्यत इत्यर्थः । तस्मात्स्वाज्ञानकल्पितकार्यकारणानुगतस्वाभासा-विविक्ताकारेण त्वंतत्पदवाच्यं तदुत्पत्तिस्थितिलयावधितया तदवस्थासाक्षितया च सच्चि-द्रूपेणानागमापायिस्वयंप्रकाशस्वभावात्मना लक्ष्यं च भवति प्रत्यक्चितिशब्दनिर्दिष्टं विष्णोः परमं पदमिति न किंचिदनुपपन्नमिहेति भावः ॥ २ ॥

सु० टी०—एवं विधेयत्वेनाभ्यर्हितं तत्पदार्थमुपन्यस्योद्देश्यं च त्वंप-दार्थमुक्त्वा प्रयोजनीभूतसमन्वयवाक्यार्थविवक्षया पद्यमुत्थापयति—

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं
प्रक्षीणकारणविकारविभागमेकम् ।
चैतन्यमात्रपरमार्थनिजस्वभावं
प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥ ३ ॥

प्रत्यक्प्रमाणकमिति । प्रत्यञ्चमच्युतं प्रत्यगभिन्नमित्यर्थः । नित्यं प्रणतोऽस्मि निरन्तरं प्रपन्नोऽस्मि । तस्य प्रपत्तिमात्रलभ्यत्वात् । तदुक्तं—'मामेव ये प्रपद्यन्ते' [भ०गी०७।१४] इति । तत्र कथं प्रपत्तुः प्रपदनीयाभेद इत्याशङ्क्य निष्कृष्टोपाधित्वेनेत्याह—प्रत्यञ्चमिति । प्रतीपम-ञ्चतीति प्रत्यक्त्वंपदलक्ष्यं जीवचैतन्यम् । अच्युतमिति । स्वरूपादप्रच्युतं तत्पदलक्ष्यं ब्रह्मचैतन्यम् । तयोः सामानाधिकरण्यात्सोऽयं पुमानितिवदख-ण्डैकरसं चिन्मात्रं वाक्यार्थः । तदेवाविद्यानिवृत्तौ प्रकाशमानमानन्दैक-रसं परमप्रयोजनम् । ननु प्रमातृप्रमाणादेराविद्यकत्वादखण्डैकरसं कुतः सिध्येदत आह—प्रत्यक्प्रमाणकमिति । वाक्योत्थब्रह्माकारवृत्त्यभिव्यक्तं प्रत्य-गेव प्रमाणं यस्येत्यर्थः । कथं पुनः सद्वयस्य प्रतीचोऽद्वयब्रह्मैक्यमित्य-त्राऽऽह—असत्येति । परस्मिञ्ज्ञातेऽञ्चतीति पराग्दृश्यप्रपञ्चोऽसत्यः पराग्रूपबुद्धीन्द्रियादिभेदो यस्य, तेन नास्य वस्तुतः सद्वयत्वमिति भावः । ननु तत्पदार्थस्यापि वियदादिविकारवत्त्वात्कथमद्वयत्वमित्य-त्राऽऽह—प्रक्षीणेति । प्रक्षीणो ज्ञानबाधितो मायाकाशादिकारणविकार-विभागो यस्येति । पदार्थद्वयं संशोध्य वाक्यार्थमाह—एकमिति । अद्वि-

१ क. ग. °पदनी° । २ क. ग. °मान्यात्सो° । ३ क. ग. °मानन्दै° ।

शीयं चिन्मात्रमित्यर्थः। ननु ज्ञानानन्दाद्यपुनरुक्तशब्दाख्येयत्वात्कथमेकरसतेत्यत्राऽऽह—चैतन्येति। जडविरोधित्वादिनिमित्तभेदादाचार्यो मातुल इतिवदनेकशब्दप्रवृत्तिर्वस्तुतश्चैतन्यमात्रमेव पारमार्थिको निजस्वभावो यस्येत्येतादृशं तदित्यर्थः। वक्ष्यते हि—'आद्येंऽशे नाणुमात्रोऽपि भेदः' इत्यादिना ॥ ३ ॥

अ० टी०—नन्वेवमप्यनुपपत्तिर्दृश्यते यतो जगज्जीवेश्वरादेरविद्याकल्पितत्वे प्रमातृप्रमाणशास्त्रादेरपि तथात्वान्मिथ्यात्वे सति कथं तेभ्यः परमपदमतिरुपपद्यत इति तत्राऽऽह—प्रत्यक्प्रमाणकमिति। अत्रेदं भवान्प्रष्टव्यः किं प्रमात्रादेरसत्यत्वे ततः परमपदसिद्धिर्न भवतीत्युच्यते किं वा भवन्त्यपि सा वास्तवी न भवतीति। आद्येऽपि स्वरूपस्फूर्तिलक्षणासिद्धिर्न भवेदविद्याप्रतिबन्धनिवृत्तिरूपा वेति तत्र नाऽऽद्य इत्याह—प्रत्यक्प्रमाणकमिति। प्रत्यगिति सर्वान्तरं चित्सदानन्दरूपमात्मतत्त्वमुच्यते। तदेव प्रमाया(णं) प्रमा प्रमितिर्यस्याच्युतस्य परमपदाख्यस्य स प्रत्यक्प्रमाणकस्तमिति विग्रहः। सर्वेषां विशेषणानां प्रत्यञ्चमच्युतमित्यनेन विशेष्येण संबन्धः। तस्य स्वरूपस्फुरणं प्रति न प्रमात्राद्यपेक्षा नित्यस्वप्रकाशचैतन्यरूपत्वादिति भावः। द्वितीयं प्रत्याह—असत्यपराक्प्रभेदमिति। परागिति चैतन्यभास्यं दृश्यमुच्यते। न सत्यः पराक्प्रभेदोऽविद्यातत्कार्यरूपबन्धलक्षणो यस्मिन्स तथा तम्। तथा चाऽऽवरणविक्षेपाविद्यानिवृत्तिरूपफलस्यापि यक्षानुरूपो बलिरिति न्यायेनावास्तवनिवृत्तिरूपस्याप्यवास्तवत्वान्न तत्र पारमार्थिकप्रमात्राद्यपेक्षेति भावः। यद्वा, असत्य आरोपितः परागर्थः प्रभिद्यते विदीर्यते विनश्यत्यस्मिन्नित्यसत्यपराक्प्रभेदस्तमिति विग्रहः। तथा च प्रमाणवृत्त्या बाध्यमानः परागर्थो यदात्मतया विलीयते तस्याच्युतस्य बाधावधितया बाधविषयत्वाभावादसत्यप्रमाणबाधितासत्यप्रपञ्चाधिष्ठानतया सत्यरूपैवाऽऽत्मनः सिद्धिरिति भावः। एतेन चरमः पक्षोऽपि प्रतिक्षिप्तो वेदितव्यः। एतदुक्तं भवति—स्वरूपस्य नित्यसिद्धतयाऽन्यानपेक्षत्वान्न तत्र प्रमाणमपेक्ष्यत इति प्रमात्रादिवास्तवत्वावास्तवत्वचिन्ता तत्र निरर्थिका। यद्यप्यारोपितबन्धनिवृत्तिफलप्रमायां प्रमात्राद्यपेक्षाऽस्ति तथाऽपि न परमार्थत्वं प्रमात्रादेरपेक्ष्यते स्वरूपतो मिथ्याभूतादपि प्रतिबिम्बवर्णदैर्घ्यादेः सत्यार्थप्रमित्युदयदर्शनात्। तथा च प्रमात्रादीनामबाध्यत्वलक्षणं परमार्थत्वमप्रयोजकमुक्तव्यभिचारादर्थक्रियाकारित्वेन सत्यत्वं तु प्रमात्रादिष्वपि न हीयत इति कल्पितप्रपञ्चद्वारकपरमपदसिद्धेर्नानुपपन्नं किंचिदिति। किंच परमपदस्य न साक्षात्प्रमाणविषयत्वयोग्यताऽस्ति तद्द्वारभूतधर्माभावादतोऽपि न तत्स्वरूपासिद्धिः प्रमाणापेक्षेत्यभिप्रेत्य विशिनष्टि—प्रक्षीणकारणविकारविभागमिति। प्रकर्षेण क्षीणो नित्यनिवृत्तः कारणत्वविकारत्वभेदो यस्मिन्यस्मिन्कारणत्वं वा कार्यत्वं वा कदाऽपि नास्तीत्यर्थः। न हि निर्धर्मके वस्तुनि प्रमाणप्रवृत्तिरस्ति धर्मश्च कयाऽपि व्यपेक्षया कार्यकारणभावे

न व्यभिचरतीति रूपादिरूपकार्यधर्महीने परमपदे प्रत्यक्षप्रवृत्तेरयोगात्तद्व्याप्त्यादिमूलकस्यानुमानार्थापत्त्यादेरप्यसंभवात्सामान्यतो दृष्टानुमानस्य च प्रमाणसिद्धे संभावनाहेतुत्वेऽपि स्वतो वस्तुतत्त्वनिश्चायकत्वानुपपत्तेः शब्दस्य च षष्ठीजातिगुणक्रियादिरहिते प्रवृत्त्यसंभवान्न परमपदस्य साक्षात्प्रमाणविषयत्वमस्ति तथाऽपि कथंचिल्लक्षणयोपनिषद्वाक्यैस्तत्स्वरूपमावेद्यत इति भावः। तथा च श्रुतयः 'अन्यदेव तद्विदितादथो अविदितादधि' [के० १।३] 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' [कठो० १।३।१५] 'अन्यत्रास्मात्कृताकृतात्' [कठ० १।२।१४] इत्याद्याः। उक्तं विशेषणमेव विशेषणान्तरेण साधयति—एकमिति। 'एकमेवाद्वितीयम्' [छा० ६।२।१] इतिश्रुतेरेकरूपमित्यर्थः। न ह्येकमेकरूपं वस्तु परिणमते आरभते वा न वा संहन्यते परमार्थत इति न तत्कारणं कस्यापि भवत्याकाशादेस्तथाविधस्य कारणत्वादर्शना[त्]। नाप्येकमेकरूपं क्वचिदाश्रितं संहतं वोपलब्धमस्त्यतः कूटस्थासङ्गानवयवाद्वितीयचिदात्मनो न कार्यताऽपीति न कार्यकारणभावो वास्तवोऽस्तीति भावः। ननु कथमेकत्वमेकरूपत्वं चास्य सिध्येत्तदनृताद्यर्थविरोध्याकाराणामनेकेषामस्मिन्संभवादित्यत आह—चैतन्यमात्रपरमार्थनिजस्वभावमिति। चैतन्यस्वभावमित्युक्ते भावान्तरयोगेऽप्यविरोध इति शङ्कायामुक्तं मात्रेति। 'विज्ञानघन एव' [बृ० २।४।१२] इति श्रुतेर्न चैतन्यस्य धर्मत्वं धर्मान्तरयोगो वाऽस्तीत्यर्थः। चैतन्यमात्रमेव निजमसाधारणं रूपमस्येति तथोक्तः। एतेन कार्यधर्मदेहादिवैशिष्ट्यं चैतन्यस्य निरस्तम्। अकार्यरूपाज्ञानधर्मकत्वव्यवच्छेदाय परमार्थेति विशेषणम्। सजातीयविजातीयस्वगतधर्मभेदरहितमखण्डरूपमित्यर्थः। अतोऽनृतादीनां व्यावर्त्याकाराणां भेदादनेकैः शब्दैर्निर्देशेऽपि नोपादेयवस्तुतत्त्वे विशेषोऽस्ति प्रतिपत्त्युपायमात्रत्वेन कल्पितत्वाद्व्यावृत्तेरिति भावः। एवं प्रथमश्लोकार्थमुपपादितमुपसंहरंस्तत्र नमस्काररूपं मङ्गलकरणमनुवर्तयति—प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यमिति। अच्युतमप्रच्युतैकस्वभावं विष्णोः परमपदरूपं प्रत्यञ्चं प्रत्यगात्माभिन्नं नित्यं सदाऽहं प्रणतोऽस्मि तद्विषय एव वाङ्मनःकायप्रणिधानं विधाय स्थिताऽस्मीत्यर्थः॥ ३॥

सु० टी०—अथ विषयप्रयोजनयोः शास्त्रसंबन्धं विवक्षुस्तृतीयसूत्रार्थं संक्षिपन्ब्रह्मणो वेदोपादनत्वं ब्रह्मणि श्रुतेः प्रामाण्यं च दर्शयितुं तदात्मिकां वाग्देवीं नमस्करोति—

**औत्पत्तिकी शक्तिरशेषवस्तुप्रकाशने कार्यवशेन यस्याः।**
**विज्ञायते विश्वविवर्तहेतोर्नमामि तां वाचमचिन्त्यशक्तिम्॥ ४॥**

औत्पत्तिकीति। अत्र हेतोरिति प्रकृतिपञ्चमी विश्वविवर्तस्यातत्त्वतोऽन्यथाभावस्य हेतूभूताद्ब्रह्मणः सकाशादुत्पन्नां तां त्रयीरूपां

वाचं नमामीत्यर्थः । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' [बृह० २ ४।१०] इत्यादिश्रुतेः । का पुनरसावित्यपेक्षायामाह—यस्या [ इति ] अशेषवस्तुप्रकाशने कोऽर्थः शेषः परार्थः, अपरार्थसर्वप्रधानभूतचिदात्मवस्तुप्रकाशन औत्पत्तिकी स्वाभाविकी न तु कृत्रिमा शक्तिः प्रतिपादकस्वरूपः संबन्धो वैदिकप्रमारूपकार्यलिङ्गेन प्रमीयत इत्यर्थः । यद्वा हेतोरिति पष्ठ्यन्तं वाचो विशेषणम् । 'एत इति वै प्रजापतिर्देवानसृजत' इति श्रुतेः, 'वेदशब्देभ्य एवादौ' इत्यादिस्मृतेः, 'शब्द इति चेन्नातः प्र०' [ ब्रह्म० १ । ३ । २८ ] इत्यादिसूत्राच्च सृष्टेर्वेदपूर्वकत्वसिद्धेः । नन्ववाग्गोचरब्रह्मप्रकाशने कथं वाचः शक्तिरित्याशङ्क्य विशिनष्टि—अचिन्त्यशक्तिमिति । पड्विधतात्पर्यलिङ्गोपबृंहिताया उपनिषदो भागलक्षणया ब्रह्मबोधनसामर्थ्यमलौकिकमित्यर्थः । तदेवं वेदस्य शास्त्रविपयब्रह्मणा संबन्धेऽभिहिते सुतरां तद्विचारात्मकशास्त्रस्य स उक्तो भवति । प्रयोजनेन सहोपायोपेयभावः स्पष्ट एव ॥ ४ ॥

अ० टी०—तदेवं त्रिभिः पद्यैः परतत्त्वानुसंधानात्मकमङ्गलाचरणव्याजेन वेदान्तशास्त्रीये विपयप्रयोजने निर्दिष्टे इदानीमुक्तलक्षणे वस्तुतत्त्वे प्रवर्तमानानां वेदान्तानां प्रामाण्यं संभावयन्वेदात्मिकां वाग्देवतां नमस्यति—औत्पत्तिकी शक्तिरिति । तां वाचं नमामीत्यन्वयः । तस्या नमस्कार्यत्वे हेतुं सूचयंस्तां विशिनष्टि—अचिन्त्यशक्तिमिति । अलौकिकत्वादतर्क्याऽस्याः शक्तिरित्यर्थः । तच्छब्दापेक्षितं यच्छब्दं पूरयन्नचिन्त्यशक्तित्वमस्याः साधयति—औत्पत्तिकीति । यस्या वाचोऽशेपवस्तुप्रकाशन औत्पत्तिकी शक्तिः कार्यवशेन विज्ञायत इति संबन्धः । यस्या वाचो निरवशेपवस्तुप्रतिपादन औत्पत्तिक्युत्पत्तिसिद्धा सहैव न कृत्रिमा केनचित्संकेतिता शक्तिः सामर्थ्यं कार्यवशेनालौकिकदेवताधर्मस्वर्गपरब्रह्मप्रत्ययोत्पादककार्यलिङ्गेन विज्ञायते तामित्यर्थः । यद्वाऽशेपवस्तु परं ब्रह्म सर्वस्याऽऽत्मत्वादधिष्ठानत्वाच्च तस्य प्रकाशनं लक्षणावृत्त्या ज्ञापनं तत्र रूढ्या शक्तिः कार्यवशेन सर्वप्रमाणागोचराप्रमेयस्वभावपरतत्त्वस्फूर्तिरूपकार्यलिङ्गेन विज्ञायत इत्यर्थः । तादृशं सामर्थ्यमस्याः संभावयति—विश्वविवर्तहेतोरिति । ईश्वरस्य विश्वाकारविवर्ते हेतुः स्रष्टव्यार्थस्फूर्तिनिमित्तकारणं तद्रूपाया इत्यर्थः । ईश्वरो हि सृष्टिकाले प्राक् स्वात्मन्येकीभूतां प्रथमनिःश्वासप्रसूतां स्वार्थग्रथितां श्रुतिमुपलभ्य तत्प्रकाशितमर्थजातं सृजतीति स्थितिः । तथा च मन्त्रः—"एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभि सौभगा" [ ऋ० सं० अ० ७ । अ० १ । व० २४ ] इति । ब्राह्मणं चास्य पठ्यते—एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शास्त्र-

मभिसौभगेत्यन्याः प्रजा इति । तथा च वेदस्य स्वार्थबोधसामर्थ्यस्य सहजत्वाद्युक्तं तस्य परमपदतत्त्वे निरपेक्षं निरपवादं च प्रामाण्यमित्यर्थः ॥ ४ ॥

सु० टी०–अथ निर्गुणविषयनिखिलशारीरकशास्त्रसंक्षेपं चिकीर्षुस्तत्समाप्तिप्रचयप्रत्यूहप्रशमाय विघ्नेशं पूजयति–

> प्रारम्भाः फलिनः प्रसन्नहृदयो यश्चेत्तिरश्चामपि
> नो चेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः ।
> विश्वैश्वर्यमतो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः
> सोऽयं विश्वहिते रतो विजयते विघ्नेश्वरो विश्वकृत् ॥ ५ ॥

प्रारम्भा इति । विघ्नानामीश्वरोऽधिष्ठाता विजयते सर्वस्मादुपरि वर्ततामित्यर्थः । ननु विघ्नविघातार्थमन्य एव किं न पूज्यत इत्यत्राऽऽह–विश्वकृदिति । यतः स एव विश्वकृद्विघ्नकरणतन्निरासाभ्यां निग्रहानुग्रहस्वातन्त्र्यात्सर्वं तदधीनमित्यर्थः । कुतस्तर्हि तत्प्रणतानामपि विघ्नो दृश्यत इति चेत्तत्राऽऽह–विश्वहिते रत इति । स तु सर्वेषां हितकृदेव केषांचिद्विघ्नावाप्तिस्तु दोषप्राबल्यात्तद्भक्तिहीनत्वाद्वेत्यर्थः । स्वातन्त्र्यमेवास्य प्रकटयति–प्रसन्नेति । यः प्रसन्नहृदयश्चेत्तदा तिरश्चामपि सुग्रीवादीनां किमुत देवमनुष्याणामभिमतप्रारम्भाः फलन्त्येवेत्यर्थः । एवमनर्चितो विघ्नकर इत्यादि स्मृत्यर्थोऽपि तत्र प्रसिद्ध इत्याह–नो चेदिति । यो न चेत्प्रसन्नस्तदा प्रजापतेरपि किमुतास्मदादीनामुपायाः प्रारम्भाः समन्ताद्वैफल्यमायान्तीत्यर्थः । स्मर्यते हि ब्रह्मणोऽपि वत्साहरणादावभिमतभङ्गः । स्वातन्त्र्यमुपसंहरति–विश्वैश्वर्यमिति ॥ ५ ॥

अ० टी०–तदेवं मङ्गलाचरणद्वारा स्वग्रन्थे शास्त्रीयविषयप्रयोजनतत्प्रमाणानि संभाव्येदानीं तत्र विघ्नप्रोत्सारणाय महागणपतिं पूजयन्स्तौति–प्रारम्भाः फलिन इति । सोऽयं विघ्नेश्वरो विजयते सर्वोत्कर्षेण वर्तत इति संबन्धः । किंलक्षणो विश्वकृद्विश्वस्य कर्ता तत्कर्तॄणां प्रजापतीनां विघ्नापहरणाद्वा विश्वकर्तेत्यर्थः । न हि विघ्नोपसृष्टानामभिमतकार्यं सिध्यति तदुपसर्गनिवृत्तिश्च न गणपत्यनुग्रहं विनेति युक्तमस्य विश्वकर्तृत्वमित्युपपादयति–प्रारम्भा इति पूर्वार्धेन । स्पष्टोऽस्यार्थः । यत एवमतो यस्यैव विश्वप्रभोर्विश्वस्मिन्स्वतन्त्रस्य विश्वैश्वर्यं सर्वेश्वरत्वं निरङ्कुशमनिवारितमभूदिति ज्ञायत इति शेषः । ननु निरङ्कुशैश्वर्यवानस्मान्न गणयिष्यतीति कथमेतदनुसरणेनास्मदिष्टसिद्धिरिति तत्राऽऽह–

---

१ क. 'थाति प्रपञ्चयन्नत्यू° । २ ख. स्तुसदो । ३ ख. यायारम्भाः ।

विश्वहिते रत इति । स्वयमेव विश्वस्य सर्वस्य कर्तृवर्गस्य हिते कार्यप्रसिद्धयर्थं रतः प्रवृत्तः । तत्र विघ्नप्राप्तिः प्राणिनां स्वदोषवशादेव भवति । साऽपि तत्प्रार्थनायां न भवतीति संपूज्य इत्यर्थः ॥ ९ ॥

सु० टी०—शास्त्रार्थधीप्रतिबन्धकबुद्धिमलक्षालनायाऽऽदौ परमगुरुं व्यासं रूपकेण स्तौति—

वाग्विस्तरा यस्य बृहत्तरङ्गा वेलातटं वस्तुनि तत्त्वबोधः ॥
रत्नानि तर्कप्रसरप्रकाराः पुनात्वसौ व्यासपयोनिधिर्नः ॥ ६ ॥

वाग्विस्तरा इति । व्यास एव पयोनिधिर्महत्त्वपावनत्वगम्भीरत्वसाम्यात् । असौ नः पुनातु चित्तमलक्षालनेनानुगृह्णातु । यस्य व्यासाब्धेर्वाचः सहस्रशाखादिरूपाः । प्रतिशाखं लक्षचतुर्थांशत्वाद्विस्तरास्त एव बृहत्तरङ्गा व्यासाब्धेरुत्थाय तरङ्गवत्क्रमेण शिष्याणां श्रोत्रैः संबध्य तदीयवस्तुतत्त्वबोधाख्यवेलापर्यन्तगामित्वाद्वाग्विस्तरस्य च तत्त्वबोधावसानत्वात्स एव वेलातटः । तत्त्वंपदार्थशोधनवाक्यार्थनिर्णयादिषु ये तर्काणां प्रसरास्त एव रत्नान्युपादेयत्वव्यञ्जकत्वादिसाम्यादित्यर्थः ॥ ६ ॥

अ० टी०—इदानीं 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' [श्वे० ६ । २३] इति श्रुतिमाश्रित्य विचारम्भे देवताभक्तिं विधाय गुरुभक्तिं विदधानः प्रथमं सर्वगुरुं शास्त्रप्रणेतारं श्रीवेदव्यासं समुद्रात्मना रूपयन्प्रार्थयते—वाग्विस्तरा इति । असौ व्यासपयोनिधिर्नोऽस्मान्पुनातु पवित्रयतु स्वकृतशास्त्रार्थज्ञानप्रदानेन पावयत्वित्यर्थः । प्रार्थनायां लोट् । वाग्विस्तरा वेदान्तार्थव्याख्यानविषया यस्य व्यासपयोनिधेर्बृहत्तरङ्गा अन्यैरवारणीयप्रचाराः । तेषां तरङ्गाणामिवोपरमस्थानं वेलातटं वस्तुनि परमात्मविषये तत्त्वबोधो यथार्थस्वरूपबोधस्तत्रैव वाग्विस्तराः प्रशाम्यन्ति नान्यत्रेत्यर्थः । न केवलमुपदेशमुखेनैव व्याख्यावाक्यानां तत्त्वावबोधपर्यन्तः प्रचारः किं तु तदर्थव्यवस्थापनतत्प्रतिपक्षनिराकरणसमर्थयुक्त्युपबृंहितानामित्यभिप्रेत्याऽऽह—रत्नानीति । पदार्थद्वयपरिशोधने वाक्यार्थनिर्णये तदुपयुक्तप्रमाणादिस्थैर्ये च ये तर्कास्तेषां प्रसरः प्रसरणं प्रयोगास्तत्र ये प्रकारा भेदास्तान्यस्य रत्नानि रत्नवदर्थाभिव्यञ्जकत्वाद्दुर्भेद्यत्वाच्चेत्यर्थः ॥ ६ ॥

---

१ क. व्यासस्यैव वाचः । २ क. ग. दाविस्त° । ३ क. ग. स्य बचोबो° ।

सु० टी०–अथ सत्संप्रदायप्रवर्तकं भाष्यकृतं नमति—

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत् ॥
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम् ॥७॥

वक्तारमिति । तं शंकरं सर्वजगतां मङ्गलकरमीशांशं वा मुनिं नमामि 'यः शंकरोऽसौ भविता स ईशः' इति स्मरणात् । अर्चिताङ्घ्रिमीशांशत्वसंप्रदायप्रवर्तकत्वादिभिर्जगत्पूजितपादपद्ममित्यर्थः । नित्या सरस्वती त्रयीलक्षणा यं वक्तारं व्याख्यातारमासाद्य तात्पर्यविषयीभूतस्वार्थसमन्वयसंपन्नाऽऽसीदित्यर्थः । एवकारेण भर्तृप्रपञ्चभास्करादीन् व्यवच्छिनत्ति (* तेषां बाधितविरुद्धार्थवक्तृतया श्रुत्यभिमतार्थव्याख्यातृत्वाभावात् । ननु नित्यायाः श्रुतेर्नित्य एव) स्वार्थसमन्वयः किं तत्राऽऽचार्यस्य कृत्यमिति नेत्याह—निरस्तेति । तेन हि निरस्ता निर्मूलिता दुष्टा विरुद्धार्थविषया ये तर्कास्त एव कलङ्का दुरपनेयत्वात्त एव च पङ्कास्तेषु लग्नानामुत्थानाशक्तेस्ते यस्यास्तथा च प्रतिबन्धनिरास एव तत्रास्य व्यापार इति भावः ॥ ७ ॥

अ० टी०—सूत्रकारं पूजयित्वा तद्भाष्यकारमाचार्यं नमस्करोति—वक्तारमिति । नित्या वेदलक्षणा सरस्वती यमेव वक्तारं स्वव्याख्यातारमासाद्य प्राप्य तेन व्याख्यायमाना स्वार्थसमन्विता स्वाभिप्रेतार्थयुक्ताऽऽसीदभूत् । कथंभूता सती निरस्तदुस्तर्ककलङ्कपङ्का दुस्तर्कोऽहेतुकैरुत्प्रेक्षितस्तर्कः स एव कलङ्को लाञ्छनं मालिन्यं तल्लक्षणः पङ्को निरस्तो यस्याः सा तथोक्ता दुस्तर्कनिरासेन व्याख्यायमानेत्यर्थः । तं शंकरं शंकराचार्यमर्चिताङ्घ्रिं ब्रह्मविद्यार्थिभिः पूजितचरणं नमामीत्यर्थः ॥ ७ ॥

सु० टी०–अथ साक्षाद्गुरुमाराधयति—

यदीयसंपर्कमवाप्य केवलं
वयं कृतार्था निरवद्यकीर्तयः ।
जगत्सु ते तारितशिष्यपङ्क्तयो
जयन्ति देवेश्वरपादरेणवः ॥ ८ ॥

यदीयेति । ते देवेश्वरपादरेणवो जयन्ति । येषां केवलं संपर्कमात्रमेव प्राप्य वयं कृतार्थाः । कथमिति चेद्यतो जगत्सु तारिताः

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तकस्थः ।

शिष्यपङ्क्तयो यैरेवंभूतास्तेऽत एव निरवद्यकीर्तयो निर्दोषत्वेन ख्याता इत्यर्थः । ननु वयं निरवद्यकीर्तय इति योज्यं गुरुप्रशंसाया एव प्रकृतत्वात् ॥ ८ ॥

अ० टी०—इदानीं साक्षात्स्वगुरुं सुरेश्वराचार्यमभिपूजयति—यदीयसंपर्कमिति । ते देवेश्वरपादरेणवो जगत्सु संसारमण्डले जयन्तीति योजना । विजयप्रकारमेव वदन्पादरेणून्विशिनष्टि—तारितशिष्यपङ्क्तय इति । तारिताः संसारसमुद्र[स्य] परं पारं विष्णोः परमं पदं ब्रह्मविद्यापोतारोपणेन प्रापिताः शिष्यपरम्परा यैस्ते तथा । ते क इत्यपेक्षायामाह—यदीयेति । येषां पादरेणूनां केवलं निमित्तोद्देशं विना संपर्कमवाप्य निरवद्यकीर्तयः सत्सु विख्यातसत्कीर्तयः सन्तः कृतार्था वयं जातास्त इत्यन्वयः । येषां गुरूणां चरणरजसामप्येवंविधः प्रभावस्तेषां महिमा केन वर्णयितुं शक्यत इति भावः ॥ ८ ॥

सु० टी०—गुरुप्रशंसार्थोपात्तस्वकृतार्थत्ववर्णनादात्मन औद्धत्यं प्राप्तमपकरोति—

गुरुचरणसरोजसंनिधाना-
दपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः
सलिलमुपाददते मितं हि मीनाः ॥ ९ ॥

गुरुचरणेति । यद्यपि गुरोर्गुणार्णवस्य चरणसरोजयोः संनिधानं गुणगणप्रभवभूमिस्तथाऽपि वयं क्षुद्रास्तल्लेशभजनेनाऽपि कृतार्था इत्यर्थः । चरणयोः सरोजत्वरूपकं गुणसंचारसूचनार्थम् । अत्र च गुरोर्गुणबाहुल्ये परोपकारित्वे स्वस्य ततोऽल्पत्वे तन्निवासात्तद्गुणलेशावाप्त्या कृतार्थत्वे चानुरूपं दृष्टान्तमाह—अपीति । यथा मीना महार्णवे मग्नाः कार्त्स्न्येन तत्संबद्धा अपि स्वस्यालपत्वान्मितमेवोपयुञ्जत इत्यर्थः ॥ ९ ॥

अ० टी०—वयं कृतार्था निरवद्यकीर्तय इत्युक्तवता गुरोः प्रभावकथनाभिपेणाऽऽत्मश्लाघैवाभिव्यञ्जितेति भवेत्कस्य चिन्मतिः सा मा भूदिति मन्वानः स्वस्य कृतार्थत्वाद्युक्तेरभिप्रायं प्रकटयन्पुनरपि गुरोरुत्कर्षमाविष्करोति—गुरुचरणेति । गुरोश्चरणकमलसंनिधानात्तद्रजःसंपर्काद्वयं न तदीयसर्वगुणभाजो येनाऽऽत्मानं श्लाघयेमह्यपि स्वस्य गुरोर्गुणगणा-

---

१ ख. प्रसव° । २ क. ग. °शाख्यास्त्या ।

गाधस्य महागुणानां मध्य एकस्य लेशमंशमात्रं भजामोऽतो नास्मद्वचनमात्मस्तुतिपरं किं तु गुरुगुणमाहात्म्यस्थापनपरमित्यभिप्रायः । तत्र गुरूणां गुणसाम्राज्येऽनुग्राहकत्वे च स्वात्मनश्च तदपेक्षयाऽल्पत्वे गुरौ नित्यवासितया तद्गुणलेशभजनेन कृतार्थत्वे च दृष्टान्तमाह— अपि महतीति । स्पष्टोऽर्थः ॥ ९ ॥

सु० टी०—इत्थमल्पप्रज्ञस्य क्व ते ग्रन्थनिर्माणसामर्थ्यमिति पुनः प्रसक्तं दोषं पूर्ववाक्यस्यानौद्धत्यमात्रपरतया परिहरति—

> शक्तो गुरोश्चरणयोर्निकटे निवासा-
> न्नारायणस्मरणतश्च निरन्तरायः ।
> शारीरकार्थविषयावगतिप्रधानं
> संक्षेपतः प्रकरणं करवाणि हृष्यन् ॥ १० ॥

शक्त इति । यतः श्रद्धाराद्धगुरुचरणसंनिकर्षादहमतीव शक्तोऽत एव प्रकरणं करवाणीति योज्यम् । तथाऽपि प्रारिप्सितस्य गुरुत्वेन विघ्नबाहुल्यात्कथं निर्वाह इत्याशङ्क्याऽऽह—नारायणेति । ब्रह्मात्मैक्यभावनात इत्यर्थः । गुरोर्नारायणस्मरणतश्चेति चार्थः । निरन्तरायो निर्विघ्नः 'तस्य ह न देवाश्च नाभूत्या ईशते' [ बृह० १ । ४ । १० ] इति श्रुतेः । ननु ।

> 'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
> प्राहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः' ॥

इतिलक्षणात् । कस्य शास्त्रस्य कुत्रैकदेशे क्व कार्यान्तरे संबद्धमिदमित्यत्राऽऽह—शारीरकेति । शरीरे भवः शारीरो जीवस्तं ब्रह्मत्वेन कायति बोधयतीति शारीरकं शास्त्रं तस्यार्थः प्रयोजनं विषयश्च यद्ब्रह्मात्मैक्यं तत्साक्षात्कारः प्रधानमुद्देश्यं यस्य तत्तथा शास्त्रं हि विचारप्राधान्यादवगतिं गर्भीकृत्य प्रवृत्तमिदं त्ववगतिप्राधान्येनैवेति स्फुटं कार्यान्तरमिति भावः । एकदेशसंबन्धमाह—संक्षेपत इति । निर्गुणविद्यामात्रसंक्षेपेणेत्यर्थः ।

> 'शुश्रूषाश्रवणं चैव ग्रहणं धारणं तथा ।
> ऊहापोहोत्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥

इत्येतत्संपत्त्या हृष्यन्नित्यर्थः ॥ १० ॥

अ० टी०—नन्वसत्यपूर्णत्वात्तव कथं ग्रन्थकरणसामर्थ्यं कथं चित्सामर्थ्येऽपि 'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इति न्यायेन विघ्नबाहुल्यसंभवात्तन्निष्पत्त्यसिद्धिरितीदमाशङ्काद्वयं परिहरन्स्वचिकीर्षितं प्रतिजानीते—शक्तो गुरोरिति। यद्यप्यहं गुरोर्गुणैकलेशभाक्तथाऽपि तच्चरणनिकटवासमहिम्नैव तत्कृपया प्रस्फुरितशास्त्रार्थसंदर्भतया पूर्णः सन्ग्रन्थं कर्तुं शक्त इत्यर्थः। तथा नारायणस्मरणतो निरन्तरायो निर्विघ्नश्चास्मीति योजना। तथा च स्मृतिः—

'सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः'॥ इत्याद्या।

यत एवं परिकरसंपन्नोऽहमतो ह्यव्यग्रमनाः सन्प्रकरणं करवाणीति संबन्धः। कारिष्यमाणप्रकरणस्वरूपं निर्दिशति—शारीरकार्थविषयावगतिप्रधानमिति। श्रीमच्छारीरकाख्यं यच्छास्त्रं तस्यार्थो ब्रह्मात्मैक्यं तद्विषयो यस्याः सा शारीरकार्थविषया सा चासाववगतिश्चेति शारीरकार्थविषयावगतिः सा प्रधानमुद्देश्यं यस्य तत्तथेति विग्रहः। अनेन शास्त्रीयविषयप्रयोजनयोर्ग्रहणेन शास्त्रैकदेशसंबन्धत्वलक्षणांशः प्रकरणस्य दर्शितः। तथा शास्त्रकार्यान्तरे स्थितिलक्षणांशमाह—संक्षेपत इति। तथा चायमर्थः संपन्नः शास्त्रीययोर्विषयप्रयोजनयोरिह प्रतिपादनात्तावत् ग्रन्थः स्वकपोलकल्पितः स्वतन्त्रस्तद्गतप्रत्यधिकरणार्थानामिह साकल्येनाप्रतिपादनादर्थावगतिमात्रापेक्षितांशस्यैवाभिनवविप्रतिपत्तिनिराकरणेन प्रतिपादनात्कार्यान्तरस्थापि योगात्र निर्माणवैयर्थ्यमपीति प्राचीनाचार्यैः प्रदर्शितनानानिबन्धनार्थसारसंग्रहेण शारीरकार्थविषयावगतिं प्रकरणेन विशदीं कुर्म इत्यभिप्रायः॥ १०॥

सु० टी०—गुरुप्रशंसया गुरुव्यतिरिक्तेषु विद्वत्स्वनादरात्तैरपरिगृहीतं प्रकरणं न प्रचरेदिति हृदिकृत्य तानपि संमानयति—

**पदवाक्यमाननिपुणा निपुणं विमृशन्त्विदं प्रकरणं मनसा।**
**गुणदोषनिर्णयनिमित्ततया प्रथिता हि पण्डितजना जगति॥ ११॥**

पदवाक्येति। पदवाक्यमानविषयव्याकरणमीमांसान्यायनिपुणा इत्यर्थः। अवधानार्थमाह—निपुणमिति। क्रियाविशेषणम्। परबुद्ध्या विचारं प्रतिषेधति—मनसेति। विमृशन्त्विति प्रार्थने लोट्। प्रार्थितानां

---

१ क. ग. °चारणं प्र°।

कारुण्यप्रवृत्तिहेतुमाह—गुणदोषेति । प्रकरणस्य निर्माणे मम स्वातन्त्र्यं विशुद्धिस्तु स्वतःप्रवृत्तगुणदोषविवेचकविद्वदधीनेत्यर्थः ॥ ११ ॥

अ० टी०—यद्येवं स्वगुरुन्नारायणाश्रयबलादेव त्वं ग्रन्थं कर्तुं प्रवृत्तस्तर्हि गुरुव्यतिरिक्तेषु विद्वत्स्वनादरस्त्वया कृत इति प्रतिभायात्तथा च त्वत्कृतं ग्रन्थं विद्वांसो नाऽऽद्रियेरन्निति न प्रसरिष्यतीत्याशङ्कां परिहरन्सर्वानेव विदुष आवर्जयति—पदवाक्येति । अर्थस्वरूपमात्रबोधको वर्णसंदर्भो गृहीतार्थसंबन्धश्च पदं वाक्यं तु पदानामाकाङ्क्षादिमतां समूहः प्रमाणं तु तादृग्वाक्यं प्रत्यक्षादि च तेषु निपुणास्तद्याथात्म्यनिरूपणे कुशला ये सन्ति त इदं प्रकरणं मनसा विमृशन्तु विचारयन्तु । ऊहापोहाभ्यामत्र सारासारभागौ व्यञ्जयन्त्वित्यर्थः । हि यस्माद्गुणदोषनिर्णयेति स्पष्टार्थः । परीक्षणीयोऽयं ग्रन्थो विद्वद्भिर्मया तु ग्रन्थशरीरमात्रं निष्पाद्यते विशुद्धिस्त्वस्य विद्वदधीनैवेति भावः ॥ ११ ॥

सु० टी—ननु विमृशन्तो दोषमपि कदाचिदाविष्कुर्युस्ततश्च महदप्रियं तव स्यादिति चेन्नेत्याह—

विद्वांसो यदि मम दोषमुद्गिरेयुर्यद्वा ते गुणगणमेव कीर्तयेयुः ॥
तुल्यं तद्बहु मनुते मनो मदीयं कष्टं तद्बत मनुते यदाह मन्दः ॥ १२ ॥

विद्वांस इति । यदि च दोषं गुणं वा विद्वांस एव वदेयुस्ततो मदीयं मनस्तुल्यं बहु मनुत इत्यर्थः । दोषकीर्तने हि तदुद्धाराान्निर्दोषो ग्रन्थः स्यादिति भावः । ननु वाङ्मात्रमिदमन्तस्त्वनि(*ष्टमेवेत्याशङ्क्याऽऽह—मन इति । मन एवेदं बहु मनुते न वाङ्मात्रमित्यर्थः । किं विद्वन्मन्यस्याऽपि गुण)दोषकीर्तनं भवदिष्टं नेत्याह—कष्टमिति । बत खेदे तदुक्तस्य ग्रन्थविशुद्ध्यहेतुत्वादिति भावः ॥ १२ ॥

अ० टी०—यद्येवं तर्हि परीक्षकैर्दूषणमपि क्वचिदुद्भाव्येत तच्च तवासंमतमिति तैरुपेक्षैव युक्ता ग्रन्थस्येत्याशङ्क्य सर्वं वाच्यमित्याह—विद्वांस इति । येऽत्र दूषणमुद्भावयिष्यन्ति ते किं पदवाक्यप्रमाणनिपुणाः पक्षपातशून्याश्च किं वा तद्विपरीता इति विवेचनीयम् । यद्याद्यः कल्पस्तत्र न ममासंमतिर्यतो विद्वांसः पदादिनिरूपणसमर्था यद्येकमपि दोषं ममोद्गिरेयुः कीर्तयेयुर्यद्वा ते मम गुणसमूहमेव कीर्तयेयुस्तदुभयं मदीयं मनस्तुल्यं समानमेव बहु यथा स्यात्तथा मनुत एकस्यापि दोषस्य कीर्तने बहुगुणकीर्तन इवाहं बहुसंतोषमुपेष्यामि तद्द्वारा मदज्ञाननिवृत्तिसंभवादिति भावः । द्वितीयं कल्पं प्रत्याह—कष्टमिति ।

* धनुश्चिह्नान्तर्गत ग्रन्थः क. पुस्तके नास्ति ।

मन्दः पूर्वोक्तविद्वद्विपरीतोऽपि यदि विद्वन्मन्यतया गुणदोषौ कीर्तयेत्कीर्तयतु नाम परं तु तद्गताहो कष्टं मम मनो बहु मनुते नैतावता मम काचिद्धानिर्भविष्यति तस्यैवानभिज्ञत्वप्राकट्यात्सम्यग्विद्वद्भिश्चानुगृहीतत्वात्तथा च तद्वचनमुपेक्षणीयमिति भावः ॥ १२ ॥

सु०टी०—(*ननु मन्दोऽपि नावमन्तव्यो भूषणाशक्तावपि दूषणसमर्थत्वादिति नेत्याह—

**महामहिम्नामपि यश्चिकीर्षति स्वभावसंशुद्धतरं तिरो यशः ॥**
**स नूनमाच्छादयितुं प्रवर्तते विवस्वतो हस्ततलेन मण्डलम् ॥ १३ ॥**

महामहिम्नामिति । यो हि मन्दधीर्मत्सरमात्रान्महतामपि यशोहेतुभूतं ग्रन्थं दोषारोपेण मलिनीकर्तुमिच्छेत्स नूनं करेणाऽऽदित्याच्छादनप्रवृत्त इव विद्वद्भिरुपहसनीयो न दूषणायालमित्यर्थः) ॥ १३ ॥

अ०टी०—ननु मन्दोऽपि नोपेक्षणीयो यतः सोऽप्यस्य प्रसरणविघ्नं कर्तुं समर्थ इत्यत आह—महामहिम्नामपीति । यो महामहिम्नां स्वापेक्षयाऽधिकमहिमवतामपि स्वभावसंशुद्धतरं यशो माहात्म्यं तिरस्कर्तुमिच्छति स तु स्वयमेव लोकेऽस्मिन्नुपहास्यतां गमिष्यति न मम किंचित्कर्तुं शक्नोतीत्यर्थः । अत्रैव लोकोक्तिं वदन्दृष्टान्तमाह—स नूनमिति ॥ १३ ॥

सु०टी०—तदेवं विषयादिप्रदर्शनपुरःसरं प्रकरणमारभमाणस्तस्य विचारात्मकस्य तर्करूपत्वेनाप्रमाणत्वान्न साक्षाद्ब्रह्मात्मैक्यबोधकत्वमिति तत्परिपन्थिदोषनिरासार्थत्वं वाच्यं तदपि न संभवति निर्दोषवेदजन्यनिरवद्यब्रह्मप्रतिपत्तौ प्रमाणविषयदोषासंभवादतः किं तदारम्भेणेत्याक्षिप्य तदसंभवेऽपि प्रमातरि ब्रह्मत्वासंभावनाकर्तृत्वादिविपरीतभावनयोः संभवात्तन्निवर्तनेनार्थवत्तां साधयितुं पुमपराधस्य सम्यग्धीप्रतिबन्धकत्वं लोके दर्शयति—

**पुरुषापराधमलिना धिषणा**
**निरवद्यचक्षुरुदयाऽपि यथा ।**
**न फलाय भर्तृविषया भवति**
**श्रुतिसंभवाऽपि तु यथाऽऽत्मनि धीः ॥ १४ ॥**

पुरुषेति । भर्तुर्नाम राजवल्लभः कश्चित्तं च द्विषन्तोऽन्ये राजभृत्याः केन

---

* धनुश्चिह्नान्तर्गत ग्रन्थः क. पुस्तके नास्ति ।

---

१ क. °रणात्त° । २ क. ग. °धस्यास° ।

विद्याजेन देशान्तरं प्रस्थाप्य भर्त्सुर्मृत इति राज्ञे न्यवेदयन्। तं च पुनरागतं कृच्छ्रेणाप्यलब्धराजदर्शनं राजोपवने विलीनं कदाचिदकस्माद्राजाऽवलोक्य पिशाचमिवाऽऽशङ्क्य भीतः प्राद्रवदिति प्रथा। तत्र निर्दोषचक्षुर्जन्याऽपि भर्त्सुविषया राज्ञो बुद्धिर्भर्त्सुर्मृत इति प्राक्तनदृढविपरीतभावनाप्रतिबद्धा सती यथा भर्त्सुरेवाऽयं न पिशाच इति भर्त्सुस्वरूपनिश्चयात्मकफलाय न भवति, तथा निर्दोषश्रुतिसंभवाऽप्यहं ब्रह्माऽस्मीत्यपरोक्षात्मविषया बुद्धिः प्रमातुः प्रागुक्तासंभावनादिप्रतिबद्धत्वादेककोटिकाऽपि संशयाविरोधित्वादनवधारणात्मिका सती निवृत्ताविद्यानवच्छिन्नानन्दात्मनाऽवस्थितिलक्षणफलपर्यन्ता न भवतीत्यर्थः॥ १४॥

अ० टी०--यदर्थं देवतागुरुनमस्कारविद्वदावर्जनादिप्रकाशनमेतावता ग्रन्थेन दर्शितं तमिदानीं ग्रन्थारम्भं करिष्यन्नाशङ्कोत्तरत्वेन विचारशास्त्रस्य कृत्यं तावद्विवेचयति--पुरुषापराधेति। अत्रेयमाशङ्का ननु शारीरकस्यार्थावगतिस्ततो जायते न वाऽऽद्ये तत एव तदर्थावगतेरयं ग्रन्थो व्यर्थः। द्वितीये विषयासिद्धेः प्रकरणारम्भासिद्धिः प्राक्तदर्थावगतेरभावात्। तथा शारीरकस्यापि वेदान्तवाक्यार्थावगतिहेतुत्वमनुपपन्नं तत्रापि वेदवाक्येभ्य एव तदर्थप्रमितौ विचारशास्त्रवैयर्थ्यात्। ततस्तदप्रतिपत्तौ विषयासिद्धेरारम्भासंभवात्। तस्माच्छास्त्रप्रकरणयोरारम्भहेतुं न पश्याम इति। अत्रोत्तरं-सत्यं वेदवाक्येभ्य एव तदर्थप्रमितिरुत्पद्यते शारीरकाच्च शारीरकार्थावगतिरिति तथाऽप्यसंभावनादिपुरुषदोषप्रतिबन्धवशात्प्रमाणसामग्रीतो जायमानाऽपि प्रमितिः फलपर्यन्ता न जायते किं तु मज्जनोन्मज्जनवदप्रतिष्ठितेव भवति। अतस्तादृशप्रतिबन्धव्युदासेन प्रमाणजन्यायाः प्रमितेः स्वविषयप्रतिष्ठत्वनिश्चलीकरणाय विचारशास्त्रमारम्भणीयं तस्यातिगम्भीरत्वात्तत्तात्पर्यविशदीकरणाय प्रकरणमपीति चतुर्भिः पद्यैः प्रतिपाद्यते। तत्राऽऽद्येन पद्येन प्रमाणसामग्रीतो जाता स्वप्रमेयमवभासयन्त्यपि प्रमा प्रतिपत्तुरसंभावनादिदोषप्रतिबन्धवशात्स्वप्रमेयप्रतिष्ठिता न भातीत्येतद्दृष्टान्तेनोपपाद्यते। अत्रेयमाख्यायिका वृद्धप्रवादपरम्परागता भर्त्सुर्नाम कश्चित्कस्यचिद्राज्ञः सचिवः। स कदाचित्केनापि निमित्तेन राज्ञा दूरदेशान्तरं प्रति तत्रत्यदस्युवधोद्देशेन प्रस्थापितः। तस्मिंश्च तत्र चिरं विलम्बिते सति तत्प्रतिपक्षभूतैरमात्यैस्तद्द्वेषवशाद्भर्त्सुर्मृतो दस्युभिर्हत इत्युद्घोष्य राज्ञेऽभिज्ञानपूर्वकं तन्मरणं मिथ्यैवाऽऽवेदितम्। एवं निश्चितविपरीतप्रत्यये लोके राजनि च सति भर्त्सुः स एव दस्यून्पराजित्य राजधानीमागच्छन्स्वद्वेषिभिः कृतं स्वमरणोद्घोषं

---

१ क. °तम°। २ क. ग. रूपात्म°। ३ क. ग. °त्वादव°।

नगरगतमाकर्ण्य तज्जिज्ञासया विसृज्य स्वपरिवारं स्वयमेकाकी राजधानीमागत्य राज्ञो दर्शनमाकाङ्क्षमाणः क्वचिद्वृक्षदेशमाश्रित्य स्थितः । तदा दैवात्तं देशं गतेन राज्ञा दृष्टो भर्त्तुरयमित्यवगतश्च । तथाऽपि तन्मरणश्रवणसंस्कारप्राबल्यात्प्रतिबद्धप्रमितिफलः पिशाचोऽयं जात इति विपरीतं प्रतिपद्यते स्मेति तदिदमाख्यानं सूचयन्नाह—पुरुषापराधेति । यथा निरवद्यचक्षुरुदयाऽप्यदुष्टप्रमासामग्रीजन्याऽपि राज्ञो धिषणा भर्त्तृविषया पुरुषस्य तस्यैव द्रष्टुरपराधेनासंभावनाख्येन मलिना कलुषिता सती न फलाय भवति स्वप्रमेयैकानिष्ठतया तत्प्रयुक्तव्यवहारप्रवर्तिका न भवति तथा निर्दुष्टवेदवाक्यजनिताऽप्यात्मविषया धीर्न फलाय मुक्तिरूपफलप्राप्तये न भवतीत्यर्थः । देहादिष्वहंममेत्याद्यनुभवसंस्कारप्राबल्याद्संभावनाद्यभिभूता सती श्रुतिसंभूताऽपि मतिर्न सहसा स्वविषयप्रतिष्ठा जायत इत्युक्तं भवति ॥ १४ ॥

सु० टी०—इयमपि तर्हि किं भर्त्तृधीवन्निष्फलैव नेत्याह—

पुरुषापराधविगमे तु पुनःप्रतिबन्धकव्युदसनात्सफला ।
मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता ॥ १५ ॥

पुरुषेति । शास्त्रीयविचारतः पुरुषापराधनिरसने सति सफलेत्यर्थः । तथा च वेदजन्यापातज्ञानमनभ्यासदशापन्नजलादिज्ञानवत्प्रमारूपमप्यनवधारणात्मकत्वात्संशयाद्यास्कन्दितं भवतीति तन्निरासार्थं विचारमपेक्षत इति भावः । मणीति । यथा हि दाहसमर्थादपि वह्नेर्मणिमन्त्रप्रतिबद्धशक्तेस्तदपसारण एव धूमलता दाहजा भवति नान्यथेत्यर्थः ॥ १५ ॥

अ०टी०—तर्हि राज्ञो भर्त्तृधीवद्वेदजनिताऽपि श्रोतुर्धीर्निष्फलैवेत्यत आह—पुरुषापराधविगम इति । पुनर्विचारानन्तरं पुरुषापराधस्यासंभावनादिहेतोर्दोषस्य विगमेऽपसरणे सति प्रतिबन्धकस्यासंभावनादिलक्षणस्य व्युदसनान्नाशनात्सैव प्रमितिः सफला फलपर्यन्ता भवति । तत्र दृष्टान्तमाह—मणिमन्त्रयोरिति । मणिमन्त्रयोः प्रतिबन्धकयोरपगमे तु सतीति योजना ॥ १६ ॥

सु०टी०—ननु यथा धर्मविचारो वाक्यार्थज्ञानस्य हेतुर्न प्रतिबन्धनिवृत्तेस्तस्याः कारणत्वानभ्युपगमादेवं ब्रह्मविचारोऽपि स्यादित्याशङ्क्य तस्या अहेतुत्वेऽपि तत्सत्त्वे[1] सामग्र्याः कार्यासंभवादवश्यापेक्षिता तन्निवृत्तिरिति तदर्थ एव सर्वो विचार इत्याह—

---

[1] क. °त्त्वेऽपि सा° ।

पुरुषापराधविनिवृत्तफलः सकलो विचार इति वेदविदः ।
अनपेक्षतामनुपरुध्य गिरः फलवद्भवेत्प्रकरणं तदतः ॥ १६ ॥

पुरुषेति—सकल इति धर्मब्रह्मविषयः सर्वोऽपीत्यर्थः । वेदविदो जैमिन्यादयः धर्मजिज्ञासासूत्रे, तैरपि विचारविधेः स्वीयाज्ञानसंदेहादिप्रतिबन्धनिरासस्यैव फलत्वाभ्युपगमादिति भावः । तदभ्युपगतौ बीजमाह—अनपेक्षतामिति । औत्पत्तिकसूत्रे पदपदार्थसंबन्धनित्यतया वाक्यार्थेऽपि वेदस्य प्रामाण्यहेतुत्वेन याऽनपेक्षतोक्ता तामनुपरुध्यं तामबाधित्वेत्यर्थः । तदत इति । तस्मादत एव प्रतिबन्धनिवर्तकत्वात्प्रकरणं फलवदित्यर्थः ॥ १६ ॥

अ॰टी॰—शास्त्रप्रकरणयोः पुरुषापराधनिवृत्तिफलं वेदवित्संमत्या द्रढयति—पुरुषापराधविनिवृत्तिफल इति । सकलो विचारो धर्मब्रह्मविषयः काण्डद्वयपरः सर्वोऽपीत्यर्थः । अतो विचारस्य प्रतिबन्धनिरासफलत्वाद्गिरो वेदवाक्यस्यानपेक्षताम् 'अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' [ जै॰ १ । १ । ५ ] इत्यत्र निर्णीतामनुपरुध्याबाधित्वा तच्छास्त्रं प्रकरणं फलवत्सार्थकं भवेदिति योजना ॥ १६ ॥

मु॰ टी॰—ननु शास्त्रेणैव प्रतिबन्धस्य निरस्तत्वात्किं प्रकरणेनेत्याशङ्क्य पुरुषापराधानामसंख्यत्वात्पुनःपुनरुद्भवे तन्निरासायोत्तरोत्तरग्रन्थनिर्माणमित्याह—

पुरुषापराधशतसंकुलता विनिवर्तते प्रकरणेन गिरः ।
स्वयमेव वेदशिरसो वचनादथ बुद्धिरुद्भवति मुक्तिफला॥ १७॥

पुरुषेति । गिरो वाक्यजबोधस्येत्यर्थः । शतेत्यानन्त्योपलक्षणं परिहृतेष्वपि भूयः शङ्कोत्थानात्तैः संकुलता प्रतिबन्धः । न चैतावता वेदस्य नैरपेक्ष्यं हीयत इत्याह—स्वयमेवेति । अथ प्रतिबन्धनिरासे स्वयमेव निरपेक्षादुपनिषद्वाक्यादविद्यानिवृत्तिफला ब्रह्मात्मैक्यावधारणरूपा बुद्धिरुद्भवतीत्यर्थः ॥ १७ ॥

अ॰ टी॰—शास्त्रप्रकरणप्रयोजनमुपपादितमुपसंहरति—पुरुषापराधशतेति । प्रकरणग्रहणं शास्त्रस्याप्युपलक्षणम् । अथ शास्त्रादिना पुरुषापराधेऽपसारिते सत्यनन्तरं

१ क. ग. तैरितिवि° । २ क. °त्रे पदार्थनित्यत्वतया । ग. त्रे पदार्थसंबन्धस्य नित्यतया वा° । ३ क. ग. °ध्य तस्या उपाधित्वेत्य° ।

मुक्तिफला बुद्धिर्वेदशिरसो वचनात्स्वयमेवोद्भवति न विचारस्य वाक्यप्रमित्युत्पत्तावप्युपयोग इत्यर्थः ॥ १७ ॥

सु० टी०—ननु विचारो वाक्यार्थधीहेतुरवश्यं वाच्यः शक्तिज्ञानवत्तात्पर्यज्ञानव्यापिशाब्दधीमात्रहेतुत्वात्तस्य च विचाराधीनत्वादतस्तदपेक्षत्वेऽपि नाप्रामाण्यं वेदस्येत्याशङ्क्य तस्य करणत्वादिविकल्पासहत्वेन दूपयति—

स्वाध्यायवन्न करणं घटते विचारो
नाप्यङ्गमस्य परमात्मधियः प्रसूतौ ॥
सापेक्षताऽऽपतति वेदगिरस्तथात्वे
ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तम् ॥ १८ ॥

स्वाध्यायवदिति । तत्र हि विचारः करणमङ्गं वा 'यद्यधीतेन स्वाध्यायेनार्थं विद्यात्' इतिविधौ स्वाध्याय इव विचारात्मना श्रवणेनाऽऽत्मानं विद्यादित्यात्मविचारो ब्रह्मधीकरणं तत्राऽऽह—न करणमिति । पक्षद्वययुक्तायुक्तानुसंधानात्मकस्य पूर्वपक्षेऽनिष्टप्रसञ्जनात्मकस्य वा विचारस्य तर्करूपस्य साक्षाद्वस्तुस्वरूपानवगाहित्वेनाप्रमाणत्वान्न वाक्यार्थबोधे करणत्वं घटत इत्यर्थः । अस्तु करणीभूतवाक्यस्याङ्गं विचारस्तदुक्तम्—'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति । प्रमाणानामनुग्राहकस्तर्क इत्यपीति चेत्तत्राऽऽह—नापीति । अस्य वाक्यस्य फलपर्यन्तात्मधीजनने विचारोऽङ्गमित्यपि न श्रवणविधेरन्यपरत्वस्य वक्ष्यमाणत्वेन विनियोजकाभावादनुपकारकत्वाच्च करणोपकारस्य शक्त्यादिज्ञानेनैव सिद्धेरित्यर्थः । अस्तु प्रमाणाननुग्राहकत्वेऽपि प्रमात्रनुग्राहकत्वात्फलोपकार्यङ्गमिति चेन्नेत्याह—सापेक्षतेति । तथात्वे तत्प्रकारेणापि विचारस्यावश्यापेक्षितत्व इत्यर्थः । वामदेवादेश्च तं विनाऽपि गर्भस्थस्यैव ज्ञानोत्पत्तेरिति भावः ॥ १८ ॥

---

१ क. ग. °त्वे तद्दूष° । २ क. ग. इति वि° । ३ क. °क्तानु° । ४ क. °त्वे° । ५ क. ग. °दिविज्ञाने° । ६ क. °कत्वा° ।

अ० टी०—ननु युक्त्यनुसंधानात्प्राग्वाक्यस्य फलवद्विज्ञानाजनकत्वात्तदनन्तरं च तज्जनकत्वात्कथं विचारस्य वाक्यात्प्रमित्युत्पत्तावनुपयोगः। न च सूत्रादिविचारग्रन्थानां सादित्वादनादिवेदवाक्यानुपकारितेति वाच्यं तेषां सादित्वेऽपि तदुक्तशाद्यन्यायानामनादित्वात्तदनुसंधानस्य च सर्वदा संभवाद्विचारस्य च न्यायात्मकत्वान्नित्यवत्सहकारित्वोपपत्तेर्विचारो वेदस्य स्वार्थप्रमित्युत्पादने सहकार्येवास्त्विति चेत्तत्राऽऽह—स्वाध्यायवदिति। विचारो युक्तत्वायुक्तत्वव्यवस्थापनलक्षणः स्वाध्यायवद्वेदवाक्यवत्परमात्मधियः प्रसूतौ करणं न घटते युक्तेरप्रमाणत्वात्प्रमाणेनार्थावगमात्प्रागविषयाभावेनाप्रवृत्तेश्च। आग्नेयादिवद्विचारस्वाध्याययोर्न समप्रधानतया समुच्चय इति भावः। तर्हि करणभूतस्य स्वाध्यायस्येतिकर्तव्यतारूपो विचार आग्नेयादीनामिव तदङ्गानि स्यात्। एवं च सति।

> ' धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
> इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ' ॥

इत्यभियुक्तवचनं " प्रमाणानुग्राहकास्तर्काः " इति तर्कलक्षणं चोपपन्नार्थं भविष्यतीति चेत्तत्राऽऽह—नाप्यङ्गमस्येति। अस्य स्वाध्यायस्य विचारोऽङ्गमपि न भवतीत्यर्थः। न तावद्यागस्य व्रीह्यादिकारकवदस्य प्रमाणस्वरूपोपकारित्वं संभवति। वेदस्यानादितया स्वरूपसिद्धौ कारकानपेक्षणात्स्वार्थबोधनशक्तेश्च तस्यौत्पत्तिकत्वेन तत्रापि सहायानपेक्षित्वात्। नापि प्रयाजादिवत्फलोपकारित्वमस्योत्प्रेक्ष्यते। करणस्यास्य साक्षात्फले विज्ञाने स्वशक्तिमात्रातिरिक्तसहायापेक्षानिरूपणात्प्रमितिद्वारके च मोक्षफले परमानन्दलक्षणेऽवभासमानस्वरूपमात्रे न सहायापेक्षा तद्गताज्ञानादिबन्धध्वंसस्य च स्वकार्यप्रमित्युदयनान्तरीयकत्वेन तत्रापि न विचारसहकार्यपेक्षेति भावः। विचारानिरपेक्ष एव स्वाध्यायोऽयं स्वरूपे स्वफले चेत्युक्तमेवार्थं विपक्षे दोषप्रदर्शनेन द्रढयति—सापेक्षतेति। तथात्वे विचाररूपतर्कसहायापेक्षत्वे वेदगिरः स्वाध्यायस्य वेदान्तवाक्यस्य ब्रह्मात्मनः प्रमितिजन्मनि ब्रह्मात्मविषयकप्रमित्युत्पादने सापेक्षता पुरुषबुद्धिसहायापेक्षत्वमापतति। न चेष्टापत्तिरित्याह—तन्न युक्तमिति। तत्सापेक्षत्वं तस्य न युक्तं तत्प्रमाणं बादरायणस्यानपेक्षत्वादित्यनपेक्षत्वलक्षणस्वतःप्रामाण्यव्यवस्थापनविरोधादित्यर्थः। तथा चाभियुक्तवचनं तर्कलक्षणं चासंभावनादिप्रतिबन्धनिरासद्वारा फलोपकारकत्वोपचाराभिप्रायमिति न विरोध इति द्रष्टव्यमेतेन। ननु युक्त्याद्यनुसंधानात्प्रागित्यादिनोक्तौ युक्त्याऽन्वयव्यतिरेकावन्यथानीतौ। एवं च सति स्वाध्यायजन्यायां प्रमितौ तस्याः फलपर्यन्तत्वे च प्रतिबन्धकनिरासे विचारस्योपयोगो नान्यत्र नाप्यस्यानुपयोग एवेति सिद्धमिति भावः॥ १८॥

सु० टी०—किं च न तावच्छक्तिज्ञानवत्तात्पर्यज्ञानमपि शाब्दधीमात्रहेतुर्येन तद्द्वारा विचारोऽपि तद्धेतुः स्यादित्याह—

व्युत्पन्नस्य हि बुद्धिजन्म सहसा वाक्यश्रुतौ दृश्यते
वाक्यार्थे न ततोऽस्ति बुद्धिजनने मीमांसनव्यापृतिः ॥
तेनार्थात्करणादिभावजनने मीमांसनस्याऽऽश्रिते
वेदार्थप्रमितौ तु वेदवचसः सापेक्षताऽऽयास्यति ॥ १९ ॥

व्युत्पन्नस्य हीति । यस्माद्वाक्यश्रवणानन्तरं व्युत्पन्नस्यैव सहसा वाक्यार्था धीर्दृश्यते नेतरस्य । ततोऽन्वयव्यतिरेकाभ्यामस्तु व्युत्पत्तिः कारणं न तु तात्पर्यज्ञानं तथा साकाङ्क्षयोग्यत्वादिना निश्चिते तद्विलम्बेन शाब्दबोधाविलम्बान्निश्चितान्यपरत्वादप्यर्थवादादेरर्थप्रतीतिदर्शनाल्लोकेऽपि हस्तेन दीर्घेण दण्डेन प्रहरतीत्यादौ दीर्घतया हस्ताद्यन्वयतात्पर्यसंशयेऽपि संमुग्धवाक्यार्थधीदर्शनान्न शाब्दे सर्वत्र तात्पर्यज्ञानं हेतुरिति न तद्धेतोर्विचारस्य वाक्यार्थधीजननव्यापार इत्यर्थः । किंचैवं विचारे सति वाक्यार्थज्ञानं तस्मिंश्च सति सिद्धान्तकोट्युपस्थितौ संशयाद्यवतारे विचारारम्भ इत्यन्योन्याश्रयः स्यात् । ननु द्रष्टव्य इत्यात्मदर्शनमुद्दिश्य श्रोतव्य इत्यनेन विचारो विधीयत इत्यन्यत्रोक्तेः कथं विचारस्य वाक्यार्थबोधाहेतुत्वमित्याशङ्क्याऽऽह—तेनेति । यदि करणीभूतस्य वेदस्य शक्तितात्पर्यगोचरतया शब्दसंस्कारको विचारोऽर्थात्करणकोटौ निवेशात्करणत्वेनोपचर्यते, प्रतिबन्धापनयस्य वा पुरुषोपकारस्यापि कथंचित्करणोपकारित्वमाश्रित्याङ्गत्वेनोपचर्यते, तथाऽपि वेदः सापेक्षताद्रूपणं नातिवर्तत इत्यर्थः । वस्तुतस्तु ज्ञानमात्रस्याफलत्वेन पूर्वसिद्धत्वेन चानुद्देश्यत्वादप्रतिबद्धज्ञानोद्देशेन विचारविधिर्वाच्यस्तस्य चार्थाल्लोहितोष्णीषादिविधिवद्विशेषणांशपर्यवसाने प्रतिबन्धकापनयनस्यैव फलत्वं फलतीति न वाक्यार्थबोधाहेतुत्वेऽपि विचारस्य नैष्फल्यम् । यद्वा यास्यतीति च्छेदः । तेनाङ्गत्वादिना विचारस्य वाक्यार्थबोधाहेतुत्वे सत्यर्थात्प्रतिबन्धापनये करणत्वादिभजने वेदार्थप्रमितौ या सापेक्षताऽऽपादिता सा यास्यति न भविष्यतीत्यर्थः॥ १९ ॥

---

१ ख. °कार्य्त्व° । २ क. ग. °न विधिर्व्यस्तस्य नार्था° । ३ क. ग. 'र्थप्रति° ।

अ०टी०--ननु वाक्यस्य सामर्थ्यादेव स्वार्थबोधनेऽपि चक्षुष आलोकापेक्षावच्छब्दस्य व्युत्पत्तिग्रहापेक्षावच्च विचारस्याप्यवश्यापेक्षणाद्युक्तमस्य वाक्यप्रमित्युत्पादने सहकारित्व-मिति चेन्नेत्याह--व्युत्पन्नस्येति। लोके वेदे वा वाक्यश्रुतौ वाक्यश्रवणे सति व्युत्पन्नस्य पदपदार्थसंगतेर्वाक्यार्थे विषये सहसा तत्क्षणमेव बुद्धिजन्म दृश्यते हीति निश्चितं नाव्युत्पन्नस्ये-त्यर्थः। एतदुक्तं भवति--न चक्षुष आलोकवच्छब्दस्य व्युत्पत्तिग्रहवद्वा विचारो वाक्यार्थ-प्रमित्युत्पत्तौ शब्देनापेक्ष्यते विचारप्रवृत्तेः प्रागेव व्युत्पन्नस्य गृहीतशब्दसामर्थ्यादेव तदर्थ-प्रमित्युत्पत्तेर्दर्शनात्। क्वचिदेव हि विचारापेक्षा दृश्यते यत्रार्थविरोधशङ्कया वा शब्दस्य वृत्त्यन्तरेणार्थान्तरविषयत्वं शङ्कया वा वाक्योत्थज्ञानस्य फलपर्यन्तता नावभासते तत्र तादृ-शशङ्कानिरासाय विचारस्यावसरः। शङ्काभावे तु न तदपेक्षा यदि विचारात्प्रागव्युत्पन्नस्येव वाक्यादर्थधीर्नोत्पद्येत तर्हि सिद्धान्तस्यैककोटिकरणेन विचार एव न प्रवर्तेत विषयासिद्धे-रतो दृष्टान्तो विषम इति भावः। यत एवं विचारस्यान्यार्थतैवात इदं सिद्धमित्याह---न ततोऽस्ति बुद्धिजनने मीमांसनव्यापृतिरिति। वाक्यार्थ इति पदमत्राप्यनुष-ज्यते। तस्माद्वेदप्रामाण्याविघातमिच्छता विचारस्य करणभावेनाङ्गभावेन वा वाक्यार्थप्रमिति-हेतुनाऽभ्युपगन्तुं युज्यत इति फलितमुपसंहरति---तेनार्थादिति। आयास्यतीति छेदः स्पष्टार्थः ॥ १९ ॥

सु० टी०---ननु शास्त्रविषयप्रत्यक्ब्रह्मैक्यावगतौ प्रतिबन्धनिरासेन विचारस्यार्थवत्तोक्ता। न च सा संभवति जीवत्वस्य वास्तवतया तत्त्यागेन जीवस्य ब्रह्मणैक्यासंभवाद्विषयासिद्धेः। अत एव बन्धस्य पारमार्थिकत्वेन ज्ञानानिवर्त्यत्वात्प्रयोजनासिद्धिः। एवं च कुतः शास्त्रारम्भ इत्याक्षिप्य 'बन्धाध्यासोऽनर्तार्थत्वं संभवोऽन्याधिकारिणः। विषयादेश्च संसिद्धिः' इत्यादिचतुर्वर्णकप्रथमसूत्रस्य प्रथमवर्णकार्थभूतं बन्धाध्यासं सकल-तन्त्रोपोद्घातरूपमादौ संक्षिपति---

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं
जीवेश्वरत्वजगदाकृतिभिर्मृषैव ॥
अज्ञानमावरणविभ्रमशक्तियोगा-
दात्मत्वमात्रविषयाश्रयताबलेन ॥ २० ॥

( *आच्छाद्येति। अज्ञानं कर्तृ वस्तुतो निर्विभागमप्यात्मस्वरूपं जीव-

---

* धनुश्चिह्नितग्रन्थः ख. पुस्तकस्थः।

---

१ क. ग. °न्धाधिगमेन वि°। २ क. ग. °र्थतात्वं°।

त्वेश्वरत्वजगदाकारैर्विक्षिपति ) विभजत इत्यर्थः । 'रूपं रूपं प्रतिरूपो बभूव' [बृ० २।५।१९] 'तदैक्षत बहु स्यां' [छा० ६।२।३] इत्यादिश्रुतिभ्यः । अत्र च विक्षिपति विभक्तं कुरुत इत्यर्थाध्यासोक्तेरन्यथाख्यात्यसत्ख्यात्योर्निरासः । तथा विक्षिपति ( *विभक्तमवभासयतीति ज्ञानाध्यासमूचनादख्यातिनिरासः । एवमाकृतिभिरितीदन्त्वेन विभक्ततया ) विशिष्यत इत्यर्थः । तेन ज्ञानाकारनिरासादात्मख्यातिप्रतिक्षेपश्चाभिमत इत्युन्नीयते । तेनायं जीवत्वादिविक्षेपोऽनिर्वचनीय एव न वास्तव इत्याह—मृषैवेति । तथा हि प्रपञ्चो निर्वचनीयो दृश्यत्वात् । शुक्तिरजतवत् । न च साध्यविकलो दृष्टान्तः । तथाहि न तावत्स्वतन्त्रोपस्थितेष्टभेदाग्रहः शुक्तौ प्रवर्तक इत्यख्यातिरुपपद्यते प्रवृत्तित्वावच्छेदेनेष्टपुरोवर्तिज्ञानस्य हेतुतायां लाघवेन ज्ञानवित्तिवेद्यस्य वैशिष्ट्यस्यैव शीघ्रस्फूर्तेरवच्छेदकत्वकल्पनात्तेन विना प्रवृत्त्यभावाद्वाधकाभावाच्च दण्डकारणतायां दृढत्ववन्न तु भेदाग्रहस्य तस्य तदानीमनुपस्थितेर्विरोधिग्रहकूटाभावत्वेन गुरुत्वाच्च । अत एव 'न तद्धेतोः' इति न्यायः स्वरूपभेदवादिनो भेदाग्रहासंभवाच्च । शाब्दानुमित्यादौ च योग्यताद्यसंसर्गाग्रहस्यैवमेव हेतुत्वे शब्दादिभ्रमो दुर्वारोऽन्यथा प्रत्यक्षभ्रमसिद्धिरित्युभयथाऽप्यन्यथाख्यातेरपरिहार्यत्वाच्चेत्यन्यत्र प्रपञ्चः । अस्तु तर्ह्यन्यथाख्यातिः स्मर्यमाणरजतस्याध्यासः शुक्ताविति चेन्नेन्द्रियासंनिकृष्टस्य प्रत्यक्षतानुपपत्तेः । ननु विशेष्यस्य संनिकर्षो विशिष्टधीहेतुर्न तु विशेषणस्यापीति चेन्न लाघवेन विषयसंनिकर्षतयैव हेतुत्वादवच्छेदकलाघवे च व्यक्तिगौरवस्याप्यदोषत्वात् । अन्यथा पर्वतेऽपि वह्निविशिष्टप्रत्यक्षापत्तेः । न च संस्कारः प्रत्यासत्तिः । तदा हि समाने विषये प्रत्यक्षसामग्रीबलवत्त्वेनानुभवरूपविशेषणज्ञानसंस्कारप्रत्यासत्तिभ्यां सर्वत्र विशिष्टप्रत्यक्षनियमे स्मृतिमात्रविलयापत्तेः । नापि स्मरणं चक्षुःप्रत्यासत्तिः । तन्न प्रत्यभिज्ञाभिन्ने ज्ञाने ज्ञानस्य च बहिरिन्द्रियाप्रत्यासत्तित्वात्कविकाव्यमूलमानसज्ञानस्यापि चाक्षुषत्वापत्तेश्च । अस्तु तन्मनस एव प्रत्यासत्तिः जनकेन्द्रियप्रत्यासत्तिमात्रं च हेतुर्न तु जनकयावदिन्द्रियप्रत्यासत्तिर्गौरवात् । मानसत्वे तु मनोमात्रजन्यत्वमेव तन्त्रमिति चेन्न चाक्षुषधीजनकमनःसंयुक्तत्वेनाऽऽत्मनोऽपि चाक्षुषत्वापत्तेश्चक्षुरादे-

* धनुश्चिह्नितग्रन्थः ख. पुस्तकस्थः ।

रप्राप्यकारित्वापत्तेश्च। नापि दोषः प्रत्यासत्तिः। तदबाध्ये रजतांशे तस्याहेतुत्वेनाप्रत्यासत्तित्वाच्छुक्तिरजतानुयोगिप्रतियोगिकवैशिष्ट्यांशस्य वा सत्त्वात्। दोषोऽसंनिकृष्टमप्यपरोक्षयतीति चेन्न शक्तेरर्थापत्तिरुक्तेश्चान्यथाऽप्युपपाद्यत्वात्। अत एव रजते सदेव वैशिष्ट्यं शुक्तौ भातीत्यपास्तं तस्य शुक्त्यननुयोगित्वात्तदनुयोगिकस्य चात्र मानात्। अन्यथेदंरजततत्तादात्म्यानीति समूहालम्बनादिदं रजतमिति भ्रमस्याविशेषापत्तेः। अतो बाध्यत्वादपरोक्षत्वाच्च मिथ्यैव तद्वैशिष्ट्यं भातीत्यगत्याऽभ्युपेयम्। एवं रजतमप्यस्तु। किं च लाघवेन स्वयोग्यद्रव्यविषयप्रत्यक्षमात्रे संयोगस्य प्रत्यासत्तित्वकल्पनान्नान्यत्र सतो रजतत्वस्य शुक्तौ लौकिकसाक्षात्कारसंभवः। नाप्युपनीतभानं शुक्तिगतत्वेन रजतत्वस्य प्रागननुभवात्। यत्र हि पूर्वं यद्गृहीतं तस्यैव तत्रोपनयात्। अत एव यत्र चन्दने पूर्वं सौरभं न गृहीतं तत्रानुमानमेव नोपनयः। ननु यद्धर्मावच्छेदेन पूर्वं यद्धर्मग्रहस्तद्धर्मधर्मत्वज्ञानमेव तदुपनीतभानसामग्री न तु यत्र पूर्वं यद्ग्रहः। अस्ति चात्रापि चाकचक्यविशेषावच्छेदेन पूर्वं रजतत्वग्रह इति चेत्तर्हि धूमवत्त्वावच्छेदेन पूर्वं वह्निग्रहादस्तु पर्वते वह्न्युपनय इत्यनुमानोच्छेदः। न चानुमितिसामग्री बलवती समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात्परामर्शकालीनचक्षुःसंनिकर्षादग्निप्रत्यक्षानु( * भवात्। न चोपनीतप्रत्यक्षसामग्रीतः समाने विषयेऽप्यनुमितिसामग्री बलवतीति वाच्यं संशयोत्तरव्याप्यभ्रमाद्धूमप्रत्यक्षानु)त्पत्त्यापत्तेः। न च दोषयुक्तप्रत्यक्षसामग्री बलवती भ्रमानुमित्यभावापत्तेर्व्याप्यभ्रमात्मप्रत्यक्षदोषस्य भ्रमानुमितिकरणत्वात्। न च मानान्तरोच्छेदस्तस्याऽऽपाद्यत्वात्। नन्वेवं चन्दनं सुरभीतिवद्धूमवान्वह्निमानित्युपनीतभानं स्यात्। ननु पर्वतो वह्निमानिति पर्वतत्वावच्छेदेन पूर्वं वन्ह्यग्रहादिति चेत्तर्हि चाकचक्यवद्रजतमित्येवोपनीतभानं स्यान्न तु पुरोवर्ति रजतमिति। न च चक्षुःसंयुक्ते पुरोवर्तिनि रजतत्वोपनयरूपविशिष्टभानसामग्रीतस्तादृशभानमिति वाच्यं पर्वतेऽपि तुल्यत्वात्। न चैवं धूमवान्वह्निमान्पर्वतश्चेत्यनुमित्याकारः स्यादिति वाच्यम्। प्रकृतेऽपि चाकचक्यवद्रजतं पुरोवर्ति चेति स्यात्। नन्विदं रजतमिति

---

* धनुश्चिह्नितग्रन्थः ख. पुस्तकस्थः।

---

१ क. ग. °व रजतं भा°। २ ख. °वच्च श°।

तुल्यम् । कथं तर्हि वह्निमनुमिनोमीत्यनुव्यवसायः समर्थनीय इति चेत्त्वदुक्तामुपनीतमानसामग्रीं पृच्छ । यया मानान्तरोच्छेदः प्रसञ्जितः । स्वीकुरु वा मानान्तरानुच्छेदनाय पूर्वोक्तामेव सामग्रीमिति यत्किंचिदेतत् । नाप्यसदेव तद्रजतं भासत इत्यसत्ख्यातिरिन्द्रियासंबद्धस्यापारोक्ष्यासंभवात् । न हि सदसतोः संयोगः समवायस्तादात्म्यं वा संभवति, नापि स्वरूपसंबन्धोऽसतो निःस्वरूपत्वात् । किं च प्रत्यक्षे विषयः कारणं न चासतः कारणत्वं सत्त्वगर्भत्वात्तस्येति । नापि ज्ञानमेव रजतात्मना भासतेऽहं रजतमिति भानापत्तेः । न च नीलादिबोधाः स्वांशमेव बहिरध्यवस्यन्तो भ्रान्ताः बोधत्वात्स्वप्नबोधवदिति वाच्यमस्यामेवानुमितौ व्यभिचारात् । इयमपि भ्रान्तैवेति चेत्सिद्धं तर्हि नीलादिधियामभ्रान्तत्वम् । किं च नीलादिज्ञानस्य स्वमात्रावसायित्वं नीलस्य ज्ञानाकारत्वं च न तावत्स्वेनैव गृह्यते तस्य नीलमात्रग्राहित्वात् । अत एव न वेद्यत्वसहोपलम्भनियमादिलिङ्गकानुमित्याऽपि तस्या अनात्मग्राहित्वे वा किमपराद्धं नीलादिज्ञानैरित्यात्मख्यातिपक्षोऽपि न क्षोदसहस्तस्माच्छुक्त्यवच्छिन्नचैतन्यस्थाविद्यया शुक्त्यभेदेनोत्पादितमनिर्वचनीयमेव रजतं भ्रमविषय इत्यनिच्छद्भिरभ्युपेयमेवमात्माविद्योत्थप्रपञ्चोऽपीति । ननु तर्हि सोऽपि शुक्तिरजतवद्बाध्यः स्यादिति चेन्नैतच्चित्रं बाध्यत एव ह्यसौ वक्ष्यमाणश्रुतियुक्तिभिः । अपरोक्षबाधस्तु नास्ति तदधिष्ठानसाक्षात्कारस्यानुत्पन्नत्वादिति सर्वं सुस्थम् । नन्वद्वैतात्मनि स्वतःप्रकाशमाने कुतो विभागाध्यास इत्यत आह—आच्छाद्येति । आत्मनस्तत्त्वं व्यवधायेत्यर्थः । नन्वात्मरूपाच्छादनेऽज्ञानतत्कार्यादेरपि कुतः सिद्धिरित्याशङ्क्य विशिनष्टि—संस्फुरदिति । स्वतः स्फुरताऽऽत्मचैतन्येनैव तत्सिद्धिरित्यर्थः । ननु ज्ञानाभावमात्रस्याज्ञानस्य कथमावरकत्वं भावत्वेऽपि तमोवदावरकत्वमात्रं स्यान्नतु विक्षेपकत्वमदृष्टचरत्वादित्याशङ्क्याऽऽह—आवरणेति । चिदात्मनि ज्ञानाभावासंभवान्मूढोऽहमस्मीति च भावत्वेनानुभवात्सवितुरिव मेघादि स्फुरतोऽप्यात्मनस्तदावरकमभ्युपेयं दोषाणां चाऽऽवरकत्ववद्विक्षेपकत्वस्यापि दावाग्निदग्धवेत्रबीजादिषु दर्शनाद्विक्षेपस्य च मिथ्याभूतस्य भावकार्यत्वात्तत्समानस्वभावं भावरूपाज्ञानमेवोपादानं युक्तमिति

---

१ क. °कामनुप° । २ क. ग. °वरत्वं° । ३ क. °त्यक्षेव° ।

शक्तिद्वययोगान्न किंचिदनुपपन्नमित्यर्थः । आवरणशक्तिर्नास्ति ब्रह्म न प्रकाशते चेति व्यवहारहेतुः शक्तिः । विभ्रमशक्तिस्तु विपरीतार्थप्रदर्शनशक्तिः । नन्वेवमज्ञानस्य जगदुपादानत्वे ब्रह्मविवर्तत्वं जगतो विरुध्येत मैवमज्ञातब्रह्मविवर्तत्वस्यैवाज्ञानोपादानकशब्दार्थत्वात् । तथा ह्येकमेव ब्रह्माज्ञानद्वारा नानात्वं प्रतिपद्यते । तच्च नानात्वं ब्रह्मापेक्षया विवर्तोऽतत्त्वतोऽन्यथाभावत्वादज्ञानापेक्षया च परिणामोऽनिर्वचनीयाज्ञानस्य तत्त्वतोऽन्यथाभावत्वात् । एवं च ब्रह्मविवर्तो जगदिति ब्रह्माज्ञानपरिणाम इत्यर्थः । आज्ञानपरिणामो जगदित्यज्ञा(*तब्रह्मविवर्त इत्येक एवार्थः । तत्र चेतनत्वादात्मैवाज्ञातः कारणमज्ञानं त्वचेतनद्वारमिति वक्ष्यति । नन्वज्ञा)नस्यान्यशक्तिभूतस्य कथमुक्तशक्तिद्वयाश्रयत्वमित्याशङ्क्याऽऽह—आत्मत्वेति । आत्मत्वमात्मस्वरूपं विषय आश्रयश्च यस्य मामहं न जानामीत्यनुभवात्तस्य भावस्तत्ता तदेव तस्य बलमत्राध्यस्ततया तत्सत्तया लब्धसत्ताकं सदावरकं भवति । तच्चिदाभासानुविद्धं च लोहमिव रसविद्धं विक्षेपकं च भवतीत्यर्थः ॥ २० ॥

अ०टी०—तदेवं प्रकरणाद्वेदान्तवाक्येभ्यः स्वसामर्थ्यादेव ब्रह्मात्मप्रमित्युत्पत्तौ प्रतिबन्धनिरासेन तस्याः फलपर्यन्तत्वायोपयोगो न प्रमितेः करणेतिकर्तव्यभावेन तदुत्पत्तावुपयोग इति स्थितम् । तत्रेदमाशङ्क्यते उक्तप्रकारेण शास्त्रप्रकरणयोरुपयोगस्तदा स्याद्यदि वाक्याद्ब्रह्मात्मैक्यावभासि ज्ञानं जायेत । जातस्य वा संसारबन्धनिवृत्तिः फलं संभाव्येत । यावता जीवब्रह्मणोः संसारित्वासंसारित्वादिविरुद्धधर्मवतोर्भेदे प्रामाणिके सति वाक्यसहस्रेणापि तदैक्यं बोधयितुं न शक्यते । तथाऽऽत्मनि दृश्यमानस्य प्रमातृत्वकर्तृत्वभोक्तृत्वादिरूपस्य बन्धस्य प्रत्यक्षसिद्धस्य परमार्थस्य ज्ञानेन बाधासंभवाज्ज्ञानस्य चाज्ञानमात्रविरोधित्वप्रसिद्धेरिति । अतो विषयप्रयोजनयोरसंभवाद्वेदान्तविचारशास्त्रप्रकरणारम्भासिद्धिरिति चेन्मैवं भेदबन्धयोश्चिदात्मन्येकस्मिन्नविद्ययाऽध्यस्तत्वादाविद्यकत्वे सति तयोर्वाक्यजन्यप्रमापोह्यत्वोपपत्तेरित्यभिप्रेत्य चिदात्मनि भेदविपर्यासयोस्तदज्ञाननिबन्धनत्वं तावदाह—आच्छाद्य विक्षिपतीति । अयमर्थः—अस्त्यज्ञानं नाम किंचिदहमज्ञो मां न जानामीति स्फुरत्यप्यात्मन्यनुभवसिद्धं न तज्ज्ञानाभावरूपं ज्ञानरूपं प्रत्यगात्मनि तदसंभवात् । न चाऽऽत्मा कादाचित्कज्ञानाश्रयो येन तस्मिञ्ज्ञानाभावोऽपि संभाव्येत । तदभ्युपगमेऽपि तस्मिन्नहमिति मामिति चोल्लिख्यमाने कथं तस्मिन्ननुभवाभावः । सति प्रतियोगिनि तदभावासिद्धेः । तस्मान्नाभावात्ममज्ञानं नापि सल्लक्षणं भावरूपं तथा सत्यात्मादिवत्स्वातन्त्र्या-

---

* धनुश्चिह्नितो ग्रन्थः ख. पुस्तकस्थः ।

पत्तेर्ज्ञानबाध्यत्वानुपपत्तेश्च । नापि नरशृङ्गकल्पमपरोक्षत्वेनावभासात् । तस्मात्सदसद्विलक्षणमनिर्वचनीयं मिथ्याभूतमनुभवमात्रसिद्धमज्ञानम् । तच्च निराश्रयं निर्विषयं च संभवत्याश्रयविषयसापेक्षत्वेनैव तत्प्रतीतेरित्येतदाह—संस्फुरदात्मरूपमिति । एषाऽक्षरयोजना—अज्ञानं यथान्याख्यातस्वभावं संस्फुरत्स्वमहिम्नैव स्वप्रकाशरूपेण सम्यग्भासमानमात्मनः प्रत्यग्रूपस्य रूपं याथात्म्यं परिपूर्णमखण्डाद्वयब्रह्मलक्षणमाच्छाद्य प्रतिबध्य तदेवाऽऽत्मरूपं जीवेश्वरत्वजगदाकृतिभिर्भोक्तृनियन्तृभोग्याकारैरनेकधा विक्षिपति विविधं क्षिपति विकिरतीति । स च विक्षेप आवरणं चानिर्वचनीयाज्ञानकृतत्वान्मृषैव न परमार्थत इत्यर्थः । तथा च चिदात्मनि जीवेश्वरभेदप्रतिभासस्य प्रतीचि जगद्बन्धप्रतिभासस्य चाज्ञानकल्पितत्वाद्वाक्योत्थविज्ञानस्य तदपबाधनेनाऽऽत्मतत्त्वाद्वितीयब्रह्मावभासात्मनोदयोपपत्तेर्न वेदान्तादेर्विषयाद्यभावशङ्कावकाश इति भावः । ननु कथमज्ञानस्यैतादृशं सामर्थ्यमित्यपेक्षायामाह—आवरणविभ्रमशक्तियोगादिति । आच्छादनविक्षेपकसामर्थ्ययोः सहजसिद्धत्वादित्यर्थः । यथा चक्षुःसंनिकृष्टतया स्वरूपेणावभासमानेऽपि पुरोवर्तिनि रज्जुखण्डेऽन्धकारो रज्जुतत्त्वांशं तस्य निजं रूपमाच्छाद्य तमेव सर्पधाराद्यतद्रूपत्वेनानेकविधं विक्षिपति । सहजसामर्थ्यादेवमिदमज्ञानमपीति भावः । नन्वेवं सत्यज्ञानस्य स्वातन्त्र्यापत्तौ सांख्यमतप्रवेशो ब्रह्मवादिनामित्याशङ्क्य तस्य चित्पारतन्त्र्याभ्युपगमान्नैवमित्याह—आत्मत्वमात्रविषयाश्रयताबलेनेति । आत्मत्वमात्मस्वरूपं तन्मात्रमेव न जीवेश्वरत्वविशेषितमाश्रयो विषयश्च यस्याज्ञानस्य तस्य भावस्तत्तैतदेव बलं तेनेत्यक्षरार्थः । आत्मन्यध्यस्तं ह्यज्ञानं तत्सत्तया लब्धसत्ताकं सत्तत एवैतादृशं सामर्थ्यं प्रतिपद्यते । अतोऽज्ञानात्मनाऽऽवरणमात्मचैतन्याभासानुविद्धं सद्वह्निविद्धमिव लोहं विक्षेपणशक्तिं च लभत इति भावः । एतेनाधिष्ठानगतमेवाज्ञानं तद्बलनिर्भासितं सत्तदेवाऽऽच्छाद्य तदेव विक्षिपतीति प्रतिपादनेनान्यथाख्यात्यादेर्वादिभिरुत्प्रेक्षितपक्षभेदस्य निराकरणमप्यर्थात्कृतं वेदितव्यम् ॥ २० ॥

सु० टी०—नन्वेवमात्मन आवृतविक्षिप्तत्वेनासत्कल्पस्य कथं बलत्वं तथात्वे चोपजीव्यस्य तस्य कथमज्ञानेनावरणविक्षेपौ तस्मादात्मव्यतिरिक्तमज्ञानस्य बलमास्थेयमित्याशङ्क्याऽऽह—

> प्रत्यक्त्वमात्रविषयाश्रयताबलेन
> प्रत्यक्स्वरूपमपिधाय पराग्विवर्तैः ॥
> प्रत्यञ्चमद्वयमशेषविशेषहीनं
> विक्षिप्य तिष्ठति तदग्रहणं मृषैव ॥ २१ ॥

प्रत्यक्त्वेति । न ह्यात्मनि कल्पितस्याज्ञानस्याऽऽत्मनोऽन्यद्बलं संभवत्य-

१ ख. 'त्त्वेवोप' ।

ध्यस्तस्याधिष्ठानैकजीवनत्वादात्मावरणं स्वज्ञानैवत्तस्य दुर्निरूपत्वात् । अथ वाऽज्ञानं स्वविरोधिभूतमनवच्छिन्नानन्दत्वमेवाऽऽत्मनस्तिरोधत्ते न तु स्वसाधकप्रत्यक्चैतन्याकारम् । तदेव त्वस्य बलं सत्तास्फूर्तिप्रदत्वादि- त्येतदाह—प्रत्यक्स्वरूपमपिधायेति । उपजीव्यं प्रत्यगंशमनाच्छाद्येत्यर्थः । एक- स्याप्यावृतानावृतत्वमविरुद्धमिति वक्ष्यते । तथाच तदज्ञानं कर्तृ उक्तेन बलेनाद्वयस्वान्निर्विशेपमपि प्रत्यञ्चं पराग्विवर्तैजीवत्वादिभिर्विक्षिप्य बहुधा विभज्यानादेः कालाद्विद्योदयं यावत्तस्य स्थाने स्वात्मानमभिषिच्य नृपैव तिष्ठति । वस्तुतः कालत्रयेऽपि नास्तीति योज्यम् । ननु भावरू- पाज्ञानसिद्धौ सर्वमेतदुपपद्यते, तत्रैव तु किं मानमिति चेदहमज्ञ इत्य- नुभव एव । ननु ज्ञानाभावगोचरोऽयं न तु भावरूपाज्ञानविपय इति चेन्न मयि ज्ञानं नेति भासमान एवाऽऽत्मनि ज्ञानेऽज्ञानाभावग्रहानुपपत्तेः । न चायं घटादिज्ञानविशेपाभावग्रह एवेति वाच्यं प्रतियोगितावच्छे- दकप्रकारकप्रतियोगिज्ञानस्याभावधीहेतुत्वेन घटज्ञानत्वेन तदनुपस्थितौ तदभावग्रहासंभवादुपस्थितौ च घटज्ञानाभावाभावात् । न च तदाऽप्या- त्मनि घटत्वप्रकारकज्ञानं नास्त्येव प्रतियोगिधियो घटत्वप्रकारकत्वप्र- कारत्वादिति वाच्यं ज्ञानत्वस्यैव प्रकारतानुभवेनात्र तादृशोपस्थितेः खपुष्पकल्पनात् । नन्वभावग्रहे सप्रकारकप्रतियोगिज्ञानमात्रं हेतुरन्य- थात्वन्धकारबोधो न स्यादिति ज्ञानत्वे न तदुपस्थितावपि घट- ज्ञानाभावधीसंभव इति चेत्तर्हि द्रव्यत्वादिप्रकारक(*घटज्ञानेऽपि घटो नास्तीति प्रतीतिः स्यात् । न च फलीभूतज्ञाने प्रतियो- ग्यंशे यत्प्रकारतया भासते तत्प्रकारक)प्रतियोगिज्ञानं हेतुः । अस्ति च प्रकृते ज्ञानत्वप्रकारकं तज्ज्ञानमिति वाच्यं पीतरूपवत्तयोपलभ्य- मानेऽपि घटे रूपं नास्तीत्येवंप्रकारकनीलरूपाभावधीप्रसङ्गाद्रूपत्वप्रका- रकप्रतियोगिधीसत्वात् । ननु घटशाब्दादिज्ञानाभावप्रतिभासोऽयम् । प्रतियोगिज्ञानं चात्र स्मृतिरूपं न शाब्दमिति नोक्तदोप इति चेन्न प्रकृते शाब्दत्वप्रकारकप्रतियोगिस्मृत्यभावात्सप्रकारकप्रतियोगिज्ञानहेतु- त्वस्य च दूपितत्वात् । अपि चैवं घटज्ञानस्यात्यन्ताभावः प्राग- भावः प्रध्वंसो वा गृह्यते । नाद्यस्तस्याऽऽत्मन्यभावात् । नापरस्तस्य साम-

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

१ ख. °नवृत्त° । २ क. ख. °नमिति° । ३ क. घटज्ञानाभावात् । ४ क. ग. °तत्प्रकारकता° । ५ क. ग. °ट शब्दादि ।

र्थीकालग्राह्यत्वात् । नेतरः प्रतियोगिन्यतीतत्वानुल्लेखात् । किं च यत्र यत्प्रकारकप्रतियोगि ज्ञानं तत्र तत्प्रकारावच्छिन्नप्रतियोगिकाभावज्ञानं न संभवतीति व्याप्तेरपि ज्ञानवत्यात्मनि न कदाचिदप्यज्ञत्वानुभवसंभवः । ननु ज्ञानस्यावश्यवेद्यत्वानभ्युपगमात्स्ववृत्तिवर्तमानज्ञानाग्रहे स्मृतज्ञानसामान्याभावानुभव आत्मनि संभवतीति चेन्न स्वसत्तयैव ज्ञानस्य स्वाश्रये स्वाभावधीविरोधित्वादवेद्यज्ञाने च मानाभावाद्घटस्तत्र दृष्ट इति घटवज्ज्ञानस्मृतेर्ज्ञाते घटे घटो ज्ञातो न वेति कदाऽपि संशयाभावाच्च । नन्विच्छानन्तरमिष्टं न वेति संशयादर्शनात्साऽपि स्वप्रकाशा स्यादिति चेन्न तस्याः सुखादिवदवश्यवेद्यत्वादेव तदुपपत्तेः । न च ज्ञानेऽपि तथाऽनवस्थापत्तेः । विरललग्नवित्तिधारानभ्युपगमान्नानवस्था । न च ज्ञानस्यामानकत्वं कदाचिद्वेद्यत्वनियमादिति चेदेवमपि ज्ञानोत्तरकाले संशयापत्तिरपरिहार्येत्युभयतःपाशा रज्जुः । तस्मादात्मनि सामान्यतो विशेषतश्च ज्ञानाभावप्रतीत्यसंभवाद्भावरूपमेवाज्ञानं स्वाविरोधिसाक्षिज्ञानेनाहमज्ञ इत्याकारेण प्रतीयत इत्यकामेनापि स्वीकरणीयम् । अनुमानं च चैत्रप्रमा चैत्रस्थप्रमित्यभावभिन्नस्वानादेर्ध्वंसिनी प्रमात्वान्मैत्रप्रमावत् । तमोनिवृत्त्यव्यवहितोत्तरचाक्षुषज्ञानं स्वविषयावरणस्वनिवर्त्यस्वदेशस्थभावपूर्वकमव्यवहृतार्थव्यवहृतिहेतुत्वात्तमसि प्रथमोत्पन्नदीपप्रमावदिति । विवरणकारानुमाने तु स्वप्रागभावव्यतिरिक्तेति साध्यविशेषणं ज्ञानप्रागभावपूर्वकत्वेनार्थान्तरवारणाय । न[1] च ज्ञानं प्रागभावनिवृत्तिरूपं न तु तन्निवर्तकमतः स्वनिवर्त्यपदेनैव तद्वारणमिति वाच्यम् । आद्यन्तवतो ज्ञानस्यानाद्यनन्तप्रागभावध्वंसात्मतानुपपत्तेः । अन्यथा प्रागभावध्वंसात्मकभावप्रतियोगित्वेन तयोर्जन्यत्वविनाशित्वापत्तेः । अतः प्रतियोगिभिन्ना तन्निवृत्तिरिति मतमवलम्ब्योक्तम् । न चाभावस्यानावरणत्वात्स्वविषयावरणपदेनैव तद्वारणम् । विषयस्फुरणविरोधित्वं ह्यावरणत्वं ( *तच्च प्रागभावेऽप्यस्ति । एवं चोत्तरज्ञाननिवर्त्यपूर्वज्ञानवारणाय तत् । ) सुखहेतुविषयज्ञानप्रतिबन्धकदुरितवारणाय—स्वनिवर्त्येति । विषयनिष्ठावरणे भिन्नप्रमातृनिष्ठाज्ञानसिध्यर्थं—स्वदेशगतेति । मिथ्याज्ञानव्यावर्तनाय—वस्त्वन्तरेति । पक्षहेतुदृष्टान्तास्त्वेवमेव द्रष्टव्याः ॥ २१ ॥

---

* धनुश्चिह्नितग्रन्थः क. पुस्तके नास्ति ।

---

१ क. ग. °नमं° ।

अ० टी०—नन्वात्मनस्तत्त्वानवभासरूपमावरणं भेदविपर्यासरूपविक्षेपश्चेत्युभयं स्वाश्रयविषयकाज्ञानकृतमिति किमित्यभ्युपेयते तत्र प्रमाणाभावाद्भावे वाऽज्ञानस्य स्वातन्त्र्यापत्तेरात्माश्रयताबलेनेत्ययुक्तं स्यादात्मनः स्वत एवाज्ञानप्रेरकत्वेन तद्बलकरत्वे च विकारित्वापत्तेरज्ञानसहायतया तथात्वेऽन्योन्याश्रयत्वापाताद्‌तो जीवेश्वरत्वजगदाकृतीनां यथाप्रतीति परमार्थत्वमेवास्तु किमविद्याकल्पितत्वकल्पनया प्रमाणहीनयेति चेत्तत्राऽऽह—**प्रत्यक्त्वमात्रविषयाश्रयताबलेनेति**। अयमर्थः—न तावदज्ञानं स्वतन्त्रमभ्युपगन्तुं शक्यते तस्य जडत्वेनानात्मत्वे सति स्वातन्त्र्येणायं घट इतिवदिदमज्ञानमिति प्रतीतिप्रसङ्गात्। नचैवं प्रतीयते किं त्वहमज्ञो मय्यज्ञानमयमज्ञ इति वा पराश्रयत्वेनैव तदनुभवात्तस्य पारतन्त्र्यमवसीयते। अतश्चेतनाश्रयत्वं तावदस्य निश्चितमिति स्वाश्रये चेतने प्रत्यगात्मन्येवाज्ञानमावरणविक्षेपरूपमतिशयं जनयेत्स्वासंबद्धे तज्जननेऽतिप्रसङ्गात्। तथा च तस्य चिदात्मविषयताऽपि सिद्धा येन यत्रातिशयः क्रियते स तस्य विषय इति स्थितेः। न चात्र प्रमाणाभावो 'नीहारेण प्रावृता जल्प्या च' इत्यादिश्रुतेः प्रमाणत्वात्। इहाप्यग्रे प्रमाणस्य वक्ष्यमाणत्वात्। नाप्यात्मनोऽज्ञानप्रेरकत्वेन विकारित्वप्राप्तिरविकृतस्यैव रज्जुखण्डादेः स्वारोपितसर्पविसर्पणादिवाज्ञानाश्रयकारहेतुत्वोपपत्तेरज्ञानविशिष्टस्याज्ञानप्रेरकत्वानङ्गीकारात्तत्संनिधिसन्मात्रेणैव तदङ्गीकारादन्योन्याश्रयत्वाप्रसक्तेः। न च जीवेश्वरजगदाकारभेदस्य परमार्थत्वमुपपद्यते तस्याज्ञानान्वयव्यतिरेकानुविधायित्वात्। जीवस्य चैतन्यात्मन ईश्वरस्य च तद्रूपस्योपाधिभेदमन्तरेण स्वरूपतो भेदानिरूपणादुपाधिभूतस्य च कार्यकारणरूपजगत उत्पत्तिप्रलयश्रवणादागन्तुकत्वे सत्याद्यन्तवतो रज्जुसर्पादिव विद्याकल्पितत्वाव्यभिचारादारम्भवादादेश्चाग्रे निराकरिष्यमाणत्वाच्चिदात्मनश्च स्वतोऽशेषविशेषहीनतयाऽद्वयानन्दरूपतायाः अस्थूलाद्यनेकश्रुतिभिस्तात्पर्येण प्रतिपादनाच्च न पूर्वश्लोकोपपादितार्थे कोऽपि दोष इति। अक्षरार्थः सुगमः। यद्वाऽऽत्मत्वमात्रविषयाश्रयताबलेनाज्ञानमात्मन्यावरणविक्षेपौ करोतीत्ययुक्तमावरणविभ्रमशक्तिमतस्तस्य स्वत एव तत्कर्तृत्वसंभवात्। अन्यथा स्वाश्रयविघातापत्तेराश्रियमाणं विषेय्यं च तस्याऽऽत्मातिरिक्तं विषयान्तरमन्वेषणीयम्। तच्चान्यथाख्यात्यादेरनङ्गीकारादद्वैतवादिनां दुःसंपादमितीमामाशङ्कां परिहरन्पूर्वपद्योक्तमर्थं विशदयति—**प्रत्यक्त्वमात्रविषयाश्रयताबलेनेति**। तत्पूर्वोक्तमज्ञानशब्दितमग्रहणविधारूपं प्रत्यक्त्वरूपं परिपूर्णानवच्छिन्नसच्चिदानन्दलक्षणमविधाय स्वरूपेण भासमानेऽपि यथोक्तरूपेणानवभासमानतामापादयतीयावत्। यथेदमित्येवंरूपेण भासमानमेव पुरोवर्ति शुक्त्यादि शुक्तिरूपेणानन्यसाधारणतयाऽनवभासमानमविद्यया भवति। तद्वत्सर्वानुभवसदात्मनाऽवभासमानमेवाऽऽत्मस्वरूपमद्वयाखण्डानन्दानुभवसच्चिद्रूपेणानवभासमानं जायतेऽज्ञानसंपर्कादिति यत्तदस्याविधानमित्यर्थः। सच्चिद्रूपस्य विभोरात्मनोऽस्ति प्रकाशत इति स्वरूपाप्रतिबद्धव्यवहारेऽन्यानपेक्षतया चित्स्वप्रकाशे प्राप्तेऽपि तादृग्रूपमात्मतत्त्वं नास्ति न

प्रकाशत इति विपरीतव्यवहारस्यानादेरागन्तुकनिमित्तासंभवादस्त्यनाद्यज्ञानमात्मन्यावरणमिति गम्यत इति भावः । परागिति चैतन्यभास्यमुक्तलक्षणात्मस्वभावविपरीतस्वभावं जडमभिधीयते । तद्रूपेण ये विवर्ता विशेषाकारवृत्तयोऽहंकारादिलक्षणास्तैस्तमेवासाधारणस्वभावं प्रत्यञ्चमात्मानं विक्षिप्य विविधं क्षिप्त्वा देवतिर्यङ्मनुष्यस्थावरादिभेदेनानेकधाऽवभासास्पदं कृत्वा तिष्ठति । तदेवं क्रियमाणं मृषैवाऽऽवरणं विक्षेपरूपं च न वस्तुतो यथा स्वरूपावरणरजताद्याकारविक्षेपौ तथेत्यर्थः । यथा वा सुप्ते पुंस्येकस्मिन्नावरणविक्षेपौ तद्वदित्यर्थः । एतच्चाज्ञानस्य निरपेक्षात्स्वसामर्थ्यान्न भवतीत्याह—प्रत्यक्त्वेति । प्रत्यक्त्वमात्रं यथा व्याख्यातं प्रतीचः स्वरूपं तदेव विषय आश्रयश्च यस्य भावस्तत्ता तस्य बलेनोपबृंहणेन चैतन्यव्याप्ततयेत्यर्थः । न हि चिदात्मव्याप्तिमन्तरेणाचेतनस्य स्वकार्यसमर्थस्यापि कार्यकरत्वं संभवतीति भावः । एतेनाऽऽवरणादिशक्तिमतोऽप्यज्ञानस्य स्वातन्त्र्याशङ्का पराकृता । ननु यद्बलादज्ञानस्य विक्षेपसामर्थ्यं तदेवाऽऽत्मतत्त्वं स्वयमेवानेकधा विक्षिप्यतां किमज्ञानाभ्युपगमेनेत्यत आह—अद्वयमिति । अविकारि कूटस्थमित्यर्थः । कुत एतदित्यत आह—अशेषविशेषहीनमिति । यत्केनापि विशेषेण कदाचिद्युज्यते तद्विक्रियते न निर्विशेषमयं तु प्रत्यगात्माऽशेषविशेषहीनोऽतः कूटस्थ इत्यर्थः । तथा च यदेकमविक्रियमनाधेयातिशयमलुप्तप्रकाशस्वभावमिति च प्रमाणेनावधारितं तस्य तद्विपरीताकारावभासो न स्वाभाविको नाप्यन्योपरागात्परमार्थत उत्पन्नः संभाव्यत इत्यतो मृषैवेत्यज्ञानाविद्यादिशब्दवाच्यानिर्वचनीयनिबन्धन इति युक्तमुक्तं मृषैवेति । एतेनाज्ञानस्य स्वाश्रयविघातापत्तिदोषपरिहारायाऽऽत्मातिरिक्तं विषयान्तरमन्वेषणीयमित्युक्तं परास्तं वेदितव्यम् । विषयान्तरस्य परमार्थत्वे तस्याज्ञानकल्पितत्वानुपपत्तेरपरमार्थत्वे तस्यारोपमात्रसिद्धस्याधिष्ठानमन्तरेणानुपपत्तेः । अधिष्ठानं च तदेव भवति यदज्ञानावृतस्वभावविशेषं वस्तु वस्त्वन्तरात्मनाऽवभासमानम् । अत आवरणविक्षेपयोः समानाधिकरणत्वनियमादावरणस्य चामूर्तेऽनवयवे द्रव्यगुणादिवस्तुकृतत्वासंभवादज्ञानकृतत्वे निश्चिते तस्याऽऽश्रय एव विषय इति तत्रैव तत्कृतो विशेष इति नाऽऽश्रयविघातित्वदोषावकाशः परमार्थतः स्वाश्रये तस्याकिंचित्करत्वादिति सर्वं समञ्जसम् ॥ २१ ॥

सु० टी०—ननु कथं स्फुरतोऽप्यात्मनोऽभावभूतमावरणं कल्पयित्वा जीवत्वादिविभागस्यानिर्वचनीयत्वं साध्यते कल्पनालाघवेन भास्करादिवत्परिणामवादाश्रयणेन पारमार्थिकत्वमेव किं नाभ्युपेयत इत्याशङ्क्य कूटस्थस्य ब्रह्मणो वस्तुतो वैपरीत्येन परिणामासंभवादज्ञानद्वारा च परिणामाभ्युपगमे रज्जुसर्पादिवदनिर्वचनीयताया एव भङ्ग्यन्तरेण

१ क. ग. °यतया ।

स्वीकारोत्परत्र परावभासत्वादिलक्षणयोगाच्चाध्यस्तमेव विपरीतमल्पत्वादिकं ब्रह्मणीत्याह—

प्रत्यक्षलिङ्गवचनानि हि दर्शयन्ति
निर्दुःखनित्यसुखविग्रहतां प्रतीचः ॥
निर्दुःखनित्यसुखविग्रहभूम्नि नास्मि-
न्संभाव्यते दृशि पुरोदितमल्परूपम् ॥ २२ ॥

प्रत्यक्षेति । यतो वक्ष्यमाणानि प्रत्यक्षादीनि प्रतीचो निर्दुःखनित्यसुखत्वं बोधयन्ति । सुखत्वेनापरिच्छिन्नत्वमाह नाल्पे सुखमस्तीति । 'भूमैव सुखम्' [ छा० ७।२३।१ ] इति श्रुतेरतोऽस्मिन्नपरिच्छिन्ने भूम्नि दृगात्मनि जीवत्वादिपरिच्छिन्नं रूपं न कथंचिद्वास्तवं संभाव्यत इति तत्र तत्प्रथनान्यथानुपपत्तिरेवाध्यस्तत्वे मानमित्यर्थः ॥ २२ ॥

अ० टी०—नन्वात्मन्यनिर्वचनीयाविद्याविलासात्मकमनिर्वचनीयमेवाखण्डानन्दानुभवसद्ब्रह्मविपरीतरूपं जीवेश्वरजगद्बन्धादिलक्षणमात्मा तु सदैवाशेषविशेषहीन इत्यत्र किं प्रमाणमिति चेत्तत्राऽऽह—प्रत्यक्षलिङ्गेत्यादिना । प्रतीचः प्रत्यगात्मनो निर्दुःखनित्यसुखविग्रह[ता] मखण्डानन्दकूटस्थरूपतां प्रत्यक्षलिङ्गवचनानि दर्शयन्ति हीति योजना । हिशब्दो वक्ष्यमाणप्रत्यक्षादिप्रमाणानां यथोक्तात्मपरतया निश्चितत्त्वज्ञापनार्थः । तदेवं प्रमाणासिद्धे प्रतीचोऽशेषविशेषहीनाच्युतस्य कूटस्थानन्दरूपत्वे तस्मिंस्तद्विपरीतरूपमाविद्यकमध्यारोपितमेव न परमार्थं संभाव्यत इत्याह—निर्दुःखनित्येत्युत्तरार्धेन । निर्दुःखादिलक्षणे भूम्नि परिपूर्णे ब्रह्मण्यस्मिन्प्रमाणावगते दृशि सर्वसाक्षिरूपे पुरोदितं जीवजगदीश्वरादिलक्षणमल्परूपं परिच्छिन्नं सापेक्षस्वभावं परमार्थतो न संभाव्यत इति योजना ॥ २२ ॥

सु० टी०—तत्र प्रत्यक्षमुपन्यस्यति—

प्राज्ञे सुखं समनुभूय समुत्थितः सन्
सर्वप्रकारविषयप्रतिपत्तिशून्ये ॥
सुप्तोऽहमत्र सुखमित्यनुसंदधानः
सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ॥ २३ ॥

प्राज्ञ इति । प्रकृष्टं विषयकालुष्यरहितमा समंतात्साक्षिसुखं जानात्यस्मिन्निति प्राज्ञः । सुषुप्तिः पूर्णसुखस्याऽऽवृतत्वादिति । तस्यामवस्थायामात्मा-

---

१ क. ग. °रावपराभेदस° । २ क. ग. पूर्वसु° ।

भिन्नं सुखं विक्षेपाभावात्सम्यगनुभूय पश्चात्सुखमहं सुप्त आसमित्यनुसंदधानः सर्वोऽपि जीवस्तस्य प्रतीचः सुखत्वं प्राज्ञे प्रत्यक्षेणानुभवतीति निश्चीयते तदानीमात्मव्यतिरिक्तस्यानुभवानुपपत्तेरित्यर्थः। अस्तु वैषयिकमेव तत्सुखमितिचेत्तत्राऽऽह—सर्वप्रकारेति। तदानीं भौतिकवासनामयसर्वप्रपञ्चविलयात्तत्प्रतिपत्तिशून्ये प्राज्ञे विषयसुखस्यासंभावितत्वादित्यर्थः। तदानीं दुःखस्मृत्यसंभवेन दुःखाभावगोचरोऽपि नायमनुभव इति भावः। अस्तु तर्हि समुत्थितस्यायमनुभवो दुःखस्मृत्यभावानुमितदुःखानुपलब्ध्यनुमितदुःखाभावगोचर एवेत्याशङ्क्याऽऽह—समुत्थितः सन्। झटित्यनुमानावलिं विनैवानुसंदधान इति। समुत्थानं हि प्रथममविद्यायां सूक्ष्मचिदाभासद्वारा ततः स्थूलस्थूलतराभासेषु प्राणबुद्धिमनइन्द्रियशरीरेषु ततश्चाक्षुषादिवृत्तितन्निष्ठविषयाकाराभिन्नाभिभूतजाड्ये विषय इत्येतदनन्तरमविलम्बेनैवोक्तपरामर्श इति नास्य दुःखाभावगोचरत्वमित्यर्थः। दुःखस्मृत्यभावस्य दुःखानुपलब्ध्यव्याप्यत्वाच्चेति भावः। ननु घटमहमद्राक्षमित्यादौ भवतु वृत्तिनाशजसंस्कारादतीतत्वपरामर्शोऽज्ञानसुखसाक्ष्यनुभवस्य तु साक्षिरूपस्य नित्यत्वेनाविशिनः संस्काराहेतुत्वात्। कुतः स इति चेदुच्यते सुखमस्वाप्सं मूढ आसं सुखमन्वभूवमित्युत्थितस्य परामर्शात्सुखाज्ञानसाक्षात्काराविद्यावृत्तित्रयं सुषुप्तावितिविवरणकाराः। वार्त्तिककृतस्तु सुषुप्तावविद्याया गुणसाम्येन परिणामासंभवात्स्वापावस्थागतं भूतत्वं साक्षिण्युपचर्यातीतत्वपरामर्श इत्याहुः अज्ञाश्रयसंस्कारात्कथमहंविशिष्टाश्रयः परामर्श इति चेन्न, अज्ञाश्रयस्मृतेरेव जाग्रज्जाताहंकारसामानाधिकरण्येन तदाकारत्वादिति दिक् ॥२३॥

अ०टी०—तत्र प्रत्यक्षं सर्वजनप्रसिद्धं सौषुप्तानुभवं तावदाह—प्राज्ञे सुखमिति।

'प्राज्ञे सुखं समनुभूय समुत्थितः सन्सर्वोऽपि जन्तुरहमत्र सुखं यथा स्यात्'।

तथा सुप्त इत्यनुसंदधानोऽस्य चिदात्मनः सौख्यं सुखात्मतां निर्विषयानन्दस्वभावमवगच्छतीति संबन्धः। प्राज्ञे प्रज्ञाप्रधाने निर्विशेषचिदात्मनि सुषुप्त्यवस्थापन्ने सुखं स्वरूपानन्दं समनुभूय सम्यगव्यधानेन स्वप्रकाशस्वरूपचैतन्यात्मनाऽनुभूय प्रकाशमानाखण्डस्वरूपसुखात्मना स्थित्वेति यावत्। यद्यपि 'सति संपद्य न विदुः सति संपद्यामहे' [ छा० ६।९।२ ] इति श्रुतेस्तत्राविद्यासद्भावोऽवगतस्तथाऽपि तदानीं तस्या विक्षेपाभावान्न सा स्वरूपसुखं भेत्तुमलमिति न व्यवधानकरत्वमिति द्रष्टव्यम्। ननु तत्रापि

---

१ क. ज्ञानाश्र°। २ क. °ज्ञानाश्र°।

न्यसुखसंभवात्तदेवानुभूतं परामृश्यतेति कथमात्मनो यथोक्तसुखरूपत्वसिद्धि-रित्यत आह—सर्वप्रकारविषयप्रतिपत्तिशून्य इति। प्राज्ञविशेषणमेतत्। सर्वप्रकाराः परोक्षापरोक्षार्थविषयकानुभवस्मृतिरूपाः प्रतिपत्तयो ज्ञानानि तैः शून्ये विषयज्ञानरहित इत्यर्थः। तथा च विषयज्ञानाभावे तज्जन्यस्य सुखस्यापि तत्राभाव इति परिशेषात्स्वरूपसुखस्यैव तत्रानुभव इत्यर्थः। यद्वा सुखमत्र सुप्त इति दुःखाभावस्यैवायं परामर्शो न सुखस्येत्याशङ्कामपनुदन्प्राज्ञावस्थां विशिनष्टि—सर्वप्रकारेति। सर्वप्रकारो यो विषयो भावात्मकोऽभावात्मकश्च तस्य प्रतिपत्तिशून्य इत्यर्थः। विषयज्ञानसत्त्वे सुषुप्तित्वव्याघाता-दिति भावः। न च तदानींतनदुःखाभाव इदानीमनुमीयते न पुनस्तत्रानुभूतस्य सुखस्य दुःखाभावस्य वाऽयं परामर्श इति वाच्यं तदनुमा[प]कलिङ्गानिरूपणादिति दिक्॥ २३॥

सु० टी०—लिङ्गमपि दर्शयति—

सर्वं यदर्थमिह वस्तु यदस्ति किंचि-
त्पारार्थ्यमुज्झति च यन्निजसत्तयैव॥
तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञा-
स्तत्प्रत्यगात्मनि समं सुखताऽस्य तस्मात्॥२४॥

सर्वमिति। इह जगति यत्किंचिद्वस्त्वस्ति। अस्तीति द्वितीयभावविकार उच्यते। विक्रियमाणमनारभजातमित्यर्थः। तत्सर्वं यदर्थं सर्वापेक्षया यत्प्रधानमित्यर्थः। तत्सुखमिति तल्लक्षणविदो वर्णयन्तीति संबन्धः। ततश्च निजसत्तया सर्वानात्मशेषित्वं सुखत्वं सुखरूपपरिणामः। अतिव्याप्ति-वारणाय निजेत्यादि। तस्य स्वरूपसुखाभिव्यञ्जकत्वेनैव सर्वशेषित्वं न निजसत्तयेति। सर्वशब्देन सुखस्यापि संग्रहेऽसंभवस्तद्वारणायानात्मेति। लक्षणान्तरमाह—पारार्थ्यमिति। यत्स्वरूपसत्तयाऽनन्यार्थमित्यर्थः। आन-न्दाद्ध्येवेति पञ्चम्यानन्दस्य सृष्ट्याद्यङ्गत्वात्। असंभववारणाय स्वरूपेत्यादि। अविद्याद्वारा ह्यानन्दः सृष्ट्यङ्गेन स्वरूपेणेति। सुख-स्यानन्यार्थत्वं च प्रसिद्धम्। न हि सुखेन किंचित्क्रियते। न च तस्य क्वापि विनियोगोऽस्ति। स एव हि परम उपकारः फलं च पुरुषार्थ-त्वादित्यत्र वृत्तेरेव मोक्षत्राङ्गत्वमुक्तमित्यविरोधः। लक्षणयोर्लक्ष्यनिष्ठता माह—तत्प्रत्यगात्मनीति। तदस्य रूपं प्रतिचक्षणायेतिषष्ठीचतुर्थीभ्यां द्वैतस्याऽऽत्मनि विनियोगाल्लक्षणद्वयमपि पूर्णसुखे प्रत्यगात्मनि च

तुल्यमित्यर्थः । आत्मा सुखस्वरूपः स्वसत्तया सर्वशेषित्वात्स्वतोऽनन्यार्थत्वाद्वा यन्नैवं तन्नैवं यथा घटादीति व्यतिरेकी । आत्मसुखमेव हि धर्मजन्यसत्त्वपरिणामैर्नानात्वेनाभिव्यज्यमानं विषयसुखं न त्वन्यदिति नान्वयित्वाशङ्का ॥ २४ ॥

अ० टी०—एवं सुखमस्वाप्समित्युत्थितस्य परामर्शान्यथानुपपत्तिसिद्धः सौषुप्तानुभवः प्रत्यक्ष उक्तस्वरूपात्मनि प्रमाणं व्युत्पाद्य लिङ्गमित्युक्तमनुमानं च तत्रोपपादयति—सर्वं यदर्थमिति । निरुपाधिकानुकूलवेद्यं हि लोके साक्षात्प्रियमिति प्रसिद्धम् । तच्च सुखमेव नान्यदन्यत्र तादर्थ्येनैव प्रियत्वानुभवात् । तच्च सुखं प्रत्यगात्मैव नान्यत्तयोरेकलक्षणत्वात् । यतः सुखलक्षणज्ञा एवं सुखलक्षणं वर्णयन्ति । कथं, सर्वं यज्जायापुत्रादि वस्तु प्रियत्वेन लोके प्रसिद्धमिह व्यवहारभूमावस्ति यदर्थं यस्याभिव्यक्त्यर्थं सत्प्रियत्वेनाभिमतं यत्पुरस्कारेण यत्प्रियत्वेन वाऽऽदीयत इत्यर्थः । तत्सुखमिति संबन्धः । एतावत्युक्ते भृत्यभार्यादावतिव्याप्तिः । भृत्यादेः स्वव्याप्यं प्रति शेषत्वेऽपि स्वाम्यपेक्षया परार्थत्वात् । तदर्थमुक्तं—यत्पारार्थ्यमुज्झतीति । स्वयमन्याशेषत्वे सति सर्वान्यशेषितं सुखलक्षणमित्यर्थः । एवमपि स्वपुत्रावर्तिनि सुखेऽतिव्याप्तिः । तस्मिन्नपि पित्रा ज्ञायमान उक्तलक्षणसद्भावादित्यत उक्तं—निजसत्तयैवेति । स्वसत्तामात्रेणैव पारार्थ्यं त्यजति न स्वसत्तायां लेशेनाप्यन्यशेषतां भजत इत्यर्थः । पुत्रादिगतसुखस्य पुत्रादावुक्तलक्षणत्वेऽपि पित्राद्यपेक्षया तत्सुखशेषत्वाद्युक्तं ततो व्यावृत्त्यर्थं विशेषणमिति । इदं यत्सुखलक्षणं तल्लक्षणज्ञा वदन्ति तत्प्रत्यगात्मनि समम् । यतः प्रत्यगात्माऽपि यथोक्तसुखलक्षणयोगी । न हि प्रत्यगात्मा कदाऽपि कस्यचिच्छेषो भवति भृत्याद्यन्तस्थशरीरगतस्यापि तस्य स्वरूपेण स्वाम्यादिशेषत्वाभावात्सर्वत्र प्रीतेश्च तदर्थत्वेन तच्छेषत्वात् । तथा च चिदात्मा सुखरूपः सुखलक्षणयोगित्वात्सुखवदित्यनुमानमुक्तमित्यर्थः ॥ २४ ॥

सु० टी०—लिङ्गान्तरमाह—

> प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः
> स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ।
> प्रेयःश्रुतेरपि ततः सुखतानुमानं
> नैयायिकोऽपि न दृगात्मनि निह्नुवीत ॥ २५ ॥

प्रेमेति । आत्मा सुखस्वरूपो निरुपाधिप्रेमास्पदत्वान्न यदेवं न तदेवं यथा पुत्रादीति । प्रथमपादेन व्यतिरेकव्याप्तिमाह—असुखात्मनि सुतादावात्मोपाधिक एव प्रेमेत्यर्थः । पक्षधर्मत्वासिद्धिं परिहरति—स इति ।

स निरुपाधिः प्रेमा प्रत्यगात्मनि नित्यसिद्ध एव क्रमेरपीयमाशीः 'मा न भूवं भूयासम्' इत्यादिप्रसिद्धेः[1]। अन्यथा तस्य दुःखपरिहाराय पलायनं सुखाय च च्छायाद्युपसर्पणं न स्यात्। 'तदेतत्प्रेयः पुत्रात्' [बृह० १।४।८] इत्यादिश्रुत्याऽपि हेत्वसिद्धिः परिहृतेत्याह–प्रेय इति। आश्रयासिद्धिमुद्धरति–दृगात्मनीति। ततः प्रागुक्ताद्धेतोर्दृगात्मनि सुखत्वानुमानं नैयायिकोऽप्यसुखात्मवाद्यपि नापह्नोतुमलमित्यर्थः। नन्वसिद्धविषयेच्छा भवति सिद्धे वाऽऽत्मनि कथमिच्छात्मकप्रेमेति। मैवं न हि प्रेमात्मिकेच्छा साध्यविषया तस्या आशीरूपायाः सिद्धेऽपि दृष्टेः। किं तु स्वर्गो मे स्यादित्याद्यभ्यर्थनीयफलविषयैवेति न किंचिदेतत् ॥ २५ ॥

अ० टी०—ननु सुखस्याऽऽत्मगुणत्वावगमादहं सुखीत्येव तदनुभवादहं सुखमित्यनुभवाभावाच्च नाऽऽत्मा सुखरूपोऽतोऽनुमानमनुभवबाधितविषयमिति नैयायिकादयो मन्यन्ते। तान्प्रति बोधयन्नाऽऽत्मनः सुखरूपत्वे लिङ्गान्तरमाह–प्रेमाऽनुपाधिरिति। अनुपाधिः प्रेमा प्रीतिरसुखात्मनि सुखभिन्नस्वरूपेऽचेतने नोपलब्धः केनापीति सुखस्य तावन्निरुपाधिकप्रेमास्पदत्वं प्रसिद्धम्। स प्रेमास्पदभावः प्रत्यगात्मनि नित्यसिद्धो नित्यानुभवसिद्धः कृमेरपीति वदन्नात्र विवादः कस्यचिदिति दर्शयति। तस्याऽऽत्माऽपि सुखरूप इत्यर्थः। न हि सुखं स्वसत्तायां चैतन्यं व्यभिचरति येन द्रव्यमात्रस्य चेतनस्य गुणः स्यात्। न च चेतनया प्रकाश्यमानत्वात्तदव्यभिचारो न चेतनात्मकत्वादिति वाच्यं समानाश्रययोरसमानकालयोः प्रकाश्यप्रकाशकभावानुपपत्तेः। न हि सुखचैतन्ययोराश्रयभेदोऽस्त्यणुपरिमाणमनःसंयोगविशिष्टात्ममात्रदेशत्वादुभयोः। तथा चैकेन मनःसंयोगेन जातं सुखमुत्पत्तित एव प्रकाशमानं स्वात्मचैतन्यव्याप्तं सत्प्रकाशते स्वयमेव वा प्रकाशत इति विवेके कारणाभावान्न सुखचैतन्यप्रकाश्यत्वनिश्चयः। तथा सुखचैतन्ययोर्भेदे सति कार्ययोस्तयोरेकस्मिन्नात्मनि यौगपद्यमपि न संभाव्यते मनःसंयोगरूपस्यासमवायिकारणस्य क्रममन्तरेण तत्र कार्यक्रमायोगात्। अन्यथा ज्ञानेच्छाप्रयत्नादीनामपि यौगपद्यापत्तेः। एवं सति भिन्नकालयोरनयोर्विनष्टाविनष्टयोर्न साक्षात्प्रकाश्यप्रकाशकभाव एकाश्रयत्वमात्रेण तद्भावे स्वात्मगतधर्मादेः परिमाणस्यातीतज्ञानादेश्च प्रत्यक्षता युगपत्स्यादतो न चैतन्यभास्यं सुखमिति चैतन्यस्वरूपमेव तत्परिशेषात्सिद्धम्। चैतन्यं चाऽऽत्मैव न तद्गुणश्चेतनभिन्नस्य जडत्वाज्जडस्य च घटादिवच्चेतनाश्रयत्वानुपपत्तेस्तस्मादात्मैव चैतन्यं चैतन्यमेव च सुखमिति सिद्धम्। न च सुखचैतन्ययोरुत्पत्तिविनाशानुभवात्कथं नित्यात्मस्वरूपतेति शङ्क्यं बुद्धिवृत्त्युपाधिनिबन्धनत्वाच्चस्प्रतीतेर्व्यापारवदन्तःकरणावस्थायां जाग्रदादिलक्षणायामेवोपलम्भादिति दिक्।

[1] क. °दिश्रुतेः।

तथा चायं प्रयोगः—आत्मा सुखरूपः परमप्रेमास्पदत्वाद्यत्रैवं तत्रैवं यथा घटो नायं तथा तस्मान्न तथा किं तु सुखरूप एवेति । न च सुखस्यापि मम सुखमित्यात्मशेषत्वानुभवान्न परमप्रेमास्पदत्वमस्ति कुतस्तद्रूपत्वेनाऽऽत्मनस्तद्भाव इति वाच्यं सुखस्योपकारकत्वाभावाच्छेषत्वानुपपत्तेः । न ह्यनुपकारकं कस्यचिच्छेषो भवति । न ह्यात्मनि सुखाभिव्यक्तिव्यतिरिक्तः कोऽप्युपकारो निरूपणपथमवतरति । तस्मान्मम सुखं सुख्यहमित्याद्यनुभवस्योक्तोपाधिनिबन्धनत्वादस्मिन्ननुमाने न कोऽपि दोष इत्युपसंहरति—ततः सुखतानुमानमिति । यत एवमतो दृगात्मनि चित्स्वरूपे प्रत्यगात्मनि सुखतानुमानं नैयायिकोऽप्यनुमानतर्कशास्त्रनिष्णातोऽपि न निह्नुवीत नापलपेदित्यर्थः । अपिशब्दात्सांख्यादिभिरस्यापह्नवप्रसङ्गो दुरापास्त इति द्योत्यते । एवं लिङ्गशब्दोदितमनुमानमुपपाद्य वचनशब्दनिर्दिष्टं श्रुतिवाक्यमुदाहरति—प्रेयःश्रुतेरपीति । 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीति' [ बृ० १ । ४ । ८ ] 'आत्मनस्तु कामाय सर्वं प्रियं भवति' [ बृ० २ । ४ । ५ ] 'विज्ञानमानन्दं ब्रह्म' [ बृ० ३ । ९ । २८ ] 'आनन्दो ब्रह्मेति व्यजानात्' [ तै० ३ । ६ । १ ] इत्यादिश्रुतेरपि परमानन्दरूप एवाऽऽत्मा निश्चीयत इत्यर्थः । तथा च सुखचैतन्यसत्तानां मिथो भेदानिरूपणात्सच्चिदानन्दरूपोऽशेषविशेषहीन आत्मा कूटस्थनित्य उक्तैः प्रमाणैः सिद्ध इति तस्मिंस्तद्विपरीताकारावभासोऽविद्याविलसित इति सिद्धम् ॥ २५ ॥

सु० टी०—वचनान्यर्थमुखेनोदाहरति—

आनन्दविग्रहमपास्तसमस्तदुःखं
वस्तुस्वभावपरिकल्पितसर्वभेदम् ।
आत्मानमध्ययनविध्यनुसारिणस्तं
प्रत्यक्षतः श्रुतिशिरःसु समामनन्ति ॥ २६ ॥

आनन्देति । नित्यस्वाध्यायविधिमनुसरन्तो ब्रह्मविद उपनिषत्स्वात्मानमानन्दादिरूपमामनन्ति 'विज्ञानमानन्दं ब्रह्म' [ बृह० ३ । ९ । २८ ] 'अभयं वै ब्रह्म' [ बृ० ४ । ४ । २५ ] इत्यादिना । ननु जाग्रत्स्वप्नयोर्दुःखानुभवात्कुतो निर्दुःखमित्याशङ्क्याऽऽह—अपास्तेति । अपास्तं दूरीकृतमध्यात्मादिभेदभिन्नं दुःखं येन 'नैनं कृताकृते

---

१ क. °रिवर्जित° । २ क. ग. °त्स्यात्मन आन° ।

तपतः ' [ बृह० ४ । ४ । २२ ] ' शोकं मोहं जरां मृत्युमत्येति ' [ बृह० ३ । ५ । १ ] इत्यादिश्रुतेः । ततश्च राजसबुद्ध्युपाधेरेव तद्दुःखमिति भावः । तथाऽपि द्वैतस्य प्रत्यक्षत्वात्सति च तस्मिन्दुःखस्यावर्जनीयत्वात् ' द्वितीयाद्वै भयं भवति ' [ बृह० १ । ४ । २ ] इति श्रुतेः कथं निर्दुःखतेत्याशङ्क्याऽऽह—वस्त्विति । वस्तुनः स्वभावः कूटस्थासङ्गाद्वितीयचिन्मात्रता तेन हेतुना परिकल्पितोऽध्यस्तः परिवर्जितेति पाठे निषिद्धः सर्वो भेदो जीवत्वादिर्द्वैतं यत्र ' नेह नानाऽस्ति ' [ बृह० ४ । ४ । १९ ] इति श्रुतेः ॥ २६ ॥

अ०टी०—एवमुपपादितेऽर्थे विद्वदनुभवमप्यनुकूलयति—आनन्दविग्रहमिति । यद्वा यद्येवंलक्षण एव वस्तुत आत्मा तर्हि स स्वरूपेण नित्यं भासमानोऽपि कस्मात्सर्वेषां तथा नावभासत इत्यत आह—आनन्दविग्रहमिति । अपास्तसमस्तदुःखमित्यनृतजाड्याद्यनात्मधर्मानास्कन्दितमित्यर्थः । अध्ययनविधिशब्देन विधिवदधीतो वेदो लक्ष्यते । वेदानुसारिणस्तदर्थविचारपरा इति यावत् । ते श्रुतिशिरःसु तात्पर्येण लोच्यमानासूपनिषत्सु प्रत्यक्षतोऽपरोक्षत एवाऽऽत्मानं समामनन्ति सम्यग्जानन्त्यनुभवन्ति तद्यथार्थतां कथयन्तीति वा । अत औपनिषज्ज्ञानमन्तरेणाऽऽत्मयाथात्म्यं सर्वेषां न भासत इत्यभिप्रायः ॥ २६ ॥

सु० टी०—नन्वहमित्यहंकाराभेदप्रतीतेः कथमुक्तरूप आत्मा न चाहंकार आत्मन्यध्यस्तो मानाभावात्प्रत्युत परमप्रेमास्पदत्वादितन्निष्ठतयैवोपलभ्यत इति स एवाऽऽत्मेत्याशङ्क्याऽऽह—

अध्यस्तमल्पवपुरस्य न वास्तवं त-<br>
त्प्रत्यक्पराग्द्वयमिदं हि परस्परस्मिन् ।<br>
अध्यस्ततां प्रति समर्थमबोधमात्र-<br>
मन्योन्यरूपमिथुनीकरणे निमित्तम् ॥ २७ ॥

[ अध्यस्तमिति । तत्तस्मादुक्तात्मस्वरूपविपरीतत्वादस्य प्रतीचो भूमरूपस्याल्पवपुरहमिति साभासान्तःकरणाद्यात्मकं परिच्छिन्नं रूपमध्यस्तमनृतमेव दृश्यत्वात्परत्र [1]परावभासत्वाच्चेत्यर्थः । सत्त्वप्रेमास्पदत्वादेश्चाधिष्ठानात्मगतस्यैव तत्रानुभव इति भावः । नन्वध्यस्तमपि

१ क. ग. °परमपे° ।

शुक्तिरजतादि सत्यमेवेत्यत्राऽऽह—न वास्तवमिति । उक्तरीत्या तस्यानिर्वचनीयत्वसाधनादित्यर्थः । नन्वधिष्ठानाध्यस्यमानांशद्वयोल्लेखित्वं भ्रमस्य दृष्टमहमिति प्रत्ययस्त्वेकरूपो दृष्टमात्रविषयः कथमध्यास इत्याशङ्क्याऽऽह—प्रत्यक्पराग्गिति । अहमनुभवेऽपि निपुणं निरूप्यमाणे दृग्दृश्यात्मना प्रत्यगंशः परागंशश्च भासते । तस्य चेदमनिदंरूपस्य तप्तायःपिण्डवद्विरुद्धोभयरूपत्वादध्यासं विनैकत्वबोधासंभवात् । एतदुभयं परस्परस्मिन्परस्परात्मत्वेनाध्यस्ततां प्रति योग्यमित्यर्थः । ननु प्रत्यक्पराचोः सादृश्याभावाद्विशुद्धे चाऽऽत्मनि दोषस्याप्यसंभवादारोप्यस्य च पूर्वमननुभवेन संस्काराभावात्कथं परस्पराध्यास इत्यत आह—अबोधमात्रमिति । स्फुरतोऽपि तत्त्वानवबोधः सर्वत्राध्यासपुष्कलकारणं स चाऽऽत्मन्यनुभवसिद्धश्चेत्काऽत्र विसामग्रीत्यर्थः । अन्योन्येति । अन्योन्यार्थाध्यासे मिथुनीकरणे चेत्यर्थः । प्रत्यक्पराग्रूपं ह्यन्योन्यात्मकमन्योन्यधर्मवच्चाध्यस्तं तस्य मिथुनीकरणं नाम ज्ञानाध्यासस्तदुभयावच्छिन्नमेकं ज्ञानमिति यावत् । असंसर्गाग्रहनिबन्धनत्वानभ्युपगमादित्युभयत्राज्ञानमेव निमित्तमिति भावः । ततश्च प्रत्यगज्ञानमेव बुद्ध्याद्यात्मना तदुभयोपरक्तज्ञानात्मना च परिणममानमहमिति साक्षिविषयः । तदुक्तमविद्यैव बाह्यदोषापेक्षया रजताकारेण साक्षिचैतन्यस्य रजतावच्छेदज्ञानाभासाकारेण च परिणममाना स्वकार्येण सह साक्षिविषयत्वमापद्यत इति । अयमर्थः—दुष्टेन्द्रियस्य शुक्तिसंनिकर्षादिदमिति प्रमाणवृत्तिर्भवति । तत्प्रतिफलितशुक्त्यवच्छिन्नचैतन्यनिष्ठशुक्तित्वाज्ञानं रागसंस्कारादिसचिवं शुक्त्या सह मिथ्यातादात्म्यापन्नरजतात्मना परिणमते । इदमाकारवृत्त्यवच्छिन्नचिन्निष्ठशुक्तिविषयत्वाज्ञानं तु ज्ञानसंस्कारसहकृतं साक्षिरजतसंबन्धापादकरजतज्ञानात्मना । तच्च जडत्वान्न स्वविषयसाधकमिति सविलासाज्ञानं साक्षिविषय इति । अत्र केचित् किं रजतज्ञानात्मकाविद्यावृत्त्या तया विनाऽपीदमाकारवृत्त्यभिव्यक्तसाक्षिणैव रजतप्रतिभासोपपत्तेः । अध्यस्तरजतादेः प्रमाणागम्यत्वेनाऽऽवरणरहितत्वादावरणाभिभवार्थं चिदुपरागार्थं वा वृत्तेरन्यत्र स्वीकारात् । अत एव ज्ञानसुखादौ न वृत्त्यन्तरमुपेयते तेषामनावृतचैतन्याध्यस्तत्वादेव मानसंभवादन्यथावृत्तावपि वृत्त्यन्तरापेक्षायामन-

---

१ क. °सतइ° । २ ख. °परागार्थं ।

वस्थापत्तेः। नापि संस्कारार्था वृत्तिः, रजतविशिष्टचिन्नाशेनैव सुखादा-विव तज्जननात्। न चार्थनाशजसंस्कारस्य स्मृत्यहेतुत्वाद्वृत्तिसिद्धिः सुखादावेव तत्कल्पनाद्वृत्त्यन्तरापेक्षया धर्मकल्पनामात्रत्वेन लघुत्वाच्च। न च ज्ञानसंस्कारस्यार्थाहेतुत्वमन्वयव्यतिरेकाभ्यामिहैव तत्कल्पनात्। अत एव प्रातीतिकं रजतं दोषादेरप्यावश्यकरजतोत्पादेनैवार्थवत्त्वमिति वदन्ति। अत्रोच्यते—अनावृतचैतन्याध्यस्ततामात्रस्य जडभान-प्रयोजकत्वेऽनुमेयवह्न्यादेरमानापत्तिस्तत्र विषयंगतावरणभङ्गानङ्गीका-रात्। कथं तर्हि तत्र वह्निमानमनुमारूपवृत्त्याऽन्तःकरणावच्छेदेन वह्नि-विषयकाज्ञानापसारणात्। वह्निमहं न जानामीत्यनुभवेन वह्नावात्मनि चाज्ञानसाधनात्तदन्यतरापसारणस्य च वह्निव्यवहारहेतुत्वमिति वक्ष्यते। ततश्च तदाकारवृत्तिविषयत्वमेवास्वच्छतामसेषु मानप्रयोजकमास्थेयम्। स्वच्छान्तःकरणसुखादिमाने च वृत्तिं विनाऽपि तदाकारत्वसंभवाच्चि-त्प्रतिबिम्बाश्रयत्वमपीति जडप्रतिभासे द्वय्येव गतिः। चैतन्यं हि यदा-कारवृत्तौ प्रतिबिम्बते तद्भासयति प्रतिबिम्बाश्रयं च वृत्त्यादिकं तथा दर्श-नात्। न च क्वचिद्वृत्तिः क्वचित्प्रतिबिम्बाश्रयत्वं तन्त्रमित्यननुगमः। सर्व-जडप्रतिभासानुगतं हि चैतन्याकारत्वमेव प्रयोजकं ब्रूमः। चैतन्यं यदा-कारं भवति तत्प्रतिभासत इत्यर्थः। चैतन्यस्य च तदाकारत्वं न स्वतोऽ-सङ्गत्वात्किंतु क्वचित्प्रतिबिम्बात्क्वचित्तदाकारवृत्तिसंबन्धादि (*त्यन्य-देतत्। तत्र स्वच्छान्तःकरणतद्धर्मेषु प्रतिबिम्बादस्वच्छतामसेषु तु तदा कारवृत्तिसंबन्धा)देवेति कुतो रजताकारवृत्तिं विना तद्भानम्। नचाध्यस्त-रजतस्यास्वच्छतामसस्य चित्प्रतिबिम्बाश्रयत्वमभ्युपगन्तुं युक्तमस्वच्छ-रजतसंस्कारसंस्कृताविद्यारब्धत्वेनास्वच्छत्वादिति सिद्धाऽविद्यावृत्तिः। ननु परोक्षे तदाकारवृत्तिरपरोक्षे त्वनावृतचिदध्यस्तत्वं तन्त्रमस्तु। मैवं सामान्यसामग्रीं विना विशेषसामग्र्या अहेतुत्वेन तत्राप्य-स्वच्छतामसमात्रमानहेतुवृत्तिविषयत्वस्यापरिहार्यत्वात्। किंच रजतस्य विषयावच्छिन्नसाक्षिमात्रत्वेऽहं रजतवानिति प्रतीतिः स्यान्न त्वहं रजत-ज्ञानवानिति। किंच त्वन्मतेऽर्थसंस्कारस्य स्मृतिहेतुत्वं ज्ञानसामग्र्या अर्थहेतुत्वं चावलप्तं कल्प्यमिति गौरवम्। प्रातीतिकत्वं च प्रतीतिकाला-यकालासत्त्वं नतु प्रतीतिजन्यत्वं संस्कारादेरपि प्रातीतिकत्वापत्तेः।

---

* धनुश्चिह्नितग्रन्थः क, पुस्तके नास्ति।

न च साक्षिकालान्यकालः संभवतीत्यविद्यावृत्तिरेव तत्प्रतीतिः । ननु तवाप्यविद्यावृत्ते रजतविषयत्वाद्धीवृत्तेश्चेदंमात्रविषयत्वादिष्टपुरोवर्ति-विशिष्टविषयं वृत्त्यन्तरं प्रवर्तकं कल्प्यमिति गौरवमिति चेन्नैकावच्छिन्न-जलदर्पणयोरेकमुखप्रतिबिम्बवदेकावच्छिन्नसत्यमिथ्यावस्तुद्वयेऽप्येकचि-तिबिम्बाभ्युपगमेन शुक्त्यभेदापन्नरजतस्फुरणस्य फलस्यैकत्वात्प्रवृत्त्युप-पत्तेरिति संक्षेपः ॥ २७ ॥

अ०टी०—तस्मादात्मनो यथोक्तप्रत्यक्षानुमानागमविद्वदनुभवसिद्धस्वरूपाद्विपरीताकाराव-भासः सर्वोऽपि तस्मिन्नज्ञानेनाध्यस्त एव न वास्तव इति सिद्धा शास्त्रादेर्विषयप्रयोजनसंभावने-त्युपसंहरति—अध्यस्तमिति । यदिदमलवपुर्जीवेश्वरजगल्लक्षणमस्य चिदात्मनस्तन्न वास्तवं किं त्वध्यस्तमाविद्यकमित्यर्थः । एतदुक्तं भवति—प्रत्यगात्मा ह्यनाद्यनिर्वचनीययाऽविद्य-याऽऽवृतनिजतत्त्वः प्रथमं तद्विवर्तेषु बुद्ध्यादिदेहान्तपदार्थेष्वहमित्यभिमानवाञ्जायते सोऽय-महंकाराध्यासः । तेनायं बुद्ध्यादिभिस्तद्धर्मैश्चाविविक्तमात्मानं मन्यमानो जीवोऽहं संसा-रीति मन्यते । ततो देहबाह्यं स्वाविद्याप्रत्युपस्थापितं कार्यकारणात्मना भोक्तृभो-ग्यात्मना नियन्तृनियम्यरूपेणेशितव्येश्वररूपेण च कल्पयन्निदमित्यात्मनः पृथक्त्वेना-ध्यस्यति । तत इदमेव भासगृहीते तस्मिञ्छोभनाशोभनाध्यासपूर्वकं ममेदमनुकूलं प्रति-कूलमित्यादिप्रकारमनुभवति । एवमहमध्यासपूर्वकः सर्वो व्यवहारोऽध्यस्त एवा-स्याऽऽत्मनो न तात्त्विक इति । ननु कथमहमित्यनुभवोऽध्यासात्मको द्व्याकारावभासाभा-वादहमित्येकरसात्ममात्रप्रतिभासादध्यासत्वे त्विदं रजतमितिवद्द्वैरूप्यानुभवो भवेत्तदभावान्ना-यमध्यास एतस्याध्यासत्वासिद्धावेतत्पूर्वस्य बाह्यावभासस्यानध्यासत्वसिद्धिरिति चेत्तत्राऽऽह-प्रत्यक्परागिद्वयमिदं हीति । हि यस्मादिदमात्मनोऽहमित्यवभासमानं वपुः प्रत्यक्प-राग्रूपेण द्वयं द्व्याकारमेव विवेकिनां भातीत्यक्षरार्थः । आत्मनः स्वसत्तायां प्रकाशमानत्वं तावदव्यभिचरितमन्यथा तस्मिन्संदेहविपर्ययाज्ञानानामपि प्रसङ्गात् । न ह्यात्मसत्तायां कस्यचित्कदाचित्संदेहादि संभवति संदेहादेरसाक्षिकत्वायोगात्तत्साक्षिण एवाऽऽत्मत्वात्त-स्यानवभासे संदेहादेरेवासिद्धेः स्वतःप्रकाशमान एव सर्वदाऽऽत्मेति स्थितेः । आत्मन्यवभा-समानेऽपि सुषुप्त्यादावहमवभासव्यभिचारादागन्तुक आत्मन्यहमवभासोऽन्योपरागनिबन्ध-न इति निश्चीयते । ततश्चाऽऽगमापायवत्त्वादहंकारो नाऽऽत्मा तदवधितया तदधिष्ठानतया चानुगतः सद्रूप आत्मा । एवमहंकार आत्मान्यत्वे सत्यन्यावभास्यस्तदवभासकतया तस्मिन्स्फुरणरूपेणानुगत आत्मा तथा कर्तृत्वभोक्तृत्वप्रमातृत्वादिविक्रियावानहंकारस्तद्द्रष्टा चाऽऽत्मेति । तदेवं द्रष्टृदृश्यभावेन साक्ष्यसाक्षिभावेनाऽऽगमापायितदवधित्वेन चाऽऽत्माहं-

१ क. ग. 'तिभावाभ्यु' ।

कार्ययोर्विवेके सति विरुद्धस्वभावयोस्तयोरेकत्वावभासोऽन्योन्याध्यासनिबन्धनशुक्तीदमंशरजतयोरिवेत्यभिप्रायः। यत एवं विरुद्धस्वभावयोरध्यासं विनैकत्वावभासासंभवः। इदं द्वयं युष्मदस्मत्प्रत्ययगोचरात्मकमात्माहंकाररूपं परस्परस्मिन्नन्योन्यस्मिन्नध्यस्ततां प्रति मिथ्याज्ञानगोचरत्वं प्रति समर्थं योग्यं जडस्याहंकारस्य सच्चिदात्मनि तादात्म्याध्यासाभावे सत्तास्फूर्त्योरसंभवाच्चिदात्मनश्च कूटस्थस्याहंकारे तथाध्यासाभावे कर्तृत्वादिविकारवत्त्वावभासायोगात्परस्परस्मिन्नध्यस्तमित्यर्थः। अन्यतरस्मिन्नन्याध्यासपक्षेऽनात्मन आत्मैक्याध्यासे तस्य विषयत्वेनावभासो न स्यादात्मनश्चानात्मात्मनाऽध्यासे तस्यापि जडत्वापत्तौ जगदान्ध्यप्रसङ्गः। इतरेतराध्यासे तूभयोरप्युभयात्मनाऽवभासान्नोक्तदोषप्रसङ्ग इति भावः। अत्र शून्यत्वापत्तिप्रसङ्गं स्वयमेवाग्रेऽपाकरिष्यति। ननु सादृश्यादिदोषाध्यस्यमानविषयानुभवसंस्काराधिष्ठानसंप्रयोगरूपकारणत्रयं विना कथमात्मानात्मनोरध्यास इत्यत आह—अबोधमात्रमन्योन्यरूपमिथुनीकरणे निमित्तमिति। अज्ञानमेवाऽऽत्मानात्माध्यासे निमित्तं पुष्कलं कारणं न सादृश्यादि तत्रापेक्षणीयमित्यर्थः ॥२७॥

सु० टी०—सादृश्यज्ञानादेरध्यासहेतुत्वं व्यभिचारेण निरस्यति—

सादृश्यधीप्रभृति न त्रितयं निमित्त-
मध्यासभूमिषु जगत्यनुगच्छतीदम्।
ब्राह्मण्यजातिपरिकल्पनमात्मनीष्टं
जात्या न साम्यमुपलब्धमिहास्ति किंचित् ॥ २८ ॥

सादृश्यधीति। सर्वाध्यासाननुगतत्वान्न हेतुत्वाभिमतमेतत्त्रितयं सादृश्यधीदोषसंस्कारात्मकमध्यासनिमित्तमित्यर्थः। सादृश्यधियो व्यभिचारस्थानमाह—ब्राह्मण्येति। ब्राह्मणोऽहमिति जात्यध्यास आत्मनि सर्वैरिष्यते। अन्यथा 'ब्राह्मणो यजेत' 'ब्राह्मणो न हन्तव्यः' इति विधिनिषेधव्यवस्थानुपपत्तेस्तत्र च न सादृश्यमस्तीत्यर्थः। ननु सोऽपि त्रितयनिमित्तोऽध्यासत्वादिति नेत्याह—जात्येति। आत्मनि हि जात्या सादृश्यमनुपलब्धिबाधितं द्वयोरपि गुणक्रियावयवशून्यत्वात् 'न तस्य प्रतिमा' [ श्वेता० ४।१९ ] इति श्रुतेश्चेत्यर्थः। ततश्च रजताद्यध्यासेष्वार्थिकं तत्त्रयं न त्वध्यासमात्राङ्गमिति भावः ॥ २८ ॥

अ० टी०—ननु सादृश्यदर्शनादेरप्यध्यासकारणस्य लोकेऽन्वयव्यतिरेकाभ्यामवगमादात्मानात्मनोश्च विरुद्धस्वभावयोस्तदयोगात्कथमबोधमात्रादध्यासासिद्धिरित्याशङ्क्य सादृश्यादेरध्यासाव्यापकत्वान्नैवमित्याह—सादृश्यधीप्रभृतीति। सादृश्यकरणदोषसंस्कारादि यत्त्रितयमध्यासनिमित्तं प्रसिद्धमस्ति तदिदं जगत्यध्यासभूमिषु सर्वत्र नानुग-

च्छति न व्याप्नोतीत्यर्थः । तत्र सादृश्यधियो व्यभिचारस्थलमाह—ब्राह्मण्यजातीति । अहं ब्राह्मण इत्यहमवभासे प्रत्यगात्मनि ब्राह्मण्यजात्यध्यास आस्तिकैरिष्टस्तत्राऽऽत्मनो जात्या न केनाप्यंशेन किंचित्साम्यमुपलभ्यमिह व्यवहारभूमावस्तीति योजना ॥ २८ ॥

सु० टी०—नन्वत्रापि प्रमेयत्वादिना सादृश्यमस्तीत्याशङ्क्य न तादृक्सादृश्यमध्यासप्रयोजकमतिप्रसङ्गात्किंतु भूयोवयवगुणादिसाम्यं न चैतयोस्तदस्तीत्याह—

भूयस्त्ववत्तनुगुणावयवक्रियाणां
सामान्यपूगवपुरुक्तमिहाभियुक्तैः ।
सादृश्यवस्तु न चिदात्मनि किंचिदत्र
जात्यादिभिः सह निरीक्षितमस्ति तादृक् ॥ २९ ॥

भूयस्त्ववदिति । इह गोगवयादावभियुक्तैर्जैमिन्यादिभिः सामान्यपूगात्मकं सादृश्यवस्तूक्तमित्यर्थः । कासां व्यक्तीनामित्यत्राऽऽह—

भूयस्त्ववतीनां गवादितनुगतगुणावयवक्रियाणामिति । नन्विति पाठे गुणादीनां भूयस्त्वं सादृश्यवस्तूक्तमिति स्वार्थे वतिर्व्याख्येयः । गुणानां शुक्लत्वदीर्घत्वादीनि सामान्यानि, अवयवानां पादपृष्ठत्वादीनि, क्रियाणां गमनभक्षणचर्वणत्वादीनि तेषां समूह एव वपुर्यस्य । ननु 'आकाशवत्सर्वगतश्च नित्यः' इति वैदिकप्रयोगादध्यासानुपपत्त्या चाऽऽत्मन्यपि किंचित्सादृश्यं कल्प्यमित्याह—नेति । अत्र चिन्मात्रात्मनि तादृगपि सादृश्यं न किंचिदस्तीत्यर्थः । न च नित्यत्वसर्वगतत्वाद्यपि जातिसादृश्यमनुवृत्तकारणात्मिकाया जातेरनित्यत्वाज्जात्यवृत्तित्वेनासर्वगतत्वाच्चेति भावः ॥ २९ ॥

अ० टी०—कथं जात्यात्मनोः सादृश्याभाव इत्यपेक्षायामभियुक्तप्रसिद्धसादृश्यलक्षणमाह—भूयस्त्ववन्नन्विति । ननुशब्दः खल्वर्थे । गुणानां रूपादीनामवयवानामङ्गसंस्थाननिवेशानां क्रियाणां गत्यादीनां वा भूयस्त्वं विद्यते यत्र तद्भूयस्त्वव[द्धि]स्त्वेव तत्सामान्यपूगवपुः सर्वसामान्यस्वरूपमितीह व्यवहारभूमावभियुक्तैः प्रामाणिकैर्वृद्धैरुक्तमिति योजना । अत्रोदाहरणानि—अग्निज्वालावत्पिङ्गल इति रूपतो गोसदृशो गवय इत्यवयवतो गजगामीति क्रियात इत्यादि । अथ वाऽत्र भूयस्त्ववदिति वतिप्रयोगः स्वार्थे द्रष्टव्यः ।

---

१ ख. °वन्ननु । २ क. ग. °न्मात्रेचात्म° ।

गुणावयवक्रियाणामन्यतमभूयस्त्वं सामान्यमित्यर्थः । यद्वा सामान्यमित्यत्रापि सामान्यवदिति मतुबर्थो लक्षणीयः । पूगग्रहणमुक्तगुणादिद्वारव्यतिरेकेणान्यत्र सामान्यद्वारमस्तीति दर्शयितुं केतकीगन्धसदृशः सर्पगन्ध इत्यादावपि केतकीसर्पयोर्गन्धगुणतः साम्यं विवक्षितं न गन्धयोरिति नाव्याप्तिशङ्केति द्रष्टव्यम् । तादृगुक्तलक्षणं सादृश्यवस्त्वत्र पूर्वोक्तलक्षणे चिदात्मनि जात्या ब्राह्मण्यादिरूपया सह न निरीक्षितमस्तीत्यतः सादृश्यमध्यासव्यापकं न भवतीत्यर्थः ॥ २९ ॥

सु० टी०—दोषस्य व्यभिचारस्थलमाह—

विषयकरणदोषान्न भ्रमः संविदि स्या-
दपि तु भवति मोहात्केवलादेवमेव ।
भगवति परमात्मन्यद्वितीये विचित्रा
द्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ ३० ॥

विषयेति । विषयदोषः सादृश्यादिः करणदोषः काचादिः । तत्र संविदि प्रमाणफले घटादिज्ञाने यः परेषां वेद्यत्वादिभ्रमः स तावद्विषयदोषात्करणदोषाद्वा न संभवति संविदः स्वप्रकाशत्वेनाविषयत्वात्करणागोचरत्वाच्च । अस्तु प्रमातृदोषादेवेति चेत्तर्हि दोषान्तरासंभवात्प्रमात्रभिव्यक्तान्मोहादेवेति वक्तव्यम् । तच्चास्मदिष्टमेवेत्याह—अपि त्विति । तत्र मोहमात्रजत्वसिद्धौ तद्वत्प्रकृतेऽपि मोहैकनिमित्तता साधनीयेत्याह—एवमिति । यथा संविदि वेद्यत्वादिधीर्भ्रमस्तथा परमात्मनि द्वैतबुद्धिरपि यतो भ्रान्तिरतोऽज्ञानहेतुरस्त्वित्यन्वयः । अज्ञानजत्वं संभावयति—विचित्रेति । भिन्नाभिन्नसदसत्त्वादिविचारासहत्वेनानिर्वचनीयेत्यर्थः । भ्रान्तित्वसाधकमाह—अद्वितीये द्वयमतिरतस्मिंस्तद्बुद्धिरित्यर्थः । इयमिति साक्षिसिद्धत्वमाह । भगवतीत्यनेन महामहिमत्वात्प्रपञ्चरचनासामर्थ्यं सूचितम् । अस्त्विति समर्थने लोट् । अज्ञानजत्वं शक्यसमर्थनमित्यर्थः । एवं सादृश्यधीदोषयोर्व्यभिचार उक्तः । संस्कारोऽपि व्यभिचारी शुक्तिरजतादिवैशिष्ट्यस्य प्रागननुभूतस्यापि भ्रमविषयत्वादिति स्पष्टत्वान्नोक्तम् ॥ ३० ॥

अ० टी०—दोषस्यापि विषयकरणगतस्य व्यभिचारस्थलं दर्शयति—विषयकरणदोषादिति । अस्ति संविन्नाम प्रमाणफलं यद्विषयस्फुरणमिति प्रसिद्धम् । तस्य स्वयंप्रकाशत्वं नित्यत्वं चाङ्गीकरणीयं तस्य जडत्वे तत्संसर्गाद्विषयस्य स्फुरणासिद्धेः । न हि जडेन जडं प्रकाश्यते तथासति विषयस्य स्वत एव प्रकाशापत्तेः प्रमाणवैयर्थ्यापातात् । अजड-

प्रकाशस्य चाप्रकाशमानस्यान्यस्फोरकत्वे तज्जन्याऽन्या विषयस्फूर्तिः स्यात्साऽप्यप्रकाशमाना चेत्तस्या अन्येत्यनवस्था प्रसज्येत । प्रकाशमानत्वं चान्याधीनप्रकाशत्वेऽन्यस्याप्येतत्समानयोगक्षेमत्वात्तत्प्रकाशायाप्यन्यापेक्षेति तत्राप्यनवस्था दुर्वारा । तस्मात्स्वप्रकाशैव प्रमाणफलात्मिका संविदिति । तथा तस्या अनित्यत्वे च न करणविषयोपादानता संगच्छते तयोर्जडयोरजडफलोपादानत्वासंभवात् । नापि प्रमातोपादानं तस्यापि चैतन्यगुणोत्पत्तेः प्राग्जडत्वाविशेषात् । चिद्रूपत्वे तु तस्य सावित्रालोकवत्साधारण्येन स्फुरतः सर्वत्रानभिव्यक्तविशेषस्य दर्पणादाविव सावित्रालोकस्य विषयविशेषस्य दर्पणादाविव सावित्रालोकस्य विषयविशेषसंसृष्टतदाकारावस्थान्तःकरणवृत्तिप्रतिफलितत्वेन लब्धविशेषतामात्रेण प्रमाणफलत्वव्यपदेशोपपत्तेर्न मुख्यौ जन्मविनाशौ वृत्तिनाशादेव विनाशव्यवहारसंभवादिति नित्या स्वप्रकाशरूपा च प्रमितिः प्रमाणफलमिति स्थिते तस्याः परप्रकाश्यत्वोत्पत्तिविनाशवत्त्वप्रतिभासो लोकस्य भ्रम एवेत्येतत्सर्वमभिप्रेत्येदमुच्यते—संविदि प्रमाणफले परप्रकाश्यत्वोत्पत्त्यादिभ्रमो विषयकरणदोषान्न स्यात् । विषयदोषो हि सादृश्यं भ्रमकारणम् । न हि संवित्संवेद्ययोः प्रकाशजडयोः सादृश्यमस्ति । नापि तत्र करणदोषः प्रमितेरदुष्टकरणजन्यत्वादपि तु तत्र भवन्भ्रमः परिशेषान्मोहादेव केवलादविवेकलक्षणाद्भवति । यथाऽयं दृष्टान्त एवमेवाद्वितीये भगवत्यचिन्त्यैश्वर्ये परमात्मनि सर्वाधिष्ठानतया सर्वस्य स्वरूपभूते दृश्यमानद्वयमतिरियं विचित्रा जीवेश्वरजगदाकारभ्रान्तिरज्ञानमात्रहेतुरस्त्वित्यर्थः । संस्कारस्य त्वस्ति भ्रमकारणता सर्वत्र । स तु पूर्वप्रतीतिजन्यो न पूर्वप्रमितिजन्यत्वनियमाभावाद्भ्रमप्रवाहस्य चानादित्वात् । संप्रयोगसिद्धि सदृशसांशपराग्विषयेषु चेदित्यत्रोपपादयिष्यति । अतो मोहे सत्यन्यद्भवतु वा मा वा मोहादुद्बुद्धसंस्कारसचिवाद्भ्रमो भवत्येवेति भावः ॥ ३० ॥

सु० टी०—इदानीं परस्पराध्यासे सत्यात्मनोऽप्यनात्मन्यध्यस्तत्वेन बाध्यत्वान्निरधिष्ठानं सच्छून्यं जगत्स्यादित्याशङ्कयाज्ञानस्य बाधावधेरनध्यस्तस्यावशिष्यमाणत्वान्नोक्तदोष इत्यभिप्रेत्याऽऽह—

> संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-
> र्नाऽऽधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान्संभ्रमः ।
> केषांचिन्महतामनूनतमसां निर्बन्धमात्राश्रया-
> दन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति ॥ ३१ ॥

संसिद्धेति । विलसति व्यक्तो भवति मोहोऽनेनेति विलासो मिथ्यारजतादिः । ततश्च यतः सविलासाज्ञानावृते वस्तुनि शुक्त्यादावधिष्ठा-

नसंज्ञा प्रसिद्धा। अधितिष्ठति ह्येनं सकार्यो मोह इति। स च नाध्यस्तः। अतोऽयमस्थानेऽविषये शून्यत्वापादनभ्रम इत्यर्थः । ननु यदाधारमारोप्यं भासते तदधिष्ठानं तच्चाऽऽरोप्येऽध्यस्तमेवान्यथा परस्पराध्यासो न स्यादित्याशङ्क्याऽऽह—नाऽधार इति । अध्यस्तस्याऽऽधारत्वेन भासमाने शुक्तीदमंशे नाधिष्ठानगीरित्यर्थः। किंच शबले संसृष्टतयाऽध्यस्तोऽधिष्ठानांश आधारस्तदुक्तमतद्रूपोऽपि तद्रूप्येणाऽऽरोप्यबुद्धौ स्फुरन्नाधार इति । न चासावधिष्ठानीभवितुमर्हति परस्पराश्रयादधिष्ठाने सत्यध्यासोऽध्यासे सत्यधिष्ठानमितीति भावः। यद्वाऽन्योन्याध्यासे निरास्पदं सच्छून्यं जगत्स्यादिति तर्केण केषांचिद्वादिनं जेतुं महानयं संभ्रम उत्साहोऽस्थाने न युक्त इत्यर्थः। संभ्रमे हेतुमाह—महतामिति । अनूनमज्ञानं येषां तेषां मध्ये महतां शून्यवादिनां निर्बन्धः परमतखण्डने श्रद्धातिशयः। यद्वा निरास्पदमिदं चोद्यं निर्विषयमित्यर्थः ॥ ३१ ॥

अ० टी०—परस्पराध्यासे निरधिष्ठानत्वेन शून्यवादप्रसङ्ग इति यच्चोद्यमिह कैश्चिदुद्भाव्यते तत्परिहरति—संसिद्धेति। अयमर्थः—अज्ञाते वस्तुनि विपरीतावभासो भ्रम इति स्वविवादम्। तत्राज्ञानं न जडाश्रितमित्यग्रे वक्ष्यते। तथा च सर्वेषु भ्रमेषु दृश्यमानविषयस्याज्ञातं चिदात्मतत्त्वमेवाधिष्ठानम्। तच्च क्वचिदविद्यामात्रव्यवहितं क्वचिद्व्यावहारिकविषयानुषक्तितया तत्तद्विषयाकारतामापन्नमिति स्थितिः। आधारस्तु समारोप्यविषयस्य यत्समानाधिकृततयाऽवभासः स उच्यते यथेदमाकारैक्येण रजतस्फुरणम्। तथा च भ्रान्तिविषयाभेदेन भ्रान्तौ भासमानाकारतया पुरोवर्तिवस्त्वाधारस्तदेव भ्रान्तावनवभासमानशुक्त्यादिविशेषाकाराभेदेनाधिष्ठानमुच्यते। अत्रोभयत्रेदमाकारः साधारणः। स एव सन्मात्रं ब्रह्म चिदात्मरूपम्। तदेवाविद्यावृतं व्यावहारिकशुक्त्यादिविशेषवेषेणाधिष्ठानमध्यस्यमानरजतादितादात्म्येन वेषेणाऽऽधार इत्यधिष्ठानाधारयोर्भेदाद्धाध्यारोप्याभेदेन गृह्यमाणाकारस्याऽऽधारांशस्य मिथ्याधिष्ठानांशस्य बाधाभावात्तस्य बाधोत्तरकालमवशिष्यमाणत्वान्न शून्यावशेषचोद्यावसर इति। एषाऽक्षरयोजना—सविलासमोहविषये सकार्याज्ञानावृते वस्तुनि चिदात्मन्यध्यसनस्याध्यासस्याधिष्ठानगीरधिष्ठानत्वप्रसिद्धिः संसिद्धा सम्यग्युक्त्यालोचनतः सिद्धा नाऽऽधार आरोप्यावगुण्ठितया प्रतीयमानाकारे वस्तुनि। तत एवंसतीदं जगदन्योन्याध्यसने सति निरास्पदं निरधिष्ठानं सच्छून्यं स्यादिति केषांचिदस्थानेऽनवसरे महान्संभ्रम आर्भटी जायते। कुत इत्यत्र निमित्तमाह—निर्बन्धमात्राश्रयादिति। निर्बन्ध आग्रहस्तन्मात्रबलादित्यर्थः। तेषां निर्बन्धकरणे हेतुं तद्वि-

---

१ क. ग. °नं कार्ये मो°। २ क. °नमित्य°। ३ क. ग. °मिति भा°।

शेषणेनाऽऽह—अनूनतमसामिति । अनल्पतमसामविवेकिनामित्यर्थः । महतामिति । तेषामुपहासार्थं विशेषणम् । एवमधिष्ठानाधारभेदस्य युक्त्यनुभवसिद्धत्वेऽपि तमनालोच्याऽऽग्रहं कुर्वन्तो महान्त इत्यर्थः ॥ ३१ ॥

सु० टी०—नन्वधिष्ठानमेवाऽऽधारस्तदाश्रयविषयाज्ञानकार्यं (+ स्याध्यस्तस्यान्याधारत्वायोगादतः कथमुक्तरीत्या शून्यतोद्धार इत्याशङ्क्याऽऽह—

अधिष्ठानमाधारमात्रं यदि स्या-<br>त्प्रसज्येत सत्यं तदा चोद्यमेतत् ।<br>न चैतत्सकार्यस्य मोहस्य वस्तु-<br>न्यधिष्ठानगीर्गोचरे लोकसिद्धा ॥ ३२ ॥

अधि)ष्ठानमिति । यन्निष्ठतया मिथ्यारजतादि भासते सोऽधिष्ठानसामान्यांश आधार इत्युक्तं तन्मात्रमेव चेदधिष्ठानं स्यात्सत्यं शून्यता प्रसज्येत नतु तथेत्यर्थः । यतः सकार्यमोहविषये विशेषांश एवाधिष्ठानगीर्लोकसिद्धा । तद्बोधादेव हि भ्रमो निवर्तते । तेन ' य एव लौकिकाः ' इति न्यायेन तथैव शास्त्रेऽपीति नोक्तदोष इत्यर्थः । न चाऽऽश्रयत्वविषयत्वेत्याद्यग्रिमविरोधः । तस्य प्रतिबिम्बभूतवस्त्वभिप्रायत्वात् । आभासपक्षे ह्याधाराधिष्ठानयोर्भेदः । अत्र केचित्—' अध्यस्तमेव हि ' इति न्यायाद्भ्रमविषय इदमंशः सत्येदमंशाद्भिन्नः । स चाविद्यावृत्तिगोचरो बाध्यः । शुक्तीदमंशस्तु प्रमाणवृत्तिगोचरो न बाध्यः । न चेदंत्वाद्द्वयविवेकापत्तिर्विवेचकस्य शुक्तित्वादेरावृतत्वाद्विवेकाग्रहस्याध्यासहेतुत्वात् । नचाविद्यावृत्त्या शुक्तीदंत्वाभेदेनैव रजतं बोध्यतां किं मिथ्येदंतयेति वाच्यं प्रमाणवृत्त्यविद्यावृत्त्योर्विरुद्धयोरेकत्र कार्येऽप्रवृत्तेः । न चाविद्यावृत्तेर्नेदंत्वं विषयो रजतप्रतीतिरिदमि प्रथत इत्यादिविरोधादिति वदन्ति । तन्न । उक्तरीत्या शुक्तीदंतासंसर्गाध्यासेनैवेदं रजतमित्यध्यासोपपत्तौ मिथ्येदंत्वकल्पने मानाभावाद्गौरवात्किंचेत्युत्तरश्लोकविरोधाच्च । अध्यस्तमेव हीति तु स्वरूपेण संसृष्टतया वाऽध्यस्तमेव भ्रमविषय इत्यर्थः । प्रमाणवृत्त्यविद्यावृत्त्योश्चैकस्फुरणेनैककार्यत्वस्योपपादि-

\+ धनुश्चिह्नितग्रन्थः ख. पुस्तकस्थः ।

१ क. ग. °र्थेसांध्यस्तथान्याधारत्वा° ।

[त]त्वात् । चित्सुखाचार्यैरपीदंतासंसर्गोऽप्यनिर्वचनीय इत्युक्तं नेदंत्वमिति दिक् ॥ ३२ ॥

अ० टी०—ननु कथमधिष्ठानाधारयोरित्थं भेदकल्पनं यतो लोके यदवच्छेदेनाऽऽरोप्यावभासस्तदेव वस्त्वधिष्ठानमिति चाऽऽधार इति च प्रसिद्धमित्यत आह—**अधिष्ठानमाधारमात्रमिति**। पूर्वार्धार्थः स्पष्टः । न चैतत् । अधिष्ठानमाधारमात्रं न भवतीत्यर्थः । तर्हि किं तदित्यत आह—**सकार्यस्येति**। सविलासाज्ञानस्य गोचरे विषये तेनाऽऽवृते वस्तुन्यधिष्ठानगीर्लोकसिद्धा विवेकिजनप्रसिद्धेत्यर्थः । विवेकिनो हि भ्रमकालेऽध्यस्यमानतादात्म्येनावभासमानमपि बाधावधित्वेनावशिष्यमाणविशेषात्मनाऽनवभासमानमध्यस्तमवगच्छन्तीति भावः । तदेवमधिष्ठानाधारयोराकारभेदेनाऽऽधाराकारस्य मिथ्यात्वेऽप्यधिष्ठानाकारस्य सत्यत्वान्न शून्यताशङ्कावकाश इत्युक्तम् ॥ ३२ ॥

सु० टी०—**इदानीमाधारावष्टम्भेनापि सत्यानृतमिथुनीकरणतया संसर्गबाधेऽप्याधारस्वरूपाबाधाच्छून्यतापत्तिमपहस्तयति—**

> **किं चानृतद्वयमिहाध्यसितव्यमिष्टं**
> **स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम् ।**
> **सत्यानृतात्मकमिदं मिथुनं मिथश्चे-**
> **दध्यस्यते किमिति शून्यकथाप्रसङ्गः ॥ ३३ ॥**

किं चेति । इहान्योन्याध्यासे यद्यनृतद्वयमेव परस्परात्मतयाऽध्यसितव्यमिष्टं स्यात्तदा शून्यता प्रसज्येत द्वयोरपि बाध्यत्वात् । न चैवं किं तु सत्यं प्रत्यगनृतं परागर्थः स्वरूपतोऽप्यध्यस्तत्वात्तयोर्मिथोऽध्यासश्चेत्प्रतीचः पराक्संसृष्टत्वाकारेण बाध्यत्वेऽपि स्वरूपेण सत्यत्वान्न शून्यत्वप्रसङ्ग इत्यर्थः ॥ ३३ ॥

अ० टी०—इदानीमधिष्ठानाधारयोरैक्याङ्गीकारेऽपि नायं प्रसङ्ग इत्याह—**किं चानृतद्वयमिति**। इहाऽऽत्मानात्मनोरध्यासेऽनृतद्वयं परस्परमध्यसितव्यमिष्टं चेत्स्यात्तदा त्वदीयमिदं चोद्यं शून्यत्वापादलक्षणं भवति । इदं मिथुनं सत्यानृतात्मकं मिथुनमध्य एकं संसृष्टरूपेणानृतमपि स्वरूपेण सत्यं भ्रमात्पूर्वमारोप्योत्पत्तिहेतुत्वेन तत्काले तस्य सत्ताप्रदत्वेन बाधोत्तरकालं तदवधित्वेन च यदस्ति तत्सत्यमेव । यतोऽपरमनृतं स्वरूपेणाप्यध्यस्यमा-

१ क. °रस्मृतारू° ।

नत्वात् । भ्रमकालात्पूर्वोत्तरकालयोस्तत्सत्त्वे प्रमाणाभावात् । एवं सत्यानृतात्मकं मिथुनं चेन्मिथोऽन्योन्यमध्यस्यते किमिति शून्यकथाप्रसङ्गो विनाऽऽग्रहामित्यर्थः ॥ ३३ ॥

सु० टी०—नन्वन्योन्याध्यास एव किं प्रमाणमित्याशङ्क्याहंकाराध्यासस्यास्फुटत्वात्प्रसिद्ध एव रजताध्यसे प्रथमं साधयति—

इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि ।
रजतभ्रमेऽस्य च परिस्फुरणान्न यदि स्फुरेन्न खलु शुक्तिरिव ॥ ३४ ॥

इदमर्थेति । रजतं तावदिदमि शुक्त्यादावध्यस्तमिति संप्रतिपन्नमेवमिदमंशोऽपि रजतेऽध्यस्त इति । साध्यं हेतुमाह—रजतभ्रम इति । भ्रान्तौ भासमानत्वाद्रजतवदित्यर्थः । व्यतिरेके शुक्तिविशेषांशवदित्यर्थः । यद्वा यदीदंत्वमनध्यस्तं स्यान्न भ्रमे स्फुरेच्छुक्तित्ववदिति तर्क उक्तः । रजते पुरोवर्तित्वलक्षणेदंत्वास्फुरणे तदर्थिप्रवृत्तिरपि न स्यादिति निर्गलितार्थः ॥ ३४ ॥

अ० टी०—स्यादेतदेवं यदि परस्पराध्यासः क्वचिद्दृष्टपूर्वस्तदभावे कथमात्मानात्मनोरुक्ताध्याससंभावनेति चेन्न सर्वत्र तद्दर्शनादित्युदाहरणमाह—इदमर्थवस्त्वपीति । इदंशब्दप्रत्ययगोचर एव वस्तु तदपि रजते परिकल्पितमध्यस्तं भवेत् । तथा रजतरूपं च वस्त्विदमि कल्पितं भवेत् । कुत एवमित्यत आह—रजतभ्रम इति । रजतमिदमित्यस्मिन्भ्रमेऽस्येदमध्यकाराद्रजतस्य चाभेदेन परिस्फुरणादित्यर्थः । विमतमधिष्ठानसामान्यमारोप्यात्मनाऽध्यस्तं भ्रान्तौ स्फुरमाणत्वाद्भ्रमरूप्यांशवदिति । तथा रजतमिदमात्मनाऽध्यस्तं तत्र त्रैकालिकनिषेधप्रतियोगित्वाद्यत्रैवं यथाश्रुतिस्वरूपमिति भावः । विपक्षे बाधकमाह—न यदीति । यदीतरेतरत्राध्यस्तमुभयं न भवेत्तदा शुक्तिरिव भ्रमज्ञाने न स्फुरेत्खल्विति योजना । न ह्यनध्यस्तं किंचिदपि भ्रमो भासत इत्यर्थः ॥ ३४ ॥

सु० टी०—एवं परस्परार्थाध्यासेऽध्यस्तं प्रमाणयति—

रजतप्रतीतिरिदमि प्रथते ननु यद्वदेवमिदमित्यपि धीः ।
रजते तथा सति कथं न भवेदितरेतराध्यसननिर्णयधीः ॥ ३५ ॥

रजतेति । एकैवेदं रजतमिति धीस्तत्र यथा रजतस्येदमा तादात्म्यं भासत एवमिदमोऽपि रजततादात्म्यमित्यनुभव एवात्रेतरेतराध्यासे मानमित्यर्थः ॥ ३५ ॥

---

१ क. °दंत्वयम°। २ ख. °निगर्वः। ३ ख. एवमर्थाध्यासेऽनुमानमुक्त्वा ज्ञानाध्यासेऽध्य°।

अ० टी०—नत्रोक्तेऽर्थे विवादावकाशोऽनुभवसिद्धत्वादित्यनुभवं सर्वजनप्रसिद्धं प्रमाणयति—रजतप्रतीतिरिति। यथाऽनिदमात्मनो राजतस्येदमि प्रतीतिः प्रथते प्रसिद्धा वर्तते ऽनुभूयते यद्वदित्यर्थः। एवमिदमित्यपि धी रजतात्मकेदंकारावभासात्मिका धीरपि रजते प्रथते। ननु निश्चितमेवैतदित्यर्थः। तथासति वस्तुतो विविक्तयोरन्योन्यात्मनाऽवभासमानत्वे सति कथमितरेतराध्यसननिर्णयरूपा धीर्न भवेद्भवेदेवेत्यर्थः॥ ३५॥

सु० टी०—अत्रोक्तानुमानमूलभूतां व्याप्तिं प्रकटयति—

अध्यस्तमेव हि परिस्फुरति भ्रमेषु
नान्यत्कथंचन परिस्फुरति भ्रमेषु।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकानुपलम्भनेन॥ ३६॥

अध्यस्तमेव हीति। अध्यस्तस्यैव भ्रमे स्फुरणादिदमंशोऽप्यध्यस्त इति साधितमित्यर्थः। ननु 'सर्वं ज्ञानं धर्मिण्यभ्रान्तम्' इति न्यायादनध्यस्तोऽपीदमंशः प्रथतामिति नेत्याह—नान्यदिति। अन्यत्स्वरूपेण संसृष्टतया वाऽनध्यस्तमित्यर्थः। धर्मिण्यभ्रान्तमिति च धर्मिस्वरूपेऽभ्रान्तं न तु संसर्गेऽपीत्यर्थः। कथं न स्फुरतीति चेदनुभवबाधादेवेत्याह—भ्रमेष्विति। सर्परजतमृगमरीचिद्विचन्द्रादिभ्रमेष्वनध्यस्तानां रज्जुत्वादीनां स्फुरणानुपलम्भादित्यर्थः॥ ३६॥

अ० टी०—पूर्वश्लोकोक्तानुमानतर्कयोर्व्याप्तिमाह—अध्यस्तमेव हीति। यद्भ्रमेषु परिस्फुरति तदध्यस्तमेव हि परिस्फुरति यथा भ्रमदृष्टसर्परजतजलद्विचन्द्रादीत्यर्थः। यदनध्यस्तं तन्न भ्रमेषु परिस्फुरति रज्जुत्वादीत्यर्थः। इदमत्र तात्पर्यं—द्विविधो ह्यध्यासो निरुपाधिकः सोपाधिकश्च। तत्र स्वरूपेण भासमानेऽप्यनवभासमानयाथात्म्ये वस्तुनि वस्त्वन्तरात्मनाऽवभासो निरुपाधिको यथा शुक्त्यादौ रजताद्यध्यासः। यत्र भासमानेऽपि वस्तुयाथात्म्ये संनिहितोपाधिसामर्थ्यात्करणपाटवाद्वा भेदविपर्यासाद्यवभासः स सोपाधिकाध्यासो यथा प्रतिबिम्बद्विचन्द्राद्यध्यासः। तयोरिहाहंकारात्मनोर्निरुपाधिकाध्यासे दृष्टान्तः शुक्तिरजताध्यास उक्तः। तत्र चेतरेतराध्यासः प्रसिद्ध इत्यतो नाऽऽत्माहंकारयोरितरेतराध्यासोऽसंभावित इति॥ ३६॥

सु० टी०—ननु रजतादिभ्रमे द्वैरूप्यावभासादस्तु परस्पराध्यासो न

---

१ क. °ध्यासस्तत्र।

त्वहमध्याससतत्र द्वैरूप्यानवभासादित्याशङ्क्य तद्दृष्टान्तेनात्रापि साधनीयमित्याह—

इतरेतराध्यसनमेव ततश्चितिचेत्ययोरपि भवेदुचितम् ।
रजतभ्रमादिषु तथाऽवगमान्न हि कल्पना गुरुतरा घटते॥ ३७॥

इतरेति । चितिचेत्ययोर्योऽयमहमित्यध्यासः सोऽपि ततोऽध्यासत्वादेव हेतोरितरेतराध्यासः स्याद्रजताध्यासवदन्यथाऽध्यासद्वैरूप्यकल्पनाऽनुचिता स्यादित्यर्थः । अत एवाहमुपलभ इत्यहमि चैतन्यानुभवः । न चान्यगतत्वेन गृह्यमाणः स्वविशेषांशोऽधिष्ठानत्वं विरुणद्धि, इमे रङ्गरजते इत्यन्योन्यभ्रम इवेति भावः । व्याप्तिं स्मारयति—रजतेति । प्रकारान्तरे कल्पनागौरवमाह—न हीति । द्वैरूप्यावभासश्चात्रापि विवेकिनामस्त्येवेति भावः । चित्रादिशब्दवच्चाहंशब्दस्य शबलवाचित्वान्न शब्दद्वयप्रयोगः ॥ ३७ ॥

अ० टी०—नन्वस्तु लोके परस्पराध्यासो दृष्टत्वादिदमिति च रजतमिति द्व्याकारावभासोपपत्तेश्च स नाऽऽत्माहंकारयोः संभवति भासमानसामान्यांशाभासमानविशेषांशरूपाकारद्वयासंभवादहमित्येकरूपेणैवावभासादित्याशङ्क्येहापि निरुपाधिकाध्यासत्वादेव परस्पराध्यासत्वानुमानोपपत्तेः कल्पनायाश्चेह दृष्टविपरीताया गौरवपराहतत्वाद्विवेकवतां द्व्याकाराभासस्य स्फुटत्वाच्च मैवमित्याह—इतरेतराध्यसनमेवेति । अक्षरार्थः स्पष्टः । प्रत्यक्पराक्द्वयमिदं हि परस्परस्मिन्नित्यत्राहमित्यवभासे द्व्याकारत्वस्यास्माभिरुपपादितत्वादात्मनः स्वरूपेण स्फुरणेऽपि स्वाभाविकविशेषास्फुरणस्यानुभवसिद्धत्वादात्मनो विषयत्वाभावेन द्व्याकारताया अवभासमानाया अप्यस्पष्टत्वात्तथाऽनुल्लेखोपपत्तेश्च नात्रानुपपन्नं किंचिदिति भावः ॥ ३७ ॥

सु० टी०—उपपादितमितरेतराध्यासं सोपपत्तिकमुपसंहरति—

अनुभूतियुक्त्यनुमितित्रितया-
दितरेतराध्यसनसिद्धिरतः ।
चितिचेत्यवस्तुयुगलस्य न चे-
त्रितयस्य बाधनमिहाऽऽपतति ॥ ३८ ॥

अनुभूतीति । अस्मात्पूर्वोक्तानुभवयुक्त्यनुमानरूपात्त्रितयाच्चितिचेत्ययुगलस्येतरेतराध्याससिद्धिरन्यथा त्रितयस्यापि बाधापत्तेरित्यर्थः ॥ ३८ ॥

अ० टी०—साधितमात्मानात्मनोरितरेतराध्यासमुक्तप्रमाणमुपसंहरति—अनुभूति-युक्तीति । रजतप्रतीतिरिदमि प्रथत इत्यस्मिन्पद्य उपपादिताऽनुभूतिः । ततः पूर्वपद्य इदमर्थवस्त्वपि मेवेदित्यस्मिन्नुक्ते युक्त्यनुमिती । ततस्तस्मात्कारणादुक्तानुभूत्यादित्रितयाच्चितिचेत्यवस्तुयुगलस्याधिष्ठानारोप्यरूपार्थद्वयस्येतरेतराध्यसनमेव युक्तम् । न चेदेवमभ्युपगम्यते तदोक्तत्रितयस्यानुभूत्यादेर्बाधनं तद्विरोध इहाऽऽपततीति योजना ॥ ३८ ॥

सु० टी०—नन्वज्ञातत्वेऽपि सादृश्यादिरहितस्य निरंशस्य प्रतीचोऽविषयिणः कथमध्यासाधिष्ठानत्वं लोके सदृशसावयवपराग्विषयाणामेव शुक्त्यादीनामधिष्ठानत्वदर्शनादिति शङ्कते—

**सदृशसांशपराग्विषयेषु चेद्भवति दोषवशाज्जगति भ्रमः ।**
**भवतु तत्सकलं वदितुं वयं तदुपचारवशाद्दृशि शक्नुमः ॥३९॥**

सदृशेति । कथंचित्साद्दृश्यादिसंपादनेन प्रौढ्या परिहरति—भवत्विति । उपचारो व्यवहारस्तत्सामर्थ्याच्चिद्रूपेऽप्यात्मनि तत्सर्वं सुवचमित्यर्थः । तथा ह्यन्तःकरणस्य देहेन्द्रियापेक्षया प्रत्यक्त्वं स्वच्छत्वं सूक्ष्मत्वं चास्ति चैतन्यसादृश्यं सांशत्वमपि चैतन्यस्याविद्यावशादखण्डस्यापि जीवत्वब्रह्मत्वाद्यात्मकमस्ति पराक्त्वमपि साभासान्तःकरणे तदविविक्तत्वेन स्पष्टीभावाद्विषयतामिवाऽऽपन्नस्य शक्यमुत्प्रेक्षितुमनादित्वाच्च पूर्वपूर्वापेक्षया सर्वमिदमुत्तरोत्तराध्यासे शक्यसमर्थनमिति भावः ॥ ३९ ॥

अ० टी०—नन्वेवमुक्तरीत्याऽऽत्मनि स्वानुभवमात्रसिद्धानाद्यनिर्वचनीयं पूर्वभ्रमं संस्कारसचिवमज्ञानमात्रं पुष्कलकारणमासाद्याहंकाराद्यध्याससंभवेऽप्यात्मनोऽधिष्ठानत्वासंभवात्कथमुक्ताऽध्याससिद्धिरित्याक्षेपमुत्थाप्य परिहरति—सदृशसांशेति । अथ वा बहिरर्थेऽध्यासे सादृश्यदर्शनात्तस्य जात्याद्यध्यासेऽव्यभिचारेऽपि द्रव्याध्यासे तदभावादहंकारस्य चाध्यस्यमानस्यान्तःकरणात्मकस्य द्रव्यत्वात्तस्य च जडस्य चिदात्मना सादृश्यासंभवादध्यासानुपपत्तिः । तथा तत्र करणदोषः प्रमातृदोषश्च प्रसिद्धस्तावप्यत्र न संभवतः प्रत्यगात्मनः करणागोचरत्वात्प्रमात्रन्तराभावाच्च । तथा विषयतया गृह्यमाणसामान्यांशोऽगृह्यमाणविशेषांशोऽधिष्ठानेऽन्यस्याध्यासो दृष्ट इहाऽऽत्मनो निरंशस्य स्वयंज्योतिषस्तदभावान्नाधिष्ठानत्वसंभव इत्याक्षेपमुत्थाप्य परिहरति—सदृशसांशेति । जगति लोके परागर्थे यो भ्रमो भवति सदृशसांशपराग्विषयेषु भवति । तथात्वस्याऽऽत्मन्यसंभवान्नात्राध्याससंभव इत्याक्षेपभागस्य पूर्वार्धस्यार्थः । भवतु तत्सकलमुक्तप्रकारं सर्वमध्यासकारणमात्मन्यपि यतो वयं तदुक्तं सर्वमुपचारवशाद्दृश्यात्मन्यपि वदितुं शक्नुमः संपादयितुं पारयाम इति परिहारभागस्यार्थः ॥ ३९ ॥

सु० टी०—उक्तपरिहारस्यापसिद्धान्तत्वशङ्कामपनयति—

अपि च भाष्यकृदेव तदब्रवी-
द्विषयताद्युपचारसमाश्रयात् ।
स्ववचसैव न तावदिति ब्रुव-
न्सकलमात्मनि विभ्रमसिद्धये ॥ ४० ॥

अपि चेति । न तावदस्मत्कल्पितोऽयं परिहारः किं तु भाष्यकृदेवोपचारमाश्रित्य सर्वमिदं विषयत्वादिकमात्मनि विभ्रमसिद्ध्यर्थमब्रवीदित्यर्थः । न च भाष्यकृदुक्तिरनुपलब्धिबाधितेत्याह—स्ववचसेति । कण्ठरवेणैव न त्वभिप्रायगत्येत्यर्थः । भाष्योक्तिमाह—न तावदिति । अध्यासभाष्ये 'कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्' इत्याक्षिप्य 'न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वात्' इति ब्रुवन्नित्यर्थः । अस्मत्प्रत्ययोऽन्तःकरणं तत्राभिव्यक्तः सन्विषय इव भवतीति । स ह्यविद्यायामाभासाविवेकेन सूक्ष्मप्रतिबिम्बात्मना प्रविष्टोऽस्पष्टोऽपि प्रत्युपाधौ साभासान्तःकरणे स्थूलप्रतिबिम्बात्मना प्रविष्टः सञ्छीतभानावेव स्वधर्मानुवदभिव्यक्तः स्वप्रकाशोऽपि स्पष्टीभावमात्रेणोपचारादस्मत्प्रत्ययविषय इत्युच्यते ॥ ४० ॥

अ० टी०—कथं तत्संपादनमित्यपेक्षायां भाष्यकारैरेव संपादनप्रकारस्योक्तत्वान्नास्माभिस्तत्र यत्नः कार्य इत्यभिप्रेत्य भाष्यवचनमुदाहरति—अपि च भाष्यकृदेवेति । यद्वा प्रत्यगात्मन्युपचाराद्विषयतादिसंपादनप्रतिज्ञाततापसिद्धान्तावहेति चेन्न हि न हि भाष्यकारैरेव तथाप्रतिपादनादित्याह—अपि च भाष्यकृदेवेति । न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वादित्यादि ब्रुवन्भाष्यकृदेवोपचारसमाश्रयात्तद्विषयादि सकलं स्ववचसैवाब्रवीदिति योजना । किमर्थमात्मनि प्रत्यग्ब्रह्मणि बहिरुपलब्धभ्रमानुरोधेन विभ्रमसिद्धय इत्यर्थः । अयं भावः—अस्मत्प्रत्ययाभिमतं परिणाम्यन्तःकरणं तच्चाऽऽत्मवत्स्वच्छं सूक्ष्मदेहाद्यपेक्षया प्रत्यग्भवतीत्यस्त्यस्याऽऽत्मना सादृश्यम् । केनाप्यंशेन हि सादृश्यं सर्वत्र मृग्यते न सर्वात्मनेति स्थितिस्तदिहाप्येवं सुसंपादमिति नात्र सादृश्याभावः । तथाऽऽत्मन एकरसस्याप्यज्ञानसंबन्धायत्तमगृह्यमाणविशेषांशं स्फुरणसामान्यांशरूपमंशद्वयमप्रत्यक्त्वब्रह्मत्वाद्यात्मकं सुसंपादम् । निरंशस्य स्वयंज्योतिषोऽप्यात्मनः स्वरूपे भासमानस्यापि परिपूर्णपरब्रह्मरूपेणानवभासात्प्रतीचश्च निर्विशेषतया निर्विकल्पस्यान्यत्र

---

१ ख. °कृत्तदे° ।

विशेषतोऽनवभासमानस्यापि स्फुटमन्तःकरणेऽवभासनात्तद्गताभासाविवेकेन स्फुटाभिव्यक्ते-रन्तःकरणेऽवभासनात्तद्गतमासाविवेकेन स्फुटाभिव्यक्तेरन्तःकरणनिमित्तत्वात्तत्र विषयवद्भा-वाद्विषयत्वमप्यस्य सुसंपादम् । न चाध्यासे सत्यन्तःकरणसिद्धौ तत्राऽऽत्मनो विषयत्व-सिद्धिस्तत्सिद्धावन्तःकरणं तत्राध्याससिद्धिरित्यन्योन्याश्रय इति वाच्यमध्यास-प्रवाहस्यानादित्वात्पूर्वपूर्वाध्याससिद्धविषयभावे चिदात्मन्युत्तरोत्तराध्याससंभवात् । एतेन करणदोषप्रमातृदोषावपि संभावितौ व्याख्यातौ । एवमात्मन्यनात्माध्यासेऽपि दोषसंप्रयो-गयोः संभवादुक्तांशद्वयवत्तया विषयत्वाधिष्ठनयोरपि संभवात्संस्कारस्य पूर्वपूर्वभ्रमजन्यस्य सुलभत्वान्नासंभावनेहाप्यध्यासस्येति ॥ ४० ॥

सु० टी०—एतच्चाभ्युपेत्योक्तं वस्तुतस्त्वपरोक्षाध्यासेऽधिष्ठानापारोक्ष्यं तन्त्रं न तु सादृश्यादीत्याह—

अपरोक्षरूपविषयभ्रमधी-
रपरोक्षमास्पदमपेक्ष्य भवेत् ।
मनसः स्वतो नयनतो यदि वा
स्वपनभ्रमादिषु तथा प्रथितेः ॥ ४१ ॥

अपरोक्षेति । अपरोक्षरूपाऽपरोक्षविषया या भ्रमधीः साऽपरोक्षाधि-ष्ठानमात्रमपेक्षते नत्वारोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वसादृश्यादिकमपि व्यभिचारादित्यर्थः । नन्विन्द्रियागोचरस्याऽऽत्मनोऽपारोक्ष्यमपि दुर्घट-मित्याशङ्क्याऽऽह—मनस इति । यदि वेति । व्यवस्थार्थं क्वचिन्मनसः क्वचित्स्वतः क्वचिच्चक्षुरादित इत्यर्थः । क्वेदमवधारितमित्यत्राऽऽह—स्वपनेति ॥ ४१ ॥

अ० टी०—विषयत्वादेरध्यासप्रयोजकत्वमभ्युपगम्य चेदमुक्तं वस्तुतस्तु न तदपेक्षानिय-मोऽधिष्ठानारोप्ययोरेकज्ञानविषयत्वाभावाद्भिन्नज्ञानविषययोः स्वतःस्फुरिताविषययोश्च (?) दोषवशात्तादात्म्यावभाससंभवात् । तस्मादपरोक्षत्वमात्रमपरोक्षभ्रमाधिष्ठानत्वेऽपेक्ष्यते । तच्च यत्र स्वत एव संभवति तत्र न संप्रयोगस्याप्यपेक्षेत्यभिप्रेत्यापरोक्षत्वाच्चेति भाष्यार्थमाह—अप-रोक्षरूपविषयभ्रमधीरिति । कथमपरोक्षत्वमास्पदस्येत्येतदुपपादयति—मनस इति । क्वचिन्मनोवृत्तिमात्रग्राह्यत्वेन क्वचित्स्वतःस्वप्रकाशत्वेन । यदि वा क्वापि नयनादिसंप्रयोग-

---

१ क. ग. दुष्करमि° ।

वशेनेति यथादर्शनव्यवस्था । तत्र प्रत्यगात्मनः स्वतोऽपरोक्षतया न विषयत्वापेक्षतेत्यर्थः । ननु स्वतोऽपरोक्षत्वमात्रेणाध्यासः कुत्र दृष्ट इत्यत आह—स्वपनभ्रमादिषु तथा प्रथितेरिति ॥ ४१ ॥

सु० टी०—नन्वात्माभिन्नस्य स्वतोऽपरोक्षत्वाभावात्ताद्दृशेऽध्यासः क संप्रतिपन्न इत्याशङ्क्य 'आत्मनि चैवं विचित्राश्च हि' [ ब्र० सू० अ० २ । पा० १ । सू० २८ ] इतिन्यायसिद्धे स्वप्नभ्रम एवेत्याह—

स्वतोऽपरोक्षा चितिरत्र विभ्रम-
स्तथाऽपि रूपाकृतिरेव जायते ।
मनोनिमित्तं स्वपने मुहुर्मुहु-
र्विनाऽपि चक्षुर्विषयं स्वमास्पदम् ॥ ४२ ॥

स्वत इति । चितिस्तावद्ग्राहकान्तराभावात्स्वसत्तायां संशयादिराहित्यात्स्वयंज्योतिष्ट्वश्रुतेश्च स्वतोऽपरोक्षा रूपादिहीनतया सादृश्यादिशून्या स्वप्नभ्रमाधिष्ठानं तथाऽप्यत्र चितौ स्वप्ने निद्रादोषाद्रूपाद्याकार एव भ्रमश्चक्षुर्विषयं मनोगम्यं वा रूपवदधिष्ठानं विनाऽपि पुनःपुनर्जायते—'स हि स्वप्नो भूत्वा' [ बृ०४।३।७ ] इति श्रुतेः । यद्वा चक्षुरादिव्यापारोपरमात्कथं रूपाकृतिरित्यत्राऽऽह—मनोनिमित्तमिति । मनोगतरूपादिवासनानिमित्तमित्यर्थः । स्वप्ने तैजसजीवभोग्यत्वेन वासनापुञ्जशेषस्य मनसोऽवस्थानात् । अत्रेदं विचारणीयं—किं ब्रह्मचैतन्यं स्वप्नब्रह्माधिष्ठानमुत जीवचैतन्यमिति । आद्ये व्यावहारिकः सन्नज्ञातसत्ताकः स्वप्नप्रपञ्चः स्यात् । अन्त्येऽपि किं जागरे तस्य बाधः किं वा लय इति । अत्र वदन्ति, अवस्थात्रयाविष्टं ह्यात्मचैतन्यं भवति । स्थूलान्तःकरणोपहितं जागरे, वासनाविशिष्टान्तःकरणोपहितं स्वप्ने, सुषुप्तौ च सूक्ष्मं तदुपहितमिति । तत्र जाग्रदवस्थोपहितं चैतन्यं स्वप्नभ्रमाधिष्ठानं जागरान्ते चाहं चैत्र इति तादृगधिष्ठानबोधात्तद्बाधः । एवं च स्वप्नस्य जाग्रत्प्रपञ्चवैलक्षण्ये सति प्रमातरि बाध्यत्वं वक्ष्यमाणमुपपत्स्यते । स्वप्नान्ते सुषुप्ति-

१ क. ग. °द्धे स्वत्वभ्र° । २ क. ग. °त्रयवशिष्टं । ३ ख. °नावाशि° । ४ ख. °स्थोचितं । ५ क. ग. °ये ये चा° । ६ ख. क्षण्यं स° । ७ क. ग. माणमुत्पत्स्य° ।

श्चेत्स्वप्नसृष्टलय एव। तदभिप्रायेण वक्ष्यति 'क्षीणे तु तत्र लयमेति' इत्यादीति न पूर्वोत्तरविरोधः। बुद्ध्याद्युपहितजीवरूपं हि 'तत्सृष्ट्वा तदेवानुप्राविशत्' [तै० २।६।१] इत्यादिश्रुतेरीशकल्पितत्वेन व्यावहारिकत्वाच्छुक्त्यादिवदधिष्ठानत्वयोग्यम्। तन्निष्ठाश्च जीवकल्पिताज्ञानावस्थाः स्वप्नभ्रमोपादानभूता अहं चैत्र इत्यादिजाग्रद्बोधेन बाध्यन्ते शुक्तिज्ञानेनेव रजतोपादानाज्ञानावस्था इति। न चैवं सत्यहं गजोऽहं नीलमिति स्वप्नाकारापत्तिरिति वाच्यम्। न हि स्वप्नः सर्वोऽपि तादात्म्याध्यासः किं तु जाग्रत्संस्कारानुसारात्कश्चित्तथा। कश्चित्तु संसर्गाध्यासोऽहं राजाऽयं गजो मम क्षेत्रमिति तदाकारदर्शनादिति। तदिदमापातरमणीयम्। तथा हि न तावदीशकल्पितस्थूलान्तःकरणोपहितं चैतन्यं स्वप्नकालेऽस्ति यत्तदधिष्ठानं स्यात्। नापि तज्ज्ञानं जागरादिजन्यं स्वप्नभ्रमबाधकं भवितुमर्हतीति। तद्धि किं साक्षिज्ञानमविद्यावृत्तिरन्तःकरणवृत्तिर्वा। नाऽऽद्यौ तयोरज्ञानानिवर्तकत्वेनाबाधकत्वात्। नान्त्योऽन्तःकरणवृत्तेरज्ञातबोधकत्वादन्तःकरणस्य[२] चाज्ञातसत्तानभ्युपगमेन प्रमाणावेद्यत्वात्स्वस्मिंश्च स्ववृत्तेरसंभवादित्यास्तामसद्ग्रहेण। केचिदवच्छिन्नानवच्छिन्नसाधारणं चिन्मात्रं स्वप्नाधिष्ठानमाहुः। तच्च साधारणचिन्मात्रस्य परस्परविरोधे हीत्यादिन्यायेन दुर्निरूपत्वादेव नोपपद्यत इति किं प्रपञ्चेन। शरीरावच्छिन्नं चैतन्यं तदधिष्ठानमित्यपरे। तदतिस्थवीयः। न हि जागरादौ शरीरबोधं विना स्वप्ननिवृत्तिर्घटज्ञानादपि तन्निवृत्तेः। अन्ये त्वाहुरन्तःकरणोपलक्षितं चैतन्यमधिष्ठानमिति। तन्मते शुद्धचित एवाधिष्ठानत्वाज्जागरे स्वप्नस्य न बाधः स्यात्। तथा च सति प्रमातरि बाध्यत्वं नोपपद्यते। तस्मादनुपहितचैतन्यं जाग्रत्प्रपञ्चाधिष्ठानं जाग्रदुपहितं तु स्वप्नप्रपञ्चाधिष्ठानमिति वृद्धाः। श्रुतिश्च—'यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' [बृह० ४।३।१४] इति। एवं च जागरादावावश्यकजाग्रद्वस्तूपहितचिद्गोचरप्रामाणवृत्त्या सति प्रमातरि स्वप्नबाध उपपद्यते। तत्र चाधिष्ठानतावच्छेदकं घटत्वाद्येव जाग्रदुपहितत्वं तूपलक्षणं सर्वनामशक्तौ बुद्धिस्थत्ववत्। तथा च जाग्रदनुभूतवस्तूपहितमेव ब्रह्मचैतन्यमिन्द्रियोपरमात्तथात्वेनाप्रथमानमुपाधेस्तटस्थत्वात्स्वरूपमात्रेण[३] प्रथमानं निद्रादोप[४]जाग्रत्संस्कारादृष्टसहकृताज्ञानेन

---

१ क. ग. °नत्वायो°। २ ख. °दित्यलम°। ३ क. °त्रेणाप्र°। ४ क. ग. °दोषं जा°।

सूक्ष्मप्रपञ्चात्मना विवर्तमानं स्वेनैव भास्यते ' अस्य लोकस्य सर्वावतो मात्रामपादाय ' [बृ० ४ । ३ । ९ ] इत्यादिश्रुतेः । अत्र तिरोहित-जाग्रदुपाधिविशेषस्य चिन्मात्रस्य संस्कारद्वारकाविद्यावृत्त्यापादितजीव-साक्ष्यभेदस्य स्वतोऽपरोक्षस्फुरणमेवाधिष्ठानसामान्यज्ञानम् । अज्ञा-तोपाधेश्चोपहितानवभासादधिष्ठानतावच्छेदकजाग्रद्घटाद्याकाराधिया बाधः । मूलाज्ञानाकार्यत्वादविद्यातिरिक्तदोपजन्यत्वाच्च स्वप्नस्य न व्यावहारिकतेति दिक् ॥ ४२ ॥

अ० टी०—कथं स्वप्ने स्वतोऽपरोक्षे परोक्षविभ्रम इत्यपेक्षायामनुभवमाश्रित्य तदुपपाद-यति—स्वतोऽपरोक्षा चितिरिति । अत्र सर्वजनप्रसिद्धे स्वपने चितिः प्रत्यग्रूपा संवित्स्वतोऽपरोक्षा तथाऽपि न तावदियमक्षगम्या तदाऽक्षाणामुपरमान्नापि मनोगम्या तस्य तत्प्रकाशस्य तत्प्रकाशकत्वानुपपत्तेः । परिशेपात्स्वत एवापरोक्षेति । तथाऽपि स्वत एवापरोक्षत्वेऽपि विपयतयाऽपरोक्षत्वाभावेऽपीति यावत् । रूपाकृतिरनेकविपयाकाराकारितो विभ्रमो मुहुर्मुहुर्जायत एवेति योजना । तत्र निमित्तमाह—मनोनिमित्तमिति । मनोगतोद्बुद्धवासनानिमित्तमित्यर्थः । तत्र बाह्यस्य विपयस्याभावाद्वासनाश्रयमनःपरिणाम-मात्रत्वात्स्वप्नस्येति न तस्य तदा विपयग्रहणकरणतया निमित्तत्वमिति भावः । तदेव स्पष्टयति—विनाऽपीति । चक्षुर्विपयं बाह्यरूपादि स्वमास्पदमालम्बनं विनाऽपि रूपाकृतिर्जायत एवेति संबन्धः । मुहुर्मुहुरिति वदन्ननुभवसिद्धेऽर्थे विप्रतिपत्त्याशङ्केति द्योतयति ॥ ४२ ॥

सु० टी०—आरोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वस्य व्यभिचारं वक्तुं मनःप्रमाणत्वाभ्युपेत्यवादेन मानसे नभसि चाक्षुषाध्यासं दर्शयति—

मनोवगम्येऽप्यपरोक्षताबला-
त्तथाऽम्बरे रूपमुपोल्लिखन्भ्रमः ।
सितादिभेदैर्बहुधा समीक्ष्यते
तथाऽक्षिगम्ये रजतादिविभ्रमः ॥ ४३ ॥

मनोवगम्येऽपीति । मानसापरोक्षेऽप्यम्बरेऽधिष्ठानेऽपरोक्षतामात्रसामर्थ्या-च्छुक्लं नभो नीलं नभ इति नानारूपोल्लेखी भ्रमो दृश्यतेऽतो नोक्तनियम इत्यर्थः । एवं स्वतोऽपरोक्षे मनोपरोक्षे च स्वप्नभ्रमनभोनैल्यभ्रमावुदा-हृत्य नयनत इत्यस्योदाहरणमाह—तथाऽक्षिगम्य इति । व्याख्यातम् । यथेतिपाठे तृतीयोदाहरणं दृष्टान्तपुरस्कारेणोक्तमिति योज्यम् । ननु

नाऽऽकाशो मानसो बाह्यत्वान्मनसो बहिरस्वातन्त्र्यादपि तु साक्षिवेद्य एवेति चेन्न बाह्यस्य प्रमाणेनैव ज्ञाततया साक्षिवेद्यत्वान्नभसश्च बहिरिन्द्रियागोचरस्य मानसत्वमन्तरेणाज्ञाततयैव भानप्रसङ्गात्। तदुक्तं ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षत इति। कथं तर्हि सुखादेः कल्पितरजतादेश्च ज्ञातत्वेनानुभव इति चेत्तेषामान्तरत्वेनानावृतत्वाद्बाह्यस्य तु नभसो घटादिवदावृतत्वेनाऽऽवरणभङ्गाय प्रमाणापेक्षणान्मनोवेद्यत्वमगत्याऽभ्युपेयम्। न च तस्य बहिरस्वातन्त्र्यं 'मनसा ह्येव पश्यति' [मैत्र्युप० ६। ३०] इत्यादिश्रुत्या बाह्यानामपि मनोवेद्यताया दर्शितत्वाद्बहिरस्वातन्त्र्योक्तिश्च केवलमनोविषया। न चानर्पिताकारं मनः साक्षात्कारसमर्थमिति चक्षुरेव तत्राऽऽकारार्पकमुपेयम्। ननु कथं नीरूपे नभसि चक्षुषः प्रवृत्तिस्तस्य[1] रूपपुरस्कारेणैव द्रव्येषु प्रवृत्तिरिति चेत् सत्यमेतत्। न तु स्वीयरूपपुरस्कारेणेत्यत्र किंचिन्नियामकमस्ति पीतः शङ्खो रक्तः स्फटिक इत्यन्यरूपद्वाराऽपि चक्षुष्प्रवृत्तिदर्शनात्। न च तत्र रूपवृत्तिशौक्ल्यस्यैवाभिभवो न रूपस्येति वाच्यं तथाऽप्युद्भूताभिभूतरूपस्पर्शस्य सुवर्णस्य चाक्षुषत्वप्रसङ्गात्। ततश्चाऽऽलोकादिरूपोपहिते नभसि तद्द्वाराऽपि चक्षुष्प्रवृत्त्यविरोधः। अप्रत्यक्षेऽपीति भाष्यं तु रूपानुपधानकालीनमानसत्वाभावपरं परमतेन वा। नचान्यरूपद्वाराऽपि रूपवत्येव चक्षुष्प्रवृत्तिर्गौरवादुद्भूतरूपं गृह्णदेव हि चक्षुः प्रवर्तते न तूद्भूतरूपवत्येवेति। अस्तु तर्हि चाक्षुषमेव नभ इति चेन्नारूपिद्रव्यत्वान्महत्त्वे सत्युद्भूतरूपवत्त्वस्य द्रव्यचाक्षुषत्वे तन्त्रत्वात्। ततश्चात्र रूपद्वारक[3]चक्षुरर्पिताकाशाकारमनोवृत्तिविषये नीलत्वाद्यारोप इति भावः॥ ४३॥

अ०टी०—'मनसः स्वतो नयनतो यदि वा' इत्यत्र स्वत इति भाग उदाहरणमुक्तं प्रपाञ्चितमिदानीं मनसाऽपरोक्षीकृते विषयेऽपि चाक्षुषभ्रमो दृष्ट इत्युदाहरति—मनोवगम्येऽपीति। इदमत्राऽऽकूतमस्ति ह्याकाशे नीलं नभस्तलमभवदित्यादि चाक्षुषो भ्रमः सर्वजनीनस्तत्राऽऽकाशस्य स्फुरणमन्तरेण तत्राध्यस्यमाननैल्यादिस्फुरणायोगात्तत्स्फुरणं तावद्वक्तव्यम्। न हि परोक्षेऽधिष्ठानेऽपरोक्षभ्रम उपपद्यते। एवं स्थिते नभसः स्वप्रकाशता नास्ति येनाऽऽत्मनीव स्वतःसिद्धोऽध्यासः स्याज्जडत्वस्य तस्मिन्प्रमाणसिद्धत्वात्। नापि चक्षुःस्पर्शनाभ्यां तत्सिद्धिर्नीरूपस्पर्शत्वात्परिशेषान्मनसैव तदध्यक्षताऽभ्युपेया। न च मनसो बहिरस्वात-

१ क. ग. °स्यपुरू°। २ क. तत्रतुस्वी°। ३ क. ग. °द्वारेक°।

न्त्यात्तेन बाह्याकाशग्रहानुपपत्तिरिति वाच्यं चक्षुर्द्वारा तस्य बहिर्गमनोपपत्तेः । सर्वत्र हि भ्रमेषु चिदात्मैवाज्ञातोऽधिष्ठानमिति प्रतिष्ठापितम् । स च मनसो बहिर्न स्फुटं व्यज्यते बहिरर्थे च मनस इन्द्रियपारतन्त्र्यादकस्माद्बहिः प्रसरन्नयनद्वारोपरि विसर्पिणा मनसाऽनुगुण्यमाननभोवच्छिन्ने चिदात्मनि नैल्यादिभ्रम उपपद्यत इति नभसो मनोग्राह्यत्वसिद्धिरिति । अनेन चोदाहरणेनाधिष्ठानस्याऽऽरोप्येण सहैकज्ञानविषयत्वयोग्यता नास्तीति सिध्यति । तदेषाऽक्षरयोजना—मनोवगम्येऽप्यम्बरे नभस्यपरोक्षताबलादपरोक्षचिदात्माभिव्यक्तिबलाद्रूपं नीलपीताद्युपोल्लिखन्नवभासयन्भ्रमः सितादिभेदैर्बहुधा बहुप्रकारस्तथा समीक्ष्यते यथाऽक्षगम्ये शुक्त्यादौ रजतादिविभ्रम इति ॥ ४३ ॥

सु० टी०—तथाऽपि ज्ञातसामान्यांशमज्ञातविशेषांशमधिष्ठानं न चाऽऽत्मनो निरंशस्य तत्संभव इत्याशङ्क्याभेदेऽपि ज्ञाताज्ञातत्वसंभवमुपपादयति—

ज्ञातेऽपि तावति ततोऽनतिरिक्तरूपे-
ऽप्यज्ञानतः स्फुरणमस्फुरणं च दृष्टम् ।
दूरस्थयोर्ननु वनस्पतिवस्तुनोस्त-
द्भेदो न दृष्टिविषयोऽवगते च ते नः ॥४४॥

ज्ञातेऽपीति । तावति तन्मात्रे तदभिन्न इत्यर्थः । ईदृशे वस्तुनि ज्ञातेऽप्यज्ञानवशात्तस्यैव स्फुरणमस्फुरणं च दृष्टमित्यर्थः । कुत्र दृष्टमित्यत्राऽऽह—दूरस्थयोरिति । दूरस्थे वनस्पतिद्वय एकोऽयं वनस्पतिरिति भ्रमो भवति । तत्र चानवस्थाभयादन्योन्याभावप्रतियोगिप्रमाणयोरनिरूपणाच्च भेदस्य वनस्पतिस्वरूपानतिरेकात्तत्स्फुरणेऽपि भेदास्फुरणं दृष्टमित्यर्थः । ते वस्तुनी नोऽस्माकमवगते । तयोर्भेदस्तु तदभिन्नोऽपि न नो दृष्टिविषय इत्यर्थः । ननु तत्रापि वनस्पतित्वेन स्फुरणं भेदत्वेनास्फुरणं तच्च भिन्नमेवेत्याशङ्क्याऽऽह—तत इति । शब्दान्तराभिलप्यत्वेन भेदेऽपि स्वरूपेणाभिन्नमेव भेदरूपं वनस्पतिरूपादित्यर्थः । इतश्च ज्ञातस्याज्ञातत्वं न विरुद्धं त्वदुक्तमर्थं न जानामीत्यर्थे भासमान एव तदज्ञानानुभवात् । ज्ञानवदज्ञानस्यापि विषयनिरूप्यत्वात्सविषयके च विषयस्यैव विशेषणत्वाज्ज्ञातस्य च विशेषणत्वात् । न च तत्र ज्ञातसामान्यांश एवाज्ञाननिरूपकस्तस्य प्रमाणावगतस्याज्ञानाविषयत्वात् । परबुद्धिस्थविशेषस्याशक्यज्ञानत्वात्कथं विशेषकत्वमिति चेदज्ञाततया

साक्षिवेद्यत्वाविरोधादावृतचितेरज्ञानाविरोधस्यानुभवसिद्धत्वाच्च परै-रप्यनभ्यासदशायां ज्ञातेऽपि जलादौ संशयाभ्युपगमादिति दिक् ॥ ४४ ॥

अ० टी०—तदेवमधिष्ठानाध्यस्यमानयोरेकेन्द्रियग्राह्यत्वनियमं पराकृत्याधिष्ठानस्य गृह्यमाणसामान्यांशागृह्यमाणविशेषांशशबलत्वदर्शनादन्यत्राऽऽत्मनि चांशाभावान्न तस्याध्यासाधिष्ठानतेति चोद्यं परिहर्तुमधिष्ठानत्वेंऽशवत्त्वमप्रयोजकं किं तु भासमानस्वरूपानतिरिक्तस्यैवाभासमानत्वमित्यत्रोदाहरणमाह—ज्ञातेऽपीति । ज्ञातेऽपि भासमानेऽपि वस्तुनि तत्रापि तावति । तावतीत्यं तद्विवृणोति—ततोऽनतिरिक्तरूप इति । शब्दान्तरवाच्यवेषेणातिरिक्ते वस्तुगत्या भासमानस्वरूपानतिरिक्त इति यावत् । तादृशे वस्तुन्यज्ञानतो दोषवशात्स्फुरणमस्फुरणं च दृष्टम् । कुत्रेत्यपेक्षायामाह—दूरस्थयोरिति । वनस्पतिरूपयोर्वस्तुनोनरन्तर्येण स्थितयोर्दूरस्थयोः परमार्थतो भिन्नयोरेकत्वाध्यासे स्फुरणमस्फुरणं च दृष्टमित्यनुषङ्गः । एतदेवाभिनयेनाऽऽह—तद्भेद इति । ते वनस्पतिवस्तुनी अवगते चापि तद्भेदो नोऽस्माकं न दृष्टिविषयो नन्वेतदविवादमित्यर्थः । तत्र विद्यमानो भेदो न गृह्यमाणवनस्पतिस्वरूपाद्भिन्नोऽनवस्थादिदोषप्रसङ्गादिति भावः । यथा भासमानेऽपि वनस्पतिशब्दवाच्यवेषेण वृक्षस्वरूपे वस्तुगत्या तदनतिरिक्तोऽपि तद्भेदो भासमानेऽपि भेदशब्दवाच्यवेषेण भासते तथाऽऽत्मादिशब्दवाच्यवेषेण भासमानोऽपि चिदात्माऽहंकाराद्यध्यासकाले वस्तुगत्या तदनतिरिक्ताद्वयब्रह्मादिशब्दवाच्यवेषेण न भासत इति युक्तं चिदात्मनोऽप्यधिष्ठानत्वमित्यर्थः ॥ ४४ ॥

सु० टी०—ननु शुक्त्यादौ ज्ञाताज्ञातांशयोरियं शुक्तिरिति शब्दद्वयवाच्यत्वेन भेददर्शनान्नैकस्य ज्ञाताज्ञातत्वमित्याशङ्क्य तत्र सन्नप्यंशभेदस्तदप्रयोजक इत्याह—

> यत्रापि दैवगतितोऽस्त्यतिरिक्तभावो
> रूपात्प्रतीतिविषयादितरत्र रूपे ।
> तत्राप्यबोधघटनां प्रति नाङ्गभाव-
> स्तस्यातिरिक्तवपुषोऽपुनरुक्तरूपात् ॥ ४५ ॥

यत्रापीति । यत्रापि शुक्त्यादौ प्रतीतादिदंरूपादितरत्राप्रतीते विशेषांशे दैवाद्भेदो विद्यते तत्रापि तस्य भेदस्यापुनरुक्तशब्दवाच्यादिदंरूपादतिरिक्तवपुषः शुक्त्यादेरज्ञाततां प्रति नाङ्गत्वमित्यर्थः ॥ ४५ ॥

---

१ क. ख. ननु ।

अ० टी०—ननु स्फुरदस्फुरद्रूपयोर्भेद एव नाभेदो यथेदमाकारशुक्त्याकारयोः सामान्यविशेषयोरेकत्वायोगाद्भेदस्थापि स्वरूपरूपत्वे विप्रतिपत्तेरित्याशङ्क्य तादृशस्याज्ञातविशेषस्याधिष्ठानत्वं प्रत्यप्रयोजकत्वान्मैवमित्याह—यत्रापीति । प्रतीतिविषयाद्रूपादिदंशब्दवाच्याकारादितरत्र रूपे शुक्तित्वादिशब्दवाच्याकारे यत्रापि दैवगतितः स्वभावत एवातिरिक्तभावो भिन्नत्वमस्ति तत्रापि तस्य विद्यमानस्यापुनरुक्तरूपादिदंशब्दवाच्याकारादतिरिक्तवपुषः शुक्तिशब्दवाच्याकारस्याबोधघटनां प्रति नाङ्गभावोऽधिष्ठानस्याज्ञातत्वसंपादनेन विशेषणभाव इति योजना । एतदुक्तं भवति—इदमाकारेण भासमानस्य पुरोवर्तिवस्तुनो यद्यपि शुक्तित्वादिरूपो विशेषो विद्यते तथाऽपि न तद्भासमानाकारादर्थान्तरं तथा सत्युत्तरकाले त्वियं शुक्तिरिति पूर्वावभासतेदन्तात्मना न गृह्येत । तस्मादिदं रजतमिति रजतात्मना गृह्यमाणमेव वस्तु वस्तुगत्या शुक्त्यामपि तथा नावभासत इति भासमानमेव भासत इति युक्तं न पुनरिदमिति भासमानमन्यदज्ञायमानं शुक्तित्वधर्मकमन्यदिति प्रमाणमस्यत्यन्तभेदे गवाश्ववत्सामान्यविशेषभावायोगात् । अभेदेऽपि केनापि निमित्तभेदेन तद्भेदकल्पनया व्यवहारोपपत्तेरिति ॥ ४५ ॥

सु० टी०—इदंत्वशुक्तित्वधर्मभेद एव ज्ञाताज्ञातत्वावच्छेदक इति चेन्नेत्याह—

शुक्तीदमंशात्पृथगप्रतीता
त्रिकोणता स्यान्न तु वस्तुवृत्त्या ।
तथाऽपि तत्स्थं न पृथक्त्वमिष्टं
तदप्रबुद्धत्वनिमित्तभूतम् ॥ ४६ ॥

शुक्तीदमंशादिति । अप्रतीता त्रिकोणता शुक्तित्वं यद्यपि प्रतीताच्छुक्तीदंत्वाद्वस्तुतः पृथक्तथाऽपि तत्संस्थं पृथक्त्वं तस्याः शुक्तिताया अप्रबुद्धत्वे निमित्तं नेष्टमिति संबन्धः ॥ ४६ ॥

अ०टी०—उक्तमेवार्थं विशदयति—शुक्तीदमंशादिति । इदं रजतमित्यवभासकाले या पुरोवर्तिनि त्रिकोणतोपलक्षणमेतस्कालदृष्टत्वादंरिति । अप्रतीताऽप्रतीयमाना वर्तते साऽवभासमानाच्छुक्तीदमंशाद्वस्तुवृत्त्या न तु पृथक्स्यात् । तथाऽपि तत्स्थमिदमित्यवभासमानाकारगतं शब्दान्तरवाच्यवेषेण यत्पृथक्त्वं तदप्रबुद्धत्वनिमित्तभूतं नेष्टमज्ञानावच्छेदकतया गृह्यमाणात्पृथगर्थत्वं तस्य नेष्टमित्यर्थः ॥ ४६ ॥

सु० टी०—कथं नेष्टमिति चेदुक्तव्यभिचारादेवेत्याह—

यतः प्रपश्यन्नपि भेदिनः स्वं
वनस्पते रूपमभिन्नमस्मात् ।

न भेदमस्य प्रतिपद्यतेऽक्ष्णा
वनस्पतेः पार्श्वगतात्परस्मात् ॥ ४७ ॥

यत इति । यस्माद्भेदवतो वनस्पतेः स्वं रूपं प्रपश्यन्नप्यस्माद्वनस्पतेः सकाशादभिन्नं पार्श्वस्थाद्वनस्पतेः सकाशादस्य भेदमक्ष्णा न प्रतिपद्यतेऽतो धर्मधर्म्यभेदेऽपि ज्ञाताज्ञातत्वदर्शनात्तद्भेदोऽप्रबुद्धत्वानङ्गमित्यर्थः ॥ ४७ ॥

कुत एतदित्यपेक्षायां प्रागुक्तव्यभिचारादित्याह—यतः प्रपश्यन्नपीति । अस्मात्प्रतियोगिभूताद्वनस्पतेस्तदपेक्षया भेदिनो धर्मिणः स्वं स्वभूतं भेदमभिन्नमपि पश्यन्नपि पुमानस्य भेदिनः पार्श्वगतात्परस्माद्वनस्पतेर्भेदमक्ष्णा न प्रतिपद्यत इति योजना । एकस्य भेदिन इतरस्माद्भेदं वस्तुस्वरूपभूतमेवाक्ष्णाऽपश्यन्निदमस्माद्भिन्नमित्येवमाकारेण तदेव न पश्यतीत्येतदनुभवसिद्धमतः प्रतीयमानाकारादप्रतीयमानाकारस्य परमार्थतोऽन्यत्वकल्पनमयुक्तमित्यर्थः । भेदस्य वस्तुस्वरूपत्वं तद्धर्मत्वं वा नोऽस्माकं संमतं किं तु वस्तुस्वरूपातिरिक्तो भेदः प्रामाणिको नास्तीति । तथा चोत्तरत्र निरूपयिष्यते । अतो नात्र कोऽपि दोष इति भावः ॥ ४७ ॥

सु०टी०—स्वभिन्नभेदवादिमतेऽपि ज्ञातस्याज्ञातत्वमविरुद्धमित्याह—

सप्रत्यभिज्ञनयनोत्थधियो घटादेः
स्वाभाविकात्स्ववपुषोऽनतिरिक्तरूपः ।
स्थेमाऽप्रबोधविषयो विषयत्वमेती-
त्यङ्गीकृतं ननु मितेऽपि घटादिकेऽर्थे ॥ ४८ ॥

सप्रत्यभिज्ञेति । प्रमाणान्निश्चितेऽपि घटाद्यर्थे तस्यैव स्वरूपादनतिरिक्तः स्थेमा स्थिरभावः पूर्वमप्रबुद्धोऽपि सप्रत्यभिज्ञस्य पुंसो नयनोत्था या धीः (* सोऽयं घट इति प्रत्यभिज्ञात्मिका तस्याः पश्चाद्विषयो भवतीति सर्वैरप्यङ्गीकृतमित्यर्थः । न हि ) स्थैर्यं नाम कश्चिद्गुणः क्रिया धर्मान्तरं वाऽपि तु वस्तुस्वरूपमेव पूर्वापरकालसंबन्धं निमित्तीकृत्य स्थेमोच्यते । एवं च क्षणिकवादिनां प्रत्यक्षेऽपि घटादौ तदभिन्नस्थैर्याज्ञानं चेदज्ञान-

* धनुश्चिह्नान्तर्गतग्रन्थः कपुस्तके नास्ति ।

१ क. 'तेऽस्माद्न' ।

साम्राज्यसीमनि प्रतीचि ज्ञातेऽज्ञानाविरोध इति किमु वक्तव्यमिति भावः ॥ ४८ ॥

अ० टी०—ज्ञातादनतिरिक्तरूपस्यैवाज्ञातत्वमित्यत्र सर्वसंमतमुदाहरणमाह—सप्र-त्यभिज्ञेति । प्रत्यभिज्ञेति तत्कारणमुद्बुद्धसंस्कारोऽभिधीयते । प्रत्यभिज्ञाशब्दितोद्बुद्धत-त्तांशसंस्कारसहितनयनसंप्रयोगोत्थाया धियो घटादेः स्थेमा स्थैर्यं घटादिकार्ये मितेऽप्यभि-ज्ञाप्रत्यक्षेणावगतेऽप्यप्रबोधविषयः सन्विषयत्वमेतीत्यङ्गीकृतं ननु सर्वैरिति योजना । कथंभूतः स्थेमा स्वाभाविकादुत्पत्तिसिद्धात्स्ववपुषो घटादिस्वरूपादनतिरिक्तरूपोऽभिन्नरूप इत्यर्थः । नहि स्थेमा नाम वस्तुनो गुणक्रियादिरूपो धर्मः कोऽपि प्रसिद्धोऽस्ति किं तु वस्तुस्वरूपमेवानेककालसंबन्धनिमित्तवशात्स्थेमेत्युच्यते । एवंविधोऽप्ययं घट इति प्रत्य-क्षेणाभिज्ञालक्षणेन गृह्यमाणेऽपि घटे तत्स्वभावभूतोऽपि स्थेमा न भासते सोऽयं घट इति प्रत्यभिज्ञाप्रत्यक्षेण तु भासत इत्येकस्यैवानंशस्याभानादभानं भानं चानुभूयत एवेति नानुपपत्तिरिहेति भावः ॥ ४८ ॥

सु० टी०—एवं च निरंशस्यापि सिद्धमात्मनोऽधिष्ठानत्वमित्युप-संहरति—

> एवं स्फुरत्यपि दृगात्मनि तत्स्वरूपे-
> णास्फूर्तिभाजि परिकल्पिततोपपन्ना ।
> स्वाज्ञानतो जगदिदं परमेश्वरोऽसौ
> जीवोऽहमित्यपि विभागवतोऽल्पकस्य ॥ ४९ ॥

एवमिति । प्रत्यगनिदंरूपेण स्फुरत्यपि चिदात्मनि नित्यमुक्ताद्वयान-न्दरूपेणास्फूर्तिभाज्यधिष्ठाने स्वाज्ञानमात्रदोषादल्पकस्याहंकारादेरध्य-स्तता प्रागुक्तयुक्तिभिरुपपन्नेत्यर्थः । अल्पकं रूपं विशिनष्टि—जगदिति । इदमिति साक्षिसिद्धत्वादसाविति परोक्षत्वाद्विभागो नानात्वं तद्वत इत्यर्थः । यद्यपि स्फुरति चिदात्मनि नास्ति न भातीतिव्यवहारयो-ग्यतालक्षणमावरणं नास्ति विरोधात्तथाऽपि तदत्यन्ताभिन्नेऽप्यद्वयान-न्दरूपेऽनुभूयमानत्वादेव तदङ्गी क्रियते । न ह्यज्ञानावृतत्वं तद्वेष्टितत्वं येन विरोधः स्यात्किंतूक्तव्यवहारयोग्यत्वमेवेति भावः ॥ ४९ ॥

---

१ क. ग. °ते नाज्ञानवि° ।

अ० टी०—इदानीमुक्तदृष्टान्तासिद्धमर्थं दार्ष्टान्तिके योजयन्प्रत्यक्चैतन्यमात्रेण स्फुरत्यप्यात्मनि नित्यमुक्तब्रह्मस्वरूपेणास्फुरणादंशकल्पनां विनाऽप्यध्याससिद्धिरिति दर्शयति—एवं स्फुरत्यपीति । एवमुक्तदृष्टान्तानुसारेण दृगात्मनि प्रत्यग्रूपे त्वमर्थे स्फुरत्यपि तत्स्वरूपेण तदर्थाद्वयानन्दब्रह्मरूपेणास्फूर्तिभाजि स्फुरणरहिते जगदिदमसौ परमेश्वरोऽहं जीव इति विभागवतोऽल्पकस्य परिच्छिन्नस्य प्रपञ्चस्य स्वाज्ञानतः परिकल्पिततोपपन्नेति योजना ॥ ४९ ॥

सु० टी०—एवमल्परूपस्याध्यस्तत्वे साधिते बन्धतदनर्थत्वतत्कारणमुक्तितदर्थत्वतत्कारणात्मकं षट्कं सिद्धमित्याह—

अल्पं रूपं बन्धनं प्रत्यगात्मा
बद्धोऽनेन स्वच्छचैतन्यमूर्तिः ।
स्वात्माज्ञानं कारणं बन्धनेऽस्य
स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्तिः ॥ ५० ॥

अल्पं रूपमिति । अल्पं परिच्छिन्नं कर्तृत्वादि रूप्यत इति रूपं यन्नामरूपकर्मात्मकं तदस्य भूम्नो बन्धनमिव बन्धनमित्यर्थः । ननु कुतोऽस्याल्परूपस्यानर्थत्वमित्यत्राऽऽह—बद्ध इति । अनेनाल्परूपेण धर्मधर्म्यध्यासात्मकेनाऽऽत्मा बद्धो[1] निगडितः स्वच्छोऽप्यस्व[2]च्छ[3] इव विज्ञोऽप्यज्ञ इवाऽऽनन्दोऽप्यशनायादिविविधदुःखदावदहनप्रदीप्तशिरा इवा[4]निशं बम्भ्रमीति । ननु कूटस्थासङ्गचिदेकरसः सन्कथमयमीदृशीं दशामापन्न इत्यत्राऽऽह—स्वात्माज्ञानमिति । स्वाश्रयविषयाज्ञानमेवास्याऽऽत्मनो बन्धकारणं नान्यदित्यर्थः । नन्वीदृशस्य सहजमोहान्धरूपमग्नस्य विवशस्य कुतो बन्धविच्छित्तिः स्यादित्यत्राऽऽह—स्वात्मेति । आत्मनोऽद्वयानन्दब्रह्माभेदेन यज्ज्ञानं तत एवास्य समूलबन्धनिवृत्तिरित्यर्थः । तस्या उपादेयत्वमाह—मुक्तिरिति । सा हि मुक्तिरखिलानर्थनिर्मुक्तपूर्णानन्दावाप्तिरूपत्वात् परमपुरुषार्थ इत्यर्थः ॥ ५० ॥

अ० टी०—एवं जगदादिभेदस्याऽऽत्मन्यविद्यया कल्पितत्वप्रतिपादनेन किमुक्तं भवतीति चेत्तदाह—अल्पं रूपमिति । यदल्पं परिच्छिन्नमात्मनः प्रमातृत्वादिरूपं तद्बन्धनम् । बन्धोऽविद्याकृतः । अनेन बन्धनेन स्वभावतः स्वच्छचैतन्यमूर्तिरपि प्रत्यगात्मा बद्धो निगडितः । एवं सतीदं फलितमित्याह—स्वात्माज्ञानं कारणमिति । स्पष्टार्थः ।

१ क. °न्नो ब° । २ क. स्वस्थो । ३ क. स्वस्थो इ° । ४ क. इवान° ।

परमार्थत्वे बन्धस्याज्ञाननिवर्त्यत्वासंभवान्निर्विकारे कूटस्थात्मनि क्रियासाध्यार्थासंभवाच्चा-निर्मोक्षप्रसङ्ग इत्यात्मन्यहंकारादिबन्धनस्याध्यस्तत्वं सिद्धमिति भावः ॥ ५० ॥

सु० टी०—नन्वनादिभावरूपस्याज्ञानस्य ब्रह्मवदेव निवर्तनासंभवा-त्कुतस्तस्य निवृत्तिरूपा मुक्तिः फलमित्याशङ्क्य तस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वं साधयति—

अज्ञानमप्यविदुषोऽस्य न तु स्वतोऽस्ति
चैतन्यनिर्विकृतिताद्वयताविरोधात् ।
अज्ञातताऽप्यनवबोधनिबन्धनैव
नाऽऽत्माश्रयत्वमपि चोदयितव्यमत्र ॥ ५१ ॥

अज्ञानमपीति । तथा हि अज्ञस्य त्वात्मन्यज्ञानान्वयः किं स्वाभाविकः कल्पितो वा नाऽऽद्य इत्याह—नत्विति । कुत इत्याह—चैतन्येति । स्वभा-वत आत्मन्यज्ञानमस्ति चेद्वस्तुभूतं स्यात् । न च स्वप्रकाशचिदात्मके वस्तुनि वस्तुतोऽज्ञानं वर्तितुमर्हति प्रकाशतमसोर्विरोधात् । तथाऽ-ज्ञानमात्मधर्मश्चेत्स्वयं विनश्यदात्मानं विकुर्यात् । 'उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्' इतिन्यायात् । तथाऽज्ञानस्य वस्तुत्वे द्वैतापत्ति-रिति चित्त्वनिर्विकारत्वाद्वयत्वश्रुतिविरोध इत्यर्थः। द्वितीयमङ्गी करोति—अज्ञातताऽपीति । अपिस्त्वर्थः । तथात्वे हि मध्यंदिनालोकमण्डले कौशि-कादिकल्पितान्धकारवदविरोधः स्यादिति भावः । नन्वेवमज्ञानेनैवा-ज्ञानकल्पनायामात्माश्रयत्वमिति नेत्याह—नाऽऽत्मेति । अनादि ह्यज्ञा-नमज्ञानतन्त्रमज्ञातत्वमप्यनादीति क्वाऽऽत्माश्रय इति भावः । यद्वाऽ-त्रानिर्वचनीयवादे नानुपपत्तिर्दूषणमिति भावः । केचित्तु सत्कार्या-सत्कार्यवादिनोरभिव्यक्तावुत्पत्तौ च नाऽऽत्माश्रयश्चेत् किमु मायावादिन इत्यर्थमाहुः ॥ ५१ ॥

अ० टी०—तदेवमाच्छाद्य विक्षिपतीत्यारभ्यैतावता ग्रन्थेनाऽऽत्मनि दृष्टबन्धस्य सजातीय-विजातीयस्वगतभेदप्रतीतेश्चाविद्याकल्पितत्वान्मिथ्यात्वे सिद्धे जीवब्रह्मणोः पारमार्थिकमेकत्वं तत्साक्षात्कारेण च तदविद्यानिवृत्तिः परमानन्दस्वरूपाभिव्यक्तिश्च विभाव्यत एवेति शास्त्रादेः सिद्धे विषयप्रयोजने इति प्रतिपादितमिदानीमुक्ताज्ञाननिबन्धनत्वं बन्धस्य तदोपपद्यते यद्या-त्मन्यज्ञानं संभाव्यते नतु तत्तत्र संभाव्यते स्वभावविरोधादिति ये मन्यन्ते तान्प्रति बोधयंश्चिदात्मन्यज्ञानं कथंचिद्घटयति—अज्ञानमपीति । अयमर्थः—किमज्ञानं परमा-

र्थतश्च चिदात्मनि न संभवतीत्युच्यते किं वा प्रतिभासतोऽपीति विकल्प्याऽऽद्यमङ्गी करो-त्यज्ञानमिति पूर्वार्धेन । अपिशब्दो बन्धदृष्टान्तार्थः । बन्धवदज्ञानमप्यस्याऽऽत्मनोऽविदुषोऽ-ज्ञानित्वेन भासमानस्य स्वतः परमार्थतो न त्वस्ति । तत्र स्वभावविरोधहेतुमाह—चैत-न्येति । जडस्याज्ञानस्य चैतन्येन स्वभावतो विरोधः । तथा सविकारनिर्विकारत्वाभ्यां धर्म-तोऽपि विरोधः । तथा कार्यकरणादिरूपेण सद्वयमज्ञानमद्वयश्चाऽऽत्मेति व्यवहारतोऽपि विरोधस्ततो विरोधान्नाज्ञानमात्मनि परमार्थमभ्युपगम्यत इत्यर्थः । द्वितीयं निराक-रोति—अज्ञातताऽपीति । आत्मन्यज्ञातसंबन्धोऽप्यज्ञाननिर्वृत्त इत्यर्थः । एवं सत्य-ज्ञानसंबन्धादज्ञानसंबन्ध इत्यात्माश्रयत्वापत्तिरिति चेन्नोच्चैर्वाच्यमित्याह—नाऽऽत्माश्र-यत्वमिति । अज्ञानसंबन्धदुर्वचत्वात्सर्वप्रमाणन्यायापहतत्वाच्चानुभवमात्रसिद्धस्यापह्न-वायोगाच्च न परमार्थोऽज्ञानसंबन्धो नापि नास्तीति वक्तुं शक्य इत्यतो नोक्तदोषोऽत्राव-तरति परमार्थत्वमपेक्ष्य ह्यात्माश्रयत्वादितर्कनिरोध इति भावः ॥ ५१ ॥

अज्ञानादेवाज्ञानकल्पने प्रमाणमाह—

द्वारं तमोन्वयमपेक्ष्य दृशा हि दृश्यं
संगच्छते सकलमत्र न नो विवादः ।
मोहोऽपि दृश्यवपुरत्र च संवदध्वे
तस्मात्तदन्वयनिमित्तमपीह मोहः ॥ ५२ ॥

द्वारमिति । आत्मन्यज्ञानसंबन्धोऽज्ञानकृतो दृग्दृश्यसंबन्धत्वाद्घट-ज्ञानसंबन्धवत् । प्रसाध्याङ्गकत्वाद्व्याप्तिसूचनार्थो हिशब्दः । अयमर्थः—यस्मादसङ्गया दृशा (* सकलमेव दृश्यं घटादि संबध्यमानमज्ञान-संबन्धं द्वारीकृत्याऽऽध्यासिकेन तादात्म्येनैव सं)बध्यतेऽन्यस्य संयोगसम-वायादेरशक्यनिरूपणत्वादिति वक्ष्यति 'न संकरो नापि च संयुतिः' इत्यादि । 'आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते' इति च वार्तिकं तस्मान्नात्र व्याप्तौ विवदितव्यमित्यर्थः । हेत्वसिद्धिमुद्धरति—मोहोऽपीति । अहमज्ञ इत्यनुभवादित्यर्थः । अत्र चेति । व्याप्तौ विवादो न तु हेतोः पक्षधर्मत्व इत्यर्थः । ततश्चात्रापि मोहनिमित्तत्वमिति निग-मयति—तस्मादिति ॥ ५२ ॥

---

* धनुश्चिह्नितग्रन्थः क. पुस्तके नास्ति ।

अ० टी०—नन्वेवं विनये बोधिते कथं व्युत्थितेऽनेन बोध्येत । स खलु मानयुक्ती विना नार्थमवबोद्धुं क्षमत इति चेत्सत्यं नासौ विना मानं बुध्यते यदि मानगम्यं भवेत्तु तथा तथाऽप्यनुभवसिद्धस्याप्यज्ञानस्य प्रमाणयुक्तिभ्यां सिद्धप्रकारो वक्तव्यो विना प्रमाणयुक्ती । इदमज्ञाननिबन्धनमेव न परमार्थमिति संभावना बुद्ध्यनुदयादिति चेत्तर्हि ते अप्यत्र सुसंपादे इत्यभिप्रेत्य प्रमाणं तावदाह—द्वारं तमोन्वयमिति । सकलं दृश्यं बाह्याभ्यन्तरं च यदस्ति तत्सर्वं तमोन्वयमज्ञानसंबन्धमपेक्ष्य हि दृशा चैतन्यात्मना संगच्छते दर्शनविषयतया संबध्यत इत्यत्र नोऽस्माकं न विवाद इत्यक्षरयोजना । इदमौप-निषदं दर्शनं विनाऽज्ञानं दृशो न दृश्यसंबन्धोऽस्तीति सर्वस्य दृश्यध्यस्ततयैवंसिद्धेरध्यासस्य च विनाऽज्ञानमसंभवादिति भावः । एतावता व्याप्तिरुक्तेदानीं हेतोः पक्षधर्मतां दर्शयन्ननु-मानमाह—मोहोऽपीति । संबद्ध इत्यन्तं पक्षधर्मताप्रदर्शनपरम् । मोहस्यापि दृश्यरूपत्वे न विवाद इत्यर्थः । तस्मादित्यनुमानमुक्तम् । तथा च प्रयोगः—आत्मन्य-यमवभासमानो मोहसंबन्धो मोहायत्तो दृश्यत्वान्मोहकार्यप्रपञ्चवदिति । न च मोहान्यत्वमु-पाधिस्तस्य साधनव्यापकत्वान्मोहसंबन्धस्यापि दृश्यस्य मोहान्यत्वात् । एवमप्याऽऽत्माश्र-यत्वदोषपरिहाराय मोहान्तरनिबन्धनत्वमेकस्माच्च कल्प्यत इति न वाच्यं गौरवापत्तेरनव-स्थाप्रसङ्गाच्च । तस्मात्परपरिकल्पितविशेषसमवायादिवन्मोहोऽपि स्वपरनिर्वाहकः संभाव्यत एवेति भावः ॥ ९२ ॥

सु० टी०—ननु कथं प्रपञ्चकल्पनोपक्षीणस्याज्ञानस्य स्वकल्पकत्व-मपीत्याशङ्क्य स्वपरनिर्वाहकस्वभावत्वादित्याह—

संविद्धुरं वहति तद्विषयोपयुक्तां
स्वात्मन्यपि स्वरसतः स्वकरूपसिद्धेः ।
कार्यप्रपञ्चपरिकल्पनमात्ममोहा-
न्मोहप्रकल्पनमपीति तथोपपन्नम् ॥ ९३ ॥

संविदिति । यथा हि प्रमाणफलभूता संवित्स्वविषयघटादिसिद्धौ स्व-सिद्धौ चोपयुक्तां धुरं तद्विषयाज्ञानसंशयादिनिवृत्तिभारं वहत्युभयमपि साधयतीत्यर्थं एवमज्ञानादेव प्रपञ्चकल्पनमज्ञानकल्पनं चोपपन्न-मित्यर्थः । ननु संवित्संविदन्तरवेद्यैव स्वस्य स्वविषयत्वासंभवादित्याश-ङ्क्याऽऽह—स्वरसत इति । संविदन्तरवेद्यत्वेऽनवस्थानात्स्वसत्तायां संशया-दिराहित्यात्स्वव्यवहारे परानपेक्षैव संविदित्याद्युक्तप्रायम् ॥ ९३ ॥

अ० टी०—इदानीमत्र युक्तिं संवित्स्वप्रकाशत्ववादिमतेनाऽऽह—संविद्धुरं वहतीति । यथा संवित्संवेदनं तद्विषयोपयुक्तां स्वविषयव्यवहारोपयोगिनीं धुरं भारं तद्व्यवहारनिर्वहणशक्तिं

वहति धत्ते स्वात्मन्यपि संविद्विषये स्वकरूपसिद्धेः स्वव्यवहारसिद्ध्यर्थं स्वरसतः स्वभावादेव तां धुरं वहति । यथेदं परेषामुपपन्नमिष्टं गत्यन्तराभावात्तथाऽस्माकमप्यात्मनि कार्यप्रपञ्चपरिकल्पनं मोहप्रकल्पनमप्यात्ममोहादेवेत्युपपन्नमेव नानुपपन्नमिति योजना । संविदः परमार्थभूतायाः परमार्थ एव स्वपरव्यवहारनिर्वाहकसामर्थ्यं चेदुपपन्नं मन्यसे तदा सर्वप्रमाणासहस्यानुभवमात्रसिद्धतयाऽनपोह्यस्य मोहस्य यथादृष्टं स्वपरव्यहारनिर्वाहसामर्थ्यमुपपन्नं कस्मान्न मन्यसे मोहे सर्वानुपपत्तेरलंकारत्वादिति भावः ॥ ५३ ॥

सु० टी०—संवित्स्वप्रकाशत्वे विप्रतिपन्नं प्रति निदर्शनान्तरमाह—

आत्मा प्रसाधयति वेद्यपदार्थजातं
स्वात्मानमप्यवगतिक्षमशक्तियोगात् ।
स्वाज्ञानमेवमिदमात्मपरप्रक्लृप्तौ
शक्तं भवेदिति न किंचन दौस्थ्यमस्ति ॥ ५४ ॥

आत्मेति । यथाऽऽत्मा वेद्यं घटादिकं स्वं चावगतिसमर्थज्ञानाख्यगुणयोगात्साधयति । आत्मकार्यव्यवहारसहकारित्वाज्ज्ञानं शक्तिरित्युक्तम् । एवमज्ञानमपि शक्तिवशात्स्वपरकल्पकं स्यादित्यर्थः ॥ ५४ ॥

अ० टी०—येषां संविदः स्वप्रकाशत्वं नेष्टं तेषां संमतमुदाहरणमाह—आत्मा प्रसाधयतीति । आत्मा प्रमाता जीवः स यथाऽवगमक्षमशक्तियोगाज्ज्ञातृत्वनिर्वाहकसामर्थ्ययोगाद्वेद्यपदार्थजातं प्रसाधयति स्वगतावगमेन व्याप्नुवन्परिच्छिनत्ति स्वात्मानमपि तेनैव शक्तियोगेन ज्ञात्रन्तरनिरपेक्षः सन्प्रसाधयति । अन्यथाऽनवस्थाप्रसङ्गादित्यर्थः । एवमिदमनुभवसिद्धं स्वाज्ञानं चिन्मात्राश्रयविषयमात्मपरप्रक्लृप्तौ चिदात्मन्यज्ञानतत्कार्यसंबन्धकल्पनायां शक्तं भवेदित्यङ्गीकारे न किमपि दौस्थ्यं विद्यत इत्यर्थः ॥ ५४ ॥

सु० टी०—नन्वात्मनो ज्ञानाख्यशक्तिमत्त्वादस्तु स्वपरसाधकत्वमज्ञानस्य तु परशक्तिभूतस्य शक्त्यन्तराभावादज्ञानान्तरमेवाज्ञानसाधकमुपेयमेवं चानवस्थेत्याशङ्क्य परदृष्टयैव दृष्टान्तान्तरमाह—

भेदं च भेद्यं च भिनत्ति भेदो
यथैव भेदान्तरमन्तरेण ।
मोहं च कार्यं च बिभर्ति मोह-
स्तथैव मोहान्तरमन्तरेण ॥ ५५ ॥

भेदं चेति । यथैवं हि भेदोऽन्योन्याभावो भेद्यं घटपटद्वयं मिथो भिन्नं बोधयत्यात्मानमपि भेदं घटादेर्भेद्यात्सकाशाद्भिनत्ति न तु तदर्थं

स्वप्रतियोगिकं भेदान्तरमपेक्षतेऽनवस्थानात्तथा मोहोऽपि मोहान्तरं विना मोहं तत्कार्यं च कल्पयतीत्यर्थः ॥ ९५ ॥

अ० टी०—पुनरपि परेषां बहुसंमतं दृष्टान्तमाह—भेदं चेति । यथा भेदो घटपटादिनिष्ठः स्वाश्रयं भेद्यं मिथो भिन्दन्भेदं स्वात्मानं भेद्यं च स्वाश्रयमपि भेदान्तरमन्तरेण स्वव्यतिरिक्तं भेदं विना स्वयमेव भिनत्तीत्यविवादमेवान्यथाऽत्राप्यनवस्थाया दुष्परिहारत्वादित्यर्थः । मोहं च कार्यं चेत्युत्तरार्धयोजना सुगमा । एतदुक्तं भवति—अज्ञानं ह्यवभासमानमाश्रयविषयपारतन्त्र्येणावभासत इति स्वयं व्यवहारे तदपेक्षं भवतीत्यात्मसंसर्गितयैव भासते । आत्मा तु स्वसत्तास्फूर्त्योर्निरपेक्षोऽन्यानपेक्ष एवावभासत इति स्थितौ सर्वदा संसर्गिणमात्मानं स्वसत्तास्फूर्तिप्रदतयाऽज्ञानं स्वयमेवाऽऽश्रयते यथा निरवयवत्वे स्वतोऽसंसर्गिणमाकाशं घटादयोऽवकाशसंसर्गमन्तरेणाऽऽत्मानमलभमानाः स्वयमेवाऽऽकाशेन संसृज्यन्ते तद्वदिति ॥ ९९ ॥

सु० टी०—एवं भाष्योक्ते बन्धमिथ्यात्वे साधिते यदि शास्त्रारम्भोपोद्घात आदावध्यासः किमिति तर्हि सूत्रकृतोपेक्षित इत्याशङ्क्य 'सूत्रेष्वेव हि तत्सर्वम्' इति न्यायादसौत्रस्य भाष्यविषयत्वायोगादर्थगत्या सूत्रित एवेत्याह—

> ब्रह्मज्ञानं सूचयन्सूत्रकारो
> बन्धोत्पत्तेर्हेतुविध्वंसनाय ।
> एतत्सर्वं सूचयामास तस्माद्-
> तत्सर्वं भाषते भाष्यकारः ॥ ५६ ॥

ब्रह्मज्ञानमिति । 'अथातो ब्रह्मजिज्ञासा' [ ब्र० सू० १ । १ । १ ] इति मुमुक्षोर्ब्रह्मजिज्ञासोपदेशादधिकारिविशेषणस्य मोक्षस्य बन्धहेत्वज्ञानध्वंसात्मकस्य ब्रह्मज्ञानं साधकमिति सूचयन्बन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेरेतत्सर्वं पूर्वोक्ताध्याससाधनप्रबन्धं मुनिः सूचयामासेत्यर्थः । तेन नासूत्रितार्थवर्णनं भाष्यकृत इत्याह—तस्मादिति । ननु ज्ञानमध्यस्तस्यैव निवर्तकमिति नायं नियमः पूर्वज्ञानस्योत्तरज्ञानेनेच्छायाः स्वविषयज्ञानेन शोकस्य सुहृद्दर्शनेन पापस्य सेतुदर्शनेन विषस्य गरुडध्यानेन प्रवृत्तिप्रागभावस्य प्रवर्तकज्ञानेन निवृत्तिदर्शनादिति चेन्न तत्त्वज्ञानत्वेन निवर्तकत्वस्य विवक्षितत्वादुत्तरज्ञानादेस्तु विरोधिगुणत्वेन सिद्धित्वेन सुहृज्ज्ञानत्वेन विहितक्रियात्वेन प्रवृत्तिसामग्री-

त्वेन यथायथं निवर्तकत्वात् । प्रकृतेऽप्यात्मज्ञानत्वेनैव चेन्नाहमिति ज्ञानादपि बन्धनिवृत्त्यापत्तेः । 'अहं ब्रह्मास्मि' [बृ० १।४।१०] इति ज्ञानमेव निवर्तकमिति चेत्तदेव हि तत्त्वज्ञानम् 'आत्मानं चेद्विजानीयादयमस्मि ' [ बृह० ४ । ४ । १२ ] इत्यादिश्रुतेः । तत्त्वज्ञानत्वेन निवर्तकत्वं च न निवर्त्यस्य मिथ्यात्वं विना निर्वहति । तथा हि न तावद्बुद्ध्यादिप्रपञ्चोपहितब्रह्मज्ञानं तत्त्वज्ञानं भवति ब्रह्मणो वस्तुतस्तथात्वाभावात् किं तु विशुद्धब्रह्मज्ञानम् । विशुद्धिश्च प्रपञ्चराहित्यम् । न च सत्यप्रपञ्चाश्रये तदानीमेव तद्राहित्यं वर्तते न चावर्तमानस्य साक्षात्कारविषयत्वसंभवो येनासौ भाविनीं निष्प्रपञ्चतामवगाहेत । अस्तु प्रपञ्चोपादनत्वेन ज्ञानमेव तत्त्वज्ञानमिति चेन्न मृदादेस्तथात्वेन ज्ञानेऽपि घटाद्यनिवृत्तेर्दृष्टविपरीतस्य चाकल्पनात् । तस्मात्प्रपञ्चसत्त्वकालेऽपि ब्रह्मणि निष्प्रपञ्चत्वप्रमा वाच्या सा च न प्रपञ्चमिथ्यात्वं विनेति । तथाऽपि कथं स(*प्रपञ्चे प्रपञ्चराहित्यं तद्वति तदत्यन्ताभावासत्त्वादिति चेन्न तत्समसत्ताकस्यैव तदत्यन्ताभावस्य तद्वत्यवृत्तेर्व्यावहारिकस्य च प्रपञ्चस्य स्वकालेऽपि) ब्रह्मणि पारमार्थिकात्यन्ताभावाविरोधात् । (+अत एव त्रैकालिकनिषेधस्य परमार्थदृष्टरजताभावविषयत्वमुक्तं विवरणे । शुक्तौ परमार्थत्वेन दृष्टं यन्मिथ्या रजतं तत्प्रतियोगिकाभावात्मकाधिष्ठानविषयत्वं हि तदर्थो न तु लौकिकापणस्थरजताभावविषयत्वम् । तस्यात्र निषिध्यमानत्वे मिथ्यात्वापत्तेः । ' नेह नाना ' [ बृह० ४ । ४ । १९ ] इति श्रुत्या दृश्यमानप्रपञ्चस्येवाऽऽत्मनि शुक्तौ प्रतीयमानरजतस्यैव तत्र त्रैकालिकाभावप्रतीतेश्च । घटस्य तदभावाभावत्ववच्चाधिष्ठानस्य भावस्याप्यध्यस्तनिरूपिताभावत्वं न विरुध्यते । केचित्तु रजतस्य परमार्थत्वाकारेण प्रतियोगिमिति यत्त्रैकालिकाभावस्तत्परोऽयं ग्रन्थः । परमार्थत्वस्य व्यधिकरणत्वे च प्रतियोगिनो मिथ्यात्वमपि सिध्यतीति व्याचक्षते । सर्वथाऽप्युपपन्नः प्रपञ्चकालेऽपि ब्रह्मणि प्रपञ्चाभावः ) इति संक्षेपः ॥ ५६ ॥

अ० टी०—तदेवं मातृत्वादिबन्धस्याऽऽत्मतत्त्वानवभासानाद्यनिर्वचनीयाविलासमात्रत्वप्रतिपादनेन युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना भाष्येण संग्रहविवरणाभ्यां निरूपितं बन्धमिथ्यात्वमिह युक्त्या प्रतिष्ठापितं तेनैव शास्त्रादेर्विषयप्रयोजनवत्त्वं चोपपादितं यद्येवं शास्त्रारम्भकर्तव्यतौपयिकतयाऽऽदावेव विषयप्रयोजने वक्तव्ये तदर्थं चाध्यासो वर्णनीय-

---

* ख. पुस्तकस्थोऽयं ग्रन्थः । + ख. पुस्तकस्थोऽयं ग्रन्थः ।

स्तदा भाष्यसूत्रानुसारित्वनियमात्सूत्रकारेणानुक्तमेतत्सर्वं कथं भाष्यकारो वर्णयति स्मेत्याशङ्क्य सूत्रकारेणाप्युक्तत्वान्नात्र शङ्कावसर इत्यभिप्रेत्योक्ते भाष्यार्थे सूत्रव्यापारं दर्शयति—ब्रह्मज्ञानमिति । 'अथातो ब्रह्मजिज्ञासा' [ ब्र० सू० १ । १ । १ ] इति प्रथमसूत्रे ब्रह्मजिज्ञासापदेनाथशब्दसूचिताधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमित्यर्थात्सूत्रकारेण सूत्रितम् । यतो ब्रह्मज्ञानाय विचारकर्तव्यत्वप्रतिज्ञा तस्य फलतत्साधनत्वयोरन्यतरत्वाभावे न युक्ता । तत्र ज्ञानस्य सुखदुःखप्राप्तिनिवृत्त्योरन्यतरत्वाभावात्तत्साधनत्वमर्थात्सूत्रितमेवेति प्रयोजनं तावत्सूत्रितं तच्चाधिकारिविशेषणमोक्षाख्यं बन्धनिवृत्तिरूपम् । स यदि देवः परमार्थभूतः स्यात्तदा न ज्ञानेन निवर्हणार्हो भवेत् । यतो ज्ञानमज्ञानस्यैव निवर्तकं न परमार्थस्यातो ज्ञानेन बन्धनिवृत्तिं सूचयता तस्य मिथ्यात्वमपि सोपपत्तिकं सूचितमेवेति गम्यते । यन्निरूपणमन्तरेण सूत्रार्थो न निरूपितः स्यात्तत्सर्वं सूत्रसूचितमेव सूत्रेषु सूचनस्यालंकारत्वादिति । तस्मात्सूत्रसूचितस्यैवार्थस्य भाष्यकारेण प्रतिपादनान्नास्य सूत्रासंगतिशङ्कावकाश इति तात्पर्यार्थः । अक्षरार्थः सुबोधः । एवं सूत्रभाष्यैकवाक्यतानिरूपणेनास्य ग्रन्थस्य वार्तिकत्वमपि ध्वनितम् ॥ ५६ ॥

सु० टी०—अध्यासवर्णकमुपसंहरन्संभावितविषयप्रयोजनत्वाच्छास्त्रारम्भं निगमयति—

तस्मादध्यस्तमेतत्सकलमपि दृशौ भूमरूपातिरिक्तं
रूपं स्वाज्ञानमात्रादिति भवति परब्रह्मधीबाध्यमेतत् ।
ईशित्रादिप्रभेदप्रतिहतिफलकज्ञानदौस्थ्यापनुत्त्यै
श्रीमच्छारीरकार्थप्रकटनपटुताशालि शास्त्रं विदध्मः ॥५७॥

तस्मादिति । एतत्प्रत्यक्षं सकलमपि कर्तृत्वभोक्तृत्वादि स्वाज्ञानमात्रादेव दोषाद्दृशौ चिदात्मन्यध्यस्तं कुत इत्याह—भूमेति । भूमरूपे हि ब्रह्मण्यल्परूपं परत्र परावभासत्वादध्यस्तमेव संभवतीत्यर्थः । ततः किमित्यत आह—इतीति । अध्यस्ततासिद्धौ च ब्रह्मधीबाध्यत्वं सूत्रितं सिद्धं भवतीत्यर्थः । तेन विषयादिसंभवाच्छ्रीमच्छारीरकार्थब्रह्मात्मैक्यस्य यत्प्रकटनमपराधापनयेन स्फुटीकरणं तत्र यत्पटुत्वमुपपत्तिबाहुल्यं तद्युक्तं शास्त्रं समासव्यासाभ्यां चतुर्लक्षणीनयसंग्रहाच्छास्त्रकल्पं प्रकरणं कुर्म इत्यर्थः । तन्निर्माणफलमाह—ईशित्रादीति । जीवेशादिभेदाध्यासप्रतिहतिफलकवाक्योत्थज्ञानस्य यद्दौस्थ्यं प्रतिबन्धात्फलपर्यन्तताराहित्यं तन्निराकर्तुमित्यर्थः ॥ ५७ ॥

अ० टी०—यस्मादेवं सूत्रभाष्यकाराभ्यां शास्त्रीयविषयप्रयोजनसिद्धये बन्धमिथ्यात्वमुपपादितं तस्माद्युक्तमेवास्माभिरिहाऽऽदौ तन्निरूपणं कृतमित्युपसंहरति—तस्माद्ध्यस्तमेतत्सकलमपीति । यस्मादेवं तस्माद्दृशश्चिदात्मनो यद्भूमरूपं ब्रह्मरूपं तदतिरिक्तं सकलमप्येतत्परिच्छेदविषयत्वाद्रूपेणावभासमानरूपं स्वाज्ञानमात्रादध्यस्तमिति कृत्वा परब्रह्मधीबाध्यमेवैतद्भवत्यतो भेदविपर्यासयोरात्मनि परमार्थत्वाभावाद्ब्रह्मात्म्यैकविषयबन्धनिवृत्तिप्रयोजनयोरिह संभवाच्छास्त्रमारम्भणीयमेतदित्याह—ईशित्रादीति । ईश्वरो जीवो जगदिति च यः प्रभेदो द्वैतावभासलक्षणस्तस्य प्रतिहतिर्बाधरूपा निवृत्तिस्तदेव फलं प्रयोजनं यस्य तच्च तज्ज्ञानं चेति तथा तस्य दौस्थ्यमसंभावनाद्यास्कन्दितत्वेन स्वविषय एव नैश्चल्याभावस्तस्यापनुत्त्यै निरासाय श्रीमच्छारीरकार्थप्रकटनपटुतया शालिशोभमानं शास्त्रं शास्त्रार्थसंग्रहप्रधानं ग्रन्थं विदध्मः कुर्म इति योजना । यद्यप्यस्य ग्रन्थस्य प्रकरणत्वं पूर्वमुक्तं तथाऽपि मोक्षपुरुषार्थसंबद्धप्रमेयज्ञानस्याप्यत्र संक्षेपविस्तराभ्यां प्रतिपादनाच्छास्त्रलक्षणमप्यस्तीति प्रदर्शनाय शास्त्रं विदध्म इत्युक्तमिति द्रष्टव्यम् । एवमपि सूत्रभाष्यपरतन्त्रत्वाद्विचारशरीरस्य सर्वस्येह साक्षादप्रतिपादनादिदं प्रकरणं च प्रागुक्तरीत्या सूत्रभाष्योक्तानुक्तादिविचारत्वाद्वार्तिकं चेदमिति भावः ॥ ५७ ॥

सु० टी०—अगतार्थवर्णकमवतारयिष्यन्ननु यदि ब्रह्मान्यतः सिद्धं किं तद्विचारेणाथासिद्धं न शक्यं विचारयितुं वेदान्तादापातप्रतिपन्नं विचार्यमिति चेत् । केयमापातप्रतिपत्तिर्न पदजन्या ब्रह्मपदे व्युत्पत्त्यभावादत एव न तत्समभिव्याहृतवाक्यजन्या किंचिद्ब्रह्मास्तीति प्रतिपत्तिः सेति चेन्न तस्या बुभुत्सामात्रहेतुत्वेन विचाराहेतुत्वादतो न ब्रह्म विचार्यं न वा बन्धनिवृत्तिस्तत्फलमित्यादावाक्षिप्य समाधत्ते—

मीमांसितव्यमनयैव सदद्वितीयं
मीमांस्यमेव च सदात्मतयाऽनयैतत् ।
ज्ञातं प्रयोजनमनेन पथेदमस्या-
स्तन्नान्तरीयकतया च तमोनिवृत्तिः ॥ ५८ ॥

मीमांसितव्यमिति । न तावदन्यतः सिद्धमेव ब्रह्मेह विचार्यं तस्योपनिषद्न्यमानागोचरत्वादतोऽद्वितीयं सदविचारितान्महावाक्यात्संमुग्धोपस्थितमनयैव मीमांसया मीमांसितव्यमखण्डानन्दात्मना ज्ञातव्यम् । ब्रह्मण औपनिषदत्वेन तद्विचारस्यैव तन्निश्चायकत्वौचित्याद्ब्रह्मपदस्य च बृहत्यर्थानुगमेन सर्वानुवृत्तसत्तास्फुरणात्मनि व्युत्पन्नत्वादात्मशब्दस्य

'यश्चाऽऽप्नोति यदादत्ते' इति प्रत्यगर्थ एव प्रसिद्धेस्तयोरैक्यस्य विचार्यत्वसंभवात् । तद्दर्शयति—मीमांस्यमेवेति । सत आत्मत्वेनाज्ञानादनया मीमांसया तदेवाऽऽत्माभेदेन मीमांस्यं नान्यन्नियोगादीत्यर्थः । नन्वस्तु ब्रह्मात्मैक्यं विचार्यत्वाद्विषयः फलासिद्धिस्तु तदवस्थैवेत्याशङ्क्याऽऽह—ज्ञातमिति । अनेन प्रागुक्तेन यथाऽस्या मीमांसाया इदमेव प्रत्यगभिन्नमद्वयानन्दं ब्रह्म ज्ञातं सत्प्रयोजनं भवतीत्यर्थः । नन्वेवं बन्धनिवृत्तिर्न फलं स्यात्ततश्च प्रागुक्तविरोध इत्यत आह—तन्नान्तरीयेति । ब्रह्मात्मबोधे सति तमोनिवृत्तेरर्थसिद्धत्वेन पृथग्व्यापारानपेक्षत्वात्तुलोन्नमनवन्न साऽपि पृथगुद्देश्यतया फलमित्यर्थः । ननु तमोनिवृत्तेरधिष्ठानमात्रत्वेनाऽऽत्माभिन्नायाः प्रागपि सत्त्वात्कथं ज्ञानसाध्यत्वमिति चेद्यस्मिन्सत्यग्रिमक्षणे यत्सत्त्वं यदभावे चाभावस्तस्यैव तत्साध्यत्वात् । अस्ति च ज्ञाने सत्यग्रिमक्षणेऽज्ञाननिवृत्तिरूपात्मसत्त्वं तदभावे चाज्ञाननिवृत्त्यभावोऽज्ञानमात्मनोऽज्ञानाभावत्वेऽज्ञानस्यापि तदभावरूपत्वादिति । अस्तु तमोत्यन्ताभावस्तमोनिवृत्तिस्तस्यानादित्वेन ब्रह्माभेदयोग्यत्वान्न तमोध्वंसस्तस्य प्रतियोग्यसमानकालत्वादिति चेन्न प्रतियोगिसमसत्ताकस्यैव तस्य तदसमानकालत्वमित्युक्तत्वादिति दिक् ॥५८॥

अ० टी०—ननु यद्यपि प्रत्यगात्मनि भेदविपर्यासयोरुक्तन्यायेन मिथ्यात्वात्पारमार्थिकं तदद्वयं विषयस्तज्ज्ञानाच्च तद्गताज्ञानबन्धहानिः प्रयोजनं च स्यादिति संभाव्यते तथाऽप्युक्तविषयप्रयोजने न संगते इव प्रतिभाति । तथा हि वाक्यविचारात्मकं हीदं शास्त्रमभिमतं न तर्कशास्त्रवद्युक्तिमात्रेणोत्प्रेक्षितार्थनिरूपणपरम् । तत्र चानन्यलभ्यः शब्दार्थ इति न्यायादुक्तविषयस्य वेदान्तैकगम्यता वक्तव्या । साऽत्र विचार्यमाणा न लभ्यते सकलस्य विषयस्यान्यतः सिद्धौ विचारवैयर्थ्यादसिद्धौ च विषयासिद्धेर्निर्विषयविचारानुत्थानात् । न च वेदान्तेभ्य आपातप्रतिपन्नविषयस्य फलस्य विशेषतो निर्णयफलविचारो भविष्यतीति वाच्यं विकल्पासहत्वात् । किं पदात्प्रतीतिरापातप्रतिपत्तिरुक्तवाक्यात्वाऽऽद्यो मानान्तरागोचरस्य ब्रह्मात्मनः संगतिग्रहासंभवात्तदात्प्रतीत्यनुपपत्तेः । न द्वितीयोऽनवगतसंगतिकपदकदम्बरूपाद्वाक्यात्संसृष्टार्थावगमायोगात् । मानान्तरप्रवेशे च तत्र शब्दस्यानुवादकतया प्रामाण्यायोगादिति केचित्प्रत्यवतिष्ठन्ते तान्प्रत्याह—मीमांसितव्यमिति । अद्वितीयं सद्यत्सच्छब्दनिर्दिष्टं वेदान्तेषु तदनयैव मीमांसितव्यम् । 'अथातो ब्रह्मजिज्ञासा' [ ब्र० १ । १ । १ ] इत्यादिसूत्रसंदर्भरूपेणैव विचारशास्त्रेण विचारणीयमित्यक्षरार्थः । अयं भावः—न चात्यन्ताप्रसिद्धिर्विषयस्याभ्युपगम्यते येन विचारस्य निर्विषयतयाऽनुत्थानशङ्का । नापि यथावन्निश्चि-

तद्रूपा तत्प्रसिद्धिर्येन विचारवैयर्थ्यं स्यात् । वेदान्तेभ्य आपातप्रतिपन्ने वाक्यार्थे तस्य प्रतीयमानब्रह्मात्मैकत्वादन्यप्रवृत्तिशङ्कावारणेन तदेकप्रतिष्ठत्वनिश्चयाय विचार आरम्भ इति न विचारवैयर्थ्यादिशङ्कावकाशः । न च पदाद्वाक्याद्वा तत्प्रतीतिरिति विकल्पावसरः पदार्थस्य लोकसिद्धत्वात् । लोके हि सच्छब्दः सन्मात्रविषयोऽस्त्यादिशब्दैर्व्यवह्रियते । तथाऽद्वितीयादिशब्दश्च द्वितीयाभाव एकस्मिन्वस्तुन्यवगतसामर्थ्यः । तथा ब्रह्मशब्दोऽपि संकोचकाभावान्निरवग्रहमहद्वस्तुनि स्वसामर्थ्यादेव व्युत्पन्न इति नाव्युत्पन्नशङ्काऽपि । अतो नात्र दोषः कोऽपि । अनयैवाद्वितीयं सन्मीमांसितव्यमिति वदता यथोक्तं विषयस्यान्य-साधारणत्वमुक्तम् । नह्यद्वितीयात्मवस्तु लोकप्रमाणत्वाभिमतात्प्रत्यक्षादेः सिद्धं तथा सति वादिविवादादर्शनप्रसङ्गात् । नापि शास्त्रान्तरात्तात्सिद्धिस्तस्य सर्वस्य भेदतत्त्वपरत्वादात्म-न्यौपनिषदत्वविशेषणश्रवणाच्च । तस्मादनयैव मीमांसयोक्तार्थो ज्ञेय इति । ननु यद्यपि ब्रह्मोपनिषदेकवेद्यमुपनिषदश्चास्मिन्नेव शास्त्रे विचार्यन्त इति ब्रह्मास्य विषयस्तथाऽपि तस्याऽऽत्मैक्यं न श्रुतिविचारशास्त्रविषय आत्मनस्ततोऽन्यत्वादित्याशङ्का न कार्येत्याह—**मीमांस्यमेवेति** । अनया मीमांसया तत्सद्ब्रह्मात्मतयैव प्रत्यगेकरसतयैव मीमांस्यमित्य-न्वयः । सर्वश्रुतिषु 'अयमात्मा ब्रह्म' [बृ० २ । ५ । १९ ] इत्येवंरूपेणैव ब्रह्मण उपदेशनात्कूटस्थब्रह्मवेदनस्य चाऽऽत्मनि दृष्टसंसारनिरासासाधनत्वासंभवादानर्थक्यापत्तेर्भे-दस्य चोपाधिभेदमन्तरेण स्वभावतो निरूपयितुमशक्यत्वाच्च न प्रतीचो भेदेन ब्रह्मदर्शन-मुपपद्यतेऽत एव सर्वश्रुतिषु 'तत्त्वमसि' [ छा० ६ । ११ । ३ ] इत्यादिवाक्यगतपद-सामानाधिकरण्यविषयशोधनाय विचारशास्त्रारम्भ इति भावः । यदुक्तं प्रयोजनमप्यत्र न संभाव्यत इति तत्राऽऽह—**ज्ञानमिति** । अनेन पथा यथोक्तेन प्रत्यगेकरसत्वलक्षणेनेदं सदादिशब्दनिर्दिष्टं ब्रह्मज्ञानं सत्प्रयोजनं परमानन्दरूपत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] इति ब्रह्मवेदनस्य ब्रह्मभवनफलश्रवणादज्ञातं ब्रह्म प्रत्यक्तत्त्वं विषयीकृत्य प्रवृत्तविचारद्वारकवेदान्तवाक्यजन्यज्ञानस्य ज्ञातं तदेव प्रयोजनं नान्यत्साध्य-रूपमित्यर्थः । ननु तमोनिवृत्तेः साध्यत्वात्सैव संसारनिदाननिवृत्तित्वेनाभिलापगोचरत्वाच्च फलमित्याशङ्क्याऽऽह—**तन्नान्तरीयकतया चेति** । तमोनिवृत्तिश्च न ज्ञानव्यापार-साध्या [ अपि ] तु तन्नान्तरीयकतया तत्त्वज्ञानोदयमात्रेण विरोधात्स्वयमेवाज्ञानतमो निवर्ततेऽतो न यत्नसाध्यता तस्यास्तमोनिवृत्तेश्चाऽऽरोपितनिवृत्तित्वादधिष्ठानात्ममात्रत्वान्न पृथक्फलत्वमित्यर्थः ॥ ९८ ॥

सु० टी०—ननु विषयादिसिद्धावपि नैतच्छास्त्रमारम्भणीयमस्य शक्तितात्पर्यनिर्णयार्थत्वात्तस्य च पूर्वतन्त्रेणैव 'शास्त्रस्था वा तन्नि-मित्तत्वात्' [ जै० मि० अ० १ । पा० ३ । सू० ९ ] 'संदिग्धेषु वाक्यशेषात्' [ जै० मि० १ । ४ । २९ ] इत्यादिभिः सिद्धे-

धर्मजिज्ञासासूत्रे च वेदार्थमात्रजिज्ञासायाः प्रतिज्ञातत्वेनाविचारितवेद-भागाभावादित्याशङ्क्याऽऽह—

न च गतार्थमिदं प्रतिभाति नो
न हि विधेः पदमात्मसमीक्षणम् ।
न खलु यागददातिजुहोतिव-
त्पुरुषतन्त्रमिहाऽऽत्मनि दर्शनम् ॥ ५९ ॥

न चेति । चोदनाप्रमाणकस्य धर्मस्य समन्वयप्रमाणकस्य च ब्रह्मणो विचारभेदान्नेदं शास्त्रं तेन गतार्थमित्यर्थः । ननु द्रष्टव्य इत्यादिविधिविहितात्मज्ञानस्यापि यागादिवद्धर्मत्वात्कथमगतार्थत्वमित्याशङ्क्याऽऽह—न हीति । पदं विषयः । न ह्यात्मज्ञानं विधेयं नियोगाविषयत्वादित्यर्थः । तथा हि न स्वरूपचैतन्यं विधेयं तस्य नित्यत्वेनाननुष्ठेयत्वात् । नापि चरमवृत्तिर्निष्फलत्वात् । न चाविद्यानिवृत्तिः फलं नान्तरीयकत्वेनानुद्देश्यत्वात् । न चाऽऽत्मज्ञानं संस्कारत्वेन विधेयमात्मनोऽसंस्कार्यत्वात् । नापि क्रत्वङ्गतया प्रकरणाद्यभावात्फलित्वाच्च । न च फलश्रुतिरर्थवादः परस्पराश्रयाज्जुह्वादिवत्क्रत्वव्यभिचाराभावाच्च । नापि लिङ्गात्क्रत्वङ्गता सामान्यसंबन्धं विना तदभावात् । न च वेदार्थज्ञानवत्क्रत्ववश्यापेक्षितत्वान्न सामन्यसंबन्धापेक्षेति वाच्यमशनायाद्यतीतात्मज्ञानस्याधिकारविरोधिनः क्रतुभिरनपेक्षितत्वात् । किं च स्वव्यापारे पुरुषो नियुज्यते न च ज्ञानं पुरुषतन्त्रमतोऽपि न विधेयमित्याह—न खल्विति । न हि ज्ञानं कर्तुमकर्तुमन्यथा कर्तुं वा शक्यं वस्तुप्रमाणपरतन्त्रत्वाद्(*निच्छतोऽपि दुर्गन्धादिज्ञानदर्शनादिच्छतोऽपि लोष्टादौ सुवर्णज्ञानादर्शनान्नियोज्यतन्त्रत्वे च)योषिदग्न्यादिदृष्टिवदतत्त्वज्ञानत्वापाताच्चेत्यर्थः । यच्च सूत्रे धर्मपदं वेदार्थमात्रपरमित्युक्तं तन्नानुपपत्तिं विना लक्षणाया अन्याय्यत्वादिति ॥ ५९ ॥

अ० टी०—यद्यप्येवं शक्यप्रतिपाद्यत्वादनन्यसाधारणत्वाच्च ब्रह्म संविषयः स्यात्तदेव च ज्ञातं सन्निरतिशयानन्दरूपत्वात्प्रयोजनं तत्साक्षात्कारज्ञाननान्तरीयकतया च तद्गततमोनिवृत्तिश्च प्रयोजनं भवतीति विचारशास्त्रस्योक्तविषयप्रयोजनाभ्यां तद्वत्त्वसिद्धिस्तथाऽपि पूर्वमीमांसयैव समस्तवेदार्थविचारस्य कृतत्वात्पृथग्विचारो नाऽऽरब्धव्यो वाक्यार्थनिर्णयापेक्षि-

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

तस्य न्यायस्य तत्र गतत्वादिति चेन्नेत्याह—न च गतार्थमिदमिति । नोऽस्माकमिदं वेदान्तविचारशास्त्रं गतार्थमन्यतो निवृत्तार्थं न प्रतिभाति तत्र वेदान्तवाक्यानामेकदेशस्याप्युदाहरणादर्शनात् ' अथातो धर्मजिज्ञासा ' [ जै० १ । १ । १ ] इतिप्रतिज्ञासूत्रे धर्मस्यैव यागादिलक्षणस्य विचार्यत्वेन प्रतिज्ञातत्वाच्चोदनासूत्रे च तस्यैव लक्षणप्रमाणयोरुपन्यासादुत्तरसूत्रेष्वपि प्रतिलक्षणं च तद्विचारेण शास्त्रसमाप्तिदर्शनान्न पूर्वमीमांसाविचारेणास्य गतार्थतेति चकारार्थः । ननु विध्यपेक्षितविचारस्य सर्वस्यापि तत्र कृतत्वाद्विधिरहितवाक्यानां चार्थवादादीनां विध्येकवाक्यतया फलवदर्थावबोधकत्वप्रकारदर्शनेन विधिविशेषत्वेन प्रामाण्यनिर्णयन्यायस्यापि तत्र गतत्वाद्वेदान्तविज्ञानस्यापि विधिविषयत्वाद्विध्यपेक्षितार्थसमर्पकत्वेन तच्छेषत्वाद्वा प्राग्विचारेण विचारितत्वोपपत्तेर्न पृथग्विचारार्हमिदमिति चेत्तत्राऽऽह—न हि विधेः पदमात्मसमीक्षणमिति । आत्मसमीक्षणं वेदान्तवाक्योत्थं प्रत्यगेकरसब्रह्मज्ञानं न विधेः पदं विषयः साक्षाद्वा परम्परया वा न धियो योग्य इत्यर्थः । तत्र साक्षाद्विधिविषयत्वाभावे हेतुमाह—न खल्विति । यागदानहोमवदिह वेदान्तेषु आत्मनिदर्शनं न खलु पुरुषतन्त्रं प्रयत्नप्रतिपाद्यं तस्य तत्त्वज्ञानत्वेन प्रमाणवस्तुतन्त्रत्वादग्नावग्नित्वज्ञानवदपुरुषतन्त्रस्य चाविधेयत्वादित्यर्थः । इहाऽऽत्मनीति सामानाधिकरण्यं वाऽऽत्मनि ब्रह्मत्वदर्शनमित्यर्थः । नाप्यर्थवादादिन्यायोऽन्यविधिशेषताऽस्यास्त्यनारम्याधीतत्वात् स्वार्थे फलराहित्याभावाच्चेति भावः ॥ ५९ ॥

सु० टी०—विधेयानिरूपणादपि न ब्रह्मज्ञानं विधेयमित्याह—

अपि च रूपितगोचरता विधेर्न
परमात्मधियोऽस्ति च रूपणम् ।
अविदिते परमात्मनि तद्धियो
न खलु रूपितता घटनान्विता ॥ ६० ॥

अपि चेति । अज्ञाते विषये पुंसो नियोक्तुमशक्यत्वाद्यजेतेत्यादिवदिहापि विधिप्रवृत्तेः प्राग्विषयनिरूपणं वाच्यम् । न चाऽऽत्मनोऽनुपस्थितौ तज्ज्ञानरूपविषयनिरूपणं घटत इत्यर्थः ॥ ६० ॥

॥ ६० ॥

सु० टी०—अस्तु तर्हि ' सत्यं ज्ञानमनन्तम् ' [ तैत्ति० २ । १ । १ ] इत्यादिभिः प्रागपि विधेरात्मज्ञाने को दोष इतिचेत्तत्राऽऽह—

विदितता परमात्मन इष्यते
यदि वृथा विधिरस्य धियो भवेत् ।

निखिलभेदनिदाननिवृत्तितो

भवति तद्विषयादि च दुर्लभम् ॥ ६१ ॥

विदिततेति । एवं हि सति तद्धीविधानं व्यर्थं विधिकृत्यस्य प्रागेव सिद्धेरित्यर्थः । विधौ सत्यात्मज्ञानं तस्मिंश्च सति विधिरित्यन्योन्याश्रयश्च । अशक्यश्च विधिरित्याह—निखिलेति । विधेः प्रागात्मनो ज्ञाने सति निखिलभेदहेत्वज्ञाननिवृत्तेर्विषयनियोज्यादिदुर्भिक्षादित्यर्थः ॥६१॥

॥ ६१ ॥

सु० टी०—नन्वस्तु विधेः प्राक्परोक्षमात्मज्ञानं विषयादिनिरूपकमपरोक्षस्यैव भेदाध्यासनिवर्तकत्वादिति शक्यो विधिः । किं चात्र 'विज्ञाय प्रज्ञां कुर्वीत ' [ बृह० ४ । ४ । २१ ] इत्याद्युक्तज्ञानाभ्यासात्मकधर्मविधिरेवोच्यते । ततश्च तन्नियमादृष्टसचिवभावनाप्रकर्षजसाक्षात्कारादविद्यानिवृत्तिरिति धर्मविचारेणैव गतार्थत्वमित्याशङ्क्याऽऽह—

इति न धर्मविशेषसमर्पणं श्रुतिशिरोवचनैः क्रियते ततः ।

भवति धर्मविचारगतार्थतानवसरः परमात्मविचारणे ॥ ६२ ॥

इति नेति । वेदान्तानां ज्ञानाभ्यासविधिपरत्वे ब्रह्मपरत्वे च वाक्यभेदः संभवत्येकवाक्यत्वे स चान्याय्यः । न चान्यपरेभ्योऽपि देवतादिवद्ब्रह्मसिद्धिरनन्यथासिद्धभेदग्राहिप्रत्यक्षविरोधेनान्यपराणामद्वैतब्रह्मबोधनासामर्थ्याद्भावनाजन्यसाक्षात्कारस्य च मृतपुत्रसाक्षात्कारवदप्रमात्वेनाज्ञानानिवर्तकत्वान्मोक्षसाधनब्रह्मात्मैक्यपरवेदान्तविचार आवश्यक इति न गतार्थत्वमित्यर्थः ॥ ६२ ॥

॥ ६२ ॥

सु० टी०—वेदान्तानामविधिपरत्वे तत्रत्यलिङादीनां का गतिरिति चेत्तत्राऽऽह—

अर्हार्थे च कृत्यस्मरणमभिमतं पाणिनेः प्रार्थनादौ

लिङ्लोडादेश्च वृत्तिः प्रचुरमभिमता पाणिनेर्जैमिनेश्च ।

---

१ क. °रोधतान्य° । २ क. °नान्यसा° । ग. °नानन्यसा° । ३ क. ग. पुत्रादिसा° ।

तस्माद्वेदान्तवाक्ये पठितमपि लिङाद्यन्यथा योजनीयं
विध्यर्थासंभवेन स्फुटमुदितनयादेतदन्यागतार्थम् ॥ ६३ ॥

अर्हादीति । 'अर्हे कृत्यतृचश्च' 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' 'लोट्च' इति नानार्थत्वेनानुशासतः पाणिनेः कृत्यानामर्हाद्यर्थत्वं लिङादेश्च प्रार्थनाद्यर्थत्वमभिमतं जैमिनेरपि 'विष्णुरुपांशु यष्टव्यः' 'जर्तिलयवाग्वा जुहुयात्' इत्यादौ विध्यसंभवादर्थवादत्वं वदतो लिङादेरर्थान्तरे वृत्तिः प्राचुर्येणाभिमतैवेत्यतो द्रष्टव्य इत्यादिष्वप्यसंभवद्विधानेषु दर्शनार्ह आत्मेत्येवमन्यथैव लिङादि योज्यमित्याह—तस्मादिति । एतादिति । अविधिलक्षणत्वादेतच्छास्त्रं विधिशास्त्रेणागतार्थमित्यर्थः ॥ ६३ ॥

॥ ६३ ॥

सु० टी०—अथाधिकारिसंभवमुपपादयितुं नन्वेवमपि न ब्रह्म विचार्यमधिकार्यभावात्सर्वस्यापि ह्यधीतवेदस्य धर्मविचारानन्तरं तदनुष्ठान एव प्रवृत्तेः । न च मुमुक्षुरत्राधिकारी तस्यासंभवात्प्रसिद्धसुखपरिहारेणालौकिकमोक्षसुख इच्छानुपपत्तेः 'यावज्जीवजरामर्यादि' श्रुतिविरोधेन कर्मत्यागस्याप्यनुपपत्तेरित्याशङ्कामपाकरोति—

एकाहाहीनसत्रद्वयविधिविहितानेककर्मानुभाव-
ध्वस्तस्वान्तोपरोधाः कथमपि पुरुषाश्चिद्दिदृक्षां लभन्ते ।
यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्यें युनक्ति ॥ ६४ ॥

एकाहेति । यद्यपि प्रायेणाधीतवेदः कर्मस्वेव प्रवर्तते सहजरागादिकषायदूषितान्तःकरणत्वात्तथाऽपि ये तावज्ज्योतिष्टोमाद्येकाहद्विरात्राद्यहीनसहस्रसंवत्सरान्तसत्रसत्राहीनार्थविधिद्वयविहितद्वादशाहाद्यनेकनिरभिसंधिकृतकर्मानुभावक्षीणचित्तमलाः सत्पुरुषाः 'कश्चिद्धीरः' [कठ० ४ । १] इत्यादिश्रुतिविषयास्ते साधनसंपन्नाः सन्तः कथंचिदीश्वरानुग्रहादनित्यैफलकर्मविधीनैविरक्तविषयानवधारयन्तो नित्यनिरतिशयानन्दं मोक्षमेव पुमर्थंसारमनुसरन्तस्तदुपायभूतचिदात्मविवि-

१ क. °ात्मसि° । २ क. ग. °त्यकर्मफलवि° । ३ क. °नवि° ।

दिषामाप्नुवन्तीति नाधिकार्यसंभव इत्यर्थः । नन्वेकाहादीनां स्वर्गाद्यर्थत्वेन विहितानां चित्तशुद्धिद्वारा विविदिषाहेतुत्वे किं मानमिति चेत्तत्राऽऽह—यज्ञेनेति । 'विविदिषन्ति यज्ञेन' [ बृह० ४ । ४ । २२ ] इत्यादिवाक्यमेव शपतथश्रुतिविहितमेकाहाहीनादिकर्मवृन्दमात्मविविदिषासाधनत्वेन विनियुङ्क्त इत्यर्थः । नन्वन्यत्र विनियुक्तानामन्यत्र विनियोगविरोध इति नेत्याह—गृहीत्वेति । तत्तत्कर्मकाण्डीयोत्पत्तिविधिस्थकर्मस्वरूपमात्रानुवादेनेत्यर्थः । तेन 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' [ जै० ४ । ३ । ५ ] इति न्यायात् 'खादिरे बध्नाति' इति क्रत्वर्थोत्पन्नखादिरत्वादेः 'खादिरं वीर्यकामस्य' इत्यादिना फले विनियोगवदविरोध इति भावः । ननु नात्र संयोगपृथक्त्वसंभवः 'फलं चाकर्मसंनिधौ' [ जै० २ । ३ । २५ ] इति न्यायेन प्रकरणान्तरीयविविदिषाफलस्य कर्मभेदकत्वात् । तथाचोक्तम्—

'उपादेयो गुणो यत्र भवेत्प्रकरणान्तरे ।
तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता' ॥ इति ।

( * उपादेयो ह्याहवनीयादिर्दूरस्थहोमाद्युद्देशेनापि शक्यविधानत्वान्न कर्म भिनत्ति । न त्वेवं देशकालफलाद्युद्देश्यत्वात् । ) न ह्यस्य फलस्य दूरस्थयज्ञाद्युद्देशेन विधिः संभवत्यविधेयत्वात् । नापि यज्ञादेर्दूरस्थस्य ज्ञानकाण्डे विपरिवृत्तिरास्ति । येन 'संनिधौ त्वविभागात्' [ जै० २ । ३ । २६ ] इति न्यायेन 'समे दर्शपूर्णमासाभ्याम्' इत्यादौ समादेर्दर्शपूर्णमाससंबन्धवद्विविदिषाफलस्यापि यज्ञादिसंबन्धविधिः स्यात् । नापि यज्ञादिनामभिरुपस्थितानां तेषां विविदिषायां विनियोग इति युक्तम् । संनिधेरिव नाम्नो विध्यपेक्षितकर्मोपस्थापकत्वाभावात् । भावना हि फलसंबन्धाय विधिनाऽपेक्षिता न धात्वर्थः । यथाऽऽहुः—

'नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः ।
भावना त्वनुपस्थानाद्ध्रियमाणाऽवधार्यते' इति ॥

---

* धनुश्चिह्नितग्रन्थः क पुस्तके नास्ति ।

---

१ क. तत्र क° । २ क. °परीतवृ° । ३ क. ग. नानाधा° ।

तस्मादन्यदेवेदं विविदिषाफलं यज्ञादीति त एवोभयलिङ्गादित्ययुक्तं तत्र सूत्रमपीति प्राप्त उच्यते स्यादयं भावनावादिनः स्वमते दोषोऽस्मन्नये तु धात्वर्थव्यतिरिक्तभावनानभ्युपगमान्नानुपपत्तिः। तथा हि पचतीत्यत्राधिश्रयणादिविक्लित्त्यन्ता पाकक्रियैव धातुनाऽभिधीयते सैव निष्पाद्यतयाऽऽख्यातेन। नच तद्भिन्ना भावना नाम काचित्क्रियाऽस्ति याऽऽख्यातेनोच्येत[1]। सर्वाख्यातानुगतः करोतीति सामान्यव्यापारांश एव भावनेति चेन्न धात्वर्थमात्रानुस्यूतक्रियासामान्यस्यैव करोत्यर्थत्वात्। एतच्च सम्यगुपपादयिष्यामः। ततश्च तान्येव यज्ञादीनि नाम्नोपस्थितानि विविदिषायां विनियुज्यन्त इति। ननु तान्येवेत्ययुक्तं विपरिवृत्त्यभावात्। न हि यजेतेत्यादिविधिवदसत्त्वभूतकर्मोपस्थापकं यज्ञादिपदं तस्य लिङ्गसंख्यादियोगितयोपस्थापकत्वादिति चेन्न यत्किंचिद्धर्मभेदस्य विपरिवृत्त्यविरोधित्वात्। तदुक्तमाचार्यैः—'दिव्येव सद्ब्रह्मात्र दिवः परम्' इत्युच्यते (*यथा वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति नाभिप्रत्यभिज्ञाविरोध इति। प्रतितिष्ठन्तीत्य) त्रेव विविदिषाकामा यजेरन्दद्युरिति विपरिणताख्यातानुषङ्गेण वा तादृगर्थलाभात्। त्वयाऽप्यतिरात्रश्चतुर्विंशं प्रायणीयमहरित्यादीनां प्रकरणान्तरेऽपि नाम्नोपस्थितानां फले विधानाद्कर्मान्तरत्वस्येष्यमाणत्वात्। (+'एष वाव प्रथमो यज्ञानाम्' इत्यत्रापि यज्ञशब्दोपस्थितानां दूरस्थानामेव कर्मणामग्निष्टोमोत्तरकालत्वविधावकर्मान्तरत्वाभ्युपगमाच्च) इत्यलं विस्तरेण॥६४॥

अ० टी०—÷विहितं कर्मवृन्दं स्वाध्यायजपतदर्थानुष्ठानलक्षणं स्वोत्पत्त्याम्नानसिद्धं तत्तदसाधारणोत्पत्तिविधिभिरवगतं यथा स्यात्तथा गृहीत्वा पुरुषाणां विविदिषासाध्यमात्रे विविदिषारूपफलसाधनतया युनक्ति विनियोजयतीति योजना। ब्रह्मविविदिषामात्रसिद्ध्यर्थं कर्मकाण्डोक्तकर्मणां विनियोजकं यज्ञेनेत्यादिवाक्यमुक्तक्रमे प्रमाणमित्यर्थः। न च तत्तत्फलार्थतयाऽन्यत्र विनियुक्तानां कर्मणां पुनरिह विविदिषायां कथमुपयोगो विधातुं शक्यते विनियुक्तविनियोगासंभवादिति वाच्यमुत्पत्तिवाक्यासिद्धकर्मस्वरूपस्यैवेह यज्ञादिशब्दैरनूद्य विविदिषायां विनियोगात्तत्रत्यफलान्तरसाधनत्वांशस्येहानुपादानात्। तथा च यथा 'अग्निहोत्रं जुहोति' इत्याद्युत्पत्तिवाक्यमेकमपि नित्यकाम्यविनियोगसाधारणमेवं विवि-

* धनुश्चिह्नितग्रन्थः ख० पुस्तकस्थः। + अय मपि ग्रन्थोऽस्ति ख. पुस्तकएव। ÷ षष्टितमादि श्लोकचतुष्टयस्य टीका नोपलब्धा—चतुःषष्टितमश्लोकस्यापि टीकार्धं नास्ति।

[1] क. ग. °तेनोच्यते।

दिपार्थत्वेऽप्यविरोधः । अत एवोक्तं—स्वोत्पत्त्याम्नानसिद्धमिति । एतेन प्रयोगभेदाप्रसङ्गोऽपि व्याख्यातः । कर्मणां शुद्धिद्वारा विविदिषाहेतुत्वं च येन केन चन यजेतापि वा दर्विहोमेनानुपहतमना एव भवति, इदं मेऽनेनाङ्गं संस्क्रियते महायज्ञैश्च ब्राह्मीयं क्रियते तनुर्यस्यैतेऽष्टाचत्वारिंशत्संस्कारा इत्यादिश्रुतिस्मृतिसिद्धं 'सर्वापेक्षा च' [ ब्र० ३ । ४ २६ ] इतिन्यायसिद्धं चेति नात्रानाश्वासकारणमस्तीति भावः ॥ ६४ ॥

सु० टी०—तत्र यद्यपि रागिबहुले जगति मुमुक्षुदुर्भिक्षाद्विरलाधिकारिको मोक्षस्तथाऽपि प्रागुक्त एव कश्चिदुपशान्तचित्तमलोऽधिकारी मुक्तेर्ब्रह्मज्ञानसाध्यत्वाज्ज्ञानस्य च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' [ मुण्ड० १ । २ । १२ ] इति गुरूपसत्तिसाध्यत्वात्तामन्वतिष्ठदित्याह—

उपससाद चतुष्टयसाधनो
निशितबुद्धिरशुद्धिपरिक्षयात् ।
विविदिषुर्विहितैर्विविधाध्वरै-
र्विदितवेद्यतमं विधिवद्गुरुम् ॥ ६५ ॥

उपससादेति । गुरुशिष्यसंवादात्मना शास्त्रप्रवृत्तेरनादित्वसूचनार्था लिडुक्तिः । विहितैरनुष्ठितैर्नानाविधाध्वरैरशुद्धिपरिक्षयान्निशितबुद्धिरसौ चतुःसाधनसंपन्नो भूत्वा विविदिषुः सन्वेदनार्थं विधिवत्कर्मसंन्यासादिपुरःसरं ब्रह्मविदामेकपुण्डरीकं गुरुमुपससादेति संबन्धः ॥ ६५ ॥

अ० टी०—पूर्वपद्योपपादितमर्थक्रममनूद्योत्पन्नविविदिषस्यानन्तरकृत्यं 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' [ मुण्ड० २ । १२ ] इत्यादिशास्त्रसिद्धमर्थमाह—उपससादेति । अत्र परोक्षभूतार्थलकारप्रयोगो ब्रह्मविविदिषया गुरुपूर्वकवेदान्तश्रवणादौ [ पुरुषाणां ] रेयाणां प्रवृत्तिर्नाधुनातनी किं त्वनादिशिष्टव्यवहारानुवर्तिनीतिद्योतनार्थो गुरुशिष्यसंवादरूपेणास्य शास्त्रस्य प्रवृत्तिरिति द्योतनार्थश्चेति द्रष्टव्यम् । विविधैर्विहिताध्वरैरशुद्धिपरिक्षयान्निःशितबुद्धिश्चतुष्टयसाधनो विविदिषुर्भूत्वा विदितवेद्यतमं गुरुं विधिवदुपससादेत्यन्वयः । नित्यानित्यवस्तुविवेक इहामुत्रार्थभोगविरागः शमादिसाधनसंपन्मुमुक्षुत्वं चेति साधनचतुष्टयं तद्युक्त इत्यर्थः ॥ ६५ ॥

सु० टी०—नन्वेवं मुमुक्षुत्वादिसाधनसंपत्तौ विविदिषा तत्कामस्य

यज्ञादितो बुद्धिशुद्धौ मुमुक्षेति चक्रकापत्तिः कथं च प्रसिद्धसुखविजातीयेऽननुभूते मोक्षे वाञ्छाऽपि स्यादित्याशङ्क्य सर्वजनीनसहजदुःखोपरमसुखेच्छाया एव विवक्षितविवेकान्मोक्षेच्छात्वमुपपादयति—

इह जगति हि सर्व एव जन्तु-
निरतिशयं सुखमुत्तमं ममास्तु ।
उपरमतु तथोपघातरूपं
विषयजदुःखमिति स्पृहां करोति ॥ ६६ ॥

सु० टी०—इहेति । सर्व एव कृमिकीटादिसाधारणः प्राणी न पुनरुत्कृष्टज्ञानो मनुष्यादिरित्यर्थः । सर्वातिशायि दुःखाननुविद्धं सुखमेव मे सदा भूयादिति तथोपघातरूपं कष्टरूपं विषयजदुःखं विशेषेणोपरमत्विति स्पृहयतीत्येतत्प्रसिद्धमित्यर्थः । तथा च तादृशेच्छायाः प्रागपि सत्त्वान्न चक्रकादिरिति भावः ॥ ६६ ॥

अ० टी०—ननु मुमुक्षुत्वं हि मोक्षेच्छावत्त्वं मोक्षश्च निरतिशयपरमानन्दो नित्यसुखरूपो निःशेषानर्थनिवृत्त्युपबृंहितः स पुंसामनादौ संसारे न कस्यामप्यवस्थायामनुभवगोचर इति कथमननुभूतसजातीये तस्मिन्निच्छोदयः संभाव्येत तस्मान्मुमुक्षा कथमधिकारिविशेषणमुपपद्यत इति चेत्तत्राऽऽह—इह जगति हीति । निगदव्याख्यातं पद्यम् । उपघातरूपं सुखानुभवविरोधिस्वभावं विषयजदुःखमपि तथा निरतिशयं यथा तथा व्युपरमत्विति योजना । हिशब्देन सर्वजनप्रसिद्धोऽयमर्थो न प्रमाणान्तरमन्वेषणीयमिति सूचितम् ॥ ६६ ॥

सु० टी०—नन्वीदृशेच्छाप्रसिद्धावपि मुमुक्षाप्रसिद्धिर्नोपपादितेत्यत्राऽऽह—

निरतिशयसुखं च दुःखजात-
व्युपरमणं च वदन्ति मोक्षतत्त्वम् ।
उभयमपि जनोऽभिवाञ्छतीति
स्फुटतरमस्य सदाऽस्ति मोक्षवाञ्छा ॥ ६७ ॥

निरतिशयेति । उक्तरूपं हि सुखं दुःखोपरमं च मोक्षस्वरूपं वदन्त्याचार्याः । तदुभयमप्युक्तरीत्या सर्वोऽभिवाञ्छतीति सैव लक्षणतो मोक्षवाञ्छेति न तस्या अप्रसिद्धिरित्यर्थः ॥ ६७ ॥

अ० टी०—निरतिशयसुखदुःखनिवृत्त्यर्थितायामपि मुमुक्षुत्वं कथं सिद्धमित्यत आह—निरतिशयसुखं चेति । यदिदमुभयविधं फलं सर्वपुंसां स्वरसत एवाभिलाषा- स्पदं तदेव मोक्षतत्त्वं मोक्षविदो वदन्ति । अतः सर्वस्यापि जनस्य स्वरसत एव मोक्षवाञ्छाऽस्तीति फलितमाह—उभयमपीति । अनुभूयमानसजातीय एव मोक्षो नात्यन्त- मतज्जातीय इति नोक्तदोषावकाश इति भावः ॥ ६७ ॥

सु० टी०—ननु सा वाञ्छा लौकिकविषयत्वान्न मोक्षविषया मोक्षस्य लौकिकमानाविषयत्वेनाप्रसिद्धत्वान्निरतिशयसुखं च योगजधर्मजन्यं नाऽऽत्मज्ञानजन्यमिति किं तदुपायानुष्ठानेनेत्यत आह—

उभयमपि परात्मनः स्वरूपं
विमलचिदेकरसं स्वयंप्रकाशम् ।
इति भवति विना प्रमाणमस्मि-
न्नुदितनयादभिवाञ्छनोपपत्तिः ॥ ६८ ॥

उभयमपीति । मुक्तिर्हि दुःखनिवृत्तिसुखावाप्तिस्वरूपा । तच्च द्वयमपि परमात्मस्वरूपमेव । अत एव न योगजधर्मजन्यत्वाशङ्कास्वरूपं चाज्ञा- नव्यवहितं तदपनयद्वारा तत्त्वज्ञानव्यङ्ग्यमिति तदुपायानुष्ठानमर्थवत् । ननु स्वरूपत्वेऽपि प्रमाणागोचरत्वात्तदप्रसिद्धमित्याशङ्क्याऽऽह—विम- लेति । यत एव चिदेकरसत्वात्स्वप्रकाशमत एव प्रमाणं विनाऽपि प्रागुक्त- युक्तेरस्मिन्मोक्षात्मनि वाञ्छोपपन्ना भवतीत्यर्थः ॥ ६८ ॥

अ० टी०—नन्वविषयात्मस्वरूपानन्दस्तद्गताज्ञानतत्कार्यबन्धनिवृत्तिश्च मोक्षो भवते- ष्यते न तत्र पुंसामनुभूतसाजात्यमस्ति विषयभूतसुखादिविषयत्वाल्लोकाभिलाषस्येति चेत्तत्राऽऽह—उभयमपि परात्मनः स्वरूपमिति । अयमर्थः—वैषयिकमपि सुखमात्मस्वरूपमेव सत्तत्तद्विषयोपभोगं निमित्तीकृत्य विशिष्टाकारमनोवृत्त्युपाधिभिरागन्तु- कविशेषाकारेणाभिव्यज्यमानं नानेवाऽऽगन्तुकमिव चावभासते । मनसस्तु लये सुषुप्तौ सर्वोपाधिमस्यस्तमयं निरुपाधिकमेकमनागन्तुकं नित्यात्मरूपमवभासते । अतः सुखस्य स्वरूपतः स्वयंप्रकाशमानात्मस्वरूपत्वात्तद्विषयाभिलाषः परमानन्दाभिलाष एवेति नित्यानुभवसिद्ध एवाऽऽनन्दरूपो मोक्ष इति न तत्र प्रमाणमन्वेषणीयमिति । तथा निःशेषदुःखोच्छित्तिरप्यनुभूयमानाऽऽत्मस्वरूपान्नातिरिच्यते । तथा हि दुःखं सदैवाऽऽग- न्तुकं सुषुप्त्यादावात्मनि स्फुरत्यपि दुःखस्य तत्रास्फुरणात् । तथा च तस्याऽऽगन्तुकस्य कूटस्थे सदानन्दरूपे चिदात्मनि परमार्थतः संबन्धायोगादध्यस्तं तत्तत्र भासत इति

वक्तव्यमध्यस्तनिवृत्तिश्चाधिष्ठानान्नार्थान्तरमिति दुःखनिवृत्तिरप्यात्मैवेत्येतदप्यनुभवसिद्ध-मेवेति तत्रापि भवति मुमुक्षोरभिलाप इति यतोऽतो विना प्रमाणमस्मिन्नुभयविध आत्मरूपे मोक्ष उदितनयादभिवाञ्छनोपपत्तिर्भवतीति योजना ॥ ६८ ॥

सु० टी०—ननूक्तरूपदुःखाभावसुखेच्छाया मुमुक्षात्वे सर्वेऽपि मुक्त्युपाये प्रवर्तेरन्न तु कर्मानुष्ठाने न चैवं दृश्यत इत्यत आह—

कर्मकाण्डकृतबुद्धिशुद्धित-
स्तर्किते च खलु मोक्षवस्तुनि ।
अर्थिताऽस्य घटते प्रयोजक-
ज्ञाननुन्नमनसो महात्मनः ॥ ६९ ॥

कर्मकाण्डेति । 'धर्मेण पापमपनुदति' [ महानारा० २२ । १ ] इति श्रुतेर्यज्ञाद्यनुष्ठानजन्यया शुद्ध्या बुद्धेस्तैक्ष्ण्ये संजाते नित्यानित्यविवेकानन्तरं नित्यनिरतिशयानन्दात्मस्वरूपतया मोक्षवस्तुनि तर्किते सति या पुंसां स्वरसतः पुमर्थार्थिता प्रागुक्ता सैवास्य प्रवृत्तिप्रयोजकापातज्ञानप्रेरितचित्तस्य पुरुषधौरेयस्य वस्तुतो मोक्षविषयत्वेन पर्यवसिता सती ब्रह्मज्ञानाधिकारसंपादनाय घटत इति न सर्वेषामधिकारप्रसङ्ग इत्यर्थः ॥ ६९ ॥

अ० टी०—यद्येवमुक्तन्यायतः सर्वेषामेव मोक्षेच्छा समस्ति तर्हि कस्मात्सर्व एव निरतिशयसुखदुःखनिवृत्तिमिच्छन्तोऽपि मोक्षेच्छया तदर्थं श्रवणादौ न प्रवर्तन्त इत्याशङ्क्योभयापरिज्ञानात्तत्परिज्ञानहेत्वभावाच्च सर्वेषामिति न सर्वे प्रवर्तन्त इत्यभिप्रेत्याऽऽह—कर्मकाण्डेति । मानवानां सहस्रेषु यः कश्चिदनेकजन्मसु कर्मकाण्डोक्तकर्मप्रभावकृतबुद्धिशुद्धितोऽशेषकर्मसाध्यं फलमनित्यमात्मैवैकोऽसाध्यत्वान्नित्य इत्येवं विवेकतः कर्मफललक्षणात्संसारात्कथं मे मोक्षः स्यादिति मोक्षवर्त्म तर्कयति । एवं तर्किते मोक्षमार्गे वेदान्तेष्वापातदर्शनेन 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' [ छा० ८ । १ । ६ ] 'नास्त्यकृतः कृतेन' [ मुण्ड० १ । २ । १२ ] इत्यादिना कर्मफलस्यानित्यत्वं 'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' [ तै० २ । १ । १ ] 'तत्र को

१ क. °पि सुखोपा° ।

मोहः कः शोक एकत्वमनुपश्यतः ' [ ईशा० ७ ] इत्यादिश्रुतेर्ब्रह्मात्मज्ञानस्य नित्यपुरुषार्थ-हेतुतां चावगच्छति । एतेन प्रयोजकज्ञानेन नुन्नमात्मज्ञानसाधनेन श्रवणादौ प्रेरितं मनो यस्य तस्यास्य तार्किकतमोक्षमार्गस्य महात्मनोऽक्षुद्रचित्तस्य सर्वकर्मतत्साधनसर्वसङ्गपरित्या-गिनः संन्यासिनोऽर्थिता घटते केवलमोक्षविषया न पुनः सर्वस्य जनस्यार्वाचीनशब्दादि-विषयानुभववासनाकलुषितस्वान्तस्य तादृग्वासनापरवशस्यापीत्यर्थः ॥ ६९ ॥

सु० टी०—तथाऽपि किं गुरूपसत्त्या व्युत्पन्नस्यास्य निशितधियः स्वयमेव वाक्यार्थनिर्णयसामर्थ्यादित्यत्राऽऽह—

धर्मनिर्णयनिमित्तमिष्यते वेदवित्परिषदेव मानवे ।
तद्वदत्र गुरुणाऽस्य संगतिस्तेन चास्य घटतेऽर्थिता गुरौ ॥७०॥

धर्मनिर्णयेति । यथा मानवे शास्त्रे स्वयं निर्णयसमर्थस्यापि वेदवित्स-भैव धर्मनिर्णयनिमित्तत्वेन नियम्यते ' चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मः स्यात् ' इत्यादिना, तद्वदत्रापि ब्रह्मशास्त्रेऽ-स्याधिकारिणो गुरुणा संगतिरसंदिग्धब्रह्मनिर्णयनिमित्तं विप्रतिपन्नवे-दार्थनिर्णयत्वाविशेषात् 'आचार्यवान्पुरुषो वेद' [ छा० ६।१४।२ ] इति 'आचार्याद्धैव ' [ छा० ४ । ९ । ३ ] इतिश्रुतेः सूक्ष्मत्वाच्च ब्रह्मनिर्ण-यस्य बहुश्रुतिन्यायापेक्षत्वान्नैकाकिना संभव इति तेनाप्यस्य गुरावर्थित्वं घटत इत्यर्थः ॥ ७० ॥

अ० टी०—नन्वेवमपि यस्योक्तसाधनसंपत्तिवशादुत्कटा मोक्षेच्छा जायते स किमिति गुरुमुपसीदेत्स्वयमेव वेदार्थं कस्मान्न कल्पयेत्स्वयं व्युत्पन्नबुद्धित्वादिति चेन्नेत्याह—धर्मनिर्णयनिमित्तमिति । मानवे धर्मशास्त्रे दशावराणां परिषदित्यादौ वेदार्थविदां पर्षत्सभा धर्मनिर्णयनिमित्तमिष्यते । संदिग्धस्य धर्मस्य निश्चयकरणं तत्संशयनिराकरणेन निर्णयस्य समर्थो विद्वत्समागम एवेति यथाऽवगतम् । मानव इत्युपलक्षणं धर्म-शास्त्रान्तरस्यापि ।

तथा च याज्ञवल्क्यः—

' चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ' इति ।

तथा च यथा स्वयं तर्कितस्य धर्मस्य निर्णयाय तद्विदसमागमोऽर्थ्यते तद्वदस्य मुमुक्षोः स्वयमापातालोचनयोत्प्रेक्षिततत्त्वस्य निर्णयाय गुरुणा तत्त्वनिर्णयसमर्थेन विदुषा संगतिरिष्यत इत्यनुषङ्गः । तथा च धर्मशास्त्रोक्तन्यायात् ' नैषा तर्केण मतिरापनेया

प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' [ कठो० २।९ ] इत्यादिश्रुतेश्च येन हेतुना विद्वद्वारे-वार्थनिर्णयः कार्य इत्यवगतं तेन चास्य गुरावर्थिता घटत इति युक्तमेवोक्तमुपससादे-त्यत्रेत्यर्थः ॥ ७० ॥

ननु यथा पूर्वतन्त्रे 'अथातो धर्मजिज्ञासा' [ जै० १।१।१ ] इत्यत्राध्ययनविधेरर्थबोधान्तत्वात्स्नानस्मृतिमतिक्रम्य वेदाध्ययनानन्त-र्यमथशब्दार्थ उक्तस्तथेहाप्याद्यसूत्र उपनिषदध्ययनान्तर्यस्यैवाथश-ब्दार्थसंभवात्। तथा ब्रह्मविचारस्य निवृत्तेर्वा कर्मिष्वपि संभवेन धर्माधिकारिविलक्षणाधिकर्तव्यविषयाभावाच्च किमधिकारिभेदकल्प-नया शास्त्रभेदव्युत्पादनेनेत्यत आह—

य: कर्मकाण्डविषयेऽभिहितोऽधिकारी
सोऽयं प्रवृत्तिषु निवृत्तिषु तुल्यरूपः।
अत्राभिधित्सितविशेषणपूगयुक्तोऽ-
साधारणस्त्वभिमतः पुरुषो निवृत्तौ ॥ ७१ ॥

यः कर्मेति। कर्मकाण्ड उक्तो योऽर्थी विद्वान्समर्थः शास्त्रापर्युदस्तोऽ-धिकारी सोऽयं यागादिप्रवृत्तिषु ब्रह्मवधादिनिवृत्तिषु च तुल्यः। स ह्यविवेकी स्वल्पसुखप्राप्त्यैव कृतार्थमात्मानं पश्यन्कर्मैकतानचेताः पूर्णानन्दब्रह्मविमुखः। यद्व्युदासार्थमथातःशब्दौ विनिवेशितौ मुनिना। अत्र तु काण्डेऽभिधित्सितं यद्विशेषणजातं विवेकवैराग्यशमादिसंपन्मु-मुक्षुत्वादि तद्युक्तः पुनरधिकारी कर्मपरिहारेण ब्रह्मविद्यैकपरः केवल-निवृत्तिविषयत्वादुभयसाधारणात्कर्माधिकारिणो भिद्यत इत्यतोऽत्राथ-शब्देन ब्रह्मजिज्ञासां प्रत्यव्यभिचारितया योग्यत्वेन साधनानन्तर्यमेवो-च्यते न त्वध्ययनानन्तर्यं तस्य नित्यविधिप्राप्तस्याक्षरग्रहणान्ताया वक्ष्यमाणत्वेन श्रवणविधिप्रयुक्तविचाराप्रयोजकत्वाद्व्यवहितत्वाच्चेति न शास्त्रैक्यसंभावनाऽपीति भावः ॥ ७१ ॥

अ० टी०—ननु कोऽस्याधिकारिणोऽधिकर्तव्यो विषयो धर्माधिकारिविषयविलक्षणो येनात्र धर्माधिकारिविलक्षणोऽधिकार्यपेक्ष्यते। न च प्रत्यक्त्वब्रह्मविचारस्तस्य कर्मिभिरपि कर्मानुष्ठान-

---

१ क. ग. °धायत्तत्वा°:

च्छिद्रेषु कर्तुं शक्यत्वात्तदर्थं पृथगधिकार्यनपेक्षणात् । नापि संसारनिवृत्तिरत्राधिकर्तव्यो विषयस्तस्या अप्यौदासीन्यरूपाया निषिद्धनिवृत्तिवत्कर्मिष्वपि संभवादिति चेत्तत्राऽऽह—यः **कर्मकाण्डविषय इति**। अर्थी समर्थो विद्वाञ्शास्त्रेण पर्युदस्त इति विशेषणवत्तया कर्मकाण्डे योऽधिकार्यभिहितः सोऽयं कर्मकाण्डे विधिप्रतिषेधाभ्यामुक्तप्रवृत्तिनिवृत्तिषु सम इति तावन्मात्रमेव तस्याधिकर्तव्यो विषयः। अत्र निवृत्तौ तु संसारनिवृत्तिनिमित्ते ब्रह्मतत्त्वविचाररूपे विषय इति यावत्। अभिधित्सितविशेषणपूगयुक्तोऽथशब्देनाऽऽनन्तर्यार्थेन सूत्रकारैरभिधातुमिष्टो यो विशेषणपूगोऽसाधारणविशेषणगणो भाष्यकारैः प्रकटीकृतस्तेन युक्तो विशिष्टोऽसाधारणः पूर्वकाण्डाधिकारिविलक्षणः पुरुषोऽधिकार्यभिमत इति भवति भेद इत्यर्थः । कर्मानुष्ठाननिष्ठो जात्याद्यभिमानवान्क्रियाकारकफलभेददर्शी च । न तेन तद्विरुद्धब्रह्मात्मचिन्तनं कर्तुमुचितं तस्मिन्सति कर्माधिकारोपमर्दात्पुनः कर्मणि प्रवृत्त्यनुदयात्परिशेषादकर्मिविशेषगोचर एव ब्रह्मविचारः सर्वप्रवृत्त्यौदासीन्यलक्षण इति विषयभेदसिद्धावधिकारिभेदसिद्धिरिति भावः ॥ ७१ ॥

**सु० टी०—ननु तथाऽपि किमधिकारिकल्पनानिर्बन्धेन शास्त्रद्वयमपि साधारणाधिकारिकमेव किं न स्यादिति चेन्न शास्त्रप्रवृत्तिवैलक्षण्यदर्शनादित्याह—**

> **शास्त्रं प्रवृत्तिषु निवृत्तिषु तुल्यरूपं**
> **साधारणस्य पुरुषस्य पुराऽभ्यधायि ।**
> **अस्योच्यते सकलकर्मनिवृत्तिभाजः**
> **सर्वं निवृत्तिविषयं श्रवणादिशास्त्रम् ॥ ७२ ॥**

शास्त्रमिति । **साधारणस्य रागिणः पुरा पूर्वतन्त्रेऽभ्यधायि जैमिनिनेति शेषः। अत्र विरक्तस्य संन्यासिनः प्रवृत्तिपर्युदासेन केवलनिवृत्तिविषयं श्रवणादिशास्त्रमुच्यते बादरायणेनेति शेषः । सर्वमिति सर्ववेदान्तप्रत्ययत्वादेकवाक्यताभिप्रायम् ॥ ७२ ॥**

अ० टी०—ननु किमत्रोक्तव्यवस्थायां प्रमाणमिति चेच्छास्त्रवैलक्षण्यदर्शनमेवेत्याह—**शास्त्रं प्रवृत्तिष्विति** । पुरा पूर्वकाण्डे साधारणस्य पुरुषस्य विधिनिषेधयोः सामान्याकारेणाधिकृतस्य त्रिवर्गप्रधानस्येति यावत् । विधिविहितप्रवृत्तिषु निषेधकृतनिवृत्तिषु च तुल्यरूपं साधारणस्वभावं शास्त्रं प्रवृत्तमित्यर्थः । वर्णाश्रमवयोवस्थाद्यभिमानवत्पुरुषाधिकारकं प्रयत्नसाध्यक्रियाफलपरं शास्त्रं पूर्वं प्रवृत्तमित्युक्तं भवति । अत्रोत्तर-

---

१ क. ग. °भावः ।

काण्डे त्वस्योक्तविशेषणस्य सकलकर्मनिवृत्तिभाजः सर्वकर्मतत्फलसाधनेभ्यो निवृत्तिं मनोवैमुख्यं भजतस्त्यक्तसर्वैषणस्य वर्णाश्रमाद्यभिमानशून्यस्य संन्यासिनः सर्वं श्रवणादिशास्त्रं निवृत्तिविषयमेवोच्यते न पुनः श्रोतव्य इत्यादावपि तव्यादीनां प्रवृत्तिपरत्वमस्तीत्यर्थः ॥ ७२ ॥

सु० टी०—ननु कर्मब्रह्मरूपविषयभेदादपि शास्त्रभेदसिद्धौ किमधिकारिभेदेनेत्याशङ्कयाऽऽह—

शास्त्रद्वैविध्यदृष्टेर्द्विविधमधिकृतेर्भेदमप्याश्रयन्ते
तद्द्वैविध्योपलब्धेः पुरुषमधिकृतं शास्त्रयोर्भिन्नमाहुः ।
शास्त्रार्थद्वित्वहेतोः पुरुषमधिकृतं तद्गतं चाधिकारं
नो चेद्भिन्नं प्रतीयुर्द्विविधमिह वृथा शास्त्रमापद्यते हि ॥ ७३ ॥

शास्त्रेति । विषयमात्रभेदाच्छास्त्रभेदेऽतिप्रसङ्गादवश्यं फलभेदो वक्तव्यस्ततश्च तत्स्वाम्यलक्षणोऽधिकारः सुतरां भिद्यते तद्भेदे च तदाश्रये पुरुषभेदोऽयत्नासिद्ध इत्याह—तद्द्वैविध्येति । ततश्च शास्त्रार्थभेदसिद्धिमात्रावष्टम्भेनाधिकारिभेदानभ्युपगमे शास्त्रद्वयवैयर्थ्यं स्यादिति प्रतिकूलतर्कमाह—शास्त्रार्थेति ॥ ७३ ॥

अ० टी०—ननु कथमेवमुक्तविषयशास्त्रप्रवृत्तिद्वैविध्यमात्रं तयोरधिकारिभेदे मानमिति चेदन्यथानुपपत्त्येत्याह—**शास्त्रद्वैविध्येति** । यत्र शास्त्रस्य द्वैविध्यमस्ति तद्दर्शनादेवाधिकृतेरधिकारस्य विधिपुरुषसंबन्धादिरूपस्य द्विविधं भेदमप्याश्रयन्ते न्यायविद इति शेषः । आश्रयमन्तरेणोक्ताधिकारासंभवात्तस्याधिकारस्य द्वैविध्योपलब्धेर्हेतोः शास्त्रयोरधिकृतं पुरुषं भिन्नमाहुस्त एवेत्यर्थः । नन्वेतच्छास्त्रभेदसिद्धौ सिध्येत्स एव कथमित्यत आह—**शास्त्रार्थद्वित्वहेतोरिति** । पूर्वोत्तरकाण्डशास्त्रयोरर्थद्वित्वं तावत्तत्तद्वाक्यगतिपर्यालोचनायां प्रसिद्धं धर्मब्रह्मलक्षणं साध्यासाध्यरूपमत एवमर्थभेदानुपपत्त्या शास्त्रभेदः सिद्ध इत्यर्थः । यथा कर्मकाण्डमध्येऽपि तत्तद्विधिफलरूपार्थभेदाच्छास्त्रभेदस्तदधिकारभेदद्वाराऽधिकारिभेदोऽपि प्रसिद्धस्तथेहापीति युक्तम् । विपक्षे दोषमाह—**नो चेदिति** । शास्त्रार्थद्वित्वहेतोः प्राप्तं शास्त्रं तन्निमित्तमधिकारिणं तद्गतं चाधिकारं भिन्नं पृथगेव चेन्न प्रतीयुर्नाभ्युपगच्छेयुस्तदा द्विविधमपि शास्त्रं वृथा व्यर्थत्वमापद्यते हि निश्चितमिति योजना । अधिकारिणः प्रमितिजनको वेद इतिन्यायाद्विरुद्धार्थयोश्च वेदभागयोरेकस्मिन्पुरुष एकदैव स्वार्थसमर्पकत्वासंभवात्प्रतिपत्तृभेदाभावे काण्डद्वयमप्यप्रमाणं भवेदिति भावः ॥ ७३ ॥

सु० टी०—तथाऽपि नाधिकारिभेद एतच्छास्त्रस्यापि यमनियमादिरूपप्रवृत्तिनिवृत्तिविषयत्वादित्याशङ्क्याऽऽह—

यमनियमविधानैर्वाङ्मनःकायचेष्टा-
व्युपरमणविशेषैः कथ्यते न प्रवृत्तिः ॥
यदि भवति कदाचित्काचिदस्य प्रवृत्तिः
श्रुतिविहितनिवृत्तेः कर्मणां कत्थनं स्यात् ॥ ७४ ॥

यमनियमेति । अहिंसादियमविधिभिः शौचादिनियमविधिभिश्च वाङ्मनःकायव्यापारोपरम एव बोध्यते न प्रवृत्तिलेशोऽपि व्याख्यास्यत इत्यर्थः । यदीति । प्रवृत्तिप्रतिपादने हि 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' [ बृह० ३ । ५ । १ ] 'त्यागेनैके अमृतत्वमानशुः' [ महाना० १० । ५ ] इत्यादिश्रुतिविहितायाः सर्वकर्मणां निवृत्तेर्व्याकुलीभावः स्यादित्यर्थः ॥ ७४ ॥

अ० टी०—यदुक्तमस्योच्यत इत्यत्र सर्वं श्रवणादिशास्त्रं निवृत्तिविषयमेवेति तत्कथमुपपद्यते संन्यासिनोऽपि यमनियमादिविषयप्रवृत्त्युपदेशदर्शनादिति चेत्तत्राऽऽह—यमनियमविधानैरिति । यमादिविधानैस्तदुपदेशपरैः शास्त्रैरशेषैर्यतिविषयैस्तस्य वाङ्मनःशरीराणां स्वाभाविकप्रवृत्तिरूपचेष्टाव्युपरमणं निवृत्तिरेव कथ्यते न प्रवृत्तिरिति योजना । कथमित्थमर्थनिर्णय इत्याशङ्क्य संन्यासविधिश्रुतिवशादित्याह—यदि भवतीति । 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' [ बृह० ३ । ५ । १ ] इत्यादौ लोकत्रयसाधनरूपसकलकर्मणां या श्रुतिविहिता निवृत्तिरननुष्ठानलक्षणा तस्याः कत्थनं वृथाश्लाघनं नैरर्थक्यमेव तदा स्यादिति योजना । यतेरपि विषयत्वे मुमुक्षोः सर्वकर्मसंन्यासविधिशास्त्रविरोधप्रसङ्गः स्यादित्यर्थः ॥ ७४ ॥

सु० टी०—तथाऽपि श्रवणादिविधीनां प्रवृत्तिपरत्वान्नोक्तनियम इत्याशङ्क्याऽऽह—

औदासीन्यविशेषमेव हि परब्रह्मात्मधीजन्मने
शास्तीदं श्रवणादिशास्त्रममुना त्वाक्षिप्यते व्यापृतिः

---

१ क. याः भंतक° ।

**तां तां व्यापृतिमन्तरेण घटते सा सा न शास्त्रार्थधी-**
**रित्यर्थाल्लशुनादिभक्षणगतौदासीन्यबोधादिव ॥ ७५ ॥**

औदासीन्येति । इदं श्रोतव्यं इत्यादि शास्त्रं ब्रह्मात्मैक्यज्ञानोत्पत्तयेऽनात्मश्रवणादिविरोधिक्रियानिवर्तनात्मकमौदासीन्यविशेषमेव विधत्ते न क्वचित्कर्मणि प्रवृत्तिं 'संन्यस्य श्रवणं कुर्यात्' इति सर्वकर्मन्यासपूर्वकत्वविरोधादित्यर्थः । तर्हि गुरूपसर्पणशास्त्रार्थनिर्णयादिष्वपि न प्रवर्तेतेति चेत्तत्राऽऽह—अमुनेति । ब्रह्मात्मज्ञानोत्पादकेनौदासीन्येनैव स्वान्यथानुपपत्त्या गुरूपसत्त्यादिव्यापार आक्षिप्यते लशुनपरस्त्रीसेवानिषेधेनेव तत्क्रियायामौदासीन्यं बोधयता तत्परिपालनान्यथानुपपत्त्या लशुनदोषचिन्तनरूपः परस्त्रियां च मातृबुद्धिरूपो व्यापार इति ॥ ७५ ॥

अ० टी०—ननु संन्यासशास्त्रेण लोकत्रयसाधनसर्वकर्मविधिगोचरत्वाभावावगमेऽपि यतेः स्वाभिलषितमोक्षसाधनज्ञानानुकूल्यमनियमादिपूर्वकश्रवणादिव्यापारविधिगोचरत्वे को दोष इतिचेदकर्त्रात्मज्ञानानुदय एवेत्यभिप्रेत्याऽऽह—**औदासीन्यविशेषमेव हीति ।** 'आत्मा वा अरे द्रष्टव्यः' [ बृह० २ । ४ । ९ । ] इत्यात्मनो दर्शनार्हत्वोक्तिपरेणानेनाऽऽत्मसाक्षात्कारं फलमुद्दिश्य तादर्थ्येन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [ बृ० २ । ५ । ] इत्यादि यत्परब्रह्मात्मधीजन्मने कृतसंन्यासस्य पुंसः श्रवणादिविधायि शास्त्रं तदिदमौदासीन्यविशेषमेव हि शास्ति न प्रवृत्तिं यतो व्यापृतिः श्रवणादिविषयो व्यापारोऽमुना त्वौदासीन्यविशेषशासनेनाऽऽक्षिप्यतेऽर्थान्निर्दिश्यते न साक्षादिति योजना । औदासीन्यविशेषशब्देन सकृत्परित्यक्तसजातीयस्य कर्मणः पुनः प्रसङ्गो यथा न भवति तथाऽवस्थानं विवक्षितमेवंविधमौदासीन्यं न श्रवणाद्यात्मज्ञाननिष्ठां विना सम्यगवतिष्ठते यतो 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' [ भ० गी० ३ । ५ ] इतिन्यायेन सर्वथा कर्मनिरोधस्याशक्यत्वमवगतमतः संन्यासशास्त्रावगतसर्वकर्मनिवृत्त्यौदासीन्यमेव श्रवणादिशास्त्रैः प्रतिपाद्यते न पुनस्तत्र पुरुषः प्रेर्यते । तथा चाकर्त्रात्मतत्त्वज्ञानानुवृत्तिं विना यथोक्तौदासीन्यस्यासंभवात्तादृग्ज्ञानस्य च वेदान्तेभ्योऽन्यतोऽसिद्धेर्वेदान्तालोचनमर्थसिद्धं तदालोचनदशायां यद्यर्थान्तरप्रतिभासादिनिमित्तः संशयोद्भवस्तदा विना श्रवणं तन्निवृत्त्यौदासीन्यं नोपपद्यत इत्यर्थसिद्धं श्रवणम् । तथा श्रुतार्थस्यासंभावितत्वप्रतिभासदशायां मननं श्रुते मतेऽप्यर्थे विपरीतभावनाव्यवधानेनौदासीन्यच्युतौ निदिध्यासनमित्येते अप्यर्थसिद्धे भवत इत्येतमर्थमाह—**तां तां व्यापृतिमिति** । इति हेतोरर्थाच्छ्रवणादिनिष्ठा सिद्धिरिति योजना । तथा चार्थसिद्धेऽर्थे न साक्षाद्विधिप्रवृत्तिरित्यतो न यतेः क्वापि गोचर-

१ क. व्यापि ।

त्यर्थः । अत्र दृष्टान्तमाह—लशुनादीति । यथा स्वभावप्राप्तलशुनभक्षणस्य प्रतिषेधे सति तद्भक्षणनिवृत्त्यौदासीन्यपरिपालनं भक्षणविरोधिसंकल्पक्रियां विना न निश्चलो भवतीत्यर्थप्राप्ता सा क्रियेति तद्वदित्यर्थः । तस्माच्छ्रवणादिशास्त्रस्य संन्यासशास्त्रार्थादर्थान्तरविषयत्वाभावान्न प्रवृत्तिविशेषपरत्वम् । एवं च मुमुक्षोः कृतसंन्यासस्य वेदान्तश्रवणाद्यभावे प्रत्यवायश्रवणं यथोक्तनिवृत्त्यतिक्रमनिमित्तमेव श्रवणाद्यकरणनिमित्तमिति भावः ॥ ७५ ॥

सु० टी०—तर्हि निषेधशास्त्रस्य परिपालनपर्यन्तत्वात्कथं न प्रवर्तकत्वमौदासीन्यमात्रपरत्वाभावादित्याशङ्क्य दृष्टान्तमुपपादयति—

औदासीन्ये बोधिते शास्त्रवृन्दै-
रर्थादस्मात्प्रच्युतस्यास्त्यनर्थः ॥
इत्यालोच्य प्रच्युतेः प्रापकस्य
प्राबल्येऽर्थे प्रातिलोम्यं विधत्ते ॥ ७६ ॥

औदासीन्य इति । न परिपालनं तत्र शास्त्रार्थो लक्षणाप्रसङ्गात्किं तु निवृत्तिमात्रे निषेधशास्त्रेण बोधिते ततः प्रच्युतस्य निषिद्धानुष्ठातुरनर्थोऽस्ति लशुनाशनादेरापातत इष्टहेतुत्वेऽपि बलवदनिष्टाननुबन्धित्वं नास्तीत्येतन्निवर्तनान्यथानुपपत्त्यैव निश्चित्य प्रच्युतिप्रापकस्य रागादेः प्राबल्य औत्कट्ये सति तदर्थे तद्विषये निषिद्धानुष्ठाने प्रातिलोम्यं विपरीतसंकल्पं स्वयमनुतिष्ठति न शास्त्रादित्यर्थः ॥ ७६ ॥

ननु श्रवणादिशास्त्रं किमौदासीन्यविशेषमात्रे पर्यवसितं किं वा तत्परिपालनानुकूलायां प्रवृत्तावपीति वक्तव्यम् । तत्राऽऽद्ये श्रवणानर्थक्यं संन्यासविधिनैव तत्सिद्धेः । न द्वितीय उभयपरत्वे वाक्यभेदापत्तेरन्यतरपरत्वे च प्राप्तेऽर्थे वैयर्थ्यात्प्रवृत्तिपरतैव स्यादिति भवेदेव यतेर्विधिगोचरत्वमिति चेन्मैवमर्थतोऽपि प्राप्तेऽर्थे विध्यसंभवस्योक्तत्वात्संन्यासशास्त्रस्याप्यौदासीन्यस्यानात्मदर्शनवासनाभिः प्रच्याव्यमानस्य तत्प्रच्युतिहेतुद्भवविरोधितया पुनः प्रकारान्तरोपदेशस्यापेक्षितत्वाच्च वैयर्थ्याभावादित्यभिप्रेत्याऽऽह—औदासीन्ये बोधित इति । शास्त्रवृन्दैः संन्यासशास्त्रशतैर्मुमुक्षोरनात्मविषयसर्वप्रवृत्त्यौदासीन्ये बोधिते सत्यर्थादौदासीन्यविधानसामर्थ्यादस्मादौदासीन्यात्प्रच्युतस्यानर्थोऽस्तीत्यवसीयते । अन्यथौदासीन्यविधाने शास्त्रस्य यत्नाधिक्यासंभवादित्यालोच्य प्रच्युतेरौदासीन्यविच्छित्तेः प्रापकस्य हेतोर्यत्प्राबल्यमुद्रेकस्तस्मिन्सति तदर्थे तत्फले यत्प्रातिलोम्यं तदभिभवलक्षणं तद्विधत्ते श्रवणादिशास्त्रमिति योजना । तथा चौदासीन्यपरिपालनानुकूलव्यापारत्वाच्छ्रवणादीनां न प्रवृत्तिपरत्वमित्यर्थः ॥ ७६ ॥

सु० टी०—ननु निवृत्तिः कर्तव्येति बोधितेऽपि कुतः प्रवृत्तेरनर्थ-हेतुत्वमित्याशङ्क्य दार्ष्टान्तिके साधयति—

औदासीन्यं बोधयच्छास्त्रमेत-
न्नित्यं पथ्यं बोधयत्यस्य पुंसः ॥
पथ्यादस्मात्प्रच्युतस्यास्त्यपथ्यं
बुद्ध्वा पथ्यं प्रातिलोम्ये यतेत ॥ ७७ ॥

औदासीन्यमिति । एतद्धि शास्त्रं श्रोतव्य इत्यादिकमनात्मविचारवर्जनं बोधयत्तस्य पुंसो नित्यमात्यन्तिकं पथ्यमिति बोधयति ज्ञानद्वारा मुक्ति-हेतुत्वात् 'अन्या वाचो विमुञ्चथामृतस्यैष सेतुः' [मुण्ड० २।२।५] इति श्रुतेः । तच्च तदा यद्यस्मात्प्रच्युतस्यानात्मश्रोतुरनिष्टं संसरणं भवति तच्चापथ्यं बुद्ध्वा प्रातिलोम्ये तन्निवर्तने यतेतेत्यर्थः ॥ ७७ ॥

अ० टी०—ननु किमित्येवमौदासीन्यलक्षणायां सर्वक्रियानिवृत्तावेव सर्वविधीनां तात्पर्यं कल्प्यते प्रवृत्तिपरत्वैषां यथावगमं कस्मान्नाभ्युपगम्यत इत्याशङ्क्य प्रवृत्ते रागादि-मूलकत्वाद्रागादेश्चानर्थहेतुत्वाच्छास्त्रस्य तत्परत्वे पुरुषहितशासनस्वरूपता हीयेतानर्थकारि-ताऽप्यापद्येतेत्यभिप्रेत्यौदासीन्यपरत्वं साधयति—औदासीन्यं बोधयदिति । एतत्सं-न्यासयमनियमश्रवणादिबोधकं शास्त्रमस्य पुंसो नित्यं पथ्यं हितं बोधयति । यद्यपि पुमा-न्प्रवृत्तिसाध्यमेव सद्यःसुखत्वाद्धितं मन्यते तथाऽपि तत्परिणामे दुःखरूपत्वान्न हितम् । निवृत्तिसंसिद्धं त्विदानीं दुःखमिव भासमानमपि परिणामेऽक्षयसुखत्वात्तदेव हितमिति मातेव पुत्रहितैषिणी शास्त्रमेतन्निवृत्त्युपदेशेन नित्यं हितमेवोपदिशतीत्यर्थः । तस्मादस्माद्रागप्र-युक्तप्रवृत्त्यौदासीन्यलक्षणात्प्रच्युतस्यापथ्यमहितं संसाराविच्छेदरूपमस्त्येवे । एवं पथ्यं बुद्ध्वा प्रातिलोम्य औदासीन्यप्रच्युतिकरस्य कर्मफलरागादेः प्रतिबन्धने यतेत बुद्धिमानि-त्यर्थः ॥ ७७ ॥

सु० टी०—ननु कथं श्रवणादिशास्त्राण्यपि निवृत्तिपराणि व्याख्या-यन्ते संन्यासशास्त्रादिति चेन्न तस्य काम्यादिनिवृत्तिपरत्वेनाप्युपप-त्तेरित्याशङ्कां निवर्तयन्नुपसंहरति—

वृत्ता प्रवर्तकनिवर्तकशास्त्रसिद्ध्यै
षष्ठे प्रवृत्तिविनिवृत्त्यधिकारिचिन्ता ॥

१ क. कारचि° ।

अत्रैकमेव तु निवृत्त्यधिकारमार्ग-

माश्रित्य सूत्रकृदथात इह प्रवृत्तः॥ ७८ ॥

वृत्तेति। षष्ठे हि प्रवृत्तिनिवृत्तिसाधारणाधिकारचिन्ता वृत्ताऽस्यापि शास्त्रस्य तथात्वे पृथगिदमनारभ्यं स्यादित्यतोऽत्र निवृत्तिमात्राधिकाराश्रयेणैव सूत्रकारः प्रववृत इति श्रवणादिशास्त्राण्यपि तथा व्याख्यातानीत्यर्थः॥ ७८॥

अ० टी०—अवश्यं चैतदभ्युपगन्तव्यमन्यथा पूर्वोत्तरतन्त्रयोः पृथगधिकारिनिरूपणानर्थक्यप्रसङ्ग इत्याह—वृत्ता प्रवर्तकेति। पूर्वतन्त्रे षष्ठेऽध्याये याऽधिकारिचिन्ता वृत्ता संवृत्ता सा प्रवर्तकनिवर्तकरूपविधिनिषेधात्मकशास्त्रसिद्ध्यै न सर्वशास्त्रस्य ज्ञानकाण्डरूपस्यापि सिद्ध्यर्थमित्यर्थः। अत्र तूत्तरे तन्त्र एकमेव निवृत्त्यधिकारमार्गं सर्वानात्मविषयप्रवृत्तिविमुखतापरिपालनलक्षणमाश्रित्याङ्गीकृत्य 'अथातो ब्रह्मजिज्ञासा' [ब्र० १।१।१] इत्यस्मिन्सूत्रेऽथातः-शब्दाभ्यामधिकारिविशेषं निरूपयितुं सूत्रकृद्भगवान्वेदव्यासः प्रवृत्त इति योजना। एतदुक्तं भवति—वेदान्तशास्त्रमपि चेत्प्रवृत्तिनिवृत्तिपरमेव स्यात्तदा पूर्वतन्त्रोक्त एवार्थित्वादिमात्रविशेषण इहाप्यधिकारी सिद्ध एवेति पृथगधिकार्यपेक्षाभावात्पुनरिह तद्विशेषनिरूपणमनर्थकं प्रसज्येत। न चैतद्युक्तं यतः कर्माधिकारिण एव ब्रह्मविचाराधिकारे प्रयाजाज्यावेक्षणादिवद्गोदोहनादिवद्वा ब्रह्मज्ञानस्य कर्माङ्गत्वमनित्यफलत्वं वा तदा प्रसज्येत। कर्मप्रवृत्त्युपमर्दो वाऽवश्यं स्यात्। ब्रह्मविचारे प्रवृत्तस्याकर्त्रभोक्तृ ब्रह्माहमस्मीत्येवमात्मानं भावयतोऽहं कर्ता ममेदं कर्मेति विरुद्धप्रतिपत्तेर्बाधितत्वात्। अतोऽथातःशब्दाभ्यां विशिष्टाधिकारिणमिह निरूपयन्सूत्रकारः सर्वकर्मप्रतिषेधमात्रनिष्ठालब्धब्रह्मज्ञानपरं वेदान्तशास्त्रं मन्यत इति गम्यते। तदनुरोधेन श्रवणादिशास्त्रमपि निवृत्तिपरमेवेति मुमुक्षोः सर्वकर्मसंन्यासरूपसर्वक्रियौदासीन्यबोधकशास्त्राक्षिप्ता श्रवणादिप्रवृत्तिरिति॥ ७८॥

सु० टी०—ननु कथं सर्वकर्मनिवृत्तिः शास्त्रार्थः शास्त्रप्राप्तानां प्रतिषेधासंभवादित्यत्राऽऽह—

औदासीन्यप्रच्युतेः प्रापकौ च रागद्वेषौ नापरो हेतुरस्ति।

रागद्वेषप्रातिलोम्ये प्रवृत्तिरौदासीन्यप्रापणाच्छास्त्रतोऽर्थात्॥७९॥

औदासीन्येति—विधिशास्त्रस्य प्रवर्तकत्वे हि तन्निषेधो दुर्घटः स्यात्। न च शास्त्रं प्रवर्तकं न च प्रवर्तना विध्यर्थः किं त्विष्टसाधनत्वम्। एतदेवाऽऽह—सर्वस्या औदासीन्यप्रच्युतेः प्रवृत्तेरिति यावत्। रागद्वेषा-

---

१ क. इति प्र°।

वेव हेतू इति न विधिशास्त्रं प्रापकमप्राप्तप्रापकं हि तत् । किं च हितशासकं शास्त्रं न च स्वर्गादि पुरुषस्य वस्तुतो हितं बन्धहेतुत्वात् । किं त्वनादिविपर्यवासितान्तःकरणस्य मूढस्य तदेव परमोपादेयत्वेनाभिलपतस्तदुपायं चाजानतो यागादिकमस्योपाय इत्येतावन्मात्रबोधनपरशास्त्रं न प्रवर्तकम् । पुरुषाशयानुसारी च वेदः प्रथमं काम्यानि ततः शुद्धिप्रधानानि कर्माणि प्रतिपाद्य तैः शुद्धसत्त्वस्य ज्ञानकाण्डे ब्रह्मनिष्ठामेव तात्पर्यतोऽभिधत्त इति रागादिमूलत्वात् प्रवृत्तेस्तत्प्रातिलोम्ये तद्विपरीतसंकल्पादौ या प्रवृत्तिः सा निवृत्तिप्रापकाच्छास्त्रादर्थाद्भवतीत्यर्थः ॥ ७९ ॥

अ० टी०—यत्पूर्वमुक्तमौदासीन्यप्रच्युतेः प्रापकप्रवृत्तिनिरोधद्वारा श्रवणादेरपि निवृत्तिपरत्वमिति तत्रौदासीन्यप्रच्युतिप्रापकोऽर्थः क इत्यपेक्षायां तं व्युत्पादयन्नुपपादितमर्थमुपसंहरति—**औदासीन्यप्रच्युतेरिति** । यतः स्वाभाविकौ रागद्वेषावेवौदासीन्यप्रच्युतेः प्रापकावन्वयव्यतिरेकानुगृहीतानुभवसिद्धौ नापरः शास्त्रसिद्धो हेतुरस्ति तदनुपलम्भात् । अतो रागद्वेषप्रातिलोम्ये प्रतिकूलनार्थं या श्रवणादौ प्रवृत्तिः सा त्वौदासीन्यप्रापणाच्छास्त्रतोऽर्थात्सिद्धेति योजना । इदमत्र तात्पर्यं चिदात्मा स्वभावत एव नित्यमुक्तो निर्मलो निरतिशयानन्दज्ञानसन्मात्ररूपोऽप्यनाद्यनिर्वाच्ययाऽविद्यया स्वाभाविकया स्वात्मनि कल्पितयाऽऽवृतनिजतत्त्वस्तत्कृतानेकविक्षेपरूपसमष्टिव्यष्टिस्थूलसूक्ष्मदेहेष्ववभासकतयाऽनुगतस्वाभासाविवेकात्तत्र तत्राहंममाभिमानं कुर्वन्परिच्छिन्नमात्मानं मन्यमानः प्राप्तानर्थोऽप्राप्तपुरुषार्थश्चास्मि बद्धो दुःखीति च संतप्यते । तदा संतापहरमुपायमन्वेषमाणः शब्दादीन्बाह्यान्विषयान्प्राप्यैव थि[नि] वृत्तपरिताप इदमेव मम दुःखनिवृत्तिसुखाप्त्योः साधनमिति पुनःपुनस्तदर्थमीहमानः स्वाभाविकप्रवृत्तिप्राबल्याच्छास्त्रनिषिद्धमप्यनुतिष्ठंस्तत्कर्मपरिपाकविशेषवशान्नरकतिर्यगादिस्थावरान्तमधोऽधः संसरति । यदा पुनः कथंचिद्यादृच्छिकपुण्योद्बोधवशात्प्रायः स्वाभाविकनिषिद्धप्रवृत्तिविमुखो दुःखं सर्वं निषिद्धक्रियानुष्ठानप्रयुक्तमेवेति मन्यमानो वेदेभ्य एवाऽऽत्मनः श्रेयोऽभिलषति तदाऽपि वर्णाश्रमवयोवस्थाद्यभिमाननिमित्ताविद्यादिदोषाभिभूतत्वाक्रियाकारकसाध्यमेव पुरुषार्थं मन्यते । तत्र केन साधनेन मयैहिकमामुष्मिकं च श्रेयः संपाद्यमिति बुभुत्सयाऽवस्थितं पुरुषमधिकारिणं तत्तदर्थकामिनमालोक्य विधिप्रतिषेधशास्त्रं तस्य सुखदुःखावाप्तिहानिसाधनमुपदिशदपि न तावन्मात्रे पर्यवसानं प्राप्नोति किंत्विदानीमयमस्मन्नियन्त्रिततया मार्गस्थस्तावद्भवत्विति हि तदा मन्यते शास्त्रं न पुनः पुरुषप्रवृत्तौ तस्य तात्पर्यमस्ति विनाऽपि शास्त्रबोधात्फलरागादेव तस्य प्रवृत्तत्वादतः शास्त्रं तस्याज्ञातमुपायमात्रं बोधयति न तत्र प्रवर्तयति प्रमाणस्याकारकत्वात् । एवं प्रवर्तमानोऽपि न निरतिशयं श्रेयो लभते तच्चाभियाञ्छतीति तदुपायश्रद्धां तस्याऽऽ-

लक्ष्य तत्राधिकारसिद्धये निष्कामाणि कर्माणि कानिचिदावश्यकानि वर्णाश्रमाद्यनुबन्धीनि बोधयति । तान्येवातितरामनेकजन्मस्वनुष्ठितानि परमेश्वरानुग्रहार्थानि कदाचिदस्य स्वान्तमत्यन्तं निर्मलीकृत्याऽऽत्मतत्त्वज्ञानादन्यतो न परमानित्यनिरतिशयश्रेयःप्राप्तिरस्तीति तदेव मया संपाद्यं सर्वमेव कर्मसाध्यफलमनित्यपुरुषार्थसाधनत्वात्त्याज्यमित्येवं विवेकादिकं जनयन्ति यदा तदा वेदः स्वाभिमतपरमश्रेयोऽर्थिनं मुमुक्षुमालक्ष्य तस्य सर्वकर्मनिवृत्तिलक्षणं परममौदासीन्यं 'सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी' [गी० ५ । १३] इति भगवतोक्तरूपं संन्यास्यभिलषितार्थसाधनमुपदिशति । तच्चौदासीन्यं निर्विकारात्मस्वभावानुसंधानं विना न स्थिरी भवतीत्यर्थात्तदर्थं वेदान्तश्रवणादि प्राप्तमन्यस्यासंभवादित्येतत्पर्यन्तं साधनबोधाय प्रवृत्तं शास्त्रं निवृत्तिपरमेव न प्रवृत्तिपरमिति ॥ ७९ ॥

सु० टी०—नन्वस्तु दृष्टार्थेषु श्रवणादिशास्त्रेषु निवृत्तिनिष्ठत्वेऽप्यर्थात्प्रवृत्तिसिद्धिरदृष्टार्थेषु तु शौचादिशास्त्रेषु कुत इत्याशङ्क्याऽऽह—

अशुचेः प्रतिषेधशास्त्रतो न भवत्येव हि वेदचिन्तनम् ।
श्रवणादिनिवृत्तिशास्त्रतः स्वयमर्थादथ शौचमापतेत् ॥ ८० ॥

अशुचेरिति । श्रवणादेर्वेदार्थचिन्तनत्वादशुचेश्च 'तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः' इति श्रुत्या 'स्वाध्यायभूमिं चाशुद्धाम्' इत्यादिस्मृत्या च तन्निषेधाच्छ्रवणादिशास्त्रेणैवार्थाच्छौचमाक्षिप्यत इत्यर्थः ॥ ८० ॥

अ० टी०—भवत्येवं शास्त्रस्य निवृत्तिपरत्वेन तदाक्षिप्तश्रवणादेर्दृष्टद्वारेणाऽऽत्मज्ञानोपकारित्वादात्मज्ञाननिष्ठां विना सर्वात्मना निवृत्तिपरिपालनासंभवात्पुरुषस्य विनाऽपि साक्षाद्विधिं श्रवणादौ प्रवृत्तिस्तथाऽपि केवलमदृष्टार्थत्रिषवणस्नानचतुर्गुणशौचादौ विना साक्षाद्विधिं कथं प्रवृत्तिः । न ह्यत्र श्रवणादिवद्दृष्टः कश्चित्प्रकृतोपकारो विद्यते विध्यनङ्गीकारे च तत्प्रवृत्तेर्यादृच्छिकत्वापत्तिरिति मिथ्याप्रवृत्तित्वप्रसङ्ग इति चेन्नेत्याह—अशुचेरितिद्वाभ्याम् । 'नाशुचिर्ब्रह्म कीर्तयेत्' इति सामान्यतः प्रतिषेधशास्त्रतोऽशुचेर्वेदचिन्तनं न भवत्येव हीति प्रसिद्धम् । अतः श्रवणादेरपि वेदार्थचिन्तनरूपत्वाद्विना स्नानादिकृतं शौचं तदनुपपत्तेः श्रवणाद्याक्षेपकनिवृत्तिशास्त्रतः स्वयमेव शौचमप्यर्थादाक्षेपादापतेदवश्यकर्तव्यतया प्राप्नोतीत्यर्थः । अथशब्दोऽपिशब्दपर्यायः ॥ ८० ॥

---

१ क. ग. °स्य दा°।

सु० टी०---तथाऽपि चातुर्गुण्यं शौचस्य न सिध्येत्तद्नाक्षेपादित्यत्राऽऽह—

अचतुर्गुणशौचवारणात्स्वयमेवास्य चतुर्गुणं भवेत् ।
अचतुर्ष्वशनस्य वारणात्स्वयमेवास्य चतुर्षु भोजनम् ॥ ८१ ॥

अचतुर्गुणेति । 'एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं च वनस्थानाम्' इत्युक्तपरिशेषाच्चातुर्गुण्ये यतीनां प्राप्ते 'यतीनां तु चतुर्गुणम्' इतिशास्त्रस्य पाञ्चगुण्यादिपरिसंख्याफलत्वात्तत एव चातुर्गुण्याक्षेप इत्यर्थः । तथा 'चातुर्वर्ण्यं चरेद्भैक्षम्' इत्यस्य संकरजेषु[1] भोजनपरिसंख्यार्थत्वाज्जीवनार्थं च तस्याऽऽवश्यकत्वादुपायान्तरानुक्तेश्चार्थाच्चतुर्षु तत्तद्[2]वृत्तिब्राह्मणेषु भोजनमित्यर्थः ॥ ८१ ॥

अ० टी०—एवमपि स्नानशौचादेः समयसंख्यानियमः कथमिति चेत्तत्राऽऽह—अचतुर्गुणेति । अयमर्थः—लोकतः शास्त्रतश्च सामान्येन तावत्स्नानशौचे सर्वेषां प्राप्ते तयोराश्रमविशेषेषु नियमविशेषोपदेशो न तत्परः किं तु न्यूनाधिकनिवृत्तिपरः । अत एव स्मरन्ति—'न्यूनाधिकं न कर्तव्यं शौचसिद्धिमभीप्सता' इति । अतो यतेरप्यनियतकालेषु विना निमित्तं सुखोद्देशादिना स्नानं न कार्यमित्येतत्परं 'त्रिसंध्यादौ स्नानमाचरेत्' इत्यादिवाक्यम् । एवं वाक्यार्थे व्यवस्थिते स्वयमेवास्य त्रिषवणस्नानं सिध्यति । तेन विना त्रिषवणस्नाननिषेधस्यैवासिद्धेरेवमचतुर्गुणशौचवारणादित्यादि स्पष्टार्थम् । सार्ववर्णिकं भैक्षचरणमित्रत्यापि न चतुर्षु वर्णेषु भिक्षणीयमिति नियमः किं तु ततो बहिर्नेत्यर्थः । यतेरपि भोजनस्य स्वभावप्राप्तत्वाद्भिक्षातिरिक्तस्योपायान्तरस्य च प्रतिषेधादर्थप्राप्तं चातुर्वर्ण्यभैक्षचरणमित्यभिप्रायः ॥ ८१ ॥

सु० टी०---एवं संतोषतपःस्वाध्यायादिष्वपि योज्यमित्याह--

इति योजय सर्वमीदृशं कथितन्यायवशेन सादरम् ।
विधिहीननिवृत्तिशास्त्रतः कथितेऽस्मिन्नधिकारवर्त्मनि ॥ ८२ ॥

इति योजयेति । 'असंतुष्टा द्विजा नष्टाः' इति 'शारीरं केवलं कर्म' [ भ० गी० ४।२१ ] इति वेदान्तश्रवणं विना वर्तमानस्तु संन्यासी पतत्येवेति प्रतिषेधादर्थप्राप्तं संतोषादीति सकलमपि तद्बोधकशास्त्रं निवृत्ति-

१ क. °करेष्वभो° । ग. °करेषु भो° । २ क. ग. तद्° ।

परमेव योजयेत्यर्थः । सादरमिति । त्रिदोषदुष्टा परिसंख्येत्यनादरो न कार्य इत्यर्थः । कुत इत्याह—अस्मिन्पूर्वोक्ताधिकारवर्त्मनि सर्वशास्त्रस्यापि व्यापारविधिहीनत्वेनागत्या तदाश्रयणादित्यर्थः ॥ ८२ ॥

अ टी०—तदेवं संन्यासिनो न प्रवृत्तिपरं किमपि शास्त्रमस्तीति प्रतिपादितमुपसंहरन्यदृच्छालाभसंतोषादावप्युक्तं न्यायमतिदिशति—इति योजयेति । इति कथितन्यायवशेनोक्तप्रकारेणैव सर्वमुक्तं योजयान्यदपीदृशं यत्याश्रमावलम्बनेनोपदिष्टं संतोषतपःस्वाध्यायादिरूपं योजयासंतोषादिनिवृत्त्यर्थतां जानीहीति शिष्यं श्रोतारमभिमुखीकृत्याऽऽहेति बोध्यम् । सादरमित्यनेन श्रुतहान्यादिदोषशङ्कयाऽत्रानास्था न कार्येति दर्शयति । ‘ असंतुष्टो द्विजो नष्टः ’ इति निषेधात्संतोषस्यार्थप्राप्तिर्वृथाचेष्टाप्रतिषेधादेव शारीरादितपसोऽप्यर्थप्राप्तिः ‘ नानुध्यायाद्बहूञ्शब्दान् ’ [ बृ० ४ । ४ । २१ ] ‘ अन्या वाचो विमुञ्चथ ’ [ मुण्ड० २ । २ । ५ ] इत्यादिनिषेधादेवोपनिषत्स्वाध्यायस्यार्थप्राप्तिरित्यादि द्रष्टव्यम् । एवं योजनायां हेतुमाह—विधिहीनेति । अस्मिन्कथितेऽधिकारवर्त्मनि मोक्षाधिकारमार्गे विधिहीननिवृत्तिशास्त्रतो विधिरहितनिवृत्तिपरतया शास्त्रस्य स्थितेरित्यर्थः । तथैव व्याख्येयत्वादित्यभिप्रायः ॥ ८२ ॥

सु० टी०—एकदेशिमतानुभाषणेन सांप्रदायिकं पक्षान्तरमुत्थापयति—

इति केचन वर्णयन्ति तद्विपरीतं प्रवदन्ति केचन ।
प्रविभज्य तदप्युदीर्यते निपुणाचार्यपरम्परागतम् ॥ ८३ ॥

इति केचनेति । विपरितवादिनः किं प्रवदन्तीत्यपेक्षायामाह—प्रविभज्येति । उक्तपक्षापेक्षया वक्ष्यमाणस्य श्रद्धेयतरत्वं प्रकटयति—निपुणेति ॥ ८३ ॥

अ० टी०—उक्तं पक्षं वृद्धसंमतत्वेनोपोद्बलयन्पक्षान्तरमपि तथोत्थापयति—इति केचनेति । केचनाऽऽचार्या इति निवृत्तिपरं श्रवणादिशास्त्रमिति वर्णयन्ति । केचन त्वाचार्यास्तद्विपरितमुक्तविपरीतं प्रवृत्तिपरमिति प्रवदन्तीत्यर्थः । नन्वेवं विरुद्धवादित्वे कथं प्रामाणिकाश्रद्धेयता तयोरित्याशङ्क्याऽऽह—प्रविभज्येति । तदाचार्यान्तरमतमपि शब्दादिदमप्युपपादितं मतं प्रविभज्य विषयावस्थादिभेदेन सम्यग्विभज्योदीर्यते कथ्यते मया प्रतिपाद्यते तत्त्वयाऽवधारणीयमिति शेषः । किमित्येवमुभयमप्याद्रियतेऽन्यतरस्य त्याग एव क्रियतामिति चेन्नेत्याह—निपुणाचार्यपरम्परागतमिति । नैपुण्यं पदार्थप्रमाणकौशलम् ॥ ८३ ॥

सु० टी०—प्रविभज्येत्यादिना प्रतिज्ञातं विभजते—

उत्सर्गतः सकलकर्मनिवृत्तिनिष्ठा
संन्यासशास्त्रशतकोटिभिरर्पिताऽस्य ।
अस्ति प्रतिप्रसवशास्त्रमुखात्प्रतीता
चेष्टाऽऽत्मबुद्धिपरिपाकफलाऽपि काचित् ॥८४॥

उत्सर्गत इति । यद्यपि 'यदहरेव विरजेत्' [ जाबालो० ४ ] इत्यादिसंन्यासशास्त्रैरस्याधिकारिणः सकलकर्मनिवृत्तिनिष्ठतैवोत्सर्गतः समर्पिता न तु काम्यमात्रनिवृत्तिः शिखायज्ञोपवीतादेरपि निवर्तनात्, तथाऽपि क्वचित्तामप्यपोद्य प्रतिषिद्धाभ्यनुज्ञानरूपान्नियमादिशास्त्रात् प्रतीता प्रवृत्तिरपि काचिदस्तीत्यर्थः । कथं तस्य प्रवृत्तिपरत्वे निवृत्तिशास्त्रैकवाक्यतेत्याशङ्क्य चेष्टां विशिनष्टि—आत्मबुद्धीति । सा हि चेष्टा न निवृत्तिशास्त्रविरोधिनी किंत्वात्मज्ञानप्रतिबन्धकबुद्धिमलापनयनेन तद्वार्ध्यफलेऽपेकार्थत्वादेकवाक्यतेत्यर्थः । यद्यपि संन्यासात्प्रागपि बुद्धिशुद्धिरस्ति तथाऽपि निःश्वासाभिहतदर्पणमालिन्यवद्वासनावशादुपचीयमानरजस्तमोलेशाभिभवात्तदपनायकत्वेन प्रवृत्तिरपीयं फलतो निवृत्तिरिति भावः ॥ ८४ ॥

अ० टी०—प्रविभज्योदीरणमेवाऽऽह—उत्सर्गत इति । अस्य मुमुक्षोरुत्सर्गतः स्वभावतः सकलकर्मनिवृत्तिनिष्ठा संन्यासशास्त्रशतकोटिभिरर्पिता प्रतिपादितेति योजना । वेदान्तेषु बहुषु तदनुसारिस्मृत्यादिग्रन्थे च प्रतिप्रकरणं मुमुक्षोः संन्यासोपदेशदर्शनान्निवृत्यैवोत्सर्गतस्तात्पर्यं गम्यत इत्यर्थः । तथा तदपवादेनान्याऽप्यस्ति काचिच्चेष्टा प्रतिप्रसवशास्त्रमुखात्प्रतीता । उत्सर्गतः सिद्धस्यापवादः प्रतिप्रसवः । अपवादशास्त्रवचनादवगतेति यावत् । साऽप्यात्मबुद्धिपरिपाकफलाऽऽत्मज्ञानस्य सफलोदयप्रतिबन्धदुरितापनयनद्वारा तत्परिपाकप्रयोजनेत्यर्थः । तथा च यथा निवृत्तिरात्मज्ञानोपकारकत्वादेवानुष्ठेया न स्वरूपेण तथा काश्चन प्रवृत्तयोऽपि तदुपकारत्वादेव कर्तव्या इति विधिनिषेधयोर्ज्ञानाधिकारिण्यपि न विरोधः । न चैवं सति कर्मकाण्डोक्ताधिकारिणोऽस्याविशेष इति शङ्क्यं विशेषोपपत्तेः । तत्र हि जात्याद्यभिमानवन्तमाश्रित्य प्रवृत्तिनिवृत्ती मिथो भिन्नफले विधीयेते । इह तु त्यक्तजात्याद्यभिमानतया मोक्षैकफलार्थिन एकफले एवेति विशेषोपपत्तेः । तथा चात्र शास्त्रभेदोऽप्यस्ति । इह हि सर्वानात्मविषयप्रवृत्तिनिषेधेन सहाऽऽत्माभिमुखी प्रवृत्तिः

---

१ क. ग. °पनयेतदुत्कर्षफ° ।

कर्तव्यतया विधीयते न तथा तत्र हननादिप्रवृत्तिनिषेधेन सह यागादिप्रवृत्तिः कर्तव्यतया विधीयते यागाद्यनुष्ठानेऽपि निषेधपरिपालनस्यानुपपत्त्यभावात । अतो न सांकर्यं स्वरूपतः फलतोऽधिकारितश्च कर्मब्रह्मकाण्डयोरिति भावः ॥ ८४ ॥

सु० टी०—प्रवृत्तिनिवृत्तिशास्त्रद्वयं विभजते—

**यमस्वरूपा सकला निवृत्तिस्तथा प्रवृत्तिर्नियमस्वरूपा ।**
**निवर्तकादत्र यमप्रसिद्धिः प्रवर्तकात्स्यान्नियमप्रसिद्धिः॥ ८५ ॥**

यमेति । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा एते निवृत्तिरूपाः शौचतपःसंतोषस्वाध्यायेश्वरप्रणिधाना नियमा एते प्रवृत्तिरूपा इत्यर्थः । उभयेषां लक्षणमाह—निवर्तकादिति । अत्रत्यनिवर्तकशास्त्रवेद्या यमा एतत्प्रकरणीयप्रवर्तकशास्त्रवेद्या नियमा इत्यर्थः । वधयागादिवारणाया-त्रत्येति ॥ ८५ ॥

अ०टी०—उक्तप्रवृत्तिनिवृत्त्योः स्वरूपमुदाहरणेन व्युत्पादयति—यमस्वरूपेति । अहिंसा-स्तेयसत्यब्रह्मचर्यापरिग्रहा यमाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । अत्र श्रवणादयोऽपि स्वाध्यायेश्वरप्रणिधानयोरेवान्तर्भवन्तीति तेऽपि नियमा इत्यर्थः । उक्तोदाहरणयोरनुरूपं लक्षणद्वयमाह—निवर्तकादिति । निवर्तकशास्त्रवेद्या यमाः । प्रवर्तकशास्त्रवेद्या नियमा इत्यर्थः ॥ ८५ ॥

सु०टी०—ननु निवृत्तेर्वैधत्वा(न्नै*तच्छास्त्रस्य विधिशास्त्राद्विशेष इत्या-शङ्क्यैतच्छास्त्रतात्पर्यविषयनिवृत्तेरवैधत्वा)द्वैलक्षण्यं वक्तुं तां द्वेधा विभजते—

**निवृत्तिरस्ति द्विविधा बहिःस्थिता**
**शरीरसर्वेन्द्रियसंयमात्मिका ।**
**तथाऽपराऽऽभ्यन्तरवस्तुसंश्रया**
**सदात्मकूटस्थचिदेकविग्रहा ॥ ८६ ॥**

निवृत्तिरिति । बाह्या यमादिका शरीरेन्द्रियव्यापारोपरमात्मिकाऽऽन्त-रवस्तुरूपप्रत्यगात्मसंश्रयाऽपराऽसङ्गत्वात्प्रपञ्चाभावरूपत्वाच्चाऽऽत्माऽपि निवृत्तिरूपस्तां विशिनष्टि—सदिति। कूटस्थचिन्मात्रत्वेनावस्थितिरूपेत्यर्थः। सत्त्वस्य घटादावात्मत्वस्य बुद्ध्यादौ प्रत्ययात्कूटस्थेत्यादि ॥ ८६ ॥

* धनुश्चिह्नितग्रन्थः पुस्तके नास्ति ।

१ क. ग. ˚प्रभव˚ ।

अ० टी०—तत्र निवर्तकशास्त्रस्य निवर्तकत्वं निषेधकत्वेन किं वा निवृत्तिविधानेनेति जिज्ञासायां तन्निर्णयाय निवृत्तिं तावद्विभजते—निवृत्तिरस्तीति । निवृत्तिर्द्वेविधाऽस्ति । तत्रैका बहिःस्थिताऽनात्मनिष्ठा । सा का या शरीरादिसंयमात्मिका तच्चेष्टात्यागरूपा । तथाऽपरा निवृत्तिरभ्यन्तरवस्तुसंश्रयाऽऽत्मैकनिष्ठा । सा का या सदात्मकूटस्थचिदेकविग्रहाऽऽत्मस्वभावभूतेति यावत् । प्राप्तक्रियाकार्यकरणोपरमरूपा बाह्यानिवृत्तिर्नित्यनिवृत्तक्रियात्मरूपाऽभ्यन्तरनिवृत्तिरिति तयोर्भेद इत्यर्थः ॥ ८६ ॥

सु० टी०—तत्र बाह्याया विधिविषयत्वमनुष्ठेयत्वान्नेतरस्या इत्याह—

तयोस्तु बाह्या विधिशास्त्रलभ्या
प्रयत्ननिर्वर्त्यतया प्रतीतेः ।
विधानशास्त्रं विरहय्य लभ्या
चितिस्वरूपा त्वितरा निवृत्तिः ॥ ८७ ॥

तयोरिति । आन्तरी तु विषयगोचरत्वात्षड्विधलिङ्गोपेतमहावाक्यजबोधनाज्ञानापनयव्यङ्ग्यैवेत्याह—विधानेति ॥ ८७ ॥

अ० टी०— उक्तयोर्द्विविधयोर्निवृत्त्योः का विधेया का वा नेत्यपेक्षायामाह—तयोस्त्विति । बाह्याया निवृत्तेर्विधेयत्वे हेतुमाह—प्रयत्नेति । चितिस्वरूपेतिविशेषणेनाऽऽभ्यन्तरनिवृत्तेर्विध्ययोग्यत्वे हेतुरुक्तो द्रष्टव्यः ॥ ८७ ॥

सु० टी०—ननु निवृत्तित्वाविशेषे सत्येका विधेया नापरेत्यत्र को हेतुरित्यत्राऽऽह—

मायामयी बाह्यनिवृत्तिरिष्टा
चितिस्वरूपा परमार्थसत्या ।
तयोर्निवृत्त्योश्च निवृत्तिशास्त्रं
विधायकं बाह्यनिवृत्त्यपेक्षम् ॥ ८८ ॥

मायेति । मायापरिणामदेहादिनिष्ठत्वाद्बाह्या निवृत्तिरपि मायिकी । सा च प्रसक्तव्यापाराभावत्वेन पुरुषतन्त्रत्वाद्विधेया । आत्मरूपा तु पारमार्थिकी कूटस्थत्वान्न केनचित्कर्तुमकर्तुं वा योग्येति न विधेयेत्यर्थः । तेन यमादिशास्त्रं विधेयबाह्यनिवृत्त्यपेक्षया प्रवृत्तमित्याह—तयोरिति ॥ ८८ ॥

---

१ क. °ङ्ग्योपलम्भ° ।

अ० टी०—उक्तयोर्निवृत्त्योर्विधेयत्वाविधेयत्ववैलक्षण्ये हेत्वन्तरमाह—मायामयीति । यद्वोक्तनिवृत्त्योः प्रयत्नयोग्यत्वायोग्यत्वे उपपादयति—मायामयीति । क्रियावतां देहादीनां मायामयत्वात्तत्संयमरूपा निवृत्तिरपि मायामयीष्टा तथा चाविद्वद्विषयत्वात्तस्या विधियोग्यत्वं प्रयत्ननिर्वर्त्यतया प्रतीयमानत्वं चोपपद्यत इत्यर्थः । यतश्चितिस्वरूपा निवृत्तिः परमार्थसत्या कूटस्थात्मरूपाऽतो न सा विधेयत्वादिकं भजत इत्यर्थः । व ह्यनिवृत्तेः पुरुषपरतन्त्रत्वादितरस्यास्तदतन्त्रत्वाद्युक्तोऽयमुक्तविभाग इति भावः । ततश्चैतत्सिद्धमित्याह—तयोरिति । निवृत्तिबोधकं शास्त्रं तु तयोर्मध्ये या बाह्यनिवृत्तिस्तदपेक्षं सद्विधायकं प्रवर्तकमित्यभिमतं नेतरन्निवृत्त्यपेक्षमपि तस्या निषेधशास्त्राविषयत्वादिति योजना ॥ ८८ ॥

सु० टी०—ननु यमादिशास्त्रं विधायकं चेत्कथं निवृत्तिशास्त्रं निवृत्तिविधायकत्वेनेति चेन्न तर्हि प्रवृत्तिशास्त्राद्विशेष इत्यत्राऽऽह—

प्रवृत्तिशास्त्रेण समेऽपि संमते
निवृत्तिशास्त्रस्य विधेयबोधने ।
निवृत्त्यनुष्ठाननिबन्धनत्वतो
निवर्तकं शास्त्रमिदं प्रचक्षते ॥ ८९ ॥

प्रवृत्तीति । अस्य शास्त्रस्य प्रवृत्तिशास्त्रेणाबुद्धबोधने समानेऽपि क्रियानुष्ठापकत्वात्तत्प्रवर्तकमिदं तु निवृत्त्यनुष्ठापकत्वान्निवर्तकमित्यनुष्ठेयभेदाद्भेदः प्रमेयत्वे समानेऽपि मानमेयव्यवहारभेदवदित्यर्थः ॥ ८९ ॥

अ० टी०—ननु निवृत्तिशास्त्रं विधायकमित्ययुक्तं व्याघातात्प्रवर्तकं हि विधायकमित्यत आह—प्रवृत्तिशास्त्रेणेति । निवृत्तिशास्त्रस्य यमादिविधायिनो विधेयबोधने प्रवृत्तिशास्त्रेण समे तुल्येऽपि निवृत्त्यनुष्ठाननिबन्धनत्वतो निवृत्तेरेव देहेन्द्रियादिव्यापारोपरमरूपाया अनुष्ठेयत्वादिदं शास्त्रं निवर्तकं प्रचक्षते पण्डिता इति योजना । तथा च यागोऽनुष्ठेय इतिवद्यमादयोऽनुष्ठेया इत्युक्तिसाम्येऽपि यमादेः प्रवृत्तिनिरोधात्मकत्वात्तद्विषयं शास्त्रं निवर्तकमित्युच्यते । यागादेस्तु निष्पादि( द्य )रूपत्वात्तद्विषयं शास्त्रं प्रवर्तकमिति विशेष इति भावः ॥ ८९ ॥

सु० टी०—नन्वत्र पक्षे पूर्वतन्त्रवत्प्रवृत्तिनिवृत्तिरूपाधिकर्तव्याभेदादधिकारिभेदानुपपत्तिरित्याशङ्क्य तत्साम्येऽपि फलवैचित्र्यात्तद्भेदमभिप्रेत्याऽऽह—

शास्त्रद्वयेन परिदर्शितसाधनेन
साध्यस्पृहापरवशः पुरुषो मुमुक्षुः ।

शुश्रूषते गुरुमथेत्युदितः स चात्र
वेदान्तवाक्यविषयश्रवणाधिकारी ॥ ९० ॥

शास्त्रेति । यमनियमशास्त्रद्वयप्रदर्शितप्रवृत्तिनिवृत्तिरूपसाधनेन साध्यं यद्ब्रह्मज्ञानं तदिच्छावशीकृतोऽधिकारी गुरुमेव शुश्रूषते 'स गुरुमेवाभिगच्छेत्' [मु० २ । १२] इत्यादिश्रुतिशतमनुरुध्यमान इत्यर्थः । नन्वनुभूतविषयरसास्वादः कथं तदनादृत्य गुर्वनुसार्येव वृत्त इत्यत्राऽऽह-मुमुक्षुरिति । साधनसंपत्तिमहिम्ना तेष्वतीव निर्विण्णो मुक्तिमार्गमेवानुसरन्नित्यर्थः । अत एव कर्माधिकारिविलक्षणः स एवात्र मुनिनोक्त इत्याह—अथेतीति ॥ ९० ॥

अ० टी०—एवं सौत्राथशब्दसूचिताधिकारिनिरूपणमुपसंहरति—शास्त्रद्वयेनेति । यमनियमविधायिनिवृत्तिप्रवृत्तिशास्त्रद्वयेन यत्परिदर्शितं साधनं बहिष्प्रवृत्तदेहेन्द्रियादिव्यापारोपरमपूर्वकवेदान्तश्रवणादिलक्षणं तेन साध्यं यत्परिपक्वब्रह्मात्मज्ञानं तस्मिन्या स्पृहाऽत्यन्तादरस्तत्परवशः सन्मुमुक्षुः पुरुषो यो गुरुं प्राप्य तं शुश्रूषते सेवते ततो वाऽऽत्मतत्त्वं श्रोतुमिच्छति स च स एवात्रास्मिञ्शारीरके शास्त्रेऽथेत्यथशब्देन वेदान्तवाक्यविषयश्रवणाधिकार्युक्त इति योजना । तथा च चिकीर्षोरभ्युदयार्थिनोऽन्य एवायं विविदिषुर्मुमुक्षुः सिद्ध इत्यर्थः । एतदुक्तं भवति यः कर्मकाण्डोक्तैर्निजकर्मभिः स्वनुष्ठितैर्लब्धान्तःकरणसंशुद्धिरीश्वरोपासनाभिः प्राप्तचित्तस्थैर्यः क्रमेण प्राप्तसाधनचतुष्टय आत्मतत्त्वब्रह्मजिज्ञासुः परित्यक्तसफलकर्मतत्साधनतया परमहंसपारिव्राज्यमुपगतो निवृत्तितत्परस्तदनुकूलतया काश्चिद्विधिविहिताः प्रवृत्तीरप्यनुतिष्ठन्विधिवद्ब्रह्मनिष्ठं श्रोत्रियं गुरुमापाततोऽधिगतब्रह्मात्मतत्त्वनिर्णयायोपगच्छति सोऽत्र वेदान्ताधिकारीति निश्चितमिति ॥ ९० ॥

सु० टी०—एवमधिकारिणं निरूप्य तस्य जिज्ञासाक्रमेण शास्त्रार्थं विवक्षुस्तत्क्रममवतारयति—

स परिपृच्छति कोऽहमसौ च कः
सहजमस्य च तस्य च किं पृथक् ।
उत तयोरभिदेश्वरजीवयो-
रिति च संशयसंकुलमानसः ॥ ९१ ॥

स परीति । स उपसन्नोऽधिकारी वेदार्थापातज्ञानस्वानुभवविरोधावधानदोधूयमानचित्तसत्त्वशुद्धिदर्शनान्तराभ्यासप्रसादसमासादितशंक्तिवेमवस्फुरितशारीरकतत्तदधिकरणापोद्यचोद्यनिकरस्तन्निराकरणप्रतीका-

रमपश्यन् 'आचार्यवान्०' [ छान्दो० ६ । १४ । २ ] इत्यादिश्रुतिविश्वासलब्धाश्वासोऽपि वक्ष्यमाणसंशयनिचयपर्याकुलः पृच्छतीत्यर्थः । प्रश्नप्रकारमाह—कोऽहमिति । देहेन्द्रियमनोबुद्धिप्राणतत्साक्षिणां मध्येऽहं कः किं तैः संहतः संसारी विपरीतो वेति त्वंपदवाच्यजिज्ञासा । तथा प्रधानतटस्थेश्वरवासुदेवादिकचतुर्व्यूहप्रभृतीनां मध्येऽसौ परोक्षतया प्रसिद्धः परमात्मा च कः किं निरवग्रहमहत्त्वसंपन्नो विपरीतो वेति तत्पदवाच्यजिज्ञासा । ततश्चानयोस्तत्त्वंपदवाच्ययोः किं सहजं स्वाभाविकं रूपं किं वा पृथगौपाधिकं रूपमिति तत्त्वंपदलक्ष्यहेयांशजिज्ञासा । ततस्तत्त्वंपदार्थयोरीश्वरजीवयोः किं वस्तुतोऽभिदा किं वा 'द्वा सुपर्णा' [ श्वेता० ४ । ६ ] इत्यादिश्रुतेर्भिन्नयोरेव सतोः 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्यादिना 'नाम ब्रह्म' [ छा० ७ । १ । ५ ] इत्यादिवद्भेदेनोपासनं सम्यग्रूपमिति वाक्यार्थविषयजिज्ञासेति । एतच्च प्रश्नजातं मुख्यतयोपन्यस्तमन्यदपि वक्ष्यमाणक्रमेण ज्ञेयमित्याह—इति चेति॥९१।

अ० टी०—एवं प्रारिप्सितस्य ग्रन्थस्य श्रोतृप्रत्यङ्गतया प्रथमं वर्णनीयविवक्षितविषयप्रयोजनसंबन्धाधिकारिसंभवमुपपादयता प्रथमसूत्रोक्ता शास्त्रारम्भकर्तव्यता समर्थितेदानीं समर्थितारम्भं मुमुक्षोर्मोक्षसाधनब्रह्मात्मज्ञानाय वेदान्तवाक्यविचारशास्त्रमारभमाण उक्ताधिकारिणो जिज्ञासाक्रमेण शास्त्रार्थो गुरुणा वक्तव्य इति तज्जिज्ञासाक्रममाह—स परिपृच्छतीति । यद्यपि जीवेश्वरजगच्छब्दवाच्यस्य सर्वस्याज्ञानेन चिदात्मन्यध्यस्तत्वमुक्तं पूर्वमिति पुनरिह प्रश्नानवसरस्तथाऽपि विषयप्रयोजनसंभावनासिद्धये तदाचार्यैर्युक्त्या केवलमुक्तं तन्मात्रापि नानुभवारूढं जातमिति शिष्यो मन्यत इति नानवसरः प्रश्नस्येति द्रष्टव्यम् । एषाऽक्षरयोजना सोऽधिकारी यथोक्तलक्षणः स्वयमापातेन दर्शनेनावगतमनूवदन्नाचार्यं पृच्छति । तत्र तत्त्वंपदार्थयोः स्वरूपं तदैक्यं च शास्त्रेण प्रतिपादनीयं नान्यदस्ति प्रधानभूतमिति मत्वा तत्रयं क्रमेण पृच्छति—कोऽहमिति । अहमित्यस्मिन्नवभासे यः स्फुरन्[१] घटरूपादिपरागर्थव्यावृत्ताकारेण स कः । किं देहादिभिः संहतो यथाप्रतिभासं संसार्येव स्वभावतः किं वा तद्विलक्षणोऽसंहतः सर्वसंसारसाक्षीति त्वमर्थविषयोऽयं प्रश्नः । तथाऽसौ शास्त्रैकगम्यः परमात्मा च कः किं निर्विशेषः किं वा सविशेषः सावग्रहमहत्त्वसंपन्नो निरवग्रहमहत्त्वसंपन्नो वा । अस्मात्संसारित्वाभिमतादात्मनो भिन्नस्वभावः किंवाभिन्नस्वभाव इत्यादिरयं तत्पदार्थविषयः प्रश्नः । तथाऽस्याऽऽत्मनस्त्वमर्थस्य तस्येश्वरस्य तदर्थस्य च पृथक्पृथक्त्वं प्रतीयमानं किं सहजं स्वाभाविकमुत । किं वा तयोरीश्वरजीवयोरभिदा भेदाभाव ऐक्यमेव सहजं स्यादितीत्थं चकाराप्रत्यक्षादिविरोधे सति कथं वेदान्तोत्थाद्वयात्मधीप्रामाण्यमपौरुषेयतया

---

१ क. 'नं तस्य रूप' ।

निर्दोषवेदविरोधात्स्वाभाविकस्य प्रत्यक्षादेर्वा कथं तद्विरुद्धार्थबोधकतया प्रामाण्यमित्यादि-संशयैः संकुलं व्याप्तं व्याकुलीभूतं मानसं यस्य स तथाविधः सन्पृच्छतीत्यन्वयः। वेदान्तवाक्यापातालोचनतो लोकवादिप्रसिद्धितश्चानेकविधसंशयवान्स प्रत्यधिकरणं निवर्तनीयानेकसंशयवान्पृच्छतीत्यर्थः ॥ ९१ ॥

सु० टी०—अथैवं पृष्टो गुरुः 'यमेव विद्याः शुचिमप्रमत्तम्।' इत्यादिशिष्यगुणानुसंधानात्तदानुकूल्यं प्रतिपन्न इत्याह—

तीर्थेन तं विविदिषन्तमनन्यभक्तं
संसारसागरभयातुरचित्तवृत्तिम्।
एकं मुमुक्षुमधिकारिणमात्मतत्त्व-
ज्ञाने समीक्ष्य गुरुराह दयाविधेयः ॥ ९२ ॥

तीर्थेनेति। तं पूर्वोक्तमुपसन्नमात्मतत्त्वबोधेऽधिकारिणं समीक्ष्य सम्यक्परीक्ष्य गुरुराह करुणामात्रवशीकृतः सन्नार्थलिप्सुराप्तकामत्वादित्यर्थः। कुतोऽस्याधिकारित्वनिर्णय इत्याशङ्क्याऽऽह—तीर्थेनेति। पावनेन यज्ञाद्यनुष्ठानादिना शुद्धबुद्धित्वादथवा तीर्थेन विद्याग्रहणोपयोगिमार्गेण शुश्रूषाराधनादिना सद्वृत्तेनेति। अत एव विशिनष्टि—विविदिषन्तमिति। विविदिषामात्रप्रेरितं न तु लाभपूजादिहेतुपाण्डित्यप्रेप्सया प्रवृत्तमित्यर्थः। तथा 'यस्य देवे परा भक्तिः' [ श्वे० ६। २२ ] इत्यादिना देवतागुरुभक्तेरात्मज्ञानाङ्गत्वात्तत्संपत्तिमाह—अनन्येति। वैराग्यादिसंपदमाह—संसारेति। एकमद्वितीयं दुर्लभमित्यर्थः ॥ ९२ ॥

एवं शिष्यस्य जिज्ञासाक्रममभिधाय तदनुरोधेन शास्त्रार्थं निर्णिनीषोर्गुरोः शिष्यसंग्रहे नियमं शिष्यविशेषणैः सूचयंस्तत्प्रवृत्तिनिमित्तमाह—तीर्थेन तमिति। तीर्थं शास्त्रं 'निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ' इत्यभिधानात्। तेन तीर्थेन शास्त्रोक्तमार्गेण विविदिषन्तं तं शिष्यमात्मतत्त्वज्ञानेऽधिकारिणं समीक्ष्य गुरुराहेत्यन्वयः। अनेन विशेषणेन शास्त्रोक्तविधिमुल्लङ्घ्य यथाकथंचिदुपस्थितं तत्त्वजिज्ञासामनादृत्य पाण्डित्याद्यर्थं वा प्राप्तं च नोपदिशेदित्येको नियम उक्तः। अनन्यभक्तमिति गुरौ देवतात्माभेदेन भक्तियुक्तं देववद्गुरुं शुश्रूषादिभिः सेवमानं गुरावात्मनीव प्रेम कुर्वन्तमित्युक्त्यैतद्विपरीतो गुरुदेवताभक्तिरहितो न संग्राह्य इति सूच्यते। यद्वा 'परशिष्यं न बोधयेत्' इतिवचनादन्येनोपदिष्टपूर्वतयाऽन्यभक्तं नोपदिशेदिति सूच्यते। उक्तविशेषणद्वयवानपि यदि संसारादनिर्विण्णः प्रवृत्तिनिरतः स्यात्तदा सोऽपि न ग्राह्य इत्यभिप्रेत्य विशिनष्टि—संसारसागरभयातुर-

चित्तवृत्तिमिति । व्याधिग्रस्तातुर इव मरणाद्भीतो व्याप्युत्सारणेन स्वास्थ्याय त्वरमाणः संसारसागरान्तःपातजनितमहाव्यथातुर आत्मस्वभावावसादभीतः संसारसागरोत्तारणेन मोक्षाख्येन स्वास्थ्यं गन्तुं त्वरमाण उपदेशाय संग्राह्यो नान्यादृश इत्यर्थादुक्तम् । एकमिति-विशेषणेन परित्यक्तसर्वस्वपरिवारः संन्यासुच्यतेऽर्थादसंन्यासी प्रतिषिद्धः । मुमुक्षुमिति तद्धे-तुशमदमादियुक्तमित्यर्थः ।

'नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ।
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' [श्वे० ६।२२] इति श्रुतयः ।
'नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि च मेधावी जडवल्लोकमाचरेत् ॥'

इत्यादिस्मृतयश्चात्रानुसंधेयाः । गुरोर्दयाविधेय इतिविशेषणेन केवलं परकृतार्थानतयैव शिष्यः संग्राह्यो न स्वस्य ख्यातिलाभपूजाद्युद्देशेनेति विवक्षितं 'यद्यप्यस्मा इमामद्भिः परि-गृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः' [ छा० ३ । ११ । ६ ] इति श्रुतेरि-त्यर्थः ॥ ९२ ॥

सु० टी०—अथ तस्य यथेष्टप्रश्नानुकूलोत्साहाय तस्मिन्नात्मनः सौमु-ख्यमावेदयन्पदार्थपूर्वकं वाक्यार्थमुपदिशति—

वक्ष्यामि वत्स तव वाञ्छितमत्यवस्थ-
मत्यन्तमेव च हितं शृणु तन्मनस्कः ।
त्वं प्रत्यगव्यवहितं तव सुप्रसिद्धं
ब्रह्माद्वितीयमुदितं च तदस्यजस्रम् ॥ ९३ ॥

वक्ष्यामीति । तव वाञ्छितं जिज्ञासितं वाक्यार्थं वक्ष्यामि तत्तन्म-नस्कः शृणु न मनागपि प्रमादं कुर्या इत्यर्थः । तत्र हेतुरत्यवस्थं जाग्र-दादिसकलावस्थातीतत्वाद्दुर्बोधं यत इत्यर्थः । अस्यार्थस्यात्यन्तो-पादेयत्वादपि सावधानेन भाव्यमित्याह—अत्यन्तमिति । कोऽहमिति प्रश्नस्योत्तरमाह—त्वमिति । न त्वं देहादिस्तत्संहतो वा किं त्वन्योन्या-ध्यासाद्बुध्यादिशबलतया भासमानस्त्वं वस्तुतः प्रत्यगनिदं चिदात्मै-वेति त्वंपदलक्ष्यस्य तत्पदार्थान्वयविरोधिपरागिदमंशहानेन निष्कृ-ष्योक्तिः । तत्र प्रमाणमाह—अव्यवहितमिति । व्यवधायकाज्ञानस्यापि साक्षितया साधकत्वादतिप्रत्यासन्नं प्रत्यक्स्वरूपमनुभवसिद्धमेवान्यथा

जगदान्ध्यं स्यादित्यर्थः । असौ च क इत्यस्योत्तरं ब्रह्मेति बृहदाद्वितीयं निरवग्रहमहत्त्वोपेतम् । तत्पदार्थे मानमाह— उदितं चेति । ' सदेव सौम्य '[ छा० ६ । २ । १ ] इत्यादिश्रुतौ जगत्कारणत्वेन तटस्थेनोपलक्षितमद्वितीयं ब्रह्मेति त्वमर्थान्वयाविरोधिद्वैतांशहानेन लक्ष्यस्य सन्मात्रस्य निष्कृष्योक्तिरुत तयोरित्यादिप्रश्ने वाक्यार्थेनोत्तरमाह—तदसीति । अजस्रमित्यभेदस्य नैसर्गिकत्वात्कल्पितो भेद इति नोपासनादिपरत्वमित्यर्थः ॥ ९३ ॥

अ० टी०—शिष्यप्रश्नानन्तरं गुरुरुत्तरदानं प्रतिजानानो मद्गौरवादयं प्रतिवक्तुं पुनः प्रष्टुं वा साशङ्को मा भूदिति तं सावधानमनस्तया प्रोत्साहयति—वक्ष्यामि वत्सेति । हे वत्स सौम्य तव वाञ्छितं विज्ञेयतयेष्टं वक्ष्यामि त्वं तन्मनस्को मयोच्यमानैकार्थमनाः सम्शृणु सादरमवधारयेत्यन्वयः । यतो वक्ष्यमाणं वस्त्ववस्थं व्यावहारिकसर्वावस्थातीतं दुर्बोधमिति यावत् । तर्हि किं तेन श्रुतेनेत्यनादरो न कार्यो यतोऽत्यन्तमेव हितं चावगममात्रेणैव सर्वोपद्रवरहितपरमानन्दाविर्भावरूपं चातोऽतिसावधानेन शृण्वित्यर्थः । एवं श्रोतारमाभिमुख्येन सावधानीकृत्य तत्प्रश्नक्रमेण पदार्थद्वयतत्त्वावेदनपूर्वकं वाक्यार्थमाह—त्वमित्युत्तरार्धेन । कोऽहमित्यस्योत्तरं त्वं प्रत्यगिति । अहंप्रत्ययावभासिष्वनेकेषु मध्येऽविवेकवशादागमापायितयेदंभावमापद्यमानेषु देहादिषु बुद्धिपर्यन्तेषु योऽनागमापायितया कदाऽपि नेदंभावमापद्यते किंत्वनिदमविषयभूतमेव भवति तद्वस्तु प्रत्यगित्युच्यते तत्त्वमसि देहादिसंघाताद्विलक्षणस्तत्साक्ष्यसीत्यर्थः । नात्र प्रमाणमन्वेषणीयं तवानुभवसिद्धत्वादित्याह—तव सुप्रसिद्धमिति । सुप्रसिद्धे हेतुः—अव्यवहितमिति । द्रष्टुर्व्यवहितं केनचिद्वस्तुनाऽन्तारितमतत्स्वरूपं वा स्वावभासे प्रमाणमपेक्षते स्वस्य स्ववेद्यत्वानुपपत्तेर्द्रष्ट्रन्तराभ्युपगमेऽनवस्थानात्तस्याप्रसिद्धौ च तदन्यस्य तद्दृष्टत्वासिद्धिरिति त्वं सर्वस्याविद्यातत्कार्यलक्षणस्य सर्वदा द्रष्टा न केनचिद्व्यवहितो नाप्यप्रकाश इति त्वत्स्वरूपं तव सुप्रसिद्धं प्रमाणमन्तरेणैवेत्यर्थः । तथा च श्रुतिः—' न दृष्टेर्द्रष्टारं पश्येः ' [ बृ० ३ । ४ । २ ] इत्याद्या ' येनेदं सर्वं विजानाति तं केन विजानीयात् । [ बृ० ४ । ५ । १५ ] इति च प्रमाणाविषयत्वेनैव स्वतःसिद्धमात्मानमवगमयति । एवं कोऽहमितिपृष्टं त्वंपदार्थतत्त्वमवगमय्यासौ च क इति पृष्टं तत्पदार्थतत्त्वमवगमयति—ब्रह्माद्वितीयमुदितं चेति । ब्रह्म तत्पदार्थस्तच्च न सावग्रहमहत्त्वोपेतं सविशेषं वा भवति किं त्वद्वितीयं निरपेक्षमहत्त्ववन्निर्विशेषं च ब्रह्मशब्दस्य महत्त्ववाचिनोऽसति संकोचके परिपूर्णाद्वितीयवस्तुगमकत्वोपपत्तेः । किमत्र प्रमाणमित्यपेक्षायामुक्तम्—उदितं चेति । ' सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् ' [ छा० ६ । २ । १ ] ' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ' [ बृ० २ । ५ । १९ ] इत्यादौ निर्विशेषमेव

तदुक्तमित्यर्थः । चकारेणान्यतःसिद्धब्रह्मानुवादितयोक्तवेदान्तानामद्वितीये तात्पर्याभावशङ्का निवार्यते 'यत्पुनः सहजस्य च' इत्यादिना । जीवेश्वरयोर्भेदोऽभेदो वा परमार्थ इति पृष्टे तत्राभेद एव परमार्थो न भेद इत्युत्तरमाह—तदजस्रमिति । तद्द्वयं यथाव्याख्यातं ब्रह्मैव त्वमसि न ततो भिन्नः । तत्किं कदाचिन्मोक्षावस्थायां स्यादिति मा शङ्किष्ठा इत्यभिप्रेत्याऽऽह—अजस्रमिति । सदैवाभेदः स्वभावतो जीवेश्वरयोर्भेदस्तूपाधिनिबन्धनो भ्रान्त एवेत्यर्थः । सर्वेषां वेदान्तानामुपक्रमादिभिर्लिङ्गैस्तात्पर्ये विचार्यमाणे ब्रह्मात्मस्वरूपैक्ये पर्यवसानदर्शनान्नात्रापि शङ्का कार्येति भावः । एतत्सर्वं पूर्वोपपादितमध्यासमुपजीव्योक्तमिति द्रष्टव्यम् ॥ ९३ ॥

सु० टी०—इदानीमुपदिष्टमहावाक्यार्थगोचरबहुविधविरोधधीप्रतिबन्धादनासादितप्रमाणफलस्यं प्रतिभाप्रतिभासमानदूषणगणानुद्दिभावयिषोरपि गुर्वनुज्ञां प्रतीक्षमाणस्याभिप्रायज्ञो गुरुर्न पुनरयं मामशक्तमाशङ्क्यान्यत्र गच्छेदुपायान्तरं वा संभावयेदिति दोषद्वयं परिहरञ्शिष्यमभ्यनुजानीते—

> यद्यत्र पश्यसि विरोधमुदीरय त्वं
> सद्यस्ततः परिहराणि तमप्रयत्नात् ।
> वाक्यं निरस्तसकलप्रतिबन्धकं स-
> त्त्वां बोधयिष्यति करार्पितबिल्वतुल्यम् ॥ ९४ ॥

यद्यत्रेति । अत्र वाक्यार्थे यदि विरोधं पश्यसि वस्तुतो नात्र विरोधलेशोऽपीति भावः । तं यथेष्टमुद्भावय मा भैषीरित्यर्थः । न चात्र ममाशक्तिः कदापि संभावनीया । सेवितगुरोरवधारितसर्वतन्त्रसिद्धान्तरहस्यस्यानायासेनैव तन्निराससामर्थ्यादित्याह—सद्य इति । न च ब्रह्मज्ञान उपायान्तरं शङ्कनीयमित्याह—वाक्यमिति । उक्तमहावाक्यमेव निरस्तासंभावनादिप्रतिबन्धं सत्करतलामलकवन्मुक्तिफलाखण्डवाक्यार्थं बोधयिष्यति नान्यदित्यर्थः ॥ ९४ ॥

अ० टी०—तदेवं तत्त्वंपदार्थतदैक्यवाक्यार्थलक्षणे शास्त्रार्थे उपदिष्टे सति सम्यगप्रसन्नवदनमिव शिष्यमालोक्य प्रायोऽयं मदुक्तार्थे विरोधं पश्यतीत्यालक्ष्य

१ क. ग. °स्य प्र°।

तदपाकरणाय स्वयमेवाऽऽचार्यः संप्रोत्सहयति—यद्यत्रेति। हे सौम्य यद्यत्रास्मदुपदिष्टे शास्त्रार्थे त्वं विरोधं पश्यसि तर्हि तं सम्यगुदीरय कथय निःशङ्कमुद्घाटय। यदिशब्देन नात्रास्ति विरोधस्त्वं तु भ्रान्त्या पश्यसि तमिति द्योतितम्। यतस्त्वत्कल्पितो विरोधस्ततस्तं त्वदुक्तिसमनन्तरमेवाविलम्बेन तत्राप्यप्रयत्नाद्विनैव विचारप्रयासं परिहराणि परिहर्तुमिच्छामि। लोडः प्रयोगादत्रासंभावना त्वया न कार्येति द्योत्यते। यत एवं वस्तुतस्तत्र विरोधाभावोऽतस्त्वदुत्प्रेक्षितविरोधनिरासे सति मदुपदिष्टार्थकं वाक्यमेव निरस्तनिखिलप्रतिबन्धकं सत्त्वां प्रत्यग्ब्रह्मतत्त्वं बोधयिष्यति करकलितबिल्ववदपरोक्षतयैव न परोक्षतयेत्यर्थः॥ ९४॥

सु० टी०—गुर्वनुज्ञया लब्धप्रसरः प्रथमं पदार्थयोर्विरोधेनान्वयायोग्यतया वाक्यार्थबोधमाक्षिपति—

अत्राऽऽह सद्वयमहं मम रूपमीक्षे
तच्चाद्वयं विगणयामि परोक्षमेव।
पारोक्ष्यसद्वयविभागयुजोर्विरोधा-
द्वाक्यार्थबोधमतिदुर्लभमेव मन्ये॥ ९५॥

अत्राऽऽहेति। तत्र विरोधमाह—सद्वयमिति। मम त्वंपदवाच्यस्य बुध्यादिशबलं रूपं सद्वयमीक्षे साक्षात्करोमि तच्च तत्पदवाच्यमद्वयं विपरीतं गणयामि परोक्षत्वेन शब्दादनुमानाद्वा कार्यलिङ्गकादवैमीत्यर्थः। किं तत इत्यत आह—पारोक्ष्येति। पारोक्ष्याद्वयत्वापारोक्ष्यसद्वयत्वविभक्तयोरर्थयोरभेदविरोधाद्दुर्लभो वाक्यार्थबोध इत्यर्थः॥ ९५॥

अ० टी०—एवं गुरुणाऽनुज्ञातः स्वबुद्धौ प्रतिभातं वाक्यार्थविषयं विरोधं वक्तुं प्रत्यवतिष्ठत इत्याह—अत्राऽऽहेति। अत्र प्रत्यक्षविरोधं तावदैक्यवाक्यार्थविषयमुद्घाटयति—सद्वयमित्यादिना। अहं मम रूपं स्वरूपं सद्वयं सजातीयविजातीयस्वगतभेदवदीक्षे प्रत्यक्षेणैव प्रमाणेनानुभवामि सुखदुःखादिवैचित्र्यस्वगतधर्मदर्शनेन तथाविधजीवभेददर्शनेन देहाद्यध्यात्माधिभूतादिदर्शनेन च सद्वयमेव सदा प्रत्यगात्मानमनुभवामीत्यर्थः। ननु श्रुत्युक्तत्वादद्वयमपि तत्त्वंपदार्थैक्यं प्रामाणिकमिति नेत्याह—तच्चेति। विगणयामि विरुद्धं गणयामि प्रत्यक्षविरुद्धं मन्य इत्यर्थः। ननु प्रत्यक्षमाभासीकृत्याऽऽगमः स्वार्थमवगमयिष्यतीति नेत्याह—परोक्षमेवेति। न हि परोक्षार्थेनाऽऽगमेन प्रत्यक्षानुभवो बाधितुं शक्यत इति भावः। तस्माद्वाक्यादपरोक्षं ब्रह्मात्मैक्यमवगम्य [त] इत्याशामात्रमित्याह—पारोक्ष्येति। अत्रेदं विवक्षितं 'तं प्रत्यगव्यवहितं तत्र सुप्रसिद्धं

ब्रह्माद्वितीयमुदितं च तदस्यजस्रम्' इत्यत्र तत्त्वंपदार्थस्वरूपं तदैक्यं वाक्यार्थं चावोचदाचार्यः । तत्र यद्यपि पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य प्रथमं पदार्थविषयविरोधोद्भावनं तत्समाधानं चोचितं तथाऽपि सर्ववेदान्तसमन्वयस्यैक्यगोचरत्वात्तस्य च प्राधान्यात्तत्र वेदान्तानां प्रामाण्ये दृढीकृते सर्वोऽपि विरोधः परिहृतः स्यादिति मत्वाऽद्वितीये वस्तुनि वाक्यसमन्वयविषयो विरोध उद्भाव्यते परिहरिष्यते चोत्तरत्र । क्षितिजलदहनानिलाम्बराणामित्यारभ्य तत्पदार्थविषयं समन्वयविरोधं विशेषतः परिहरिष्यति । न चैवंसति सूत्रानुक्रमविरोधस्तत्र यद्यपि प्रथमसूत्रेणाधिकारिनिरूपणमुखेन त्वंपदार्थोऽर्थान्निरूपितोऽनन्तरसूत्रद्वयेन च तत्पदार्थो लक्षणप्रमाणाभ्यां प्रतिपादितस्ततश्चतुर्थेन सूत्रेणैक्यवाक्यार्थसमन्वय इति क्रमोऽवभासते तथाऽपि न त्वंपदार्थादिनिरूपणे सूत्रतात्पर्यं प्रथमसूत्रस्य शास्त्रारम्भसमर्थनपरत्वात् । तदर्थस्य सर्वस्येह प्रथमं निरूपितत्वात् । द्वितीयतृतीयसूत्रस्य चेह तत्र सुप्रसिद्धं ब्रह्मेति सूचितस्य क्षितिजलदहनेति विविच्यमानत्वादिति ॥ ९५ ॥

सु० टी०—ननु नात्र विरोधः सद्वयत्वपारोक्ष्ययोरध्यस्तत्वकल्पनादित्याशङ्क्य शब्दस्य तद्बोधनासामर्थ्यमाह—

यद्वस्तु सद्वयतयाऽवगतं स्वशब्दा-
त्तस्याद्वयत्वमवगन्तुमशक्यमेव ।
यद्वस्तु च व्यवहितं प्रतिपादितं त-
त्प्रत्यक्तया न तु जनः प्रतिपत्तुमीशः ॥ ९६ ॥

यद्विति । पदार्थसंसर्गस्यैव वाक्येन बोधनाद्बुद्ध्यादिद्वैतविशिष्टस्यापरोक्षप्रत्यग्रूपस्य त्वमहमादिपदार्थस्य परोक्षवाचितत्पदार्थभूताद्वयत्वविशिष्टबोधनमशक्यं विरोधादित्यर्थः । व्यवहितं परोक्षं प्रत्यक्तयाऽऽत्मभेदेन पदार्थयोश्च सद्वयत्वपारोक्ष्ययोस्त्यागे वाक्यार्थस्यैवानुपपत्तेरिति भावः ॥ ९६ ॥

अ० टी०—उक्तमेवाखण्डवाक्यार्थानुपपत्तिं स्फोरयति—यद्वस्त्विति । स्वशब्दात्स्ववाचकात्त्वमहमित्यादिशब्दाद्यद्वस्त्वात्मलक्षणं सद्वयतयाऽवगतं कर्तृत्वादिद्वैतविशिष्टतयैवाविकल्पमवभासते तस्याद्वयत्वमद्वयब्रह्मरूपत्वमवगन्तुं वाक्यशतादशक्यमेवेत्यर्थः । तथा यच्च वस्तु व्यवहितं परोक्षं तत्पदार्थलक्षणं तत्सद्ब्रह्मादिशब्दैः प्रतिपादितं तद्वस्तु प्रत्यक्तया स्वाव्यवहितात्मरूपेण प्रतिपत्तुं न जनः कोऽपीशः समर्थोऽस्ति प्रत्यक्पराग्भावेन विरुद्धयोरैक्यज्ञानस्य भ्रमत्वापत्तेरित्यर्थः ॥ ९६ ॥

सु० टी०--ननु रजतत्वेन गृह्यमाणस्यापि चक्षुषा शुक्तित्वग्रहवद्विरुद्धत्वेन प्रतीतयोरपि वाक्येनाभेदो बोध्यतामिति चेन्न चक्षुःशब्दयोः शक्तिवैचित्र्यादित्याह—

आकाङ्क्षितं भवति पूरणशक्तियुक्तं
यत्संनिधौ पठितमस्य हि संगतिः स्यात् ।
नाऽऽकाङ्क्षयैव न तु संनिधिनैव वा स्यात्
संबन्धिता हि विरहय्य पदार्थशक्तिम् ॥ ९७ ॥

आकाङ्क्षितमिति । न हि चक्षुष इव स्वसामर्थ्यमात्रेण शब्दस्य बोधकत्वमपि तु यत्पदजातमेकैकं विनाऽपर्यवसिताभिधानं भवति । तथा पूरणशक्तिरन्वयप्रयोजकरूपवत्त्वा तद्युक्तमबाधितान्वयरूपं वा । यच्चाव्यवहितपदोपस्थितार्थं तादृशमेव वाक्यार्थधीहेतुर्न त्वेकाङ्गविकलम् । इह पुनराकाङ्क्षासंनिधिसत्त्वेऽप्यन्वययोग्यतां विना न तत्संभव इत्यर्थः ॥ ९७ ॥

अ० टी०—ननु रजतमिदमिति पूर्वप्रवृत्तं पुरोवर्तिनो रजतात्मत्वावभासं बाधमानो यथा पश्चाद्भवन्निर्दुष्टचक्षुर्जन्यः प्रत्ययः शुक्तितत्त्वमवभासयति तथा प्रत्यग्ब्रह्मणोः प्राक्प्रवृत्तं स्वाभाविकभेदप्रत्ययमपबाधमान एव तत्त्वमस्यादिवाक्यजन्यः प्रत्यय ऐक्यमवगमयिष्यतीति चेन्मैवं प्रत्यक्षविलक्षणत्वाद्वाक्यवृत्तान्तरेयेत्यभिप्रेत्याऽऽह—आकाङ्क्षितं भवतीति । परस्पराकाङ्क्षायोग्यतासंनिधिमत्त्वविशेषितानां हि पदार्थानां संसर्गादिवाक्यार्थौ भवति न विपर्ययः । यत्संनिधौ पठितमपि वस्तु यदि पूरणशक्तियुक्तमपेक्षापूरणसमर्थमन्वययोग्यमिति यावत् । एवंविधं स्यात्तदाकाङ्क्षितं भवति नान्यदयोग्यम् । हि यस्मादस्य योग्यस्यैव संगतिः स्यान्नायोग्यस्येति योजनम् । उक्तमेव स्फुटयति—नाऽऽकाङ्क्षयैवेति । पदार्थशक्तिं पदार्थसामर्थ्यं योग्यतामित्यर्थः । हिशब्दोऽवधारणार्थो लोकप्रसिद्धिद्योतनार्थो वा ॥ ९७ ॥

सु० टी०—नन्वत्रापि शाब्दी योग्यताऽस्त्येव समानविभक्तिकत्वादिति चेन्नार्थयोग्यतां विना तस्या अकिंचित्करत्वादित्याह—

योग्यत्वमत्र न च तत्त्वमसीतिवाक्ये
संबन्धितां प्रति पदार्थयुगस्य भाति ।

पारोक्ष्यसद्वयविभागविरोधहेतो-
गौंरश्व इत्यभिहिते तु यथैव वाक्ये ॥ ९८ ॥

योग्यत्वमिति । न ह्यत्रार्थयोरस्ति योग्यता प्रागुक्तपारोक्ष्यसद्वयत्वविरोधात्समानविभक्तिकत्वेऽपि गौरश्व इत्यादिवाक्यवदित्यर्थः ॥ ९८ ॥

अ० टी०—अस्त्वेवं प्रकृते किमायातमित्याशङ्क्य तत्त्वमर्थयोर्योग्यताविरहं सदृष्टान्तमुपपादयति—योग्यत्वमत्रेति । एकविभक्त्यन्ततया शब्दयोग्यत्वेऽपि पारोक्ष्यसद्वयविभागविरोधान्मिथः संबन्धितां प्रति योग्यत्वमत्र तत्त्वमसीतिवाक्ये न भातीति योजना । यथा गौरश्व इत्यभिहिते वाक्येऽर्थयोर्योग्यताविरहात्संबन्धिता नावगम्यते तथेत्यर्थः ॥९८॥

सु० टी०—ननु यथा सोऽयं देवदत्त इत्यत्र तत्तेदन्तारूपविरुद्धांशपरिहारेणाविरुद्धस्वरूपमात्रलक्षणया शब्दसामञ्जस्यमेवमिहापि स्यादितिचेन्नेत्याह—

सोऽयंगिरोरिव न लक्षणयाऽपि वृत्ति-
र्मानान्तराधिगतिहीनतयाऽऽत्मनि स्यात् ।
मानान्तराधिगतगोचर एव दृष्टः
शब्दप्रयोग इह लाक्षणिकस्तु लोके ॥ ९९ ॥

सोऽयमिति । न ह्यत्र सोयंशब्दयोरिव पारोक्ष्यसद्वयत्वत्यागेनाविरुद्धाखण्डचिदात्मनि वृत्तिः संभवति । यद्धि मुख्यार्थसंबन्धित्वेन मानान्तरसिद्धं तत्रैव शब्दस्य लक्षणा स्यादन्यथा वाच्याल्लक्ष्यस्मृतेरयोगात् । न च चिदात्मा वाच्यशबलांशत्वेन वेदातिरिक्तमानगोचर इत्यर्थः । दृष्टश्च गङ्गायां घोप इत्यादिषु तादृशतीरादौ लाक्षणिकपदप्रयोग इत्याह—मानान्तरेति ॥ ९९ ॥

अ० टी०—ननु वैदिकपदयोः श्रूयमाणं सामानाधिकरण्यं विना पदार्थैक्यावसानं न परित्यक्तुमुचितं स्वाध्यायाध्ययनविधिविरोधादतो विरुद्धांशप्रहाणेन लक्षणयाऽखण्डार्थपर्यवसितं वाक्यं भविष्यति कोऽत्र विरोध इति चेत्तत्राऽऽह—सोऽयंगिरोरिवेति । उदाहृतवाक्य इवेह लक्षणावृत्त्यसंभवे हेतुमाह—मानान्तराधिगतिहीनतयेति । मानान्तरागोचरेऽप्यात्मनि लक्षणावृत्तिः किं न स्यादित्याशङ्क्य दृष्टविरोधान्मैवमित्याह—मानान्तराधिगतेति ॥ ९९ ॥

---

१ क. 'चेत्तत्रा' । २ क. ग. व.क्याल' ।

सु० टी०—तस्मान्मुख्यलक्षणावृत्त्योरसंभवान्न ब्रह्मणि वाक्यप्रामाण्यमित्याह—

तस्मादखण्डविषया न वचःप्रवृत्तिः
संसर्गबोधनमपास्तमयोग्यभावात् ।
एवं न वाक्यगतशब्दसमन्वयोऽपि
दूरे प्रमान्तरविरोधनिराससिद्धिः ॥ १०० ॥

तस्मादिति। ननु द्वैतग्राहिप्रत्यक्षादेः श्रुतिविरोधेनाप्रामाण्यादस्तु मृद्घट इतिवद्वाच्ययोरेवाभेदो वाक्यार्थ इतिचेन्न श्रुतिप्रामाण्याधीनं मानान्तराप्रामाण्यं तदधीनं च श्रुतिप्रामाण्यमित्यन्योन्याश्रयादित्याह—एवमिति । समन्वयोऽपीति । समन्वयाधीनं प्रामाण्यमपि दुर्लभं दूरे विरोधिनः प्रामाण्य[विरोध]निरास इत्यर्थः ॥ १०० ॥

अ० टी०—संसृष्टतयाऽखण्डतया वा वाक्यार्थानुपपत्तिमुपपादितामुपसंहरति—तस्मादिति । यस्माल्लक्षणयाऽपि सामानाधिकरण्यं न घटते तस्मादखण्डविषया न तत्त्वमादिवचःप्रवृत्तिरिति योजना । संसर्गबोधनं तु प्रकृतवाक्येऽयोग्यभावादेवापास्तमित्यर्थः । एवं च सति वाक्यगतयोः पदयोः समन्वयः सामानाधिकरण्यलक्षणोऽपि न सिध्येदर्थगतप्रमान्तरविरोधिनिरासासिद्धिस्तु दूरापास्तेत्याह—एवं न वाक्यगतेति । एतदुक्तं भवति—यद्यपि वेदवाक्यं निरपेक्षं प्रमाणमेव तथाऽपि शब्दशक्तिमनुरुन्धान एव वेदोऽर्थबोधको युक्तः । शब्दश्च लोकावगत्यनुसारी न स्वतन्त्रः । एवंसति परोक्षापरोक्षत्वादिविरुद्धधर्मसंसर्गवतोस्तत्त्वमर्थयोः संसर्गयोग्यतयैव प्रथममवभासात्कुण्ठितशक्तितया नैकरस्यवाक्यार्थबुद्ध्युत्पादनसमर्थता वाक्यस्येति ॥ १०० ॥

सु० टी०—सिद्धार्थत्वादपि नैतद्वाक्यं प्रमाणं सापेक्षत्वादित्याह—

किं च प्रमान्तरमपेक्ष्य गिरः प्रवृत्तिः
सिद्धेषु वस्तुषु जगत्युपलब्धपूर्वा ।
ब्रह्मात्मवस्तुनि तथा वचसः प्रवृत्ति-
र्युक्ताऽऽत्मनस्तु फलवत्परिनिष्ठितत्वात् ॥ १०१ ॥

किंचेति । सिद्धेषु हि वस्तुषु मानान्तरसापेक्षैव शब्दस्य प्रवृत्तिरुपलब्धा यथा नदीतीरे फलानि सन्तीत्यादौ । सा च ब्रह्मण्यपि सिद्धे तथै-

वोपेयेति कथं तत्र वाक्यस्यानधिगतार्थबोधकत्वमात्मनोऽपि फलादिवत्सिद्धत्वादित्यर्थः ॥ १०१ ॥

अ० टी०—इतोऽपि ब्रह्मात्मनि न वाक्यप्रामाण्यमुपपद्यत इत्याह—किं चेति । यत्कार्यविपरीतवस्तुविषयं वाक्यं तत्स्वविषये मानान्तरसापेक्षं लोके दृष्टं यथा नदीतीरफलवाक्यम् । तथाऽऽत्मनोऽपि सिद्धवस्तुत्वात्तद्विषये मानान्तरसापेक्षमेव वाक्यं भवितुमर्हति । अतोऽनुवादत्वापत्तेर्वेदान्ता न ब्रह्मात्मनि मानमित्यर्थः । अन्वयार्थः सुगमः ॥ १०१ ॥

सु० टी०—ननु सापेक्षत्वे पौरुषेयत्वं तन्त्रं न तु सिद्धार्थत्वमिति चेन्नाव्यभिचारेण तस्यैव प्रयोजकत्वादित्याह—

नद्यास्तीरे फलमितिगिरः सिद्धवस्तुप्रवृत्ते-
र्दृष्टा स्वार्थप्रमितिजनने स्वान्यमानव्यपेक्षा ।
तद्वद्ब्रह्मण्यपि तु वचसो वैदिकस्याभ्युपेया
तस्मादस्मिन्न खलु घटते मानभावः श्रुतीनाम् ॥१०२॥

नद्या इति । सिद्धे वस्तुनि प्रवृत्तिर्यस्यास्तस्या नद्या इति गिरः स्वार्थप्रमितौ मानान्तरापेक्षा दृष्टेत्यविशेषाद्वैदिकस्यापि ब्रह्मवाक्यस्य सिद्धगोचरत्वप्रयुक्तैव साऽभ्युपेयेत्यर्थः ॥ १०२ ॥

अ० टी०—फलवदित्युक्तं दृष्टान्तं विवृणोति—नद्यास्तीर इति । सिद्धे वस्तुनि प्रवृत्तिर्यस्या गिरः सा तथा तस्या इति विग्रहः । स्वान्यमानं प्रत्यक्षादि दार्ष्टान्तिकमनूद्योपसंहरति—तद्वदिति ॥ १०२ ॥

सु० टी०—सत्यप्यखण्डार्थत्वे वाक्यस्यान्यानधिगतार्थत्वान्न लक्षणासंभव इत्युक्तमिदानीमखण्डार्थत्वमेवाऽऽक्षिपति—

नाखण्डवस्तुविषया वचसः प्रवृत्ति-
र्लोकेऽपि दृष्टिपथमापतिता कदाचित् ।
नानापदार्थघटनाविषयत्वहेतो-
र्दूरेत्यता श्रुतिशिरोवचनेषु तस्याः ॥ १०३ ॥

नेति । तदेव हि कल्पते यद्दृष्टेन न विरुध्यते । न च लोके क्वचिदप्यखण्डार्थता दृष्टा । वाक्यानां नानापदार्थसंसर्गविषयत्वात्सोऽयमित्यादेश्च

---

१ ख. 'वेरित्यस्या' ।

विवादपदत्वादित्यर्थः। गुरूणा नियोगशक्तिवद्वेद एव सा कल्प्येति चेन्नेत्याह—दूर इति। वक्ष्यमाणदोषाद् दृष्टान्तासिद्धेश्च श्रुतिवाक्येषु सा दूरं गतेत्यर्थः। दूरे भवा दूरेत्या तस्या भावस्तत्तेति। केचित्तु—'अव्ययात्यप्' इति त्यप्प्रत्ययासंभवाच्छेषाधिकारे 'दूरादेत्य' इति वार्तिकोक्तेरेत्यप्रत्ययः॥ १०३॥

अ० टी०—पूर्वं क्वचिदखण्डेऽप्यर्थे वाक्यं प्रमाणं भवदपि प्रकृते वाक्ये तदसंभव उक्त इदानीं क्वापि नाखण्डविषयतया वाक्यप्रामाण्यं संभवत्यनेकपदार्थसंसर्गस्यैव वाक्यार्थत्वदृष्टेरित्यभिप्रेत्याऽऽह—नाखण्डवस्तुविषयेति। कथं न दृष्टिपथमापतितः सोऽयं देवदत्त इत्यादौ दृष्टत्वादित्यत आह—नानापदार्थेति। लोकपदमात्रस्यार्थविवक्षया प्रयोगादर्शनाद्वाक्यार्थोद्देशे शब्दप्रयोगोऽङ्गीकर्तव्यः स च नानापदार्थसंसर्गविषय इति नाखण्डविषयता क्वापि वाक्यस्य संभाव्यते देवदत्तवाक्येऽपि नाखण्डार्थता संमतेति भावः। यदैवं लोके मानान्तरेणापि सिद्धत्वादर्थस्य शब्दशक्तिमात्रायत्तत्वाभावेऽप्यखण्डार्थता नोपलब्धा तत्र वेदे शब्दशक्तिमात्राधीनार्थे कुतोऽखण्डार्थत्वसंभव इत्याह—दूरेत्यतेति। दूरे भवं दूरेत्यं तस्य भावो दूरेत्यता। यद्वा दूरेऽत्येतीति दूरेत्यमित्यलुक्। तस्य भावस्तथा दूरगामितेत्यर्थः। श्रुतिशिरोवचनेषु तस्या अखण्डार्थतया दूरेत्यतेत्यन्वयः॥ १०३॥

सु० टी०—ननु शक्तपदानां नानापदार्थसंसर्गस्य वाक्यार्थत्वनियमेऽपि न लक्षकाणामयं नियमोऽनेकैरपि पदैरेकस्यार्थस्य लक्ष्यत्वसंभवादित्याशङ्क्याऽऽह—

आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-
रर्थं समर्पयति शब्द इति प्रसिद्धम्।
आस्वेव नान्यतमयाऽपि वदत्यखण्डं
शब्दान्तरात्तविषयादधिकार्थवृत्तेः॥ १०४॥

आदायेति। शब्दो याभिर्वृत्तिभिरर्थं समर्पयति तासु मध्ये नान्यतमयाऽप्यखण्डार्थसमर्पणं दृष्टमित्यर्थः। कुत इत्याह—शब्दान्तरेति। एकपदसमर्पितादर्थान्तरस्यैव पदान्तरैः समर्पणीयत्वनियमाद्गुमाभ्यामखण्डैकार्थाबोधनादित्यर्थः॥ १०४॥

अ० टी०—ननु मुख(ख्य)वृत्त्याऽर्थबोधने नानार्थसंसर्गो वाक्यार्थ इत्ययं नियमो लक्षणागुणवृत्तिभ्यां त्वेकस्यापि पदार्थस्यानेकैरपि पदैः समर्थनादखण्डार्थताऽपि संभाव्यत इति चेन्नेत्याह—आदाय मुख्यगुणेति। मुख्यादिवृत्तीनां लक्षणं सोदाहरणमग्रे

वक्ष्यति । मुख्यादिवृत्तिविशेषमादाय शब्दोऽर्थं समर्पयतीति प्रसिद्धं यद्यपि तथाऽप्येष शब्द आसु वृत्तिष्वन्यतमयाऽपि वृत्त्या नाखण्डं वदति कुतः शब्दान्तरात्तविषयात्पदान्तरोपस्थापितादर्थात्पदान्तरस्याधिकार्थवृत्तेरन्यथा पर्यायत्वापत्तेरित्यर्थः ॥ १०४ ॥

सु० टी०—ननु नानापदैरेकार्थबोधने पौनरुक्त्यमेव बाधकं तच्च प्रवृत्तिनिमित्तभेदेन परिहर्तव्यमित्यत्राऽऽह—

आधिक्यमुत्सृजति शब्दगणो निजेऽर्थे
शब्दान्तरात्तविषयादिति मन्यमानाः ।
वाक्यत्वमेव पदजातगतं विहन्यु-
र्नह्यस्ति हस्तकरशब्दगतं तदेषाम् ॥ १०५ ॥

आधिक्यमिति । कश्चिच्छब्दगणः स्वार्थे शब्दान्तरोपात्तादाधिक्यं त्यजति पदान्तरोपात्तमेव लक्षयतीति यावत् । इति ये मन्यन्ते ते तत्पदजातस्य वाक्यत्वमेव नाशयन्ति संसर्गाबोधकत्वात्पदान्तरवैयर्थ्यापत्तेः । नह्येकार्थबोधकानां हस्तकर इत्यादीनां गौर्धेनुरित्यादीनां भिन्नप्रवृत्तिनिमित्तानां वा वाक्यत्वमित्यर्थः ॥ १०५ ॥

अ० टी०—नन्वनेकेषां पदानामेकार्थसमर्पकत्वेऽपि न पर्यायत्वापत्तिः प्रवृत्तिनिमित्तभेदोपादानेन पर्यायपरिहारोपपत्तेरित्याशङ्क्याऽऽह—आधिक्यमिति । कयाऽपि वृत्त्या पदान्तराभिहितेऽर्थे पदान्तरगणः प्रवर्तमानः शब्दान्तरात्तविषयान्निजेऽर्थे आधिक्यमर्थान्तरत्वमुत्सृजतीति ये मन्यन्ते ते पदजातगतं वाक्यत्वं विहन्युः । अन्वितार्थानि हि पदानि वाक्यमन्वयश्च नैकस्मिन्नर्थ इति नास्मिन्पक्षे वाक्यत्वसिद्धिरित्यर्थः । ननु कथं न वाक्यत्वसिद्धिः संसर्गबोधकत्वाभावेऽपि संभूयैकार्थसमर्पकत्वमन्वितत्वलक्षणं वाक्यत्वं किं न स्यादिति चेन्नेत्याह—न ह्यस्तीति । हस्तकरशब्दगतं तदेकार्थसमर्पकत्वेन संभूयैकवाक्यत्वमेषां शब्दानां न हि एषां वादिनां वाऽर्थाधिक्याभावात्पर्यायत्वानिराकरणात् । न च प्रवृत्तिनिमित्तभेदात्पर्यायत्वनिरासो गोधेनुशब्दयोः प्रवृत्तिनिमित्तभेदेऽप्यपर्यायत्वादर्शनादित्यर्थः ॥ १०५ ॥

सु० टी०—न च प्रवृत्तिनिमित्तभेदेनापि परिहारोऽप्रमेयत्वाभ्युपगमविरोधादित्याह—

किं च स्वयंप्रभमलुप्तचिदेकरूपं
सर्वं प्रमाणविषयाद्बहिरभ्युपेत्य ।

१ क. °न्ते पद° । ग. °न्ति ते पद° । २ क. ग. °न्ति पदा° ।

आत्मानमात्मनि च शास्त्रमुदाहरन्तः
सिद्धान्तमभ्युपगतं परिपीडयन्ति ॥ १०६ ॥

किं चेति । 'यतो वाचो निवर्तन्ते' [ तैत्ति० २ । ४ । १ ] इति 'एतदप्रमयं ध्रुवम्' [ बृह० ४ । ४ । २० ] इत्यादिश्रुतेः स्वप्रकाशं सर्वप्रमाणावेद्यमात्मानमसङ्गीकृत्य तत्र शास्त्रं प्रमाणमिति वदतामपसिद्धान्त इत्यर्थः ॥ १०६ ॥

तदेवं शब्दगतिपर्यालोचनायां नाखण्डार्थविषयता व.क्यस्येति स्थितमिदानीं सिद्धान्तविरोधिप्रसङ्गादपि ब्रह्मात्मवस्तुनो न वाक्यार्थतेत्याह—किं च स्वयंप्रभमिति । स्वयंप्रभावे हेतुः—अलुप्तचिदेकरूपमिति । 'नेति नेति' [ बृ० २ । ३ । ६ ] 'एतदप्रमयं ध्रुवम्' [ बृ० ४ । ४ । २० ] इति चाऽऽम्नानं सर्वप्रमाणविषयाद्बहिष्प्रमाणगोचरमभ्युपेत्याऽऽत्मनि च तस्मिन्नेवेदानीं शास्त्रप्रमाणमुदाहरन्तो भवन्तः सिद्धान्तं स्वाभ्युपगतं बाधन्त इत्येतदप्रामाणिकानां भवतामयुक्तमित्यर्थः ॥ १०६ ॥

सु० टी०—अनुपपन्नं च चिदात्मनि वाक्यप्रामाण्यं प्रमाणफलासंभवादित्याह—

सर्वत्र वस्तुषु जडेष्वजडप्रकाशं
कुर्वत्प्रमाणमिति संप्रतिपन्नमेतत् ।
ब्रह्मात्मवस्त्वजडबोधवपुः कुतोऽस्मि-
न्वेदान्तवाक्यजनिताऽजडसंविदन्या ॥ ७ ॥

सर्वत्रेति । प्रत्यक्षादिकं हि जडेषु वस्तुष्वजडप्रकाशं स्फुरणमादधत्प्रमाणमिति सर्वसिद्धम् । बोधरूपे च ब्रह्मणि कुतो वाक्येनाजडरूपा संविदाधीयेत न हि प्रकाशे प्रकाशाधानं संभवत्यालोकादावदृष्टेः फलव्याप्यत्वे जडत्वापत्तेश्चेत्यर्थः ॥ १०७ ॥

अ० टी०—न केवलं सिद्धान्तबाधापत्तेरप्रमेयत्वमात्मनस्तस्मिन्मानकृत्याभावादपीत्याह—सर्वत्र वस्तुष्विति । अजडबोधस्वरूपे ब्रह्मात्मवस्तुनि वेदान्तवाक्यजनिताऽन्या संविदजडप्रकाशात्मिका कुतोऽपेक्ष्यते न हि प्रकाशमाने सवितरि तत्प्रकाशनाय दीपाद्यपेक्षाऽस्तीत्यर्थः ॥ १०७ ॥

सु० टी०—एवं वाक्यस्य प्रमेयस्वभावनिबन्धनमप्रामाण्यमुक्त्वा प्रमाणस्वभावनिबन्धनमप्याह—

किं च क्रियापदमपेक्ष्य पदानि वाक्य-
भावेन सम्यगिह संगतिमाप्नुवन्ति।
नात्र क्रियापदमपेक्षितमामनन्ति
वाक्यं कुतो भवति वेदशिरस्तदानीम्॥ १०८॥

किं चेति। पदानि तावन्न क्रियापदनैरपेक्ष्येण वाक्यतया गुणप्रधानभावेन सम्यगन्वयं प्रतिपद्यन्ते क्रियायाः प्राधान्यात्। 'भावनैव च वाक्यार्थः स्वकारकविशेषिता' इतिन्यायात्। न च वस्तुनिष्ठेषु वेदान्तेष्वपेक्षितक्रियापदाम्नानमस्त्यस्मयसीत्यादेरक्रियार्थत्वस्य वक्ष्यमाणत्वादिति कुत एषां वाक्यत्वमित्यर्थः॥ १०८॥

अ० टी०—एवं प्रमेयस्वभावादपि न वेदान्तप्रामाण्यमित्युक्त्वा पुनरपि शब्दस्वभावमाश्रित्याऽऽक्षिपति—किं च क्रियापदमिति। क्रियापदं विना नामपदानामन्वयापर्यवसानात्तदपेक्षणीयम्। अत्र तु वेदान्तिनः क्रियापदमपेक्षितं नाऽऽमनन्ति यदा तदानीं वेदशिरो वेदान्तो वाक्यं कुतो भवति न भवतीत्यर्थः। तत्त्वमसीत्यादावस्यादिपदमाम्नातमप्यनपेक्षितमिति भावः॥ ८॥

सु० टी०—तर्हि पदसमूहत्वेनैवास्तु बोधकत्वमिति चेन्न पदानामर्थस्मारकत्वेनाननुभावकत्वादित्याह—

नापूर्वमर्थमुपलम्भयितुं पदानां
सामर्थ्यमस्ति परिहृत्य तु वाक्यभावम्।
स्वार्थस्मृतिं हि जनयन्ति पदानि लोके
विज्ञातसंगतितया न तु कार्यमन्यत्॥ १०९॥

नापूर्वमिति। क्रियारहितनामपदजातस्याऽऽकाङ्क्षाद्यभावेन वाक्यत्वाभावान्नापूर्वसंसर्गबोधनशक्तिरस्ति। पूषा प्रपिष्टभाग इत्यत्रापि भागपदसामर्थ्यात्क्रियापदाध्याहारेणैव बोधकत्वाभ्युपगमादित्यर्थः। कथमिति चेत्तत्राऽऽह—स्वार्थेति। उक्तं हि पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत इति॥ ९॥

अ० टी०—नन्वनापन्नवाक्यभावान्येव पदान्यखण्डमर्थमवगमयन्त्विति चेन्नापूर्वावगत्यसंभवादित्याह—नापूर्वमिति । कथं वाक्यभावं विना पदानामपूर्वमर्थमुपलम्भयितुं सामर्थ्यं नास्ति तत्राऽऽह—स्वार्थस्मृतिं हीति । अथ संगतिग्रहे पूर्वमेव विज्ञातार्थत्वात्पदानि स्वार्थस्मारकाण्येव न बोधकानीत्यर्थः ॥ ९ ॥

सु० टी०—ननु पदानामर्थस्मृतिमात्रहेतुत्वेऽपि पदार्था एव स्मृता वाक्यार्थं बोधयन्तु भाट्टवद्वैयाकरणवद्वा नित्यविभूनां वर्णानामानुपूर्वीविरहेण पदत्ववाक्यत्वासंभवात्पदवाक्यस्फोटावेव वाक्यार्थानुभावकौ स्तामित्यत्राऽऽह—

हित्वा न वाक्यपदते प्रतिपत्तिहेतु-
र्वेदो भवेदिति कथं चन वक्तुमीशः ।
कश्चित्कदाचिदपि तत्र कुतः श्रुतीनां
प्रामाण्यमात्मनि भवेदिति वर्णयन्ति ॥ ११० ॥

हित्वेति । न हि वेदः पदत्ववाक्यत्वपरिहारेण वाक्यार्थप्रतिपत्तिहेतुरिति शक्यं वक्तुं वर्णमात्रस्यार्थबोधकत्वे जाराराजेत्यनयोरप्यविलक्षणार्थबोधकत्वापत्तेः । नित्यविभुवर्णानामपि बौद्ध्याऽऽनुपूर्व्या पदवाक्यविभागसंभवात्पदार्थकरणत्वे च सप्तमप्रमाणापत्तेः । स्फोटस्य च

'यावन्तो यादृशा ये च पदार्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥'

इत्यादिना भट्टैरेव निरस्तत्वादित्यर्थः ॥ ११० ॥

अ० टी०—एवं तर्हि माऽस्तु वेदान्तानां वाक्यतया पदतया वाऽर्थबुद्धिहेतुत्वं प्रकारान्तरेण बोधकता भविष्यतीत्याशङ्क्याऽऽह—हित्वा न वाक्यपदते इति । कश्चित्कदाचिदपि वक्तुं नेश इति संबन्धः । न हि वर्णराशेः पदात्पदकदम्बाद्वाक्याद्वान्यच्छन्दरूपमर्थबोधकमिति प्रमाणमस्तीति भावः । एवं च सति नाऽऽत्मनि वेदान्ताः प्रमाणं संभवन्तीति फलितमाह—तत्र कुत इति ॥ ११० ॥

सु० टी०—किं च ब्रह्मणो मानान्तरसिद्धत्वे वेदान्तानामनुवादकतापत्तिरन्यथा सदादिपदशक्तिग्रहासंभव इत्युभयतःपाशा रज्जुरित्याह—

किंच प्रमान्तरमिहाभ्युपयत्प्रतीचि
वेदान्तवाक्यमनुवादकमभ्युपेयात् ।

मानान्तरं यदि न चेच्छति शब्दशक्ते-
स्तत्र ग्रहः कथमिति प्रतिपादनीयम् ॥ १११ ॥

सु० टी०—किंचेति ॥ १११ ॥

अ० टी०—अपि च वेदान्तेतरमानगोचरता प्रत्यगात्मनोऽभ्युपगम्यते न वेति विकल्पस्याऽऽद्यं प्रत्याह—किं च प्रमान्तरमित्यर्धेन । द्वितीयं विकल्पमनूद्य दूषयति—मानान्तरं यदि च नेच्छतीति ॥ १११ ॥

सु० टी०—अपि चाध्ययनविध्युपात्तत्वाद्वेदस्य प्रयोजनवदर्थपरत्वेन प्रामाण्यं न तु चक्षुरादिवदर्थमात्रावगाहितया प्रयोजनं च प्रवृत्तिनिवृत्तिसाध्यमिति कथमननुष्ठेये ब्रह्मणि प्रामाण्यमित्याह—

किं च प्रवृत्तिविनिवृत्तिविहीनवस्तु-
तत्त्वप्रतीतिजननान्न च किंचिदस्ति।
पुंसः प्रयोजनमतोऽपि न तत्र मानं
वेदान्तवाक्यमिति युक्तिमदुच्यमानम् ॥ ११२ ॥

किं च प्रवृत्तीति । अहेयानुपादेयवस्तुमात्रबोधनादित्यर्थ इत्युच्यमानं न युक्तिमदित्यन्वयः ॥ ११२ ॥

अ० टी०—इतोऽपि न ब्रह्मणि वेदान्तमानता युक्ता यतः शब्दप्रामाण्यं पुमर्थोपयोगिन्यर्थे भवति न प्रत्यक्षादिवदर्थमात्रे प्रवृत्तिसाध्यश्च पुमर्थ इति कूटस्थे ब्रह्मणि प्रवृत्त्ययोगान्न तत्र शब्दमानतेत्याह—किं च प्रवृत्तिविनिवृत्तीति। अतोऽपि वेदान्तवाक्यं तत्र ब्रह्मात्मनि न मानमित्युच्यमानं युक्तिमदित्यन्वयः ॥ ११२ ॥

सु०टी०—किंचाज्ञातार्थावबोधकस्यैव मानस्य मेयाज्ञाननिवर्तकत्वेन प्रमाणत्वमभ्युपगतं जैमिन्यादिभिर्न च चैतन्यात्मनि कथंचिदज्ञातता निरूपयितुं शक्या या प्रमाणेनापनीयेतेति, न तत्र वेदान्तानां मानत्वमित्याह—

अज्ञातमर्थमवबोधयतः प्रमायां
हेतुत्वमभ्युपगतं ननु वेदविद्भिः ।

अज्ञातता च परमात्मनि दुर्निरूपा
विज्ञानमात्रवपुषीति न मानकृत्यम् ॥ ११३ ॥

अज्ञातमिति । मानकृत्यमज्ञानापनयः ॥ १३ ॥

अ० टी०—अपि चाज्ञातार्थबोधकत्वेनैव प्रमाणानां प्रामाण्यमित्युच्यते वैदिकैर्न चाज्ञातत्वमात्मन्यस्ति विज्ञानस्वभावताविरोधादतोऽपि न तत्र वेदान्तमानतेत्याह—अज्ञातमर्थमिति ॥ ११३ ॥

सु० टी०—ननु चिदात्मन्यप्यज्ञानमस्त्यहमज्ञ इत्यनुभवादित्याशङ्क्य विरोधेन निराकरोति—

बोधस्वभावकमबुद्धमनुष्णमुष्णं
शीतस्वभावकमशीतमितीदृशानि ।
कः श्रद्दधीत पुरुषो वचनानि तस्मा-
द्ब्रह्माप्रबुद्धमिति वाक्यमयुक्तमाहुः ॥ ११४ ॥

बोधस्वभावकमिति । बोधात्मकं ब्रह्माप्रबुद्धमितिवाक्यमनुष्णमुष्णं मम माता वन्ध्येत्यादिवद्विरोधादेव व्याहतमित्यर्थः ॥ ११४ ॥

अ० टी०—ननु विज्ञानस्वरूपत्वेऽप्यात्मनि स्वानुभवसिद्धमज्ञानं माननिरस्यमस्तीति नेत्याह—बोधस्वभावकमिति । विज्ञानस्वभावेऽज्ञानानुभवो न श्रद्धेयो व्याघातादित्यर्थः । तस्मादित्यादि फलितार्थोक्तिः ॥ ११४ ॥

सु० टी०—किंचाज्ञातं मानमेयमिति कोऽर्थः किमज्ञानविशिष्टमज्ञानोपलक्षितमज्ञानोपहितं वा नाऽऽद्यो मानस्याज्ञानानिवर्तकत्वापत्तेः । नेतरो ज्ञातस्यापि पूर्वमज्ञातत्वेन मानमेयत्वप्रसङ्गात् । न च तृतीयोऽपि संभवतीत्याह—

उपाध्यभावे न भवेदुपाधिम-
त्तटस्थमज्ञानमुपाधिरिष्यते ।
प्रमाणबुद्धेर्न तदात्मवस्तुनि
स्वयंप्रकाशे न ततोऽत्र मानधीः ॥ ११५ ॥

उपाध्यभाव इति । अयमर्थः—अज्ञानं हि प्रमाणबुद्धेर्न विशेषणमुपलक्षणं वा किं तूपाधिरिष्यतेऽज्ञानविषयस्य प्रमाणबुद्धिविषयत्वमित्यर्थः ।

---

१ क. ग. °ज्ञा [ त ] ताप° । २ क. मानामे° ।

न चौपाधिकी प्रमाणबुद्धिरुपाध्यभावे संभवति । न चोपाधिसंभवः स्वप्रकाशचिदात्मन्यज्ञानासंभवस्योक्तत्वादतः कथं तस्य वेदाख्यमानमेयत्वमित्यर्थः । कथमज्ञानं प्रमाणबुद्धेरुपाधि(रिति *चेदुच्यते—अन्यत्र स्वधर्मसंक्रामकत्वमुपाधित्वमज्ञानं च स्वीयं विषयित्वं प्रमाणबुद्धौ संचारयदुपाधि ) रुच्यते । प्रमाणबुद्धेरज्ञानाव्यभिचारि( * तया तद्विषयित्वातिरिक्तविषयित्वानङ्गीकारात् । यथेच्छादेः स्वाव्यभिचारिज्ञानविषयित्वमेव ) विषयित्वमिति । तटस्थमित्यनेन च संसारितायामन्तःकरणमिव नेदं मेयान्तर्भूतमुपाधिः किं तु दृतिहरिशब्दे पशुत्ववत्तद्बहिर्भूतमेवेति सूचितम् ॥ ११५ ॥

अ० टी०—नन्वज्ञाने सत्येवाऽऽत्मनि प्रमेयत्वदर्शनात्तदभावे तदनुपपत्तेः स्वरूपतोऽप्रमेयोऽप्यात्माऽज्ञानोपाधिकः प्रमेयतामश्नुत इति चेत्तत्र वक्तव्यं किमज्ञानमात्मनः प्रमेयत्वे विशेषणमुपलक्षणं वेति । तत्र नाऽऽद्य इत्याह—**उपाध्यभाव इति** । अज्ञानस्य विशेषणत्वेन प्रमेयत्वोपाधित्वे तस्यापि प्रमेयत्वापत्तौ प्रमाणज्ञानानिवर्त्यत्वप्रसङ्गान्न तस्य प्रमेयविशेषणता । अतो विशेषणभूतोपाध्यभावे चिदात्मतत्त्वमुपाधिमन्न भवेदिति के[वल]स्यैव तस्य प्रमेयता वक्तव्या तत्र च न मानक्लृप्तमित्युक्तमित्यर्थः । द्वितीयं प्रत्याह—**तटस्थमज्ञानमुपाधिरिष्यते प्रमाणबुद्धेरिति** । नाज्ञानमात्मन उपलक्षणमपि किं तु तटस्थं सत्प्रमाणबुद्धेरुपाधिमात्रमिष्यते । उपलक्षणपक्षे कदाचिदज्ञातस्याऽऽत्मनोऽवगतस्यापि प्रमेयत्वप्रसङ्ग उपलक्षितत्वस्य सदातनत्वात् । तथा च केवलस्य प्रमेयत्वापत्तिरिति मानक्लृप्त्याभावस्तदवस्थः । नन्वज्ञानं नाऽऽत्मनो विशेषणं नाप्युपलक्षणं तथाऽपि दृतिहरिशब्दप्रयोगोपाधौ पशुत्ववदात्मनि प्रमेयत्वव्यवहारप्रवृत्त्युपाधिर्भविष्यत्यतोऽज्ञानमात्मनः प्रमेयत्वे द्वारं स्यादिति चेत्तत्राऽऽह—**न तदात्मवस्तुनि स्वयंप्रकाश इति** । तदज्ञानं स्वयंप्रकाश आत्मवस्तुनि न ताटस्थ्येनाप्युपाधिः संगच्छत इत्यर्थः । यत एवमज्ञानासंभव आत्मनि ततो हेतोरत्राऽऽत्मनि न मानधीः संभाव्यत इति फलितमाह—**न ततोऽत्र मानधीरिति** ॥ ११५ ॥

सु० टी०—इदानीं मानमेयत्वमेव तस्य न संभवति व्याघातादित्याह—

अद्वैतमात्मपदमाहुरनन्यमानं
द्वैतं प्रमाणमिह च प्रतिपादयन्ति ।

---

* धनुश्चिह्नितग्रन्थो नास्ति क. ग. पुस्तकयोः । * अयमपि ग्रन्थो नास्ति क. ग. पुस्तकयोः ।

वाक्ये निजे पदविरोधमनीक्षमाणाः
पाण्डित्यमप्रतिहतं प्रतिलभ्य धीराः ॥ ११६ ॥

अद्वैतमिति । अद्वैतं स्वप्रकाशं ब्रह्म द्वैतवेदाचार्यादिप्रकाश्यमिति वदन्तो निजवाक्यस्थपदानां विरोधं न पश्यन्तीत्यर्थः । पाण्डित्यमित्याद्यु-पहासः ॥ ११६ ॥

अ० टी०—किंचाद्वैतमात्मतत्त्वमित्यङ्गीकृत्य तत्र द्वैतं वेदान्तवाक्यप्रमाणमिति वदतां व्याहतवचनता स्पष्टेत्युपहसन्नाह—अद्वैतमात्मपदमाहुरिति । आत्मपदमात्मस्वरूप-मद्वैतमाहुः । तत्र च द्वैतं प्रमाणं प्रतिपादयन्ति । अतो द्वैतमेयस्याद्वैतत्वं व्याहतमित्यर्थः । तथाऽनन्यमानमात्मपदं वदन्ति तत्र च प्रमाणं वदन्तीति च व्याहतिरिति योजना । वाक्ये निज इति स्पष्टार्थम् ॥ ११६ ॥

सु० टी०—ननु मातृमानादिकं ब्रह्मकार्यत्वान्न ब्रह्मणो भिन्नमतो नाद्वैतत्वादिविरोध इत्याशङ्क्यानिष्टान्तरमाह—

मातृप्रमाणमिति मेयविभागभिन्नं
ब्रह्मैव चेद्भवति तत्र च वर्णयामः ।
कूटस्थतापहतिरेकरसत्वहानिः
शाक्यैश्च संधिरिति दूषणमन्यदत्र ॥ ११७ ॥

मातृप्रमाणेति । उपादानत्वे ब्रह्मणो विकारित्वापत्तेः कौटस्थ्यहानिर्मात्रा-दिविभागवत्त्वादेकरसत्वहानिर्विज्ञानरूपात्मभिन्नबाह्यविषयानभ्युपगमे बौद्धसिद्धान्तापत्तिश्चेत्यर्थः ॥ ११७ ॥

अ० टी०—ननु ब्रह्मणो मानमेयत्वेऽद्वैतत्वादिव्याहतिदोषः शङ्क्यः प्रमात्रादिभेदस्य ब्रह्मपरिणामरूपत्वेन ततः पृथगर्थत्वाभावादित्याशङ्कामुत्थाप्य तत्रैकं संधित्सतोऽपरं प्रच्य-वत इति न्यायेन परिहरति—मातृप्रमाणमितीति । चेद्भवति परमार्थत इति शेषः । तत्र चास्मिन्पक्षे वर्णयामो दूषणमिति प्रतिज्ञा । यत एकरसत्वहानिरतः कूटस्थतापहति-रिति योजना । न केवलमेतावदपि चात्र शाक्यैर्बौद्धैर्विज्ञानवादिभिः संधिस्तन्मतप्रवेश इति चान्यद्दूषणं स्यादिति योजना । यतो विज्ञानवादिनो विज्ञानमेवैकं मानं तदेव ग्राह्याका-रतया मेयं प्रमाता च नान्योऽस्तीति कल्पयन्ति तथा भवतामपि कल्पनाप्रसङ्गादि-त्यर्थः ॥ ११७ ॥

सु० टी०—ननु मातृमानादेर्ब्रह्मपरिणामत्वाभ्युपगमे हि कौटस्थ्यहानिर्न त्वेवं किं तु मात्रादिमानफलपर्यन्तमात्माज्ञानकल्पितमनिर्वचनीयमेवेष्टमिति नास्ति विरोध इति चेत्तर्हि ब्रह्मणोऽपि मानमेयत्वाभ्युपगमेन कल्पितत्वापत्तेः शून्यवादप्रसङ्ग इत्याह—

अज्ञानकल्पितमनिर्वचनीयमिष्टं
मात्रादिमानफलपर्यवसानमेतत् ।
इत्युच्यते यदि तदा परमात्मनोऽपि
मेयत्वतो भवति कल्पितताप्रसङ्गः ॥ ११८ ॥

अज्ञानेति ॥ ११८ ॥

अ० टी०—अथ ब्रह्मणः प्रमात्रादिभेदो न वास्तवः किं त्वज्ञानकल्पितोऽतो न कूटस्थत्वादिबाध इति मतमनूद्य दूषयति—अज्ञानकल्पितमिति । मानफलपर्यवसानमेतन्मात्रादि ब्रह्मण्यज्ञानकल्पितमनिर्वचनीयमिष्टं न परमार्थमिति यद्युच्यत इति योजना । तदाऽस्मिन्पक्षे ब्रह्मणोऽपि मेयत्वतः कल्पितप्रमात्रादिप्रमेयत्वात्कल्पितताप्रसङ्गो भवेत् । न हि कल्पितप्रतीतिविषयोऽकल्पितः स्यान्मा भूद्भ्रान्तिदृष्टरजतादेरकल्पितत्वमित्यर्थः ॥ ११८ ॥

सु० टी०—ननु सति मेयत्वे ब्रह्मणः कल्पितताप्रसङ्गस्तदेव तु नाङ्गी कुर्मोऽप्रमेयत्वश्रुतिविरोधादिति चेत्तर्ह्यप्रमेयं वेदान्तवेद्यमिति वदतां वह्निरदाह्यं दहतीतिवत्प्रतिज्ञाविरोध इत्याह—

ब्रह्म प्रमेयमथ नेष्टमिह प्रमाणं
वेदान्तवाक्यमिति पक्षपराहतिर्वः ।
न ह्यप्रमेयमवबोधयदस्ति मानं
नादाह्यदाहक इति प्रथितः कृशानुः ॥ ११९ ॥

ब्रह्मेति । पक्षपराहतिमेवाऽऽह—न हीति । ततश्चौपनिषदत्वश्रुतिः शास्त्रयोनिसूत्रं च पीड्येतेत्यर्थः ॥ ११९ ॥

अ० टी०—अथैतद्दोषपरिजिहीर्षया ब्रह्मणः प्रमेयत्वमेव नेष्यत इति तत्राऽऽह—ब्रह्म प्रमेयमिति । पक्षपराहतिर्व्याघात इत्यर्थः । व्याहतिमेव दृष्टान्तेनोपपादयति—न ह्यप्रमेयमिति ॥ ११९ ॥

सु० टी०—ननु विषयत्वेऽपि ब्रह्मणस्तद्गतानिर्वचनीयाज्ञाननिवर्तनसंभवान्न श्रुतिसूत्रपराहतिरित्याशङ्क्यानिर्वचनीयाप्रसिद्ध्या दूषयति—

किं चाप्रसिद्धमिदमत्र जगत्त्रयेऽपि
स्वाज्ञानकल्पितमनिर्वचनीयमेकम् ।
निःशेषतीर्थदृगुदीरिततन्त्रमार्गे
सिद्धे यतः सदसती सकलेऽपि तन्त्रे ॥ १२० ॥

किं चेति । लौकिकपरीक्षकवैदिकेषु सदसद्विलक्षणमज्ञानकल्पितमनिर्वचनीयं नैकमपि (* वस्तु प्रसिद्धमित्यर्थः । नन्वस्ति शुक्तिरजताद्येव तादृशमिति नेत्याह—सिद्धे इति । यतः सर्वतन्त्रेष्वपि ) सदसती एव सिद्धे परस्परविरोधे हि इतिन्यायान्न तद्विलक्षणमस्तीत्यर्थः । शुक्तिरजताद्यप्यन्यत्र सदेवेति भावः । तन्त्रं विशिनष्टि—निःशेषेति । तीर्थदृग्भिरुदीरितस्तन्त्रमार्गः शास्त्रार्थबोधोपायो यत्रेत्यर्थः ॥ १२० ॥

अ० टी०—प्रमात्रादिभेदस्याज्ञानकल्पितानिर्वचनीयत्वमङ्गीकृत्य दूषणमुक्तं वस्तुतस्तु लोकवादिप्रसिद्ध्यभावादनिर्वचनीयत्वमेवासंभव्यतो न कल्पितमेयत्वमपीत्याह—किं चाप्रसिद्धमिति । अनिर्वचनीयमप्रसिद्धमित्येतत्स्फुटयति—निःशेषेति । तीर्थदृशः शास्त्रकर्तारः । अशेषशास्त्रकृदुदीरिततन्त्रमार्गे सकलेऽपि तन्त्रे सर्वस्मिन्नपि शास्त्रे लोकेऽपि यतः सदसती वस्तुनी प्रसिद्धे न तद्विलक्षणमित्यर्थः ॥ १२० ॥

सु० टी०—किं च कथं निःस्वरूपस्याज्ञानस्य द्वैतहेतुत्वं ‘ कथमसतः सज्जायेत ’ [ छा० ६ । २ । २ ] इतिश्रुत्यैव निषेधादित्याह—

अज्ञानमप्यसदभावतया प्रसिद्धे-
र्द्वैतप्रसूतिकृदतो न तदभ्युपेयम् ।
नासत्कदाचिदपि सज्जनने समर्थं
वन्ध्यासुता न खलु पुत्रशतं प्रसूते ॥ १२१ ॥

अज्ञानमपीति । न हि भावभूतमज्ञानं मानाभावादपि तु न ज्ञानमज्ञान-

---

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तकस्थः ।

मिति ज्ञानाभावतयैव प्रसिद्धेरवस्तुभूतमित्यर्थः । अस्त्वसतोऽपि सदुपादानत्वमितिचेन्न दृष्टविरोधादित्याह—वन्ध्येति ॥ १२१ ॥

अ० टी०—किं च यदुच्यते द्वैतस्याज्ञानकल्पितत्वमित्येतदप्यनुपपन्नं तस्यैवासत्त्वादसतश्च सज्जननासंभवादित्याह—अज्ञानमप्यसदिति । असत्त्वे हेतुः—अभावतया प्रसिद्धेरिति । ज्ञानाभावे त्वज्ञानशब्दार्थस्य प्रसिद्धत्वादित्यर्थः । शिष्टं स्पष्टार्थम् ॥ १२१ ॥

सु० टी०—शब्दस्य च प्रमाणस्वभावेन परोक्षबोधकत्वान्नापरोक्षे ब्रह्मणि प्रामाण्यमित्याह—

वाक्यप्रसूतमतिरिन्द्रियजन्यधीव-
न्नार्थापरोक्ष्यजननी भवितुं समर्था ।
तेनास्तु वाक्यजनितात्मपरोक्षबुद्धि-
र्भ्रान्तिः सदाऽजडतयाऽनुभवेऽपरोक्षे ॥ १२२ ॥

वाक्येति । इन्द्रियेत्यादिर्वैधर्म्यदृष्टान्तः । तर्हि परोक्षमेवाऽऽत्मज्ञानं वाक्येन जन्यतामितिचेन्नाऽऽत्मन्यजडत्वेन नित्यापरोक्षे परोक्षधीजनने शब्दस्य भ्रान्तिहेतुत्वप्रसङ्गादित्याह—तेनास्त्विति । स्यादित्यर्थः । नन्वेवं परसंवेदनानुमितिरपि भ्रान्तिः स्यादिति चेन्न परसंवेदनस्य व्यवहितत्वेन परोक्षत्वात् ॥ १२२ ॥

अ० टी०—भवतु वा यथाकथंचिदात्मनः प्रमेयत्वं प्रमात्रादिद्वैतस्य चाज्ञानकल्पितत्वं तथाऽपि न वेदान्तैर्ब्रह्मणि प्रमितिरुत्पादयितुं पार्यते ब्रह्मणो नित्यापरोक्षत्वस्वाभाव्याच्छब्दस्य च परोक्षार्थावभासस्वभावत्वादपरोक्षे वस्तुनि परोक्षज्ञानस्य भ्रमत्वापत्तेरित्याभिप्रेत्याऽऽह—वाक्यप्रसूतमतिरिति । येन हेतुना वाक्यप्रसूतमतिरिन्द्रियजन्यधीवदर्थापरोक्ष्यजननी भवितुं न समर्था तेन वेदान्तवाक्यजनिता ब्रह्मात्मनि परोक्षबुद्धिर्भ्रान्तिरस्तु स्यादिति योजना । कुत इत्यत आह—सदेति । अजडतयेति च्छेदः । अजडतया सदैवानुभवरूपेऽत एवापरोक्ष आत्मनि तद्विपरीतावभासनस्वभावा वाक्यजा धीर्न प्रमा स्यादिति शेषः ॥ १२२ ॥

---

१ क. ग. °भावत्वेन° । २ क. ग. °भापरो° । ३ क. ग. °त्वाभात् ।

सु० टी०––ननु वाक्यस्यापरोक्षधीहेतुत्वं प्रमेयानुरोधादभ्युपेयमिति चेन्न प्रमाणस्वभावविरोधादित्याह––

नित्यापरोक्षमपि वस्तु परोक्षरूपं
वेदान्तवाक्यमवबोधयति स्वभावात् ॥
प्रामाण्यमत्र कथमस्य वदोपपन्नं
नह्यन्यदन्यदिति बोधयतः प्रमात्वम् ॥ १२३ ॥

नित्येति । स्वभावादिति । प्रमाणानां स्वसामर्थ्यतिरस्कारेण विषयस्वभावानुरोधित्वस्य क्वचिदप्यदर्शनादित्यर्थः । नन्वपरोक्षं ब्रह्मेत्याकारं वाक्यजं ज्ञानं परोक्षमपि व्यधिकरणाप्रकारकत्वान्न भ्रान्तिरिति चेत्तत्राऽऽह— प्रामाण्यमिति । परोक्षार्थविषयत्वं हि पारोक्ष्यं तच्च व्यवहितावभासकत्वम् । न च व्यवहितावभासिनः शब्दस्याव्यवहितत्वेनाऽऽत्मावभासकत्वं संभवति स्वभावविरोधादिति कथमस्य प्रामाण्यमित्यर्थः ॥ १२३ ॥

अ० टी०—ननु प्रमाणस्य वस्त्वधीनत्वादपरोक्षे ब्रह्मात्मनि वाक्यमप्यपरोक्षामेव धियं जनयिष्यतीत्याशङ्क्यातिप्रसङ्गान्मैवमित्यभिप्रेत्योक्तमेवोपपादयति—नित्यापरोक्षमपीति । स्वभावादिति । वाक्यप्रमाणस्वभावादित्यर्थः । नहि प्रमाणस्वभावो वस्त्वधीनो रसवद्द्रव्यसंनिकृष्टेन चक्षुषा रसस्यापि ग्रहणप्रसङ्गादिति भावः । अस्तु तर्हि परोक्षज्ञानमप्यात्मनि प्रमाणं तन्मात्रविषयत्वादात्मवस्तुनश्चैकरूपत्वाद्रूप इव चक्षुर्जन्यं ज्ञानमिति चेत्तत्राऽऽह–प्रामाण्यमत्र कथमिति । अत्राऽऽत्मन्यस्य वाक्यस्य कथं प्रामाण्यं वद । हि यस्मादन्यदन्यादृशं वस्त्वन्यदिति तद्विपरीताकारं बोधयतो न प्रमात्वमस्ति शुक्तिस्वरूपं रजतमिति बोधयत एवेत्यर्थः । अयं भावः—आपरोक्ष्यं पारोक्ष्यं च वस्तुधर्मो न ज्ञानधर्मो यतो ज्ञातुरिन्द्रियमनोव्यवहितोऽर्थः परोक्ष इति तद्विषयज्ञानं च परोक्षमिति व्यवह्रियते तदव्यवहितोऽर्थोऽपरोक्ष इति तज्ज्ञानमप्यपरोक्षमिति । तदिह प्रतीचो ज्ञातुः स्वरूपत्वेनात्यन्ताव्यवहितत्वाद्ब्रह्मणः प्रतीचश्च नित्यापरोक्षस्वाभाव्यात्तादृशे ब्रह्मवस्तुनि सामान्यादिव्यवधानेन प्रवर्तमानस्वभावः शब्दो नापरोक्षधियं जनयितुमीष्टेऽतोऽर्थविपरीताकारधीजनकत्वादप्रमाणं स्यादिति ॥ १२३ ॥

सु० टी०—ननु ज्ञानस्य परोक्षविषयत्वं चेत्पारोक्ष्यं तर्ह्यपरोक्षवि-

---

१ क. ग. °त्वं स्वभा° ।

पयत्वमपारोक्ष्यमिति भवतु शब्दजन्यमप्यपरोक्षमित्याशङ्क्यासामर्थ्येन निरस्यति—

वस्त्वस्तु नित्यमपरोक्षमिदं तु वाक्यं
तद्वस्तु वक्तुमपरोक्षमशक्तमेव ।
न ह्यस्ति शब्दजनिताऽत्र जगत्त्रयेऽपि
बुद्धिः करोति खलु या विषयापरोक्ष्यम् ॥१२४॥

वस्त्विति । यद्यपि नित्यापरोक्षमात्मवस्तु तथाऽपि शब्दस्य व्यवहितबोधन एव सामर्थ्यादव्यवहिते प्रत्यगात्मन्यप्रामाण्यमेव चक्षुष इव शब्दादौ सर्वप्रमाणानां योग्यस्वविषय एव प्रवृत्तेरित्यर्थः ॥ १२४ ॥

अ० टी०—तर्हि वस्त्वधीनत्वाज्ज्ञानप्रामाण्यस्य यथावस्त्वपरोक्षमेव ज्ञानं शब्दोऽपि जनयेदित्याशङ्क्यान्यत्र शब्दस्यापरोक्षज्ञानजनकत्वस्य क्वाप्यदर्शनान्नैवमित्याह—वस्त्वस्तु नित्यमिति । विमतो नापरोक्षप्रमितिजनकः शब्दत्वात्संमतवदित्यर्थः ॥ १२४ ॥

सु० टी०—सर्वत्र वस्तुष्वित्यत्र चिदात्मनि संविदुपनयासंभवाच्च वाक्यप्रामाण्यमित्युक्तामाशङ्कामुद्धर्तुं प्रयतते—

अत्राऽऽह यद्यपि किमप्युपनेयमत्र
चैतन्यवस्तुनि न संभवति प्रमाणैः ॥
अस्त्येव तत्र भवतीति निदानभूत-
मज्ञानमात्रमपनेयमनन्यमाने ॥ १२५ ॥

अत्राऽऽहेति । व्यवहितस्याप्यनिर्वचनीयदूषणप्रसङ्गेनोपन्यासः । यद्यप्यात्मनि प्रमाणैः संविदुपनयोऽशक्यस्तथाऽप्यज्ञानापनय एवास्तु मानकृत्यमित्यर्थः ॥ १२५ ॥

अ० टी०—तदेवं मानमेययोः स्वभावपर्यालोचनायां ब्रह्मात्मन्यद्वितीये वेदान्तानां मानत्वमनुपपन्नमित्युपपादितं पूर्वपक्षिणा तत्र सिद्धान्ती प्रकारान्तरेण ब्रह्मणि मानप्रवृत्तिं शङ्कते—अत्राऽऽहेति । यत्पूर्वमुक्तमजडप्रकाशे ब्रह्मात्मनि न मानेन प्रकाश आधीयत इति तत्र मानकृत्यं नास्तीति तदङ्गी करोति—यद्यपीति । यद्यपि तत्र मानेनोपनेयं किमपि नास्ति तथाऽप्यपनेयं किमप्यस्तीति न मानकृत्याभाव इत्यर्थः । तदेवाऽऽह—अनन्यमान इति । अनन्यमाने स्वप्रकाशेऽप्यात्मनीत्यर्थः ॥ १२५ ॥

---

१ क. ग. °त्युक्तया श° । २ क. मप्य्प° ।

सु० टी०—सोऽपि न संभवति विकल्पासहत्वादिति दूषयति—

नैतत्प्रमाणमपनेतृ सतो न ताव-
न्नैतन्नियोज्यमसतोऽप्युपघातसिद्ध्यै ।
नाप्यन्यदस्ति सदसद्यदनेन हेयं
तस्मात्प्रमाणमपनेतृ न कस्यचिद्वः ॥ १२६ ॥

नैतदिति । एतद्वाक्यात्मकम् । अज्ञानं किं सद्वाऽसद्वा सदसद्वा सर्वथाऽपि न प्रमाणापनोद्यमित्यर्थः । प्रमाणसहस्रेणापि सतः सर्पादेरपनयादर्शनादसतश्च नित्यनिवृत्तत्वात्सदसतश्च विरोधादेवासंभवादित्यर्थः ॥ १२६ ॥

अ० टी०—तत्र यद्यपि बोधस्वभावे ब्रह्मण्यबोधस्वभावमज्ञानं न संभवतीत्युक्तोत्तरमेतत्तथाऽप्यसदभावतया प्रतीतेरित्युक्त्वोक्तं प्रपञ्चयन्सदादिविकल्पासहत्वेनाज्ञानं दूषयति पूर्ववादी—नैतदिति । अज्ञानं सद्वाऽसद्वा सदसद्वोभयलक्षणं वा यत्प्रमाणेन निवर्त्येत तत्र नाऽऽद्य इत्याह—प्रमाणमपनेतृ सतो न तावदिति । 'नाभावो विद्यते सतः' [ भ०गी० २ । १६ ] इति स्मृतेः सतो मानानिवर्त्यत्वादित्यर्थः । द्वितीयं निरस्यन्नाह—नैतन्नियोज्यमसतोऽप्युपघातसिद्ध्या इति । एतत्प्रमाणमसतो नित्यनिवृत्तत्वादित्यर्थः । न तृतीय इत्याह—नाप्यन्यदस्ति सदसद्यदनेन हेयमिति । प्रत्येकं सतोऽसतश्चान्यत्सदसदात्मकमेव किमपि न संभाव्यते यदनेन प्रमाणेन हेयमित्यर्थः । चतुर्थपक्षनिराकरणं वक्ष्यमाणं सिद्धवत्कृत्याऽऽत्मनि प्रमाणापोत्याभावमुपसंहरति—तस्मादिति शेषेण ॥ १२६ ॥

सु० टी०—किं च मानस्याकारकत्वादपि नाज्ञानापनेतृत्वमित्याह—

मानं न कारकमिति प्रथितं पृथिव्यां
स्याच्चेत्क्रियावदिदमुज्झितमानभावम् ॥
जन्यं न मानफलमित्यपि युष्मदीयाः
संविद्रते न खलु जातु चिदक्षरेऽस्मिन् ॥ १२७ ॥

मानमिति । अज्ञातज्ञापकं हि मानं नानुत्पन्नोत्पादकमपनेतृत्वे च कुद्दालादिवत्कारकत्वापत्तेर्मानत्वव्याघात इत्यर्थः । ननु मानस्यापि प्रमाजनकत्वात्कारकत्वमस्तीति चेन्न त्वयैव तदनभ्युपगमादित्याह—जन्यमिति । जडेष्वपि घटादिषु न मानफलं जन्यमपि तु नित्यैव घटावच्छिन्ना

संविद्भिव्यज्यत इति वेदान्तिनः प्रतियन्ति चिदात्मनि तु न कदाचि-दपि जन्यं मानफलमिच्छन्ति परागर्थप्रमेयेषु या फलत्वेन संमता संवि-त्सैवेह मेयोऽर्थे इत्यभ्युपगमादित्यर्थः ॥ १२७ ॥

अ० टी०—अङ्गीकृतेऽप्यज्ञाने यादृशेन तादृशेन मानेन न निवर्त्यते मानस्याकारक-त्वात्कारकस्य चामानत्वादित्याह—मानं न कारकमिति। मानस्य ज्ञापकत्वप्रसिद्धिविरो-धादित्यर्थः। ननु मानमपि फलस्य जनकत्वात्कारकमिति चेन्न वेदान्तिनस्तत्रासंप्रतिपत्ते-रित्याह—जन्यं न मानफलमिति। युष्मदीया वेदान्तिनो जडेऽप्यर्थे मानफलम-र्थस्फूर्तिरूपं न जन्यमिति संविद्रते संवदन्ते स्वी कुर्वन्ति। नित्यैव संविद्विषयावच्छेदेनाभि-व्यज्यमानफलमिति हि ते मन्यन्ते। अक्षरे तु कूटस्थसंविद्रूपेऽस्मिन्प्रत्यगात्मनि न जातुचिन्मा-नफलं जन्यमिच्छन्तीत्यर्थः ॥ १२७ ॥

सु० टी०—ननु सदसद्विलक्षणमेवानिर्वचनीयमज्ञानमिति नोक्त-विकल्पग्रासो नापि कारकतेत्याशङ्क्य प्रागुक्तदोषं स्मारयति—

नाद्यापि वेद्म्यहमनिर्वचनीयभाषां
सर्वप्रवादिहृदयान्यपि गाहमानः।
तात्पर्यतो न च तथाविधमस्ति किंचि-
ल्लोके प्रसिद्धमपि यद्विषयेयमिष्टा ॥ १२८ ॥

नाद्यापीति। सर्वतान्त्रिकमतानि तात्पर्येणान्विष्यन्नाद्याप्यनिर्वचनीय-भाषामपि पश्यामीति शास्त्राप्रसिद्धिमुक्त्वा लोकप्रसिद्धिमपि निर-स्यति—नचेति ॥ १२८ ॥

अ०टी०—चतुर्थपक्षनिराकरणं प्राक्सिद्धवत्कृतं प्रपञ्चयति—नाद्यापि वेद्म्यहमिति। सदसदुभयप्रकारविलक्षणमनिर्वचनीयमज्ञानमित्यस्य भाषां लक्षणप्रमाणगिरं नाद्याप्यहं वेद्मि। कथं न वेत्सि वादिशतप्रसिद्धेरित्यत आह—सर्वेति। सर्वेषां वादिनां हृदयान्यभिप्रायां-स्तात्पर्यतो गाहमानोऽपीत्यन्वयः। तर्हि लौकिकव्यवहारादेव जानीहीति चेत्तत्राऽऽह—न च तथाविधमिति। परस्परविरुद्धयोः सदसतोरन्यतरनिषेधेऽन्यतरविधानस्यार्थ-सिद्धेर्न सदसद्विलक्षणमनिर्वचनीयं संभाव्यत इति भावः ॥ १२८ ॥

सु० टी०—ततश्च सापेक्षत्वात्प्रयोजनापर्यवसायित्वात्प्रमाणफलासं-भवाच्चाध्ययनमात्रफला वेदान्ता न ब्रह्मणि प्रमाणमिति समन्वयसूत्रप्र-थमपूर्वपक्षमुपसंहरति—

तस्मात्प्रमाणफलमत्र निरूप्यमाणं
ब्रह्मात्मवस्तुनि न संभवतीह किंचित्।

कृत्यं विना न च निरूपयितुं प्रमाणं
वेदान्तवाक्यमिह शक्यमनर्थकत्वात् ॥ १२९ ॥

तस्मादिति ॥ १२९ ॥

अ० टी०—यस्मादेवं संवेदनसंविधानं वाऽज्ञानहानं वा न मानकृत्यमात्मन्युपपद्यते तस्मात्तदभावे न तत्र वेदान्तानां प्रामाण्यमुपपद्यत इत्युपसंहरति—**तस्मादिति**। निगदव्याख्यातं पद्यम् ॥ १२९ ॥

सु० टी०—एवं सिद्धे शब्दशक्तिस्वीकारेऽपि ब्रह्मणि वेदान्ताप्रामाण्यमुक्त्वा तत्रत्यद्वितीयवर्णकपूर्वपक्षयुक्तिमुपन्यस्यति—

कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिं
श्रोतुः प्रवर्तकधियं परिकल्प्य बालः ॥
चेष्टावशात्पुनरपि प्रविभज्य भागं
भागस्य वाचकमिति स्वयमेव वेत्ति ॥ १३० ॥

कार्यान्वयेति। व्युत्पत्तिर्हि प्रवर्तकवृद्धवाक्यादेव लोके दृष्टा प्रवृत्तिश्च कार्यताज्ञानादेव व्युत्पित्सुना स्वस्मिन्ननुभूता ततश्च बालो गामानयेति वाक्यं श्रुत्वा प्रवृत्तस्य प्रयोज्यवृद्धस्य चेष्टावशात्प्रवृत्तिरूपलिङ्गात्प्रवर्तकधियं कार्यताज्ञानं स्वदृष्टान्तेनानुमाय तच्चाऽऽनन्तर्याच्छब्दजन्यत्वेन परिकल्प्य गामानयेतिपदजातस्य प्रथमं सामान्यतः कार्यान्विते शक्तिं निश्चिनोति। पुनरप्यश्वमानय गां बधानेति प्रयोगेच्छावापोद्वापाभ्यां क्रियाविशेषव्यभिचारेऽपि कार्यमात्राव्यभिचाराद्गवादिपदस्य कार्यान्वितगवाद्याकृतौ शक्तिं वाक्यभागं वाक्यार्थभागस्य वाचकत्वेन प्रविभज्य स्वयमेव नैपुण्याद्वेत्तीत्यर्थः। अत्र च कार्यवाचिलिङादेः कार्यान्तरान्वितार्थत्वायोगादन्यान्वितमात्रशक्तौ च प्रयोजकद्वैरूप्यापत्तेः कार्यप्रतियोगिकान्वयान्वयित्वं कार्यानुगतमुच्यते ॥ १३० ॥

अ०टी०—तदेवमुक्तयुक्तिकदम्बैर्वेदान्तब्रह्मणोर्मानमेयभावो न संभवतीत्युक्त्वाऽधुना पदानां सिद्धे वस्तुसंगतिग्रहाभावात्कार्यान्वितार्थ एव सर्वसिद्धार्थपदसंगतिग्रहाच्छब्दानामर्थबोधनस्य च संगतिग्रहाधीनत्वात्कार्यपरा एव सर्वे शब्दा लौकिका वैदिकाश्चेति मन्यमानानां मतमाश्रित्य शुद्धे सिद्धे ब्रह्मणि वेदान्तप्रामाण्यमाक्षिपति—**कार्यान्वयान्वयिनीति**। कार्यं लिङादिपदवाच्यो नियोगस्तेनान्वयः कार्यान्वयस्तेनान्वयि तत्कार्यान्वयान्वयि तस्मिन्वस्तुनीति विग्रहः। एवं सत्यन्वयान्वयिग्रहणेन कार्याकार्यार्थयोरुभयोरप्यन्वयित्वावि-

शेषात्प्रयोजकद्वै*विध्यकल्पनाप्रसङ्गदोषः परिहृतः। बालो व्युत्पित्सुः श्रोतुर्मध्यमवृद्धस्योत्तम-वृद्धप्रयुक्तशब्दश्रवणानन्तरं प्रवृत्तिहेतुभूतां धियं चेष्टावशात्स्वप्रवृत्तिदृष्टान्तेन कार्यविषयां परिकल्प्य तत्र सामान्यतः कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिं स्वयमेव वेत्तीति प्रथमं योजना। पुनरपि प्रयोगभेदेषु गामानयाश्वमानय गां बधानाश्वं बधान+ ॥ १३० ॥

सु॰ टी॰—नन्वेवं लिङादेः स्वार्थकार्यान्वयान्वयिनि स्वार्थे शक्तिरित्येकस्यावच्छेद्यावच्छेदकत्वापत्तिरित्याशङ्क्याऽऽह—

त्यक्तः कार्यान्वितार्थं वदितुमलमयं शब्द इत्येष पक्षो
नोक्तो योग्येतरार्थान्वितमिति तु पुनः पूर्वमप्येष पक्षः ॥
किं तु स्यादस्य शक्तिर्निजसहजवशादन्वितार्थाभिधाने
योग्यत्वादेस्तु पश्चात्स्वयमुपनिपतेदस्य कार्यैदमर्थ्यम्[1] ॥ ३१ ॥

त्यक्त इति। कार्यान्विताभिधाने शब्दस्य शक्तिरित्ययं पक्ष उक्तदोषाद्गौरवाच्च त्यक्त इत्यर्थः। तत्किं योग्येतरान्विते शक्तिर्नेत्याह—नोक्त इति। अयोग्येनानितरेण वाऽनन्वयाद्गुरुत्वाच्च नायमप्यस्माभिरुक्त इत्यर्थः। तर्हि किमभ्युपेयत इति चेत्तत्राऽऽह—किं त्विति। अन्वितार्थवाचित्वमेव शब्दस्य स्वभावः शब्दश्रवणानन्तरं नियमेन तत्प्रतीतेरित्यर्थः। नन्वेवं सिद्धान्विते सिद्धेऽपि शक्तिः स्यादिति नेष्टसिद्धिस्तत्राऽऽह—योग्यत्वादेरिति। सिद्धस्य हि न सिद्धेनान्वयो योग्यो 'गुणानां च परार्थत्वात्' [ जै॰ ६। ४। १३ ] इतिन्यायात्। नापि कार्यस्य कार्येण द्वयोः प्राधान्यादपि तु सिद्धकार्ययोरेव साध्यसाधनभावेन परस्परसाकाङ्क्षयोग्ययोरन्वयः। ततश्च भूतं भव्यायोपदिश्यत इति न्यायात्सिद्धं कार्यार्थमिति ( ÷ कार्यप्राधान्यात्तत्परः, सर्वो वेद इत्यर्थः ॥ ३१ ॥

अ॰ टी॰—शब्दशक्तिरिति केवलं मया पूर्वमुक्तं तदपि त्वद्बुद्ध्यनुरोधादिदानीं त्यक्तमित्यर्थः। कथं तर्हि तत्राभ्युपगमनिश्चयो न ह्यनिश्चितं वदन्नवधेयवचनो भवतीत्यत

---

* कार्यान्विते शक्तिरित्यभ्युपगमे प्रयोजकद्वैविध्यं तथा हि कार्यान्वितानां सिद्धपदानां कार्यान्विते शक्तिः कार्याभिधायितिङा पदानां तु कार्यान्तराभावात्सिद्धान्विते स्वरूपे वा शक्तिरिति। + अतः परं चैतच्छ्लोकस्याग्रिमश्लोकस्यापि न पूर्णा टीका। ÷ अयं ग्रन्थः खपुस्तके।

---

[1] क. °पतत्यस्य।

आह—किं तु स्यादिति । अस्य शब्दस्य शक्तिर्निजसहजवशादसाधारणस्वभाव...रतोऽन्वितार्थाभिधाने स्यादिति संबन्धः । सिद्धत्वकार्यत्वविशेषांशौदासीन्येन केवलमन्वितार्थबोधकत्वं शब्दस्वभाव इति निश्चीयत इत्यर्थः । तर्ह्येकस्यैव स्वेन स्वस्यान्वितत्वासंभवादन्यान्विते शक्तिग्रह इत्ययमेव पक्षः समागत इत्याशङ्क्याऽऽह—योग्यत्वादेरिति । अस्य शब्दस्य कार्यैदमर्थ्यं कार्यैकपरतया तदन्वितस्यार्थस्य बोधकत्वं पश्चात्सामान्यतोऽन्वितबोधकत्वशक्त्यध्यवसायानन्तरं योग्यत्वादेराकाङ्क्ष्ययोग्यतासंनिधिरूपविशेषणत्रयवशात्तु स्वयमुपनिपतेत्पर्यवसितं भवेदिति योजना । एतदुक्तं भवति सिद्धस्य सिद्धेन कार्यस्य वा कार्येण सहान्वययोग्यताऽऽकाङ्क्षा वा नास्ति समस्वभावतया परस्परमुपयोगाभावात्किं तु सिद्धकार्ययोर्निर्वर्तकनिर्वर्त्यभूतयारन्योन्याकाङ्क्षान्वययोग्यता चेति स्थिते कार्यप्रधानक्रियापदं विना वाक्यपर्यवसानदर्शनात्कार्यप्रधान एव पदान्वय इति कार्यैदमर्थ्यं विशिष्टकार्यपरत्वं वाक्ये निश्चीयत इति ॥ ३१ ॥

सु० टी०—ननु किं तत्कार्यं यत्परत्वं वेदस्येत्याकाङ्क्षायां ) तल्लक्षणामाह—

> प्रवृत्त्यभावस्य विरोधिकार्यं कालत्रयानन्वितमाहुरेके ।
> स्वगोचरस्येप्सितसाधनत्वं विज्ञापयत्प्रेरकमाहुरन्ये ॥ १३२ ॥

प्रवृत्तीति । यस्मिन्सति साधिकारस्य प्रवृत्तिरवश्यंभाविनी स प्रवर्तनाख्यो विधिव्यापारो धात्वर्थगोचरप्रवृ( * त्यभावविरोधी कार्यार्थमित्यर्थः । न च ब्रह्मणि काले वाऽतिव्याप्तिर्ब्रह्मण औदासीन्यात् । कालस्य प्रवृ )त्तितदभावानुगुणत्वात्प्रवृत्त्यभावविरोधित्वं प्रवृत्तौ रागे चास्तीति तद्वारणाय कालत्रयेति कालत्रयानन्वितत्वेन प्रतीयमानमित्यर्थः । शब्दभावना तु लिङादितः कालत्रयासंसृष्टत्वेन प्रतीयते । एके भाट्टाः । अन्ये तु विधिगोचरयागादीष्टसाधनत्वमज्ञातं बोधयदिच्छाद्वारा प्रवर्तकं कार्यमिति लिङाद्येव कार्यविषयत्वादुपचारेण कार्यमित्याहुः । अत्र विधिगोचरेति यागादीष्टसाधनताबोधकान्वयव्यतिरेकवारणाय ॥ १३२ ॥

अ० टी०—ननु किमिदं कार्यं नाम यत्परत्वं शब्दस्य प्रतिपाद्यत इत्यपेक्षायां लक्षणोक्तिभिस्तत्स्वरूपमवगमयति—प्रवृत्त्यभावस्य विरोधिकार्यमित्यादिना पक्षद्वयेन । यस्मिन्सति प्रवृत्त्यभावो न भवति किं तु प्रवृत्तिर्भवत्येव तत्प्रवृत्त्यभावविरोधि तदेव

* अयं ग्रन्थः ख. पुस्तकस्थः ।

कार्यं नियोगापरपर्यायमभिमतमित्यर्थः। तस्य विशेषणं कालत्रयानन्वितमिति। अभूदस्ति भविष्यतीत्येवं कालत्रयान्वयितयाऽनवगम्यमानमित्यर्थः। प्रवृत्त्यभावविरोधि कार्यमित्युक्ते रागप्रवृत्त्योरपि तथ त्वात्तत्रातिव्याप्तिरिति कालत्रयेत्यादिविशेषणम्। तावत्युक्ते घटादिशब्दात्प्रतीयमाने घटादावतिव्याप्तिस्तत आद्यं विशेषणं कालत्रयानन्विततया प्रतीयमानं कर्तव्यताबुद्धिगम्यं प्रवृत्तिप्रयोजकं कार्यमिति संपिण्डितार्थः। एतच्च लौकिकस्य क्रियाकार्यस्य वैदिकस्य च नियोगाख्यस्य साधारणं लक्षणम्। न च श्रेयःसाधनेऽपीदं लक्षणं गच्छतीति वाच्यं श्रेयःसाधनतया प्रतीते विषये साधनान्तरादपि तत्साध्यसिद्धिं पश्यतः प्रवृत्त्यभावदृष्टेरिति द्रष्टव्यम्। लक्षणान्तरमाह—**स्वगोचरस्येति**। स्वगोचरस्य विषयस्य धात्वर्थस्येप्सितसाधनत्वं विज्ञापयच्चप्रेरकं प्रवर्तकं तत्कार्यमित्यन्य आहुरित्यर्थः। अत्र प्रेरकं कार्यमित्युक्ते रागेऽतिव्याप्तिरत उक्त—**स्वगोचरस्येत्यादि**। तावति विज्ञापयदित्यन्त उक्त इष्टसाधनत्वबोधकप्रमाणेऽतिप्रसङ्ग इत्यत उक्तं—**प्रेरकमिति**। प्रमाणस्य ज्ञापकत्वादेव न प्रेरकत्वमिति ततो व्यावृत्तिसिद्धिः। इदं तु लक्षणं धात्वर्थकार्यविलक्षणनियोगाख्यकार्यविषयं स्वगोचरस्येष्टसाधनत्वज्ञापकत्वनिर्देशात्। न च नित्यानियोगेऽव्याप्तिरतद्विषयस्येप्सितसाधनत्वानङ्गीकारादिति वाच्यं तत्रापि नियोगस्यैव कृत्युद्देश्यतयेष्टत्वात्तत्र धात्वर्थस्यापीष्टसाधनत्वोपपत्तेस्तत्रापि लक्षणसंभवादिति द्रष्टव्यम्। एवंच सति कृतिसाध्यत्वादिना येन केन च विशेषणेन विशिष्टतयेष्टसाधनत्वज्ञानस्य प्रेरकत्वकल्पनेऽपि न कार्यलक्षणं तत्र गच्छतीष्टसाधनत्वज्ञापकत्वस्येष्टसाधनत्वादिति भावः॥ १३२॥

**सु० टी०—नियोगवादिनां कार्यलक्षणमाह—**

> **या नान्यमुद्दिश्य कृतिः प्रवृत्ता**
> **तयैव यद्व्याप्यतया प्रतीतम्।**
> **तदेव कार्यं कथयन्ति केचि-**
> **द्विचक्षणाः कार्यनिरूपणायाम्॥ १३३॥**

या नान्यमिति। अनन्योद्देशप्रवृत्तकृतिव्याप्यं[1] कार्यमित्यर्थः। स्वर्गकामस्य हि साक्षात्स्वर्गं साधयितुमशक्नुवतो नियोगमेव कार्यमुद्दिश्य यागकृतिः प्रवृत्ता तया व्याप्त ईप्सितरूपो नियोग एव प्रधानत्वात्कार्यमिति भावः। व्याप्यत्वानुक्तौ तादृशकृतिविषयतया स्वर्गस्यापि कार्यत्वं स्यादिति। तदुक्तं न हि स्वर्गः कृतिव्याप्यश्चिरभावित्वात्। किं तु

१ क, ग. °देशप्रवृत्तिकृ°। २ क. °त्वात्तत्का°।

प्रयोगसमवायी नियोग एव स्वर्गस्यापि नियोज्यविशेषणस्य तदर्थत्वादिति ॥ १३३ ॥

अ० टी०—एवं कार्यस्य तटस्थलक्षणद्वयमित्थं व्यवस्थयोक्त्वा स्वरूपलक्षणं साधारणं तस्योपन्यस्यति—**या नान्यमुद्दिश्येति** । या कृतिरन्यमुद्दिश्य न प्रवृत्ता यदेवोद्दिश्य कृतिः प्रवर्तेत इति यावत् । कृत्युद्देश्यं कार्यमित्युक्तं भवति । एतावत्युक्ते फलेऽतिव्याप्तिरत आह—**तयैव यद्व्याप्यतया प्रतीतमिति** । कृतिव्याप्यतया प्रतीयमानमित्यर्थः । एतावत्येवोक्ते क्रियाया अपि तद्व्याप्यत्वात्तत्र प्रसङ्ग इत्यत आद्यं विशेषणम् । अनन्योद्दिष्टकृतिव्याप्यत्वं कार्यत्वमिति तत्स्वरूपलक्षणं सिद्धम् । एवंलक्षणं यत्तदेव कार्यमिति केचित्कार्यनिरूपणायां विचक्षणाः कथयन्तीति संबन्धः । तदुक्तं—'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ।' इति ॥ १३३ ॥

सु० टी०—ननु चिकीर्षैव रागापरनामधेया प्रवृत्तिहेतुत्वात्कार्यं नान्यदिति चेन्नेत्याह—

> भूत्वा रागः कारणं पुंप्रवृत्ते-
> र्नैवं कार्यं कार्यरूपं विहाय ।
> रूपेणान्येनाऽऽप्यतेऽस्या[1] निमित्तं
> भिन्दन्त्येवं रागकार्ये बहुज्ञाः ॥ १३४ ॥

भूत्वेति । रागो हि निष्पन्न एव प्रवृत्तिहेतुरतो न तस्य कार्यत्वं सिद्धत्वात् । कार्यं तु न भूत्वा प्रवर्तकं किं तु साध्यत्वापरित्यागेन तद्धि करिष्यामीति पुरुषः प्रवर्ततेऽतो रागाद्भिन्नं कार्यमित्यर्थः ॥ ३४ ॥

अ० टी०—नन्वेवंलक्षणं कार्यमप्रसिद्धं यत्प्रवर्तकतयाऽभिमतम् । न च प्रवृत्तेः पूर्वावस्थायां कर्तव्यमित्येवमाकारं प्रतीयमानं कार्यमिति वाच्यं चिकीर्षायैवैवं प्रतीयमानत्वात् । कर्तुमिष्यमाणं हि कृतिप्रयोजकतया कर्तव्याकारेण प्रथत इति चेन्नैवं रागकार्ययोर्भेदोपपत्तेरित्याह—**भूत्वा राग इति** । पुंप्रवृत्तेः कारणं यो रागः स भूत्वा स्वरूपेण निष्पद्य पश्चात्तत्कारणं भवति । नैवं कार्यं कार्यरूपं कर्तव्यत्वाकारं विहायान्येन रूपेण निष्पन्नत्वाकारेणास्याः प्रवृत्तेर्निमित्तं किं तु निष्पाद्याकारेण प्रवृत्तेः पूर्वं प्रतीयमानमेव प्रवृत्तिकारणमित्यर्थः । एवं हि बहुज्ञाः पण्डिता रागकार्ये भिन्दन्ति विविच्य जानन्ति नाल्पश्रुता इत्यर्थः । एवं सिद्धसाध्यत्वरूपस्वभावभेदाद्रागकार्ययोर्न रागमादायोक्तकार्यलक्षणस्यार्थान्तरतेति भावः ॥ १३४ ॥

---

१ क. न्येनेष्यते ।

सु० टी०—ततश्च कार्यान्विते पदे शक्तिग्रहान्न स्वार्थे वेदान्ताः प्रमाणमित्याह—

आवापोद्वापहेतोः पदमिदममुकस्याभिधाने समर्थं
स्वोत्पत्त्यैवेति शक्तिप्रतिनियममिमं पार्श्ववर्ती तटस्थः ।
जानात्यालोच्य भूयो नयनिपुणमतिर्भागशः कार्ययुक्ते
वस्तुन्येतस्य हेतोरुपनिषदखिला कार्यशेषे प्रमाणम् ॥१३५॥

आवापेति । व्युत्पित्सुर्हि पदपिण्डस्य कार्यान्वितवाचित्वबोधानन्तरमावापोद्वापाभ्यामिदं पदमस्यार्थभागस्याभिधाने स्वभावात्समर्थमित्यालोच्यान्वयव्यतिरेकनैपुण्यात्प्रतिपदं कार्यान्विततत्तदर्थे शक्तिव्यवस्थां तटस्थस्तद्व्यवहाराप्रविष्ट एव जानातीत्यतः सर्ववाक्यानां कार्यैदमर्थ्याद्वेदान्ता अपि क्रियाविधिशेषकर्त्रादिसमर्पणेनैव प्रमाणमित्यर्थः ॥१३५॥

अ० टी०—इदानीं कार्यलक्षणप्रयोजनमाह—आवापोद्वापहेतोरिति । पुनरपि प्रविभज्य भागं भागस्य वाचकमिति स्वयमेव वेत्तीत्युक्तस्यायं प्रपञ्चः । एवमुक्तलक्षणे कार्ये पदार्थान्तरविशिष्टे पार्श्ववर्ती तटस्थो व्युत्पित्सुः प्रथमं सामान्येन पदसमूहस्य सामर्थ्यं परिकल्प्य पश्चात्प्रयोगभेदेष्वावापोद्वापहेतोरावापोद्वापाभ्यामुपादानपरित्यागाभ्यामिदं पदममुकस्यार्थस्याभिधाने स्वोत्पत्त्यैव स्वभावादेव समर्थमितीमं शक्तिप्रतिनियमं स्वयमेव जानातीति योजना । उक्तमेव स्फुटयति—आलोच्येति । नयनिपुणमतिरन्वयव्यतिरेकालोचनसमर्थधीः स एव पार्श्वस्थो भूयः पुनः पुनर्बहुषु प्रयोगेषु भागशो वाक्यभागात्पदार्थभागं विभज्याऽऽलोच्य कार्ययुक्ते वस्तुनि शब्दशक्तिप्रतिनियमं जानातीति पुनरन्वयः । एवं शब्दस्य कार्ये व्युत्पत्तिनिरूपणफलमाह—एतस्य हेतोरिति । एतस्मात्कारणादित्यर्थः । अखिलोपनिषत्कयाऽपि विधया कार्यशेषभूतेऽर्थे प्रमाणं न सिद्धे ब्रह्मरूपे प्राधान्येन प्रमाणमिति सिद्धमित्यर्थः ॥ १३५ ॥

सु० टी०—मानान्तराविषये कार्ये कथं व्युत्पत्तिरित्याशङ्क्य भावनावादिमतेनाऽऽह—

आज्ञादिभेदेष्वनुवर्तमाने प्रवृत्त्यभावस्य विरोधिमात्रे ।
लिङादिशब्दस्य स वेत्ति शक्तिं प्रवर्तकाख्याविषयत्वयोग्ये ॥१३६॥

आज्ञादीति । आज्ञाभिधादिलोकवेदसाधारणप्रवर्तकव्यापारानुगते प्रवृत्त्यभावविरोधिनि प्रवर्तनात्वसामान्ये प्रवर्तकशब्दाख्येयत्वयोग्ये प्रवृत्तिपरलिङादेराकृतिन्यायेन शक्तिं गृह्णातीत्यर्थः ॥ १३६ ॥

अ० टी०—ननु मानान्तराविषयेऽलौकिके नियोगे कथं लिङादिपदव्युत्पत्तिर्यदधीनान्यपदानां कार्यान्वितार्थो व्युत्पत्तिरभिधीयत इत्यपेक्षायामाह—आज्ञादीति। किं तत्प्रवर्तकाख्याविषयत्वयोग्यमिति तदाह—प्रवृत्त्यभावस्येति। पूर्वोक्तलक्षणे कार्य इत्यर्थः। यद्यपि साक्षाल्लिङादिशब्दस्य वाच्यं नियोगाख्यं कार्यं गवानयनादिवन्न प्रत्यक्षसिद्धं तथाऽप्याज्ञादिषु नियोगे च प्रवर्तकसामान्याकारेणानुगम्यमाने तस्माल्लिङादिपदव्युत्पत्तिः सुगमा। आज्ञादिरूपस्य सर्वप्रवृत्तिषु व्यभिचारादनुगमायोगात्तदनुस्यूतेऽव्यभिचारिणि प्रवृत्त्यभावविरोधिमात्रे लिङादिपदशक्तिग्रह इति भावः॥ १३६॥

सु० टी०—जरद्गुरुमते तु लिङा वेदे नियोगस्य लोके धात्वर्थस्याभिधानादनेकार्थत्वप्रसक्तावाह—

अन्ये वदन्ति निरुपाधिनियोगरूपं
वेदे भवत्यपुरुषप्रभवे स्वतन्त्रम्।
लोके पुनः पुरुषधीरचितेषु कार्यं
सोपाधिकं तदिति कारणतो वचःसु॥ १३७॥

अन्य इति। अपौरुषेये वेद आज्ञाद्युपाधिपारतन्त्र्याभावान्निरुपाधिर्नियोगः। लोके तु पुमभिप्रायादिकारणतः सोपाधिरिति क्रियाविषयकोऽपि पुंनियोगो नियोगत्वेनैव लिङर्थ इति नानेकार्थतेत्यर्थः॥१३७॥

अ० टी०—सामान्येन लिङादिपदवाच्यमुपस्थाप्य तत्रैव मतभेदोपन्यासेन लौकिकवैदिकनियोगभेदमाह—अन्य इति॥ १३७॥

सु० टी०—तथाऽपि लोके सोपाधिके शक्तिर्वेदे तु केवल इति नैकार्थतेति चेन्नेत्याह—

आज्ञायाच्ञाद्युपाधिप्रणिपतितवपुः साधनेहानुबद्धं
विज्ञातोपायभावं विषयमनुसरत्पौरुषेयीषु वाक्षु।
वेदे कर्तृस्थरागाद्युपधिविरहितं कर्तृशून्ये ततोऽस्मि-
न्सर्वत्रैकस्वभावस्थितवपुषि भवेल्लब्धशक्तिर्लिङादिः॥१३८॥

आज्ञेति। आज्ञाऽनुत्कृष्टस्य निकृष्टप्रेरणा। तद्विपरीता याच्ञा पौरुषेयवाक्येषु यत्कार्यं तदाज्ञादिपुमभिप्रायात्मकोपाधिषु व्यञ्जकेषु प्रणिपतितस्वरूपं भवति। आज्ञादिरहितधात्वर्थमात्रे न तन्नियोगरूपं

भवतीत्यर्थः । तथा साधनेहा चिकीर्षा तया विना सत्यप्याज्ञादौ न भवतीत्यर्थः । अत एव विज्ञातोपायभावं धात्वर्थमनुसरद्विषयीकुर्वदिष्ट-साधनत्वेनानुपस्थिते धात्वर्थे चिकीर्षानुदयादित्यर्थः । कर्तृशून्ये तु वेदे यत्कार्यं नियोगरूपं न तत्राऽऽज्ञाद्युपरागो न चिकीर्षावच्छेदः साक्षादकार्यत्वात् । न विषयस्येष्टसाधनत्वावगत्यपेक्षा स्वतन्त्रत्वात् । अत आज्ञादेरुपलक्षणत्वादस्मिँल्लौकिके वैदिके च नियोगत्वे नैकरूपेण स्थिते लिङादेः शक्तिग्रह इत्येकार्थतेत्यर्थः ॥ १३८ ॥

अ० टी०—लोके कोऽसावुपाधिर्नियोगस्य व्युत्पत्तिरपि किमाज्ञाद्युपाधिविशिष्टे केवले वा वेदेऽपि प्रमीयमाणो नियोगः किमस्मादत्यन्तं विलक्षणः किं वा तदेकस्वभाव इति च वीक्षायामाह—**आज्ञेति** । वक्तृपुरुषाभिप्रायः । तेषूपाधिषु स्वाभिव्यञ्जकेषु प्रणिपतितवपुः स्वरूपं यस्य तन्नियोगो रूपमिति योजना । चिकीर्षासानुबन्धं विशेषणं यस्य तथा विशेषणम् । श्रोत्रावगतोपायत्वविषयं धात्वर्थं विषयीकुर्वदिति यावत् । तदेव निरुपाधिकं व्युत्पादयति—**वेद इति** । यद्यप्येवं लोकवेदयोः सोपाधिकनिरुपाधिकभेदेन विशेषो नियोगस्योक्तस्तथाऽपि प्रवर्तकत्वाख्याविषयत्वयोग्यप्रवृत्त्यभावविरोध्याकारस्योभयत्र समत्वात्तस्मिन्नेवैकले रूपे लोकवेदयोर्लिङादिपदव्युत्पत्तिरित्याह—**ततोऽस्मिन्सर्वत्रेति** । सर्वत्र लोकवेदयोरेकस्वभावेनोक्तलक्षणेन स्थितं वपुः स्वरूपं यत्तथा तस्मिँल्लिङादिर्लब्धशक्तिर्भवेदिति योजना ॥ १३८ ॥

सु० टी०—अभिनवनियोगवादिमतमाह—

> अन्ये भिन्नस्वभावं विविधमभिदधत्यानुरूप्येण कार्यं
> लोके धात्वर्थरूपं श्रुतिवचसि पुनस्तन्नियोगाख्यमेव ।
> संमुग्धे तत्र शक्तिं शिशुरयमवगम्याऽऽदितो न्यायचक्षुः
> पश्चाद्वेदैकवेद्यं वदति लिङिति च प्रेक्षते निश्चयेन ॥१३९॥

अन्य इति । न सोपाधिकोऽपि लोके नियोगोऽस्ति मानाभावादिति नैकरूप्यम् । किं तर्हि लोके वेदे च स्वानुरूपं क्रियात्वकार्यत्वस्वभावं नानारूपमेवान्ये नियोगवादिनः कार्यं वदन्तीत्यर्थः । नानात्वमेवाऽऽह—लोक इति । लोके धात्वर्थरूपा क्रियैव कार्यं काम्यसाधनत्वान्न नियोगः । वेदे तु स्वर्गकामादिनियोज्यपदसमभिव्याहारादेव नियोगः सिध्यतीत्याह—श्रुतीति । तत्र धात्वर्थस्य साक्षात्काम्यासाधनत्वेन कामिकार्य-

त्वायोगादित्यर्थः । तत्र व्युत्पित्सुः प्रथमं धात्वर्थनियोगरूपमिथोविलक्षणकार्यद्वयेऽनयोः किं मुख्यं किममुख्यमित्यविवेकाख्यसंमोहविषये सामान्यतः कार्यत्वेन शक्तिमवगम्य पश्चान्न्यायदृष्टिः सन्वैदिकनियोगमेव मुख्यतया लिङ् वदतीति विचारान्निश्चिनोति । अनेकार्थत्वस्यान्याय्यत्वादेकत्र मुख्यत्वेऽपरत्र वृत्त्यन्तरेणापि प्रयोगः स्यादिति न्यायः ॥ १३९ ॥

अ० टी०—नियोगवादिनां साक्षादभिमतं व्युत्पत्तिप्रकारमाह—**अन्ये भिन्नस्वभावमिति** । लोके नियोगो लाक्षणिको वेदे तु वाच्य इत्यभिप्रायः स्वर्गकामपदसमभिव्याहाराच(न्य)थानुपपत्त्या तत्र धात्वर्थातिरिक्तनियोगावगमात् । कथं तर्हि विरुद्धस्वभावयोः कार्ययोर्व्युत्पत्तिसिद्धिरिति तत्राऽऽह—**संमुग्ध इति** । अयं शिशुर्व्युत्पित्सुस्तत्र नियोगाख्ये कार्ये संमुग्धे साधारणे लौकिकवैदिकत्वविभागप्रत्ययरहित आदितः प्रथमतः शक्तिं लिङादिपदसामर्थ्यमवगम्येति योजना । एतदुक्तं भवति—लोके धात्वर्थकार्ये प्रथममारब्धा सती लिङादिव्युत्पत्तिरलौकिके नियोगे पर्यवस्यति न धात्वर्थमात्रे तस्यानेकरूपत्वाद्वेदे स्वर्गकामादिपदसमभिव्याहारात्क्षणभङ्गुरस्य धात्वर्थस्य साध्यस्वर्गानुकूल्याभावेन तस्य कार्यताबुद्धिगोचरत्वाभावाच्चेति । एवं धात्वर्थस्वरूपमात्रातिरिक्ते नियोगे लिङादिपदशक्तिरित्यादितोऽवगम्य शिशुर्न्यायचक्षुरूहापोहसमर्थः पश्चाद्वेदैकवेद्यं नियोगमेव लिङ्पदं वदतीति च निश्चयेन प्रेक्षतेऽध्यवस्यति नियोग एव लिङादिर्मुख्यो धात्वर्थे तु लाक्षणिको नियोगनिर्वर्तकत्वेन तत्र नियोगत्वोपचारादित्यवगच्छतीत्यर्थः ॥ १३९ ॥

सु० टी०—विपरीतं किमिति नावधारयतीति चेत्तत्राऽऽह—

धात्वर्थाख्यानशक्तो यदि भवति गुणाद्वर्तितुं वैदिकेऽयं
संबन्धाज्ञानहेतोरनलमथ पुनर्वैदिके शक्तिमान्स्यात् ।
तत्संबन्धात्क्रियामप्यभिवदितुमलं लक्षणावृत्तितोऽयं
लिङ्शब्दस्तेन कार्ये श्रुतिवचनगते शक्त इत्यध्यवस्येत् ॥ १४० ॥

धात्वर्थेति । यदि धात्वर्थे मुख्यः स्यात्तदा वैदिकनियोगे गुणादुपचाराद्वर्तितुं न शक्नोति तत्रालौकिके शक्यधात्वर्थसंबन्धगुणयोगयोरज्ञानात् । नियोगार्थत्वे तु तस्य धात्वर्थविषयत्वेनैव सिद्धेः स्वविषयीभूतं धात्वर्थं लक्षणयाऽपि लिङादिर्बोधयिष्यतीति विमृश्य नियोग एवास्य मुख्यत्वमध्यवस्यतीत्यर्थः ॥ १४० ॥

---

१ क. 'मिथ्याधि' ।

अ० टी०--नतु धात्वर्थकार्ये लिङादिर्मुख्योऽलौकिके नियोगे लाक्षणिक इति विपरीतं किं न स्यादिति शङ्कमानं प्रति पूर्वपद्यद्योतितां युक्तिं स्फुटयन्नुक्तव्यवस्थां साधयति—धात्वर्थाख्यानेति । मुख्यया वृत्त्या बोधको भवेत् । तेन यथोक्तेन हेतुना श्रुतिवचनगते धात्वर्थगति(र्थाति)रिक्ते नियोगे लिङादिः शक्तः क्रियायां लाक्षणिक एवेत्यव्यवस्थेन्निथिनुयादित्यर्थः । उभयत्र मुख्यत्वेऽनेकार्थत्वमन्याय्यं प्रसज्येतेति नियोग एव लिङादेर्मुख्योऽर्थ इति भावः ॥ १४० ॥

सु० टी०--तथाऽपि लिङादियुक्तवाक्यानामस्तु कार्यार्थता न तु सिद्धार्थानां तेषु विशेषणविशेष्यभावाद्यन्वयसंभवादिति चेत्तत्राऽऽह—

एवं शब्दान्तराणां नयनिपुणमतिः शक्तिवित्सन्क्रमेण
प्रक्षेपोद्धारदर्शी भवति कतिपयैर्वासरैस्तत्र तत्र ।
तस्मात्कार्यान्वितार्थे सकलमपि पदं शक्तिमद्बुध्यमानो
भूताद्यर्थप्रतीतिं प्रति विमुखमनाः शाश्वतः स्यान्मनुष्यः॥१४१॥

एवमिति । प्राथमिकव्युत्पत्त्यनुरोधेन द्रव्यगुणादिशब्दानामध्यावापोद्धापाभ्यां कार्यान्वितार्थविशेषेषु शक्तिवित्सन्कतिचिद्दिनैरेव निपुणो भवतीत्यर्थः । यद्वा यथा लिङादीनां कार्य एवं द्रव्यादिपदानां तदभिचारिणि शक्तिविद्भवतीति योज्यम् । ततः किमित्यत आह—तस्मादिति । सर्वपदानां कार्यान्वितार्थत्वं जानञ्शाश्वानुभूताद्यर्थप्रतीतिं प्रति विमुखमना भवतीत्यर्थः ॥ १४१ ॥

अ० टी०—एवं लिङादेर्नियोगे शक्तिं पदव्युत्पत्तिप्रयोजिकामनेकन्यायापेक्षया सम्यक्प्रतिपाद्य शब्दान्तराणामपि व्युत्पत्तिरत एव न्याय्या भवतीति दर्शयन्नुपपादितमर्थमुपसंहरति—एवं शब्दान्तराणामिति । एवमुक्तन्यायेनान्वयव्यतिरेकालोचनकुशलः*...
........॥ १४१ ॥

सु० टी०—प्रवर्तकवाक्यान्न प्रथमशक्तिग्रहनियमश्चैत्र पुत्रस्ते जात इत्यादितोऽपि दर्शनादिति चेन्नेत्याह—

वाक्याद्भूतार्थनिष्ठाद्भवति न तु नृणां शब्दशक्तिप्रतीति-
र्लिङ्गं श्रोतृस्थबुद्धेर्न हि किमपि भवेदत्र बालोपलभ्यम् ।

---

* नास्य टीका पूर्णा ।

---

१ क. °राणामपि नयनिपुणः श° । २ क. ननु नृ ।

न ह्येतत्पुत्रजन्माद्यवगतिनियतं नित्यवन्निश्चितं यो
यद्वक्त्रादिप्रसादक्षितितललुठनादीक्ष्यते श्रोतृदेहे ॥ १४२ ॥

वाक्यादिति । न हि सिद्धार्थवाक्याच्छक्तिग्रहः शक्यस्तत्र बालेनोप-लभ्यस्य श्रोतृस्थबुद्ध्यनुमापकलिङ्गस्यासंभवादित्यर्थः । प्रवर्तकवाक्ये तु तत्संभव उक्त एव । ननु पुत्रो जात इत्यत्र मुखप्रसादः । मृत इत्यत्र क्षितिलुण्ठनादिलिङ्गमास्तामिति नेत्याह—न हीति । प्रेयसीसुखप्रसवत-द्भावादिनाऽपि तत्संभवेन व्यभिचारितया तयोरलिङ्गत्वादि-त्यर्थः ॥ १४२ ॥

अ०टी०—स्यादेतदेवं यदि प्रवर्तकवाक्यादेव व्युत्पत्तिरिति नियमो भवेन्न तु तथा किं तु पुत्रस्ते जात इत्यादिसिद्धनिष्ठादप्रवर्तकवाक्यादप्यस्ति व्युत्पत्तिग्रहः श्रोतुर्मुखविकासादिलिङ्गेन तद्धेतुः पुत्रजन्मज्ञानं तस्यानुमाय शब्दस्य सामर्थ्यग्रहोपपत्तेरिति चेन्नेत्याह—वाक्या-दिति । भूतार्थनिष्ठाद्वाक्यान्नृणां शब्दशक्तिप्रतीतिर्न तु भवतीत्युक्तेऽर्थे हेतुमाह—लिङ्गमिति । अत्र भूतार्थविषये वाक्ये श्रोतृस्थबुद्धेः किमपि लिङ्गं ज्ञापकं न हि भवेन्न लभ्यत इत्यर्थः । ननु श्रोतृगतमुखविकासादि वा तस्य क्षितितललुठनरोदनादि वा पुत्रस्ते जातः पुत्रस्ते मृत इत्यादिवाक्यश्रवणानन्तरभावितबुद्धेर्लिङ्गं स्यादिति चेत्तत्राऽऽह—न ह्येतदिति । यच्छ्रोतृदेहे वक्त्रप्रसादक्षितितललुण्ठनादीक्ष्यत एतत्पुत्रजन्मज्ञानाद्यवगति-नियतं तदेकनिमित्तकमिति नित्यवदव्यभिचरितं तथा निश्चितं न हीति योजना । मुखप्र-सादादिना सुखानुभवमात्रमुन्नीयते न पुत्रज्ञानमेव सुखहेतुः प्रियासुखप्रसवादेरपि तद्धेतुक-त्वात् । तथा क्षितितललुठनादिना च दुःखानुभवमात्रं कल्प्यते न पुत्रमरणमेव दुःखहेतुः प्राणप्रियामृतेरपि तद्धेतुत्वादतो नेदं व्युत्पत्तौ नियतं निमित्तमिति भूतेऽर्थे शब्दव्युत्पत्ति-रिति भावः ॥ १४२ ॥

सु० टी०—ततश्च शक्तिग्रहासंभवान्न सिद्धार्थे वेदान्ताः प्रमाणमि-त्युपसंहरति—

तस्मादाध्वं निराशाः श्रुतिशिरसि न तस्यास्ति निष्पन्नरूपे
प्रामाण्यं कार्यशून्ये कथमपि च परब्रह्मणि स्वप्रधाने ।
भूतं भव्यप्रधानं भवति न हि पुनः स्वप्रधानं कदाचि-
च्छास्त्रस्थाः शब्दशक्तिस्थितिनिपुणधियो विस्तरादेवमाहुः॥ १४३॥

तस्मादिति । ननु सिद्धेऽपि स्वर्गादौ वेदस्य प्रामाण्यं त्वयाऽभ्युपेतमि-

त्याशङ्क्य तस्य विध्यपेक्षितार्थत्वेन विधिशेषतया तदङ्गीकृतमिह तु स्वतन्त्रे ब्रह्मणि तदनुपपन्नमित्याह—कथमपीति । स्वर्गादिवाक्यवच्च ब्रह्मवाक्यानामपि विधिशेषत्वमेव युक्तं भूतभव्यसमुच्चारणन्यायादित्याह—भूतमिति । एतच्च यदैकस्मादपूर्वमित्यादिना भाष्यकारादिभिरेव प्रपञ्चितमित्याह—शास्त्रस्था इति ॥ १४३ ॥

अ० टी०—यस्मात्सिद्धे वस्तुनि न शब्दसामर्थ्यसंभवो यस्माच्च सिद्धं वस्तु शब्दात्स्वप्रमितौ मानान्तरसापेक्षमिति तत्र शब्दस्य सापेक्षं प्रामाण्यं यस्माच्च स्वप्रकाशतया ब्रह्मणः प्रमाणाविषयत्वं कूटस्थतया वा साध्यत्वाद्धानोपादानासंभवेन निष्प्रयोजनत्वमखण्डैकरसतया च संसर्गबोधकवाक्यप्रमाणागोचरत्वं तस्मान्न ब्रह्मणि वेदान्तप्रामाण्यमुपपद्यत इत्युपसंहरति—**तस्मादाध्वमिति** । श्रुतिशिरसि सिद्धे प्रामाण्यं प्रतीति शेषः । निराशा आध्वं तिष्ठत । किमिति चेत्तत्राऽऽह—**न तस्यास्तीति** । निष्पन्नरूपे परब्रह्मणि तस्य श्रुतिशिरसो नास्ति प्रामाण्यमिति संबन्धः । कुतो नास्तीत्याह—**कार्यशून्य इति** । कार्यान्वयरहिते सिद्धे व्युत्पत्त्यभावादित्यर्थः । ननु वेदान्तानामनन्यविषयत्वात्क्रयाऽपि विधया ब्रह्मण्येव पर्यवसानमेष्टव्यमिति नेत्याह—**कथमपीति** । कथमपि स्वप्रधाने ब्रह्मणि नास्ति प्रामाण्यमिति संबन्धः । कार्यशेष एव सिद्धे वस्तुनि वाक्यं प्रमाणं भवेन्न सिद्ध एव प्राधान्येनेत्येतद्भूतं भव्यायोपदिश्यत इति मीमांसान्यायविदां प्रसिद्धमनुवदन्साधयति—**भूतमिति** । शास्त्रस्था इति मीमांसाशास्त्रनिष्णाता इत्यर्थः । न केवलं तेषां शास्त्र औपदेशिकज्ञाननैपुण्यमेव किं तूहापोहकौशलमप्यस्तीत्यभिप्रेत्य तान्विशिनष्टि—**शब्दशक्तीति** । शब्दसामर्थ्यविपुणबुद्धयोऽबाधितमतय इति यावत् । तेऽप्यनास्थयैवैवं क्वचिदुक्तवन्तो भविष्यन्ति न तात्पर्येणेति नाऽऽशङ्क्येत्याह—**विस्तरादिति** । भूतं भव्यप्रधानमित्यादि विचार्य निर्धार्योक्तवन्त इत्यर्थः ॥ १४३ ॥

**सु० टी०—परमप्रकृतमुपसंहरति—**

**तस्मादसंगतमिदं प्रतिभाति यन्मे**
**वाक्यप्रमाणकमुदीरितमद्वयत्वम् ।**
**इत्येवमेष मम बुद्धिपथं विरोधः**
**प्राप्तः प्रभो परिहरैनमनुग्रहाय ॥ १४४ ॥**

तस्मादिति । **दूषणगणमुद्भाव्य तत्त्वबुभुत्सां प्रकटयन्विनयमवलम्बते—** असङ्गतमिदं प्रतिभातीति । **न तु वस्तुगत्याऽसङ्गतमित्यर्थः** । इत्येवमिति । **मम**

बुद्धौ स्वापराधादेव विरोधः प्रतिभाति न तु वस्तुतोऽस्तीति तदूपनयनेन मामनुगृहाणेत्यर्थः ॥ ४४ ॥

अ० टी०—यस्मादेवं विचार्यमाणे त्वदुपदिष्टैकात्म्ये वस्तुनि वेदान्तानां न संभाव्यते मानान्तरं च तत्र नास्ति तस्मात्त्वदुपदिष्टमर्थं न संभावयामीत्यभिप्रेत्योपसंहरति—**तस्मादिति** । यद्वाक्यप्रमाणकमद्वयत्वं भवतोदीरितमसंगतमिव मे प्रतिभाति न भवताऽसंगतमुक्तमित्यर्थः । कुतस्तेऽसंगतत्वं प्रतिभासत इति तदाह—**इत्येवमिति** । इति यत एवमुक्तप्रकारैर्विरोधो मम बुद्धिपथं प्राप्तोऽतोऽसंगतत्वप्रतिभास इत्यर्थः । तदेवं गुर्वनुज्ञां 'यदत्र पश्यसि विरोधमुदीरय त्वम्' इत्यत्रोक्तां प्राप्य स्वमनसि प्रतिभातं विरोधमुपन्यस्येदानीं सिद्धान्तबुभुत्सया स्वोत्प्रेक्षितविरोधपरिहारं प्रार्थयते—**प्रभो इति** । एनं विरोधम् ॥ १४४ ॥

**सु० टी०—अथोद्भावितं दूषणजातमुद्दिधीर्पुराचार्यस्तत्त्वंपदमुख्यार्थयोर्विरोधादनन्वयं प्रथमदूषणमखण्डवाक्यार्थाभ्युपगमात्सुपरिहरं मन्वानः स्वी करोति—**

> सत्यं यदाह गुरुमान्यदि वाक्यगम्यं
> संसर्गरूपमिह वेदशिरःस्वभीष्टम् ॥
> अस्त्येव तत्र पदयोरुभयोर्विरोधः
> पारोक्ष्यसद्वयविरोधकृतस्तदानीम् ॥ १४५ ॥

सत्यमिति । **गुरुमानिति सुशिक्षित इत्यर्थः । यद्वा निखिलसंशयच्छेदिगुरुमत्त्वेन प्रोत्साहयति संसर्गवाक्यार्थत्वे ह्यत्र प्रागुक्तो विरोधः स्यान्न चाऽसावङ्गी क्रियत इत्यर्थः ।** अस्त्येवेति । **तत्र वाच्ययोरभेदे ॥ १४५ ॥**

अ० टी०—एवं प्रार्थित आचार्यः शिष्योक्तान्दोषान्क्रमेण परिहरिष्यंस्तत्त्वंपदार्थयोरन्वयो विरोधादेव न संभवतीति यः प्रथमोक्तो दोषस्तमखण्डवाक्यार्थाश्रयेण परिहर्तुं संसर्गवाक्यार्थपक्षोक्तं दोषमङ्गी करोति—**सत्यमिति** । गुरुमान्गुरुभक्तो भवान्यदाह तत्सत्यमिति योजना । अङ्गीकृतमेवांशं विशदयति—**यदीत्यादिना** । यद्यशेषेणेह वेदशिरःसु वाक्यगम्यं संसर्गरूपं यदभीष्टं स्यात्तत्र पक्षे तदानीं पदयोरुभयोर्विरोधोऽस्त्येव । किंकृत इत्यत आह—**पारोक्ष्यसद्वयविरोध इति** । अर्थविरोधकृत इत्यर्थः । अयं संसर्गवाक्यार्थो नास्माकमिष्टो वेदशिरःस्विति यदिशब्दात्सूचितम् ॥ १४५ ॥

सु० टी०—ननु भेदः संसर्गो वा वाक्यार्थ इत्युक्तं पूर्वकाण्ड इति कथमेवमिति चेत्तत्राऽऽह—

यत्कर्मकाण्डनिपुणैरुदितं पुरस्ता-
द्वाक्यार्थलक्षणमदः पुनरत्र नेष्टम् ।
भेदादिवर्जितमखण्डमुशन्ति यस्मा-
च्छ्रीबादरायणमतानुगता महान्तः ॥ १४६ ॥

यत्कर्मकाण्डेति । यत्पूर्वमर्थैकत्वादेकं वाक्यमित्यत्र व्यक्तिपदार्थपक्षे संसर्गस्य पदार्थान्तर्गतत्वाच्छुक्लो गौरिति कृष्णाश्वादिव्यवच्छेदमात्रं वाक्यार्थः । आकृतिपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोरन्योन्यानुरञ्जनात्मकः संसर्गो वाक्यार्थ इति भट्टादिभिरुक्तम् । नैतज्ज्ञानकाण्डेऽभिमतं यतोऽद्वितीये वस्तुनि निष्प्रतियोगिकभेदसंसर्गादेरसंभवात्तद्वर्जितं तत्त्वमर्थयोरत्यन्ताभेदमेव वाक्यार्थं भाष्यकारादय इच्छन्तीत्यर्थः । महान्त इत्यनेन तन्मतानभियुक्ता भास्करादयो निरस्यन्ते ॥ ४६ ॥

अ० टी०—ननु संसर्गो वा विशिष्टो वा वाक्यार्थ इति वाक्यार्थलक्षणस्य न्यायविदां प्रसिद्धत्वात्स कथं नाङ्गी क्रियत इति तत्राऽऽह—यत्कर्मकाण्ड इति । पुरस्तात्पूर्वतन्त्रेऽदो लक्षणमत्र वेदान्तेषु पुनर्नेष्टम् । कुतो नेष्टं तत्राऽऽह—भेदादिवर्जितमिति । उशन्ति कमनीयतयेच्छन्ति बादरायणमतानुगतानां महत्त्वं पक्षपातराहित्येन श्रुत्यर्थविचारकौशलं वाक्यप्रमेयत्वमेव वाक्यार्थसामान्यलक्षणं न संसर्गादिरूपमननुगमादिति भावः ॥ १४६ ॥

सु० टी०—ननु किं काण्डद्वये वाक्यार्थवैलक्षण्येन न च तत्संभवत्यपि ज्ञानकाण्डे विविदिषन्तीत्यादावखण्डवाक्यार्थासंभवादित्याशङ्क्याऽऽह—

भेदादिरूपमवबोधयितुं समर्थं
यद्वाक्यमस्ति तदखण्डविलक्षणार्थम् ।
तल्लौकिकं भवतु वैदिकमेव वाऽस्तु
नास्माकमत्र विषये विमतिः कदाचित् ॥ १४७ ॥

भेदादीति। न हि वयं ज्ञानकाण्डीयमखिलमपि वाक्यमखण्डार्थमिति ब्रूमः। किं तु सर्वकाण्डेषु लोके वा यद्वाक्यं भिन्नसंसृष्टादिबोधनसमर्थं तत्तदर्थमेव न त्वखण्डार्थमिति स्वी कुर्म इत्यर्थः॥ १४७॥

अ० टी०—तथाऽपि पूर्वोत्तरकाण्डयोर्वाक्यत्वाविशेषे किंनिमित्तमिदं वाक्यार्थवैलक्षण्यमिति तत्राऽऽह—भेदादीति। यद्वाक्यं भेदादिरूपं भेदं वा संसर्गं वाऽर्थमवबोधयितुं समर्थमस्ति तल्लौकिकं वैदिकं वा वाक्यमखण्डविलक्षणार्थं भवत्विति योजना। तेष्वपुनरुक्तपदावसेयानामनेकत्वात्तेषां संसर्गो वा भेदो वा वाक्यार्थः स्वतः प्राप्तस्तस्य चेद्बाधकं नास्ति तर्हि तत्र स एव वाक्यार्थो वेदे वा लोके वेत्यभिप्रायः। अत्रोक्तविषये वाक्ये नास्माकं कदाचिदपि विमतिरस्ति न हि व्यसनितयाऽखण्डवाक्यार्थत्वं वयमिच्छाम इत्यर्थः॥ १४७॥

सु० टी०—किं तर्ह्यखण्डार्थमिष्यत इति चेत्तत्राऽऽह—

> यद्वाक्यजातमथ वेदशिरोनिविष्टं
> यद्वाऽपि लौकिकमखण्डमपास्य नान्यत्।
> शक्नोति वस्तु वदितुं तदशेषमेव
> ब्रूयादखण्डमिति तु प्रतिपादयामः॥ १४८॥

यदिति। वैदिकं लौकिकं वा यद्वाक्यजातं तत्त्वमसि सोऽयमित्यादिकमखण्डार्थादन्यत्संसर्गादिरूपं विरोधादेव न शक्नोति वक्तुं तत्सर्वमखण्डार्थमेवेति ब्रूम इत्यर्थः॥ १४८॥

अ० टी०—यत्तु वाक्यमुत्सर्गतः प्राप्यमाणभेदादौ बाध्यमानं सन्न पर्यवस्यति तदखण्डेऽर्थे पर्यवस्यतीत्युक्तवाक्याद्वैलक्षण्यं वाक्यान्तरस्य दर्शयति—यद्वाक्यजातमिति। अथेति पक्षान्तरोपक्रमार्थः। वेदशिरोनिविष्टं वाक्यजातं तत्त्वमस्यादिरूपं यद्वा लौकिकं सोऽयं पुमानित्यादिवाक्यजातमखण्डार्थमपास्यान्यद्वस्तुसंसर्गादिरूपं वदितुं न शक्नोति तदशेषमपि वाक्यमखण्डमेवार्थं ब्रूयादिति तु वयं प्रतिपादयाम इति योजना॥ १४८॥

सु० टी०—तत्र लौकिकमुदाहरति—

> सोऽयं पुमानिति हि मुख्यपदार्थयुक्त-
> वाक्यार्थबुद्धिजननस्य न वाक्यमेतत्।
> ईशीत वाच्यशवलस्थपदद्वयेन
> संसृष्टबुद्धिजनने पदयोर्विरोधात्॥ १४९॥

सोऽयमिति । एतद्धि वाक्यं मुख्यपदार्थयोः संसर्गं बोधयितुं नेष्टे कुत इत्याह—वाच्येति । स इत्यस्य वाच्यं शबलं तद्देशादिविशिष्टमयमित्यस्यैतद्देशादिविशिष्टं तद्वृत्ति यत्पदद्वयं तेन चेत्संसृष्टधीर्जन्येत तदा सोऽयंपदयोर्गौरश्व इतिवद्विरुद्धार्थत्वेनानन्वयः स्यादित्यर्थः ॥ १४९ ॥

अ० टी०—लौकिकं तादृशं वाक्यं तावदुदाहरति—सोऽयं पुमानिति ॥ सोऽयं पुमानित्यादि वाक्यजातं हि मुख्यपदार्थयुक्तवाक्यार्थबुद्धिजननस्य नेशीत स्ववाच्यपदार्थसंसर्गरूपवाक्यार्थं बोधयितुं न शक्नुयादित्यर्थः । कुतो नेशीतेत्यत आह—वाच्यशबलस्येति । पदयोर्विरोधादिति । विरुद्धार्थत्वेन पदयोरन्वयासंभवादित्यर्थः । अतीतवर्तमानदेशकालांशयोर्विरोधात्तद्विशिष्टपदार्थयोर्विरुद्धत्वेन संसर्गयोग्यत्वादित्युक्तं भवति ॥ १४९ ॥

सु० टी०—अस्तु तद्वाक्यमयोग्यत्वादप्रमाणमिति चेन्नाऽऽप्तोक्तत्वादखण्डस्वरूपलक्षणया शक्यसमर्थनत्वाच्चेत्याह—

एतद्धि सोऽयमिति वाक्यमखण्डनिष्ठं
वक्तव्यमत्र गतिरस्ति न काचिदन्या ।
तद्देशकालमनुकृष्य स इत्यनेन
नायं पदार्थमुपढौकयते हि नैतत् ॥ १५० ॥

एतद्धीति । न काचिदिति नीलोत्पलवद्विशेषणविशेष्यत्वादिकेत्यर्थः । कथमिति चेत्तत्राऽऽह—तद्देशेति । एतद्धि वाक्यं तौ परोक्षौ देशकालौ यस्येदृशं विशिष्टं स इत्यनेनोक्त्वाऽयंपदस्यार्थमेतद्देशादिविशिष्टं प्रति नोपढौकयते न समर्पयति नानेन संसृजति विशिष्टयोरभेदासंभवात् । तथैतद्देशादिषु युक्तमप्ययमित्यनुकृष्य तत्पदवाच्यं प्रत्यपि नार्पयतीत्यर्थः । एतेनैकपदलक्षणया तद्देशाद्युपलक्षितस्यैतद्देशादिविशिष्टाभेद इत्यपास्तं केवलविशिष्टयोर्भेदात् । अस्त्वेकत्र कालद्वयवैशिष्ट्यबोध इति चेन्नैकत्वासिद्धेः । देवदत्ते कालद्वयवैशिष्ट्यमित्यस्य च भेदेऽप्युपपत्तेरतद्वाक्यादभेदबोधनपराद्भेदसंशयानिवृत्त्यापत्तेः । अस्तु सोऽयं तदभिन्न इति भेदाभाववैशिष्ट्यबोधान्नाखण्डार्थतेति चेन्न तस्य पदानुपस्थितस्य शाब्दबोधाप्रकारत्वादसंसर्गत्वेन तन्मर्यादयाऽप्यमानादित्यगत्या कालद्वयोपलक्षितस्वरूपाभेदात्मकवाक्यार्थनिश्चयादेव संशयादिनिवृत्तिः ॥ १५० ॥

अ० टी०—तस्मादिदं वाक्यं देवदत्तस्वरूपलक्षणयाऽखण्डनिष्ठमभ्युपेयमित्याह—एतद्धीति । हि निश्चितमेतत्सोऽयं पुमानिति वाक्यमखण्डनिष्ठमेकरसवस्तुमात्रनिष्ठं वक्तव्यमत्र वाक्येऽन्या गतिः प्रकारान्तररूपा न काचिदस्ति । कुत इति चेत्तत्र वक्तव्यं किमतीतदेशादिविशिष्टस्यातीतदेशादिविशिष्टेनेति तत्र नाऽऽद्य इत्याह—तद्देशकालमिति । यौ तौ परोक्षौ देशकालौ यस्य तत्तद्देशकालविशिष्टमतीतदेशकालावच्छिन्नं पुरुषस्वरूपं स इत्यनेन पदेनानुकृष्यानूद्यायं पदार्थमयमिति पदस्यार्थं वर्तमानदेशकालविशिष्टं देवदत्तस्वरूपं न ह्युपढौकयते न प्रमापयति तद्देशकालविशिष्टार्थवैशिष्ट्यमेतद्देशकालविशिष्टस्य बोधयति सोऽयं पुमानिति वाक्यमिति शेषः । द्वितीयं प्रत्याह—नैतदिति । एतद्देशविशिष्टमपि स्वयमित्यनेन पदेनानुकृष्य स इति पदवाच्यमर्थमप्येतद्वाक्यं न बोधयतीति योजना । एतद्देशकालविशिष्टार्थवैशिष्ट्यं तद्देशकालविशिष्टस्य न बोधयतीत्यर्थः । विशिष्टयोर्द्वयोः परस्परमेकत्वविरोधाद्विरुद्धस्वभावतया संसर्गविरोधाच्चेति भावः ॥ १५० ॥

सु० टी०—एवं तत्त्वमसीत्यादावपि द्रष्टव्यमित्याह—

एवं सतीदमपि तत्त्वमसीतिवाक्य-
माश्रित्य लाक्षणिकवृत्तिमखण्डनिष्ठम् ।
सोऽयं पुमानिति यथा वचनं तथाऽस्तु
नो चेत्समं हि तदलाबुनिमज्जनोक्त्या ॥ १५१ ॥

एवमिति । इदमपि तत्त्वमिति वाक्यं सोऽयमितिवत्पदद्वये लक्षणामाश्रित्याखण्डार्थमास्त्विति संबन्धः । कथं मुख्यार्थसंभवे लक्षणेति चेन्नेत्याह—नो चेदिति । तथा हि न तावत्तत्त्वमोर्वैयधिकरण्येनान्वयः समानविभक्तिकत्वात् । नापि मृद्घटइतिवत्तादात्म्यार्थत्वं ( * जीवस्याविकारत्वात् । नापि करादयः शरीरमितिवदंशांशिपरत्वमात्मनो निरंशत्वादित्यत्यन्ताभेदपरत्वं ) वाच्यं तच्च शबलार्थयोरलाबुमज्जनोक्तिवदयोग्यमिति न मुख्यार्थसंभव इत्यर्थः ॥ १५१ ॥

अ० टी०—तथा च मुख्यार्थयोरन्वयासंभवे लक्षणयाऽखण्डार्थनिष्ठत्वं यदा लोके दृष्टं तदा तत्त्वमस्यादिवाक्यस्यापि लक्षणयैवाखण्डार्थनिष्ठत्वं तद्दृष्टान्तेन सुसंपादमित्याह—एवमिति । सर्वमेव वाक्यं लोके संसर्गादिनिष्ठमेवेति नियमाभावे सतीत्यर्थः । अस्त्वित्यन्तं सुगमम् । तथाऽनभ्युपगमेऽपि पूर्वोक्तप्रकारेण विरुद्धार्थतया वाक्यस्याप्रामाण्यप्रसङ्गं बाधकमाह—नो चेदिति । अलाबु निमज्जतीत्युक्तिर्यथा प्रत्यक्षविरोधान्न स्वार्थे

* धनुश्चिह्नितग्रन्थः क. पुस्तके नास्ति ।

प्रमाणं तथा प्रत्यगात्मनो ब्रह्मत्वबोधकमपि वाक्यं संसारित्वानुभवविरोधात्स्वार्थबोधकं सदप्रमाणं स्यादित्यर्थः ॥ १५१ ॥

सु० टी०—मानान्तरानधिगते ब्रह्मणि कथं लक्षणेत्युक्तमुद्धरति—

मानान्तराधिगतगोचरगामिनी स्या-
च्छब्दस्य लाक्षणिकवृत्तिरिति प्रलापः ।
सिद्धत्वमात्रमिति लाक्षणिकप्रवृत्ते-
र्निर्वाहकारणमनङ्गमतोऽन्यदस्याः ॥ १५२ ॥

मानान्तरेति । सिद्धत्वमात्रं हि लक्षणायामङ्गं न मानान्तरविशेषितं गौरवात्सिद्धत्वे सति तदभावेन लक्षणाविरहादर्शनाच्च । तच्च त्वंपदलक्ष्ये स्वप्रकाशत्वेन तत्पदलक्ष्ये च तर्केणास्तीत्यर्थः ॥ १५२ ॥

अ० टी०—अत्र यदुक्तमानान्तरसिद्ध एवार्थे लक्षणाया लोके दृष्टत्वाद्ब्रह्मणश्च मानान्तरागोचरत्वाल्लक्षणयाऽपि नास्मिन्वेदान्तमानतेति तत्राऽऽह—मानान्तरेति । मानान्तराधिगतो यो गोचरो विषयस्तद्गामिनीति योजना । प्रलापोऽनर्थकं वच इत्यर्थः । कुत इत्यपेक्षायां सिद्धत्वमात्रेणैव लक्षणोपपत्तौ मानान्तरसिद्धत्वं क्वचिद्विद्यमानमप्यप्रयोजकमेव केवलव्यतिरेकाभावादित्याह—सिद्धत्वमात्रमिति । अन्यमानान्तरसिद्धत्वमस्या लक्षणाया इत्यर्थः ॥ १५२ ॥

सु० टी०—मानान्तरसिद्धेश्च क्वचिदन्वयमात्रेण न प्रयोजकत्वमिति दृष्टान्तेनाऽऽह—

मानान्तराधिगतता हि न लक्षणायां
किंचित्करी भवति पिङ्गलतावदग्नेः ।
धूमस्य जन्मनि हि पिङ्गलता न हेतु-
र्यद्यप्यवस्थितवती हुतभुक्शरीरे ॥ १५३ ॥

मानान्तरेति । यथा वह्नेः पैङ्गल्यं क्वचिद्विद्यमानमपि न धूमोत्पत्तिप्रयोजकमपिङ्गलादपि तदुत्पत्तेः किं त्वग्नित्वमात्रमेवं मानान्तराधीनत्व-

१ क. मिह ला° ।

मपि न लक्षणायामित्यर्थः । 'व्रीहीनवहन्ति' इत्यादौ वेदेतरमानानधिगतस्याप्यपूर्वसाधनत्वस्य लक्षणीयत्वदर्शनाद्व्यभिचारश्चेति भावः ॥ १५३ ॥

अ० टी०—ननु लोके यत्र लक्षणावृत्तिस्तत्र मानान्तरसिद्धार्थविषयत्वान्वयो दृष्टो व्यतिरेकव्याप्त्यभावेऽप्यन्वयमात्रेणाप्याकाशस्य सर्वमूर्तपदार्थमात्रस्यावकाशदानत्वेन कारणवत्प्रयोजकत्वोपपत्तेरित्याशङ्क्यानङ्गमतोऽन्यदस्या इत्युक्तमर्थमुपपादयति—**मानान्तराधिगतता हीति** । किंचित्करी प्रयोजिका न भवतीत्यर्थः । तत्रान्वयमात्रेण प्रयोजकत्वाभावे दृष्टान्तः—**पिङ्गलतावदग्नेरिति** । दृष्टान्तं विवृणोति—**धूमस्य जन्मनीति** । अग्निमात्रमेव धूमजन्मकारणं तद्गतपैङ्गल्यमवस्थितमपि यतो धूमादग्निमात्रसद्भावोऽवगम्यते न पिङ्गलत्वतार्णत्वाद्यपीति । एवमिह मानान्तरसिद्धत्वं न लक्षणावृत्त्या गम्यते किं तु वस्तुमात्रमिति तस्य तत्र सिद्धत्वमात्रमेव प्रयोजकं नेतरत् । ब्रह्म चास्माकं नित्यसिद्धमित्यर्थः । आकाशस्य कारणत्वं व्यतिरेकादर्शनेऽप्युपपद्यते तस्य सर्वमूर्तद्रव्यादिजन्मन्युपयोगदर्शनान्निरवकाशस्य कार्यस्योत्पत्त्यसंभवादिति तर्कवशात्तस्य कारणकल्पनेति भावः ॥ १५३ ॥

सु० टी०—ननु तत्त्वंपदयोर्जहल्लक्षणायामनात्मैव वाक्यार्थः स्यादजहत्यां तु नाखण्डार्थसिद्धिरित्याशङ्क्य तृतीयां वक्तुं लक्षणात्रैविध्यमाह—

> शब्दस्य लाक्षणिकवृत्तिरपि त्रिधैषा
> का चिज्जहाति न जहाति च वाच्यमन्या ।
> भागं जहाति न जहाति च भागमन्या
> सोऽयं त्रिधा भवति लाक्षणिकप्रकारः ॥ १५४ ॥

शब्दस्येति । त्रिधैषा न परेषामिव विधेत्यर्थः । काचिज्जहाति वाच्यमिति संबन्धः । न जहाति सर्वात्मनेति शेषः । भागलक्षणायामपि भागस्याहानादिति ॥ १५४ ॥

अ० टी०—तस्मात्स्वयंप्रकाशतया स्वतः सिद्धे ब्रह्मणि पदानां लक्षणावृत्तिरुपपद्यत इति स्थितं तत्र लक्षणायास्त्रैविध्यदर्शनादिह का लक्षणाऽभिमतेत्यपेक्षायां तां निर्धारयितुं सामान्यतो लक्षणां भिनत्ति—**शब्दस्येति** । काचिज्जहाति वाच्यमित्यनुषङ्गः । स्ववाच्यार्थमशेषतः परित्यज्य तत्संबन्धिन्यर्थान्तरे शब्दवृत्तिर्जहल्लक्षणेत्यर्थः । अन्याऽजहल्लक्षणा

स्ववाच्यार्थमशेषमपरित्यज्यार्थान्तरे वृत्तिरित्येतत्। अन्या तृतीया जहदजहल्लक्षणा सा स्ववाच्यार्थभागमेकदेशं जहाति न जहाति च भागान्तरमित्येवंविधा स्वार्थैकदेशे वृत्तिर्जहदजहल्लक्षणेत्यर्थः। एवं त्रिधा भवति लाक्षणिकी प्रवृत्तिः शब्दस्य लोके वेदे चेति शेषः॥ १५४॥

सु० टी०—जहतीमुदाहरति—

गङ्गापदं हि निजमर्थमपास्य तीरे
यद्वर्तते भवति सा जहती प्रसिद्धा।
शोणः स्थितो बहिरितीह तु लक्षणाया-
मादाय शोणिमगुणं तुरगे प्रवृत्तिः॥ १५५॥

गङ्गेति। निजमर्थं स्वशक्यं प्रवाहमित्यर्थः। अजहतीमाह—शोण इति। शोणो बहिरस्तीत्यश्वगतशोणगुणमात्रवृत्तिरक्तत्वावान्तरजातिवाचिशोणपदस्य स्वार्थविशेषिततुरङ्गविशेषे प्रवृत्तिरित्यर्थः॥ १५५॥

अ० टी०—उक्तविधात्रयस्य क्रमेण लौकिकोदाहरणमाह—गङ्गेति। तदाश्रयभूते तुरगे स्ववाच्यशोणिमगुणमपरित्यज्य या शब्दप्रवृत्तिर्न साऽजहल्लक्षणेत्यर्थः॥ १५५॥

सु० टी०—तृतीयामाह—

सोऽयं पुमानितिवचस्युभयप्रकारा
देशादिभागपरिवर्जनतः प्रसिद्धा।
पुंसश्च केवलमुपात्ततया पदाभ्या-
मेवं त्रिधा भवति लाक्षणिकी प्रवृत्तिः॥ १५६॥

सोऽयमिति। अत्र सोयंपदाभ्यां देशकालादिवैशिष्ट्यभागत्यागाद्विशेष्यदेवदत्तांशमात्रग्रहादुभयप्रकारा जहदजहल्लक्षणा लोकत एव प्रसिद्धेत्यर्थः॥ १५६॥

अ० टी०—तृतीयामुदाहरति—सोऽयं पुमानिति। उभयप्रकारा जहदजहत्प्रकारा। पुंसश्च केवलमिति। केवलं स्वरूपमात्रेणोपात्ततया* ॥ १५६॥

---

* एतच्छ्लोकस्य टीका न पूर्णा।

सु० टी०—लक्षणात्रयेऽपि वैदिकोदाहरणान्याह—

वेदेऽपि लाक्षणिकवृत्तिरियं त्रिधैषा
यज्ञायुधीतिवचने तु जहत्प्रवृत्तिः।
वैश्वानरादिवचनेष्वजहत्प्रवृत्ति-
स्तत्त्वंगिरोरुभयरूपतया प्रवृत्तिः॥ १५७ ॥

वेदेऽपीति। 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति यज्ञायुधविशिष्टदेहस्य स्वर्गगमनाभावात्स्वार्थदेहत्यागेन यजमानात्मस्वरूपं यज्ञायुधिशब्देन लक्ष्यते। तथा 'वैश्वानरमुपास्स्व' इति वैश्वानरशब्देन जठराग्निवाचिना स्वार्थोपहितः परमात्मोपास्यत्वेन लक्ष्यते। भागलक्षणा तु महावाक्यस्थतत्त्वंपदयोरेवेत्याह—तत्त्वमिति। अत्र हि तत्त्वंपदयोः स्वार्थशबलगतपारोक्ष्यसद्वयत्वभागद्वयवर्जनेन प्रत्यक्त्वाद्वयत्वभागद्वयोपादानेनाखण्डापरोक्षात्मप्रमितिजनने जहदजहल्लक्षणैवेत्यर्थः। ननु कथं शब्दादपरोक्षधीरिन्द्रियार्थसंनिकर्षोत्पन्नज्ञानत्वस्यैव तल्लक्षणत्वादिति चेन्नाऽऽत्ममनःसंनिकर्षजत्वेन ज्ञानमात्रेऽतिव्याप्तेः। न चार्थपदं विषयपरमात्मानुमित्यादावतिव्याप्तेरिन्द्रियजत्वस्यैव तथात्वसंभवात्संनिकर्षाननुगमाच्च। अस्त्विन्द्रियजत्वमेवेति चेन्न ज्ञानमात्रस्य मनोजन्यत्वात्। इन्द्रियत्वेन तज्जन्यत्वं विवक्षितमिति चेत्किमिन्द्रियत्वं स्मृत्यजनकज्ञानहेतुमनःसंयोगाश्रयत्वमिति चेन्नासंभवात्। संयोगस्याव्याप्यवृत्तित्वनियमान्निरवयवेन मनसा चक्षुःश्रोत्रादीनां संयोगानुपपत्तेः। एतेन संयोगगर्भं सर्वमेव तल्लक्षणं प्रत्युक्तम्। अस्तु विषयत्वेन विषयजन्यत्वं प्रत्यक्षत्वमिति चेन्न ज्ञानकालमात्रवृत्तिविषयत्वस्य तत्पूर्वभाविजनकतानवच्छेदकत्वात्। ननु कालिकातिप्रसङ्गवारकं पूर्वसत्त्वमपेक्षितम्। इदं तु दैशिकातिप्रसङ्गवारकं न तदपेक्षितमिति चेदस्त्वेवं तथाऽपि न विषयत्वं घटादेः प्रत्यक्षजनकतावच्छेदकं संभवति। तथा हि किं ज्ञानमात्रं विषयत्वं वा परोक्षज्ञानम्। आद्यमतिप्रसक्तम्। न हि ज्ञानमात्रावच्छिन्नत्वेनार्थस्य साक्षात्कारजनकत्वं व्योमादेरपि तज्जनकतापत्तेः। अन्त्ये साक्षात्कारावच्छिन्नत्वेन साक्षात्कारजनकत्वमात्माश्रयग्रस्तम्। यत्तु स्वजनकप्रत्यासत्तिप्रतियोगित्वेन तज्जन्यत्वमिन्द्रियज-

१ क. ग. °वृत्ति तस्य°। २ ख. °रकं पू°।

न्यत्वं स्वजनकेन्द्रियप्रत्यासत्त्याश्रयत्वेन तज्जन्यत्वं च विषयजन्यत्वं निर्दोषमिति तन्नाऽऽत्मविशेष्यकमानसप्रत्यक्षे द्वयोरप्यव्याप्तेः । आत्मेन्द्रियसंयोगाभावात्स्वजनकत्वस्य स्वजनकतावच्छेदकप्रवेशेनाऽऽत्माश्रयाच्च । ईश्वरप्रत्यक्षासंग्रहश्च । अस्तु तर्हि ज्ञानाकरणकज्ञानत्वं तदिति चेत्संशयोत्तरप्रत्यक्षाव्याप्तेः । तत्रापि विशेषदर्शनस्य परामर्शद्वारा करणत्वात् । न चानु(*भवत्वसाक्षाद्व्याप्यजात्यवच्छेदेन ज्ञानकारणत्वाभावस्य विवक्षितत्वान्नाव्याप्तिरिति वाच्यमनु)मितावतिव्याप्त्यापत्तेः । न ह्यनुमितित्वावच्छेदेन व्याप्यज्ञानादिकरणं किं तु प्रत्यक्षादिसाधारणावधारणत्वावच्छेदेन । अस्त्वपरोक्षत्वं जातिर्लक्षणं तच्च शाब्दादिबोधे नास्तीति चेन्न शाब्दस्य पारोक्ष्यानियमेन ततस्तद्व्यावृत्तेरसिद्धत्वात् । अत एव शाब्दत्वेन सांकर्यापत्तेर्नियतव्यञ्जकाभावाच्च न सा जातिः । ज्ञानकरणकमात्रवृत्ति जातिशून्यत्वं तदिति चेन्न । षष्ठप्रमाणज्ञानेऽतिव्याप्तेः । प्रतिशरीरं ज्ञानवैजात्याच्च यस्य ज्ञानकरणकमेव प्रत्यक्षं तत्राव्याप्तेश्च । संदेहेऽपि तद्वारकविशेषणायोगात् । अपि च वाचस्पतिमतेऽपि किं नाम विषयस्य करणाधीनमपारोक्ष्यं न तावदिन्द्रियजधीविषयत्वं मुक्तात्मन्यभावात् । कदाचित्तद्विषयत्वं चेदनुमीयमानवह्नेरपि तद्वापत्तिः परोक्षवृत्त्यविषयत्वे सति भासमानत्वं तदिति चेन्न गौरवादनावृतसंविद्भेदस्यैव वक्ष्यमाणस्य लघुत्वादिति न प्रमाणयुक्तमपारोक्ष्यं शक्यनिर्वचनमिति । तर्हि किंप्रयुक्तमपारोक्ष्यमितिचेत् । प्रमेयप्रयुक्तमेव । ननु कीदृशं प्रमेयस्यापारोक्ष्यं यत्प्रयुक्तं ज्ञानस्य तदिति चेदनावृतसंविद्भेद एव प्रमात्रव्यवधानमिति यावत् । अपरोक्षचिदध्यस्तस्य हि जगतस्तद्व्यवधानकृतं पारोक्ष्यं तव्द्यवधानं च चिन्निष्ठाज्ञानरूपावरणप्रयुक्तम् । तच्चापरोक्षाकारावरणं नान्तःकरणावच्छिन्नप्रमातृचैतन्येऽस्ति तस्य नित्यमभिव्यक्तापरोक्षाकारत्वानुभवात् । ततश्च यदि घटाद्यवच्छिन्नचैतन्यं चक्षुरादिप्रणाड्याऽन्तःकरणवृत्त्यभिव्याप्तं सत्तत्कृतावरणभङ्गाज्जीवत्वाविरोधि चैतन्यरूपेणानावृतप्रमातृसंविदभिन्नं भवति तदा घटादेरपारोक्ष्यात्तद्विषयं ज्ञानमपरोक्षमुच्यते तव्द्यवहितं तु परोक्षमिति । अत एव पर्वतांशेऽनुमितिरप्यपरोक्षैवेतीश्वरत्वस्य परोक्षधर्मघटितत्वेन धर्मादेश्चानुद्भूतत्वेनायोग्यत्वान्न संविदभेद इति नित्यपारोक्ष्यमेव । नन्वेवमनुमितिरूपवह्न्याकारान्तःकरणवृत्त्याऽपि वह्नेरावरणभङ्गादपारोक्ष्यापत्तिर्भैवमिन्द्रियासंबद्धस्य वह्नेरन्तःकरणासंबद्ध-

* अयं ग्रन्थः क. ग. पुस्तकयोर्नास्ति ।

त्वेनाभग्नावरणत्वात् । कथं तर्हि वह्निमानमनुमारूपवृत्त्या प्रमातृनिष्ठवह्न्यज्ञातृत्वलक्षणमौढ्यनिवर्तनादेव । सैव हि सुपुप्तिव्यावृत्तिरुच्यते तत एव पुंसो वह्निव्यवहारः । वह्निविषयाज्ञाननिवृत्तिमात्रं हि तद्धेतुर्न तु वह्निनिष्ठतन्निवृत्तिर्गौरवादत एवानुमेयादेर्ज्ञानकर्मत्वाभावेऽपि ज्ञानाकारत्वमेव विषयत्वम् । एतेनापरोक्षवृत्तेरेवाज्ञाननिवर्तकत्वम् । अनुमानादीनां तु व्यवहारमात्रहेतुत्वमित्यपास्तम् । तथात्वे तेषाममानत्वापत्तेर्मानत्वस्यैवाज्ञानविरोधितावच्छेदकत्वान्नतु तद्विशेषत्वस्य गौरवात् । न ह्यज्ञातत्वानिवृत्तौ ज्ञातृत्वव्यवहारोऽपि घटते । अत एवाज्ञातबोधकत्वं मानत्वं मानाघातासहिष्णुत्वं चाज्ञातत्वमित्याचार्याः । अत एव चेदमंशे संशयाद्यभावादावरणाभाव इत्यपास्तम् । पराभिमतात्मनीव ज्ञानसामान्यसामग्रीनिश्चयत्वेनापि तदुपपत्तेरनावृतस्य प्रमाणवृत्त्यविषयत्वाच्चेति । कथं पुनर्वह्न्यसंबन्धाया वृत्तेस्तदाकारत्वमिति चेत्तत्प्रतिबिम्बाश्रयत्वाद्दर्पणादेर्मुखाकारत्ववद्वस्तुतोऽन्तःकरणनिष्ठवह्निधूमव्याप्त्यनुभवाहितसंस्कारविषयवह्नित्वाश्रयत्वमेव वह्नेरन्तःकरणसंबन्धः । अतीताद्यनुमितावप्ययमेव सूक्ष्मरूपानुमेयस्य वृत्तिसंबन्धः । भ्रमानुमितौ च न मृषा वह्नेरुत्पत्तिरपरोक्षत्वायैव रजतादौ तदङ्गीकारात् । अतस्तत्संसर्गमात्रमेवानिर्वचनीयं भातीति केचित् । एवमपि वह्न्यंशेऽन्यथाख्यात्यापत्तेराविद्यको वह्निः स्वीकार्य एव । तज्जन्म च दोषसंस्काराभ्यां तद्भानं च चिदुपरागमात्रार्थया तदाकाराविद्यावृत्त्यैव तस्य तामसत्वादिति निगर्वः । केचित्तु प्रमातृप्रमेयचैतन्ययोरपरोक्षाकाराभेदस्य व्यवधायकं विषयगतावरणमिति चाक्षुषादिवृत्त्या तद्भङ्गादपारोक्ष्यं घटादेश्चित्त्वाकाराभेदस्य तु व्यवधायकं मौढ्यमेवेत्यनुमित्या तन्नाशे चित्त्वेन प्रमात्रभेदाद्वह्निर्मया ज्ञात इति मानं परोक्षमित्याहुः । अनुमित्या वह्न्यादावत्यन्ताज्ञानत्वापादिकाऽविद्यावस्था निवर्तते न त्वपरोक्षत्वापादिकेत्येके संशययोग्यतन्निवृत्तिर्मात्रं तत्रेत्यन्ये । धीसमुल्लासमात्रमित्यपरे । अन्ये तु नास्ति न भातीत्यावरणद्वयं तत्राऽऽद्यं परोक्षवृत्तिनाश्यमन्त्यमपरोक्ष (* वृत्तिनिरस्यमित्याहुः । तथाऽपि कथं वाक्योत्थवृत्तेरपारोक्ष्यं शाब्दवृत्तेः परोक्षायाः स्वविषयगतावरणनिवर्तकत्वाभावा-

---

* खपुस्तकयोऽयं ग्रन्थः ।

---

१ क, मात्रता त° ।

दिति चेत्सत्यं जडेषु हि परोक्षवृत्त्या) मौढ्यनिवर्तनेऽपि विषयस्याऽऽवरणसत्त्वात्परोक्षत्वम् । इह तु प्रमातृप्रमेययोरभेदादेकमेवाऽऽवरणमुभयभेदकमित्यखण्डाकारशाब्दवृत्त्या प्रमातुर्मौढ्ये निवृत्ते तद्भिन्नजाड्यरूपविषयावरणाभावात्प्रमात्रव्यवहितब्रह्मविषयत्वादेव तद्वृत्तेरपारोक्ष्यमिति । नन्वेवं ब्रह्मविषयानुमितेरप्यपारोक्ष्यापत्तिर्विषयस्यापारोक्ष्यत्वादिति चेन्नानुमितेर्व्यापकतावच्छेदकप्रकारतानियमेन निर्धर्मकब्रह्मविषयत्वासंभवात् । शब्दस्य तूक्तलक्षणया यथा लक्ष्यतावच्छेदकप्रकारकधीहेतुत्वं परिभूय निर्धर्मकाखण्डब्रह्मगोचरत्वं तथोपपादयिष्यते । अस्तु वा पदादपि निर्विकल्पकमित्यादिना परैरपि तत्स्वीकाराच्चेत्यलमतिप्रपञ्चेन ॥ १५७ ॥

अ० टी०—अत्र वैदिकमप्युदाहरणं क्रमेणाऽऽह—वेदेऽपीति । ‘ यज्ञायुधी यजमानः स्वर्गं लोकमेति ’ इति श्रुतौ यज्ञायुधैः स्रुक्कपालाग्निहोत्रहवण्यादिभिर्विशिष्टो यजमानः स्वर्गं लोकं गच्छतीति प्रतीयते तदयुक्तं ग्रहीतुं यज्ञपात्राणामिहैव दग्धानां सहगमनाभावात् । अतस्तत्र यज्ञायुधवैशिष्ट्यं स्वार्थं परित्यज्य तत्संबन्धिनि यजमानमात्रे लक्षणया वर्तत इत्यर्थः । यज्ञपात्रैः सह दह्यमानदेहत्वाद्यजमानविशेषणताऽस्येति द्रष्टव्यम् । अजहल्लक्षणोदाहरणमाह—वैश्वानरादीति । ‘ वैश्वानरमुपास्ते ’ इत्यत्र वैश्वानरशब्दो जाठरविराजोर्वाची संस्तदुपाधिक आत्मनि लक्षणया वर्ततेऽचेतनस्य जाठरादेरुपास्यत्वायोगात्तदुपहितमीश्वरं स्वार्थापरित्यागलक्षणयेति वैश्वानरशब्द इत्यजहल्लक्षणोदाहरणताऽस्य युज्यत इत्यर्थः । आदिपदेन मनोमयः प्राणशरीर इत्यादिविग्रहः । जहदजहल्लक्षणायास्तु प्रकृतमेव महावाक्यमुदाहरणमित्याह—तत्त्वंगिरोरिति । तत्पदत्वंपदयोरित्यर्थः ॥ १५७ ॥

सु० टी०—‘ तत्त्वमसि ’ [ छा० ६ । ८ । ७ ] ‘ अयमात्मा ब्रह्म ’ [ माण्डू० २ ] इत्यादौ जहदजहल्लक्षणेत्युक्तं तत्र तत्त्वंपदयोर्ब्रह्मात्मपदयोर्वा किं वाच्यं शबलं किं वा तत्र हेयं किमुपादेयमिति विवेक्तुं तत्पदसमब्रह्मपदवाच्यं दर्शयति—

ब्रह्माज्ञाने ह्यद्वितीयत्वमेकं
ब्रह्मण्यन्यच्चाद्वितीयत्वमस्ति ।
तत्संपर्कात्तत्र चाद्वैतताऽन्या
व्युत्पन्नोऽयं ब्रह्मशब्दस्तु तत्र ॥ १५८ ॥

ब्रह्माज्ञान इति । ब्रह्मणि तादात्म्येनाध्यस्तेऽज्ञानेऽस्ति ब्रह्माभेदोऽस्ति

च जगदुपादानतया जगदभेद इति । तत्रास्ति कल्पितमद्वितीयत्वमेकं यदपेक्ष्य 'मम योनिर्महद्ब्रह्म' [ भ०गी०१४।३ ] इत्युक्तिः । अस्ति च ब्रह्मण्यन्यद्वास्तवमद्वितीयत्वं जगद्भेदस्य कल्पितत्वेन वस्तुतस्तत्राभावा-त्तयोश्च ब्रह्माज्ञानयोः संपर्कादन्योन्याध्यासान्निर्वृत्ते शबलेऽन्यदद्वैतत्वं सत्यानृताद्वैतताद्वयशबलं यदस्ति तत्रायं ब्रह्मशब्दो व्युत्पन्न इत्यर्थः । बृहत्त्वनिमित्तो हि ब्रह्मशब्दः । बृहत्त्वं च परिच्छेदशून्यत्वं तच्चाद्विती-यत्वमिति जगत्कारणगताद्वितीयत्वं ब्रह्मशब्दार्थः । तच्च शबलात्मक-मिति शबलं ब्रह्मशब्दवाच्यमिति भावः ॥ १५८ ॥

अ० टी०—यदि तत्त्वंपदयोर्जहदजहल्लक्षणा तर्हि किमत्र हेयोपादेयशबलरूपं वाच्यं सोऽयंपदयोरिवेत्यपेक्षायां तत्पदवाच्यं तावदाह—ब्रह्माज्ञाने हीति । ब्रह्मण्यध्यस्तमज्ञानं ब्रह्माज्ञानं तस्मिन्नेकमद्वितीयत्वमवास्तवमस्त्यध्यस्तस्याधिष्ठानाद्ब्रह्मणः परमार्थतो भेदाभावा-दज्ञानविकारस्य च स्थूलसूक्ष्मप्रपञ्चस्याज्ञानाद्वस्तुतोऽर्थान्तरत्वाभावाददद्वैतं ब्रह्माज्ञानम् । ब्रह्मणि वस्तुतोऽज्ञानतत्कार्याणामभावाद्वास्तवमेवाद्वितीयत्वमज्ञानगतादवास्तवाद्द्वितीयत्वाद-न्यदस्ति । तत्संपर्कात्तयोरज्ञानब्रह्मणोः परस्पराध्यासरूपाच्छावल्यात्तत्र शबलस्वरूपे चाद्वैत-ताऽन्या परमार्थापरमार्थविलक्षणा व्यवहारमात्राश्रयोभयसाधारणाऽस्ति । तत्र शबलरूपे साधारणेऽद्वैतेऽयं ब्रह्मशब्दो व्युत्पन्न इति योजना । जगत्कारणसमभिव्याहृते वाक्ये 'यतो वा' [ तैत्ति० ३ । १ । १ ] इत्यादौ ब्रह्मशब्दव्युत्पत्तेर्जगत्कारणस्य केवले ब्रह्मण्यसंभवात्तस्मिन् 'मायां तु प्रकृतिं विद्यात्' [ श्वेता० ४ । १० ] 'देवा-त्मशक्तिम्' [ श्वे० १ । ३ ] इत्यादिवचनैर्मायाशबलसिद्धौ जगत्कारणत्वाक्रान्तं मायाश-बलितं ब्रह्मशब्दवाच्यार्थ इति भावः ॥ १९८ ॥

सु० टी०—त्वंपदतुल्यार्थस्याऽऽत्मपदस्य वाच्यमाह—

प्रत्यग्भावस्तावदेकोऽस्ति बुद्धौ
प्रत्यग्भावः कश्चिदन्यः प्रतीचि ।
प्रत्यग्भावस्तत्कृतस्तत्र चान्यो
व्युत्पन्नोऽयं तत्र चाऽऽत्मेति शब्दः ॥ १५९ ॥

प्रत्यगिति । प्रत्यग्भाव आत्मभावः स तावदेकोऽपारमार्थिको बुद्धा-वस्ति तस्या अपि देहादित आन्तरत्वेन प्रतीयमानत्वात् । अत एव सुखदुःखाद्याधारे बालानामात्मत्वप्रसिद्धिः । अन्यश्च प्रत्यग्भावस्ता-त्त्विकः प्रतीचि सुखादिसाक्षिण्यस्ति बुद्धिप्रतीचोरन्योन्याध्यासकृते

शबले योऽन्यः सत्यानृतप्रत्यक्त्वद्वयशबलात्मकः प्रत्यग्भावस्तत्रायमा-त्मशब्दो व्युत्पन्न इत्यर्थः ॥ १५९ ॥

अ० टी०—त्वंशब्दवाच्यमपि तथा व्युत्पादयति—प्रत्यग्भाव इति । प्रत्यग्भाव आत्मत्वमहं स्वयमित्यादिव्यवहारार्ह आकारः स एको बुद्धौ तावदस्ति । स च तत्रापार-मार्थ आत्मनि बुद्धेः स्वरूपेणाध्यस्तत्वात् । तस्यां च परागर्थदेहाद्यपेक्षयाऽऽन्तरत्वादापेक्षिक-प्रत्यक्त्वोपपत्तेरात्मनो विशेषाभिव्यक्तौ निरपेक्षोपाधितया चाऽऽत्मसंनिधानादात्मत्वसंभवाच्च बुद्धावस्त्येकं प्रत्यक्त्वमपरमार्थमिति सिद्धम् । तथा प्रत्यग्भावः कश्चिदन्यो वास्तवः प्रतीचि बुद्धेरपि साक्षितया तस्या अप्यान्तरे चिदात्मनीत्यर्थः । तत्र बुद्ध्यात्मनोः शाबल्ये तत्कृत-स्तयोरन्योन्याध्यासकृतः प्रत्यग्भावोऽन्यो वास्तवावास्तवसाधारणस्तत्रायमात्मेति शब्दो व्युत्पन्न इति द्वितीयार्थयोजना । आत्मशब्दपर्याया अहमादिशब्दा अपि तत्रैव प्रवर्तन्तेऽहंप्रत्ययसमानार्थत्वादेषां शब्दानामहंप्रत्ययस्य चान्तःकरणशबलात्मविषयत्वा-दित्यर्थः ॥ १५९ ॥

सु० टी०—संप्रति हेयोपादेयांशद्वयमुखेन वाक्यार्थमाह—

तच्छब्दवाच्यगतमद्वयभागमेकं
प्रत्यक्त्वमात्रमविरोधमपेक्षमाणः ।
त्वंशब्दवाच्यशबलस्थमुपाददानो
वाक्यादखण्डमथ तत्त्वमसीति विद्यात् ॥ १६० ॥

तच्छब्देति । तत्त्वंशब्दयोरन्वययोग्यत्वायाविरोधमपेक्षमाणः सद्वयत्व-पारोक्ष्ये विरुद्धे विहायाविरुद्धं तच्छब्दवाच्यस्थमद्वयत्वं त्वंशब्दवा-च्यस्थं च प्रत्यक्त्वमात्रमुपादाय प्रत्यगेवाद्वयमिति लक्षयंस्तत्त्वमसि-वाक्यादखण्डं विद्यादित्यर्थः । ब्रह्मगताद्वयत्वस्य चिन्मात्रतयाऽपरो-क्षप्रत्यगभेदान्वययोग्यत्वाद्ग्रहणं मोहस्थस्य तु विरुद्धत्वाद्धानमा-त्मगतप्रत्यक्त्वस्य पूर्णत्वेनाद्वयत्वान्वययोग्यत्वं बुद्धिगतस्याऽऽपेक्षिक-त्वादसत्यत्वेनायोग्यत्वमिति ॥ १६० ॥

अ० टी०—एवं तत्त्वंपदयोर्वाच्यार्थौ व्युत्पाद्य तयोर्लक्ष्यार्थमुद्धृत्य व्युत्पादयति—तच्छब्द इति । तच्छब्दवाच्यगतमेकं वास्तवमद्वयभागं तत्पदेन लक्षणयोपाददान इति संबन्धः । तथा त्वंशब्दस्थं वास्तवं चिद्रूपं प्रत्यक्त्वमात्रं चोपाददान इति पुनः संबन्धः । किमित्येवं भागलक्षणयाऽर्थैकदेश उपादीयत इति तत्राऽऽह—अविरोध इति । शबले व्युत्पन्नस्य शब्दस्य तदेकदेशे पर्यवसानं लक्षणादेकदेशश्च परस्पराविरुद्ध एकस्वभावश्चेत्यख-

ण्डवाक्यार्थत्वयोग्य इत्येवमविरोधमपेक्षमाणो जिज्ञासुरथैवं पदार्थनिश्चयानन्तरं 'तत्त्वमसि' [छा० ६।८।७] इति वाक्यादखण्डवाक्यार्थं विद्यादिति योजना। एतदुक्तं भवति—वाच्यार्थावाच्यार्थयोः प्रत्यक्पराग्भावेनापरोक्षत्वापरोक्षत्वाभ्यां च विरोधात्तयोः संसर्गो वा तादात्म्यं वा न संभवतीति वाक्यार्थाबोधकत्वेन वाक्यस्याप्रामाण्यशङ्का भवेत्। सा मा भूदिति स्वतःप्राप्तप्रामाण्यसंरक्षणाय तत्पदार्थे सविकारमज्ञानांशं विहाय त्वमर्थे सविकारं बुद्ध्यंशं परित्यज्य स्वप्रकाशचित्सदानन्दात्मकमुभयत्र गतमखण्डं वाक्यार्थं विद्यात्॥१६०॥

सु० टी०—नन्वद्वयत्वप्रत्यक्त्वयोर्भेदश्चेदखण्डार्थत्वं न स्यादभेदे तु घटः कलश इतिवत्पौनरुक्त्यमित्याशङ्क्याऽऽह—

आदेयांशे नाणुमात्रोऽपि भेदो
यद्यप्येवं भिन्नमादाय शब्दौ।
वर्तेते त्वय्यद्वयस्वप्रकाशे
बाह्यं हेतुं जामिता नास्ति तस्मात्॥ १६१॥

आदेयेति। यद्यपि प्रतीच एवाद्वयत्वादद्वयस्य प्रत्यक्त्वाद्वुपादेये लक्ष्याखण्डांशे लेशतोऽपि न भेदोऽस्त्यद्वितीयत्वेन सजातीयविजातीयकृतस्य नीलोत्पलादिवद्धर्मधर्मित्वकृतस्य वा तस्याभावात्तथाऽपि लक्ष्ये त्वय्यद्वयस्वप्रकाशचिति तत्त्वंशब्दौ बाह्यं वाक्यार्थाप्रविष्टं हेतुं शबलात्मकं प्रवृत्तिनिमित्तं भिन्नमादाय यतो वर्तेते अतो न पौनरुक्त्यमित्यर्थः॥ १६१॥

अ० टी०—ननु लक्ष्यांशयोः केनाप्यंशेन भेदोऽस्त्युत नाऽऽद्ये नाखण्डार्थत्वसिद्धिर्द्वितीये पौनरुक्त्यमित्याशङ्क्याऽऽह—आदेयांश इति। मिथो व्यावृत्तं हेतुं शब्दप्रवृत्तिनिमित्तकार्यकारणत्वलक्षणमादाय वर्तेते लक्ष्यार्थबहि*र्भूतं......॥ १६१॥

सु० टी०—नन्वद्वैतत्वं द्वैतराहित्यं प्रत्यक्त्वं च पराक्त्वराहित्यं तयोः कथमभेदः प्रतियोगिभेदेन भेदावश्यकत्वादित्यत आह—

अद्वैतेऽर्थे प्रत्यगर्थोऽस्ति तद्व-
त्प्रत्यक्त्वे चाद्वयस्यापि भावः।

---

* नैतच्छ्लोकस्य पूर्णा टीका।

---

१ कं. ख्यद्वयात्मप्र°। ख. य्यद्वितीयप्र°। २ क. त्वद्व°।

यद्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे तत्त्वमर्थोपपत्तेः ॥ १६२ ॥

अद्वैत इति । यद्यपि तयोः प्रतियोगिकृतो भेदः प्रतिभाति तथाऽपि वस्तुतस्तु न कथंचिदपि भेदगन्धोऽस्ति यतोऽद्वैते तत्पदलक्ष्येऽर्थे प्रत्यगर्थः कात्स्न्र्येनास्ति प्रत्यक्त्वस्य ततोऽतिरेके तस्याद्वैतत्वव्याघातात् । तथा त्वंपदलक्ष्येऽपि प्रत्यगर्थेऽद्वयत्वं कात्स्न्र्येन वर्ततेऽन्यथा तस्याद्वैतापेक्षया पराक्त्वेन प्रत्यक्त्वव्याघातात्तस्मान्न तद्द्वयं भिन्नं किं तूभयमुभयान्तर्गतमेवेत्यर्थः । तथाऽप्यद्वयत्वप्रत्यक्त्वधर्मभेदाद्धर्मिभेदः स्यादित्यत्राऽऽह—यद्यपीति । यद्यपि तयोर्धर्मौ वै तथाऽपि वस्तुतस्तदभावान्नातिरेकः पूर्णे तत्त्वे लक्ष्यभूताखण्डे द्वयोरन्योन्यात्मत्वेनैवोपपत्तेरित्यर्थः । एकस्यैव पराक्त्वपरिच्छेदव्यावर्त्यभेदोपाधिक एव भेदावभासो दण्डस्येवावधिभेदकृतदीर्घत्वाद्यवभास इत्यर्थः ॥ १६२ ॥

अ० टी०—ननु प्रत्यक्त्वाद्वयत्वयोस्तत्त्वंपदार्थयोरैकरस्यं लक्षणविषयत्वेऽपि नोपपद्यते प्रतियोगिभेदेन मिथो भेदप्रतीतेरन्यथाऽन्यतरस्य वैयर्थ्यादत ईषदपि भेदः पृ(प्र)थव्य इति चेन्नेत्याह—अद्वैतेऽर्थ इति । अद्वैते तत्पदार्थे प्रत्यगर्थस्त्वंपदार्थोऽप्यस्ति न ततोऽत्यन्तमीषद्वा व्यावृत्तः प्रत्यगर्थः । तथा सत्यद्वैतस्यासंपूर्णतापत्तेः । तद्वदेव प्रत्यक्त्वे चाद्वयस्य भावोऽभेदेनावस्थानमन्यथा द्वितीयस्वरूपापेक्षया प्रत्यक्त्वप्रसङ्गात् । तस्माद्द्वितीयरूपान्न प्रत्यक्त्वं बहिर्भूतेनापि प्रत्यक्त्वादद्वैतमिति युक्तमित्यर्थः । यद्वा ननु यद्यप्येवमादेयांशभेदाभावेऽपि प्रवृत्तिनिमित्तभेदात्पदभेद उक्तस्तथाऽपि पदभेदान्यथानुपपत्त्या पदार्थभेदः कथमप्यङ्गीकर्तव्योऽन्यथाऽन्यतरस्य वैयर्थ्यादिति चेत्सत्यं न पदवृत्तिनिमित्तभेदोपरक्तं पदार्थभेदं वयं निराकुर्महे किं तु पदार्थस्वरूपभेदमित्यभिप्रेत्याऽऽह—अद्वैतेऽर्थ इति । अयमर्थः—तत्पदार्थो ह्यद्वैतमिति प्रसिद्धं तस्मिन् ‘ एकमेवाद्वितीयम् ’ [ छा० ६ । २ । १ ] इति श्रुतेः । त्वंपदार्थश्च प्रत्यगर्थः प्रसिद्धः । ‘ स त आत्मा सर्वान्तरः ’ [ बृ० ३ । ४ । १ ] इति श्रवणात् । तथा चाद्वैतेऽर्थे तत्पदवाच्ये प्रत्यगर्थोऽपि स्वरूपेण विद्यतेऽन्यथा ‘ एकमेवाद्वितीयम् ’ [ छा० ६ । २ । १ ] इति अद्वैतत्वावधारणायोगात् । यथाऽद्वैतेऽर्थे प्रत्यगर्थो विद्यते तद्वत्प्रत्यक्त्वे चाद्वयस्यापि भावः स्वरूपेणावस्थानमस्त्यन्यथा तस्य सर्वान्तरत्वश्रुताववकस्मादेव सर्वशब्दसंकोचापत्तेः । अत श्रुतेः प्रामाण्यान्नानयोः स्तम्भकुम्भयोरिव स्वभावत एव भेदः किं तु पदवृत्तिनिमित्तभेदादेव भेद इत्यर्थः । तर्हि प्रवृत्तिनिमित्तयोर्धर्मयोरद्वितीयत्वप्रत्यक्त्वयोः परस्परमग

---

१ क. ‘त्त्वे तथा त°

र्गत्वाय भिन्नाधिकरणत्वमेष्टव्यमिति पुनः प्राप्तस्तयोः स्वरूपभेद इति चेत्तत्राऽऽह—यद्यप्येवमिति । यद्यप्येवमुक्तप्रकारपदभेदादर्थभेदाभासस्तथाऽपि नातिरेकावकाशोऽर्थयोः स्वरूपतो न भेदावकाश इत्यर्थः । कुत इत्याह—पूर्ण इति । अपरिच्छिन्ने सर्वविकारास्पदतया सर्वाधीने स्वयंप्रकाशतया स्वतःस्फुरत्यात्मतत्त्व इत्यर्थः ॥ १६२ ॥

सु० टी०—ननु तत्त्वयोर्विरुद्धार्थयोरेकपदलक्षणयैव पदान्तरान्वयोपपत्तेरस्तु संसर्ग एव वाक्यार्थ इत्याशङ्क्याऽऽह—

न च विनिगमनायां कारणं किंचिदस्ति
स्फुटमुभयपदस्था लक्षणा शस्यतेऽतः ।
न हि विनिगमनायां हेत्वभावे कदाचि-
त्क्वचिदियमुपलब्धा सोऽयमित्यादिवाक्ये ॥ १६३ ॥

न चेति । सत्यमेवमप्येकत्र विनिगमकहेत्वभावादुभयपदलक्षणाश्रयणमेव युक्तमिच्छाया अव्यवस्थितत्वाद्विनिगमकान्तराभावाच्च सोऽयमित्यादौ तथा दर्शनादित्यर्थः ॥ १६३ ॥

अ० टी०—ननु यद्येवमेकदेशलक्षणायामङ्गीकृतायां विरोधपरिहाराद्भीष्टवाक्यार्थसिद्धिस्तर्ह्येकपदे लक्षणाश्रयणेऽपि तत्सिद्धेः पदद्वयेऽपि तदाश्रयणमनर्थकमिति चेन्नेत्याह—न च विनिगमनायामिति । एकस्मिन्नेव पदे लक्षणा भवति सर्वत्र न पदान्तरेऽपीति विनिगमनायां नियमाभ्युपगमे न च स्फुटं कारणं किमप्यस्ति यद्यपि क्वचिदेकपदलक्षणयाऽपि विरोधपरिहारसंभव इति योजना । नियमाभावे फलितमाह—उभयपदस्थेति । यतो नियमाभावोऽत उभयपदस्था लक्षणा शस्यते प्रकृत इति शेषः । नन्विच्छैव विनिगमनाहेतुरित्याशङ्क्येच्छाया निरङ्कुशत्वान्न व्यवस्थासिद्धिरित्यभिप्रेत्य प्रकृतवाक्यानुरूपोदाहरणेनोभयपदलक्षण्या(णां) प्रतिपादयति—न हीति । लोके पदद्वये लक्षणा क्व दृष्टेति तदाह—इयमिति ॥ १६३ ॥

सु० टी०—नन्वत्र तत्पदमेव 'यो होता सोऽध्वर्युः' इत्यत्र होतृपदवत्पूर्वचोदितत्वेनासंजातविरोधित्वादस्तु मुख्यार्थं त्वंपदं च लाक्षणिकमिति शङ्कते—

प्रथमचरमभावो निर्णये कारणं चे-
दयमपि नियमो न ह्यन्यथाऽप्यस्य दृष्टेः ।

प्रथमपठितमासीत्तत्पदं सामवेदे
चरमपठितमेतद्दृष्टमध्वर्युवेदे ॥ १६४ ॥

प्रथमेति । प्राथम्यादेरपि वेदभेदेनाव्यवस्थितत्वान्न विनिगमकत्व॰मित्याह—अयमपीति । छान्दोग्ये 'तत्त्वमसि' [६।८।७] इति तत्पदस्य प्राथम्यं यजुर्वेदे तु 'अहं ब्रह्मास्मि' [बृ॰ १।४।१०] इत्यहंपदस्येति न व्यवस्थितो वाक्यार्थः स्यादित्यर्थः । किं च सर्ववेदान्तप्रत्ययत्वाद्ब्रह्मणो वेदभेदेन च पदद्वयस्यापि चरमत्वाल्लक्षणा दुर्वारा। आर्थिकपौर्वापर्यादरे तु त्वंपदस्योद्देश्यार्थत्वेन प्राथम्यान्मुख्यार्थत्वे तद्विरोधेन तत्पदार्थगताद्वैतत्वादि हेयमिति विपरीतापत्तिः ॥ १६४ ॥

अ॰ टी॰—उक्तमर्थं स्थिरीकर्तुं प्रकारान्तरेणैकपदलक्षणाद्वारमाशङ्क्य परिहरति—प्रथमेति । एकपदलक्षणनिर्णये कारणमिति चेत्* ॥ १६४ ॥

सु॰ टी॰—ननु सोऽयमित्यत्र प्रयोगाधीनपौर्वापर्यनियमादस्त्वेकपदलक्षणेत्यन्यत्रापि तथेति चेन्नेत्याह—

सोऽयं पुमानयमसाविति पौरुषेये
वाक्ये तथा व्यतिहृतेऽत्र विशेषहेतुः ।
पूर्वापरत्वमिति शक्यमिदं न वक्तुं
मुख्यत्वलाक्षणिकते प्रतिशब्दवृत्त्योः ॥ १६५ ॥

सोऽयमिति । व्यतिहृते[2] व्यत्यस्ते अत्राप्ययं स इति व्यत्यासेनापि प्रयोगान्न तत्कृताऽपि विनिगमनेति तत्पदद्वयलक्षणैवेत्यर्थः ॥ १६९ ॥

अ॰ टी॰—अत्रैव लौकिकमप्युदाहरणमाह—सोऽयमिति । अत्रापि वाक्यप्रयोक्तृणामुच्चारणे पूर्वापरनियमादर्शनादित्यर्थः ॥ १६५ ॥

सु॰ टी॰—नन्वस्तु त्वंपदे लक्षणा तदर्थस्योद्देश्यत्वेनाविवक्षितविशेषणत्वान्न तत्पदे तस्य विपरीतत्वादिति चेन्नैवमपि विरोधापरिहारादित्याह—

न च भवति विरोधस्योत्थितस्यापनीतिः
पदयुगलनिविष्टां लक्षणामन्तरेण ।

---

* नास्य टीका पूर्णा ।

---

१ ख. °तिकृते° । २ क. नह्नते ।

न हि भवति कदाचित्सद्वयस्याद्वयत्वं
न च भवति परोक्षः प्रत्यगर्थोऽपि तद्वत् ॥ १६६ ॥

न चेति । मुख्यार्थयोरुत्थितस्य हि विरोधस्य नैकपदलक्षणायामपनयः । कुत इत्याह—न हीति । त्वंपदमात्रस्य लाक्षणिकत्वे तल्लक्ष्यप्रत्यगर्थस्य न परोक्षेण तत्पदार्थेनाभेदः संभवतीति पदान्तरस्थविरुद्धांशत्यागार्थमुभयलक्षणेत्यर्थः । न च मुख्यपदार्थपारोक्ष्यविरोधेन त्वंपदार्थस्यापारोक्ष्यं त्याज्यं तस्य पारोक्ष्य उद्देश्यत्वस्याप्यसंभवादिति भावः । ननु सर्वनाम्नां बुद्धिस्थवाचित्वाद्ब्रह्मणश्चाबुद्धिस्थत्वेऽलक्ष्यत्वापत्तेरस्तु शक्त्यैव तत्त्वमोरखण्डार्थत्वमिति चेन्न बुद्धिस्थत्वं हि न सर्वनाम्नां प्रवृत्तिनिमित्तं तत्प्रकारेण ततोऽनुपस्थितेः। तं पश्येत्युक्ते बुद्धिस्थं पश्येत्यप्रतीतेः सर्वसर्वनाम्नां पर्यायतापत्तेश्च । किंतूपलक्षणं तेन तदुपलक्षितेषु चैत्रमैत्रादिषु शक्तिग्रहः स च न प्रत्येकमानन्त्यादिति । बुद्धिस्थप्रकारावच्छिन्नमेव तेषां वाच्यं तत्रापर्यायत्वार्थं प्रश्नोपक्रमबुद्धिविषयप्रकारे किं पदस्य प्रत्यक्षबुद्धिविषयप्रकारे इदमेतदोर्व्यवहितबुद्धिविषयप्रकारेऽदस्तदोः संबोध्यतावच्छेदकबुद्धिविषयप्रकारावच्छिन्ने त्वंपदस्योच्चारयितृत्वावच्छेदकधीविषयप्रकारावच्छिन्नेऽहंपदस्य शक्तिग्रह इत्येवं नियमेन सप्रकारकबुद्धिहेतुत्वान्न सर्वनाम्नामखण्डे शक्तिः । तथाऽपि यथा तार्किकाणामनित्या गौरित्यत्र गोपदाज्जातिव्यक्तितत्संबन्धोपस्थितावपि योग्यत्वाद्व्यक्तेरनित्यत्वान्वयो न जातेस्तथेह तत्त्वंपदाभ्यां शबलोपस्थितावपि योग्यत्वाच्चिदंशयोरभेदान्वयोऽस्तु किं लक्षणयेति चेन्न पदार्थः पदार्थेनान्वेतीति पदार्थैकदेशव्यक्तेः स्वतन्त्रोपस्थितये तैरपि तत्र लक्षणाया अवश्यवाच्यत्वात् । ननु तेषां परविशेषणत्वेनोपस्थिते लक्षणा यथा गौर्नित्येत्यत्र गोत्वेऽनित्येत्यत्र तु गोपदाद्व्यक्तेर्विशेष्यतया स्वातन्त्र्येणोपस्थितेः किं लक्षणयेति मतं तन्न तत्त्वमोरपि तुल्यमिति । किं च त्वन्मते तत्त्वंपदार्थगतविरुद्धांशयोर्मिथ्यात्वावगमान्न विशेष्यांशयोरभेदविरोधगन्धोऽप्यस्ति यन्निरासाय लक्षणेति मैवं शक्त्युपस्थापितपदार्थान्वये हि इश्या गौरितिवदन्वयित्वेन द्रव्यं गौरितिवदन्वयप्रतियोगिव्यावर्तकत्वेन वाऽवच्छेदकप्रवेशध्रौव्याद्गौरनित्येत्यत्र[१] यत्र गोत्वं तत्रानित्यत्ववैशिष्ट्यमित्येवान्वयो न शुद्धव्यक्तौ । अत्र तु तत्पदार्थे त्वमर्थत्ववैशिष्ट्यमेकत्र द्वयमिति धीर्न संभवति विरोधादिति शुद्धव्यक्त्यन्वयार्थमावश्यकी

१ क. °कगौर° । २ क. ग. °त्यत्र गोत्वं ।

लक्षणा । यच्च किंचेत्यादि तदप्यसत् । अज्ञस्य हि शक्तिग्रहस्तदात्वेंऽशावेव न विविक्तौ क्व तयोर्मिथ्यात्वनिश्चयः । विवेके तु सति विरोधान्मिथ्यात्वक्लृप्तिर्लक्षणा साधिकैवेति दिक् ॥ १६६ ॥

अ० टी०—अथोद्देश्यत्वात्त्वंपदार्थस्य तद्गतविशेषणस्य ग्रहगतैकत्ववदविवक्षितत्वात्तत्पदार्थस्य विधेयत्वात्तद्गतविशेषणस्य पश्वेकत्वादिवद्विवक्षितत्वात्त्वंपदे लक्षणा तत्पदे तु मुख्यवृत्तितेति नियम उच्येत तथाऽपि तत्पदार्थे पारोक्ष्यविद्यमानत्वात्तस्यापरोक्षत्वमर्थैक्यवाक्यार्थानुपपत्तिलक्षणो दोषो न परिहृतः स्यादित्यभिप्रेत्याऽऽह—न च भवतीति । पूर्वार्धं स्पष्टम् । विरोधापनयनाभावं समर्थयते—नहि भवतीति । न हि भवति यथेत्यध्याहारः सद्वयस्य त्वमर्थस्याद्वयत्वं तदर्थैक्यं संभवतीति चेत्त्वंपदे लक्षणया स्वरूपमात्रमुपादीयते तर्हि तद्वदेव परोक्षस्यापरोक्षप्रत्यगर्थत्वमपि न संभवतीति दोषसाम्यात्तत्रापि लक्षणया स्वरूपोपादानमावश्यकमेवेत्युभयपदलक्षणाऽत्र संमतेत्यर्थः । अत्र त्वमर्थगतसद्वितीयत्वांशपरित्यागवदपरोक्षस्यापि परित्यागे विरोधस्य परिहारादुद्देश्यविशेषणत्वेन तस्यापि परित्याज्यत्वादिति न शङ्कास्पदं प्रत्यङ्मात्रस्यापरोक्षस्वभावत्वत्स्वभावत्यागे च भावत्यागापत्तेः । न हि ग्रहगतमेकत्वमविवक्षितमिति ग्रहत्वमप्युद्देश्यविशेषणत्वादविवक्षितं भवति तत्स्वभावत्वात् । न च स्वयं चाऽऽत्मा परोक्षश्चेति कस्यचिदनुभवः संभाव्यते । तस्मात्पारोक्ष्यसद्वयविरोधपरिहारायोभयपदलक्षणाऽवश्यं प्राप्नोति भावः ॥ १६६ ॥

सु० टी०—ननु किं लक्षणया विशिष्टयोरभेददर्शनात्तत्त्वमर्थयोरपि शबलयोरस्त्वभेद एव संसर्गो वाक्यार्थ इति चेन्न विशिष्टाभ्यां केवलस्यान्यत्वेन लक्षणां विना पदाभ्यामुपस्थित्यसंभवादेवेत्याह—

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नितरां तद्विपरीतरूपयोः ॥ १६७ ॥

अविरुद्धेति । भवति ह्ययमधुना दण्डी नेति दण्डिनश्चैत्रात्केवले भेदप्रतीतिः । नचेयं दण्डाभावविषया । तथा सति घटः पटो नेत्यपि धीः पटत्वाभावविषयेति भेदविलयः । दण्ड्येवायमिति प्रत्यभिज्ञा तु स्वरूपविषया ततश्चैकत्राविरुद्धदण्डकुण्डलद्वयप्रयुक्तयोरपि विशिष्टयोरभेदासंभवश्चेद्विरुद्धविशेषणविशिष्टयोस्तत्त्वमर्थयोरेकता स्यादिति का प्रत्याशेत्यर्थः ॥ १६७ ॥

अ० टी०—ननु यदि विरुद्धानेकविशेषणयोगिनोरपि तत्त्वमर्थयोः स्वरूपेणैकत्वं तर्हि तद्विशिष्टयोरप्यैकत्वमस्तु सर्वथैकस्यैव विरुद्धानेकविशेषणयोगस्याभ्युपेयत्वादित्याशङ्क्य संभवतीति कैमुत्यन्यायेन परिहरति—अविरुद्धविशेषणेति । यथैकस्मिन्पुरुषे

दण्डः कुण्डलमिति चाविरुद्धविशेषणे तयोरेकत्रान्वये विरोधाभावात्तथा चेत्थमविरुद्धविशेषणद्वयप्रभवत्वेऽपि द्वयोर्विशिष्टयोरेकपुरुषगतदाण्डिकुण्डलित्वयोर्यदैकता न घटते विशिष्टयोरेकविशेषणयोरपि तत्प्रसङ्गात् । यद्येवं तदा तद्विपरीतरूपयोर्विरुद्धयोर्विशिष्टयोरैक्यं न घटते नितरां किमु वक्तव्यमित्यर्थः । विरुद्धयोरपि विशेषणयोरेकत्रापि संबन्धमात्रं कालादिभेदापेक्षयाऽवच्छेदकस्वभावभेदापेक्षया वा न विरुध्यत इति भावः ॥ १६७ ॥

सु० टी०—ननु तर्हि विशिष्टयोरभिन्नविशेष्यकत्वविशिष्टत्वादिना योऽभेदः स एवास्तु वाक्यार्थ इति नेत्याह—

अथ केनचिदात्मनैकता वचनेन प्रतिपाद्यते तयोः ।
तदसुन्दरमस्तमेति हि स्फुटमेवं त्रिविधाऽपि लक्षणा ॥ १६८ ॥

अथेति । यदि हि तत्त्वंपदार्थयोर्यथासंभवमभेदमादाय सामानाधिकरण्यमुपपादनीयं तदा गङ्गायां घोष इत्यत्रापि समीपसप्तम्याद्याश्रयणेन यथासंभवं मुख्यार्थस्यैव परिग्रहे लक्षणामात्रमुच्छिद्येतेत्युपसर्जनीभूतानुवाद्यपदार्थानुरोधेन प्रधानभूतविवक्षितवाक्यार्थत्यागोऽयुक्त आपद्येतेति भावः ॥ १६८ ॥

अ० टी०—ननु विशेषणयोर्भेदात्तद्विशिष्टयोर्भेदेऽपि विशेष्याभेदादभेदोऽपि तयोः स्यादित्येवंविधो विशिष्टाभेदो वाक्येन प्रतिपाद्यतामित्याह—अथ केनचिदात्मनेति । एवं केनाप्यंशेन यथाकथंचिदभेदमादाय पदयोः सामानाधिकरण्यं चेन्निर्वक्ष्यति तदा त्रिविधाऽपि लक्षणा स्फुटमेवास्तमेति लक्षणोच्छेदप्रसङ्ग इत्यर्थः ॥ १६८ ॥

सु० टी०—अथ जहल्लक्षणयाऽपि वाक्यार्थः संभवतीति प्रौढिमवलम्बते—

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽहं-
शब्दोऽहंकारवाची भवति तु जहती लक्षणा तत्र पक्षे ।
नौरेषा रौति लोहं दहति विषधरो रज्जुरग्रे तवासा-
वित्यत्रेवाऽऽत्मवस्तुन्यपि भवतु जहल्लक्षणा को विरोधः ॥१६९॥

साभासेति । व्यवहारातीते ब्रह्मणि व्युत्पत्त्यसंभवान्न शबलं ब्रह्माहंपदयोः शक्यं किं तु साभासाज्ञानं साभासाहंकारश्चेति पक्षे रौति नौरयो

१ क ग० °दमनुमा° ।

दहति सर्पो रज्जुरित्यत्र कृत्स्नस्वार्थपरित्यागेन तत्संबन्धिजनसमूहवह्निस-र्पाधिष्ठानलक्षणावदिहापि तदधिष्ठानब्रह्मलक्षणा स्यादित्यविरोध इत्यर्थः। वस्तुतस्तु निर्विशेषस्यैव व्यवहारातीतत्वाच्छबलदात्मत्वमेव युक्तमने-कार्थत्वस्यान्याय्यत्वाद्वक्ष्यति हि सकलवाङ्मनसातिगता चितिरित्यादि। एवमहंपदस्यापि प्रत्यगर्थस्य परागहंकारमात्रवाचित्वमयुक्तमिति सक-लमुख्यार्थत्यागिजहल्लक्षणातो मुख्यांशस्पर्शिनी भागलक्षणैव ज्याय-सीति ॥ १६९ ॥

अ० टी०—ननु जहदजहल्लक्षणयोभयपदानिष्ठया तत्त्वमस्यादिवाक्यस्य विवक्षिताख-ण्डार्थपर्यवसायित्वमुपपादितमिदानीं तदेव वाक्यं जहल्लक्षणयाऽपि यथोक्ताखण्डार्थनिष्ठ-मित्युपपादयितुं शक्यत इति प्रौढमालम्बनमाह—सामासेति । 'अहं ब्रह्म' [ बृ० १ । ४ । १० ] इतिवाक्ये ब्रह्मशब्दो यदि साभासाज्ञानवाची भवति पुनःशब्दो वाक्यालंकारार्थः । तत्र पक्षे तु जहल्लक्षणा भवतीति संबन्धः । तथाऽहंशब्दोऽपि यद्यहंकारवाची भवतीति संबन्धः । अस्मिन्नपि पक्षेऽहंशब्देऽपि जहल्लक्षणेत्यर्थः । एतदुक्तं भवति वस्तुतत्त्वस्य ब्रह्मात्मस्वरूपस्य वाच्यवाचकसर्वव्यवहारातीतत्वात्साभासाज्ञानादेश्च व्यवहार्यत्वात्तत्रैव शब्दप्रयोगोपपत्तेः साभासाज्ञानाहंकारयोः शब्दवाच्यत्वं तदधिष्ठानत्वेन चानुगततया तत्संबन्धिनि चिदात्मनि ब्रह्मात्मपदे जहल्लक्षणया वर्तेते इति । अत्र यदि-शब्दप्रयोगादभ्युपगमवादताऽस्य पक्षस्य द्योतिता वस्तुतस्तु वेदान्तेषु ब्रह्मादिशब्दानां प्रत्यग्ब्रह्मण्येव प्रयोगदर्शनात्तस्य तदवाचकत्वेनास्मिन्नौपनिषदश्रवणस्य मुख्यत्वत्यागा-पत्तेस्तस्याव्यवहार्यत्वेऽपि स्वरूपतोऽज्ञानाहंकारादिद्वारा व्यवहार्यत्वात्पदव्युत्पत्तिगोचरत्वो-पपत्तेश्च तत्र विशिष्टे व्युत्पन्नस्य पदस्य लक्षणस्वरूपपर्यवसायित्वोपपत्तेश्च पूर्वोक्त एव युक्ततर इति भावः । वक्ष्यति च 'सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यव-हारभाक्' इति । अन्यवाचकस्यान्यलक्षकत्वेनार्थपरत्वे दृष्टान्तमाह—नौरेपेति । नौपदेन तत्स्थाः प्राणिनो लक्ष्यन्ते । लोहपदेन तल्लग्नोऽग्निः । तथाग्रेऽसौ विषधरः सर्पो रज्जुरिति योजना । अत्र विषधरपदेन रज्जुर्लक्ष्येति को विरोध इति ब्रह्मणि वाक्यप्रामाण्य एवमपि को विरोधः ॥ १६९ ॥

सु० टी०—गौणीमपि स्वी करोति—

> प्रत्यक्त्वादिगुणान्वयेन यदि वा गौण्यस्तु वृत्तिस्तयो-
> र्ब्रह्माहंपदयोः परेतरदृशोर्मुख्ये विरोधो यतः ।
> मुख्यार्थानुपपत्तिहेतुकतया गौण्यस्ति वृत्तिर्यतो
> लोके माणवको विभावसुरसौ सिंहः पुमानित्यपि ॥१७०॥

प्रत्यक्त्वेति । ब्रह्माहंपदयोर्मुख्यार्थविरोधाज्जीवपरयोर्विषये गौणी वा भवतु कथमिति चेदेवं प्रत्यक्त्वसूक्ष्मत्वादि हि स्वरूपमपि गुणत्वेनोपचर्य तद्योगेनाहंशब्दः परदृशि वर्तते । अग्निशब्द इव पैङ्गल्ययोगान्माणवके ब्रह्मशब्दोऽप्यात्मत्वचित्त्वादिसादृश्यात्सुखादिसाक्षिणीतीयमपि प्रौढिर्गौण्या वृत्तेरुपमारूपत्वादहमिव ब्रह्म ब्रह्मेवाहमित्यभिन्ने भेदगर्भोपमाविरोधादिति ध्येयम् ॥ १७० ॥

अ० टी०—तथा गुणवृत्त्याश्रयणेऽप्यविरोधमाह—प्रत्यक्त्वादीति । आदिपदात्सूक्ष्मस्वच्छत्वे गृह्येते । बुद्धिप्रत्यगात्मनोः प्रत्यक्त्वादिर्गुणस्तत्राऽऽत्मनः स्वाभाविको बुद्धेस्तु तत्संबन्धादुपचारित इति द्रष्टव्यम् । उक्तं च—

'प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात् ।
अतो वृत्तीर्विहायान्या अहंवृत्त्यैव लक्ष्यते' इति ॥

उपलक्षणमेतद्ब्रह्मण्यज्ञाने च कारणत्वाद्द्वितीयत्वगुणयोः । यद्वाऽऽदिपदेनाज्ञानब्रह्मगतकारणत्वादि गृह्यते । अत्रापि ब्रह्मणः सर्वाधिष्ठानतया सर्वसत्तास्फूर्तिप्रदतया च तस्मिन्कारणत्वादिर्मुख्य इतरत्र तत्संपर्काद्गौण इति द्रष्टव्यम् । अथैषाऽक्षरयोजना यदि वा तयोः प्रकृतयोर्ब्रह्माहंपदयोः किंलक्षणयोः परेतरदृशोः परापरयोर्ब्रह्मप्रत्यगात्मनोर्दृग्ज्ञानं याभ्यां ते तथा तयोरिति विग्रहः । प्रत्यक्त्वादिगुणान्वयेन गौणी वृत्तिरस्तु । अहंपदस्याहंकारे मुख्यस्याऽऽत्मन्युपचाराद्वृत्तिर्ब्रह्मपदस्य साभासाज्ञाने मुख्यस्य परब्रह्मण्युपचाराद्वृत्तिश्चास्तु को विरोध इति मुख्ये संभवति किमित्युपचारोऽङ्गी क्रियत इति तत्राऽऽह—मुख्येति । परोक्षापरोक्षार्थत्वेन तदेकत्वे वाक्यार्थपरत्वविरोध इत्यर्थः । ननु मुख्यार्थासंभवे वृत्त्यन्तरमपि माऽस्त्विति चेन्नेत्याह—मुख्यार्थेति । स्पष्टार्थम् । यथा प्रत्यक्त्वाद्यात्मन्येव मुख्यमपि बुद्धावुपचार्यते तथाऽहमादिपदस्याहंकारादौ मुख्यस्याऽऽत्मादावुपचारो यथा वा सिंहाग्निपदयोः साक्षात्सिंहाग्नौ च मुख्ययोः पुंसोरुपचारस्तद्वदिति तात्पर्यार्थः ॥ १७० ॥

सु० टी—ननु किं लक्षणागौण्योर्भेदे मानं परत्र परशब्दवृत्तेरविशेषादित्याशङ्क्य तद्भेदेऽप्यवान्तरलक्षणभेदादस्ति भेद इत्याह—

परशब्दवृत्तिरपरत्र भवेदिति यद्यपीदमुभयोः सदृशम् ।
अनयोस्तथाऽपि तु विभागकरं स्फुटमस्ति लक्षणमवान्तरकम् ॥

परशब्देति ॥ १७१ ॥

---

१ क. °योमुख्यार्थवि° ।

अ० टी०—ननु लक्षणागुणवृत्त्योः को भेदः स्वार्थादन्यत्र वृत्तेरुभयोरविशेषादित्याशङ्क्य परिहरति—परशब्दवृत्तिरिति। यद्यपि परवाचकशब्दस्य वृत्तिरपरत्रार्थान्तरे भवेदितीदमुभयोर्लक्षणागुणवृत्त्योः सदृशं समभेवोपचारवृत्तिरित्येकेन पदेनोभयोरप्युच्यमानं तथाऽपि त्वनयोर्वृत्त्योर्विभागकरमवान्तरकं लक्षणं स्फुटमसंकीर्णमस्ति लक्षणभेदादनयोरभेदोऽस्तीत्याह ॥ १७१ ॥

सु० टी०—को लक्षणभेद इति चेत्तत्राऽऽह—

गुणतो गुणवृत्तिरिष्यते ह्यपरा लाक्षणिकी तु संगतेः।
इति भेदकमस्ति लक्षणागुणवृत्त्योरिति वेदवादिनः ॥ १७२ ॥

गुणत इति। सिंहादिपदस्य स्वशक्यसंबन्धानपेक्षतल्लक्षितगुणयोगनिमित्ता तत्सदृशे वृत्तिर्गौणी तेन सिंहव्यक्तौ सिंहनाम्नि पुरुषे च नातिव्याप्तिर्गौण्या वृत्तेरसंबन्धिन्यपि सदृश एव च दर्शनात्। न च सादृश्यमेव संबन्धस्तस्य विशिष्टबुद्ध्यहेतुत्वात्। नचेयं लक्षितलक्षणयैव गतार्थेति वाच्यं द्विरेफपदस्येव स्वलक्ष्यभ्रमरपदसंबन्धेन भृङ्गे सिंहपदस्य तत्संबन्धपुरस्कारेण पुंस्यप्रवृत्तेः किं तु स्वलक्ष्यगतगुणपुरस्कारेणैवेति भेदात्। अपरेति। गङ्गापदस्याशक्यासदृशान्वयप्रतियोग्युपस्थापकस्वशक्यसंबन्धरूपा वृत्तिर्लक्षणेत्यर्थः ॥ १७२ ॥

अ० टी०—स्फुटं लक्षणभेदमेव दर्शयति—गुणत इति। मुख्यार्थगतसदृशगुणतो योगात्परवाचकस्य शब्दस्य परत्र वृत्तिर्गुणवृत्तिरिष्यते। लाक्षणिकी वृत्तिस्तथा पराऽन्या सा संगतेर्मुख्यार्थसंबन्धमात्रान्न तद्गुणयोगादित्यर्थः। शब्दस्य मुख्यार्थगुणयोगादन्यत्र वृत्तिर्गुणवृत्तिर्मुख्यार्थसंबन्धादन्यत्र वृत्तिर्लक्षणावृत्तिरित्यनयोरवान्तरभेद उक्तो भवति। नायं विभागो मयैवोत्प्रेक्षितः किं तु प्राचीनैरेवाऽऽचार्यैर्निर्णीत इत्यभिप्रेत्याऽऽह—इति भेदकमिति। तदुक्तम्—

'अभिधेयाविनाभूते प्रतीतिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ १७२ ॥

सु० टी०—तत्त्वमसि सत्यं ज्ञानमित्यादेरखण्डान्वयवर्णनफलीभूतं वाक्यार्थानुभवमभिनयति—

नित्यः शुद्धो बुद्धमुक्तस्वभावः
सत्यः सूक्ष्मः सन्विभुश्चाद्वितीयः।

आनन्दाब्धिर्यः परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ १७३ ॥

नित्य इति । योऽयमहमित्यत्रानिदमंशः स प्रत्यग्धातुः प्रत्यगेकरसः स्त्वंपदलक्ष्यः । पर इति तु तत्पदलक्ष्यमद्वितीयमुच्यते । अस्मीत्युभयोरभेदः । नित्य इत्यादीनि परविशेषणानि । तत्र नित्योऽविनाशी, शुद्धो निर्मलो, बुद्धो नित्यप्रकाशः, मुक्तोऽसंसारिस्वभावः, सत्यः पारमार्थिकः, सूक्ष्मो दुर्दर्शः, सन्नस्तितामात्रस्वरूपः, विभुर्व्यापकोऽद्वितीयः परिच्छेदशून्यः, आनन्दाब्धिरपरिमितानन्दः । एषामखण्डार्थत्वं तत्त्वमादिवदिति वक्ष्यति । असंभावनां वारयति— नात्रेति ॥ १७३ ॥

अ० टी०—एवं तावत्प्रत्यग्ब्रह्मणोरेकत्वलक्षणोऽखण्डैकरसात्मको वाक्यार्थो भागलक्षणासमर्थनेनोपपादितो जहल्लक्षणागुणवृत्तिभ्यां च प्रौढ्येदानीं तादृग्वाक्यार्थज्ञानफलमनुभवं दर्शयन्क्रिमात्मकं पुनस्तदखण्डाद्वयं वस्त्वित्यपेक्षायामवान्तरवाक्यगतिमनुसृत्यानुभवमभिनयति—नित्यः शुद्ध इति । लक्ष्यस्य तदर्थस्य ब्रह्मणः प्रतिपादकावान्तरवर्तिनोऽपुनरुक्तरूपा एते नित्य इत्यादिदश पदार्थो ब्रह्मतत्त्वपर्यवसिता अनुसंधीयन्ते नित्यत्वादिलक्षणः परोऽस्मीति च वाक्यार्थानुसंधानं भवति । त्वंपदलक्ष्यस्यानुसंधानं+ यः प्रत्यग्धातुरात्मा । अत्रास्मिन्नर्थे संशयो नास्ति ॥ १७३ ॥

सु० टी०—केचिन्नित्यत्वादीनि न स्वरूपलक्षणानीत्याहुस्तन्मतं विवेक्तुमाह—

सच्चित्सुखाद्वयवपुः कथयन्ति केचि-
त्सच्चित्सुखात्मकमिति प्रथयन्ति केचित् ।
ब्रह्मेतराणि किल नास्य वपूंषि तेषां
बुद्धौ स्फुरन्त्यपररूपनिवृत्तिभावात् ॥ १७४ ॥

सच्चिदिति । सच्चिदानन्दाद्वयात्मकमेव ब्रह्माद्वयं भेदाभावोपलक्षितं स्वरूपं सच्चिदानन्दात्मकमेवेत्यन्य उपलक्षणत्वेनाप्यभावमसहमानाः । कुत एवं संकोचः सद्ब्रह्मेतिवन्नित्यं ब्रह्मेति प्रतीतेरिति चेत्तत्राऽऽह—

---

+ [ नं भवति । त्वंपदलक्ष्यस्यानुसंधानं ] अयंग्रन्थोऽधिकः प्रतिभाति ।

इतराणीति । बुद्धौ स्फुरन्त्यपि नित्यत्वादीन्यनित्यादिव्यावृत्तिमात्रत्वान्नास्य ब्रह्मणः स्वरूपाणीति तेषामाशय इत्यर्थः । केचिदित्यस्वरसः । तद्बीजं तु सच्चिदानन्दपदवन्नित्यादीनामपि शबलवाचित्वेन भागलक्षणया वस्तुपरता वक्ष्यते नित्यादिविरुद्धस्वरूपेऽलौकिके शक्तिग्रहानुपपत्तेरिति ॥ १७४ ॥

उक्ते वाक्यार्थानुसंधानेऽन्यदपि पक्षद्वयमाह—सच्चिदिति । कस्मादेवं ते पदार्थसंकोचमिच्छन्तीति तत्राऽऽह—इतराणीति । किलेत्यनयोः पक्षयोः स्वस्यारुचिं सूचयति । यतः स्वयं नित्यादिपदानि ब्रह्म व्युत्पादयिष्यन्त्याकाशादिना । इतराणि नित्यादीनि विशेषणान्यस्य ब्रह्मणः कुत इत्यत आह—अपरेति । अनित्यादिनिवृत्तिरूपत्वान्नित्यादिपदार्थानां न भावरूपब्रह्मस्वरूपत्वमित्यर्थः ॥ १७४ ॥

सु० टी०—ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ । १ ] इत्यत्रस्थानां सत्यादिपदानां 'प्राणा वै सत्यं' [ बृ० २ । १ । २० ] 'मृत्तिकेत्येव सत्यम्' ( छा० ६ । १ । ४ ] इति प्राणादिषु प्रयोगात्कथं ब्रह्मार्थतेति चेद्ब्रह्मपदशेषभावेन तल्लक्षणत्वादित्याह—

> ब्रह्मेति शेषि पदमत्र हि लक्ष्यमेकं
> शेषाणि लक्षणसमर्पणमस्य कुर्युः ।
> लक्ष्यार्पणेन सह लक्षणवाचि सर्वं
> संगच्छतेऽरुणपदं क्रयवाचिनेव ॥ १७५ ॥

ब्रह्मेति । जिज्ञास्यब्रह्मणो लक्ष्यत्वेन शेषित्वाद्ब्रह्मेत्येकं पदं मुख्यं सत्यादिपदानि तु लक्षणसमर्पणेन तच्छेषभूतानीत्यर्थः । तर्हि ब्रह्मपदस्यैकसंबन्धेन कृतार्थस्य कथं पदान्तरेण संबन्धः प्रतिगुणं प्रधानस्यानावृत्तेरिति चेल्लक्ष्यपदेन प्रधानभूतेन सर्ववशीकारसमर्थेनानावृत्तेनैव सह युगपत्सत्यादिपदसंबन्धसंभवादित्याह—लक्ष्येति । दृष्टान्तमाह—अरुणेति । यथाऽरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्यत्र कारकाणां क्रियार्थत्वेन प्रधानक्रयवाचिनाऽऽख्यातेनारुणादिकं तृतीयाश्रुत्या युगपत्संबध्यते तथाऽत्र सत्यं ज्ञानमित्यादिप्रथमान्तपदानि वाक्येनेत्यर्थः ॥ १७५ ॥

---

१ क. स्यात्तुद्व'।

अ० टी०—एवं प्रकृतवाक्यस्य फलपर्यन्तत्वप्रतिपादनेन ब्रह्मणि प्रामाण्यमुपपाद्येदानीमवान्तरवाक्यगतपदानां गुणप्रधानभावेनान्विताभिधायितां व्युत्पादयति—**ब्रह्मेति शेषिपदमिति**। अत्र सत्यज्ञानादिवाक्ये। यद्येवं सत्यं ब्रह्मज्ञानं ब्रह्मेति प्रकारेणान्वयः स्यात्तथा च सत्यादीनां परस्परमेकत्वादिसिद्धेरेकब्रह्मस्वरूपलक्षणता तेषां न स्यादनेकस्यैकस्वरूपत्वायोगादित्याशङ्क्य तेषामेकार्थावच्छेदकतया मिथ एकत्वं सदृष्टान्तमाह—**लक्ष्यार्पणेन सहेति**। लक्षणवाचि सर्वं पदजातं लक्ष्यार्पणेन लक्ष्यस्वरूपसमर्पणद्वारा सह संगच्छत एकतां गच्छतीत्यर्थः। यथाऽरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्यत्र क्रयवाचिना क्रियापदेनारुणादिपदमेकक्रियावच्छेदकवाक्यभावं गच्छतीति तद्वदित्यर्थः॥ १७५॥

सु० टी०—तर्हि सत्यज्ञानादीनां परार्थत्वेन परस्परानन्वयाद्भेदे तदभिन्नस्य ब्रह्मण एकरसत्वक्षतिरिति चेन्न तेषामपि पार्ष्ठिकान्वयाभ्युपगमादित्याह—

> पृष्ठात्परस्परयुजा प्रतिपत्तिरेषा-
> मेवंविधत्वमुपपादयितुं समर्था।
> लक्ष्यस्य तस्य महतः क्रयवस्तुवत्स्या-
> त्सर्वस्य कारकपदस्य परस्परेण॥ १७६॥

पृष्ठादिति। विशेष्यान्वयानन्तरं तदनुपपत्त्या या पश्चात्परस्परेणान्वयप्रतिपत्तिर्यत्सत्यं तज्ज्ञानमित्येवंरूपा सा लक्ष्यब्रह्मणः सत्यज्ञानाद्यात्मत्वेऽप्येकरसत्वमुपपादयितुमलमित्यर्थः। यथाऽरुणादेः क्रीणात्यन्वयानन्तरं पार्ष्ठिकी परस्परान्वयधीः क्रयस्य नियतगुणद्रव्यसाधकत्वनिर्वाहिकेत्यर्थः॥ १७६॥

अ० टी०—संग्रहेणोक्तमुत्तरार्धार्थमुत्तरपद्ये स्फुटयति—**पृष्ठादिति**। तेषां सत्यादीनां प्रथमं ब्रह्मपदेन प्रत्येकमन्वितानां पृष्ठात्पश्चाद्या परस्परयुजा प्रतिपत्तिर्मिथ एकलक्ष्यपर्यवसितत्वेन सामानाधिकरण्येन प्रतीतिः सा तस्य लक्ष्यस्य महतो ब्रह्मण एवंविधत्वं सत्यज्ञानानन्ताद्यात्मकत्वमुपपादयितुं समर्था। अत एकस्यैव ब्रह्मवस्तुनो लक्ष्यलक्षकतया सत्यादीनां विशेषणत्वाद्विशेषणानां च लक्षकाणां लक्ष्यस्वरूपैकपर्यवसाननियमाद्युक्तमेषामेकत्वमित्यर्थः। अत्रोक्तं दृष्टान्तं स्फुटयति—**क्रयवस्तुवदिति**। वस्तुवदिति सर्वस्य कारकपदस्यारुणया पिङ्गाक्ष्येत्यादिकस्य प्रथमं वस्तुना संबद्धस्याप्येकक्रियार्थतयाऽन्वयात्परस्परेणापि संबन्धादेकक्रयवस्तुनिवर्तकत्ववदित्यर्थः॥ १७६॥

सु० टी०—ननु सत्यज्ञानादिपदानामपर्यायत्वेनार्थभेदात्कथमखण्डार्थतेत्याशङ्क्य तत्त्वंपदवद्भागलक्षणयैवेत्याह—

तत्त्वंपदार्थविषयो नय एव योज्यः
सत्यादिवस्तुषु न तत्र विशेषकल्पः ।
सत्यादिशब्दविषयाः शबलास्तदर्थ-
भागेषु लाक्षणिकवृत्तिरपीह तुल्या ॥ १७७ ॥

तत्त्वमिति । कथं तदविशेष इति चेच्छबलवाचित्वादित्याह—सत्यादीति ॥ १७७ ॥

अ० टी०—एवं सत्यादिपदानामन्वयप्रकारमुपपाद्य तेषामर्थभेदादखण्डैकरसब्रह्मस्वरूपपर्यवसायित्वं कथमित्यपेक्षायां तत्त्वमादिवाक्यार्थनिर्णयन्यायमत्रातिदिशति—तत्त्वमिति । सत्यादिवस्तुषु तत्त्वंपदार्थयोर्न्यायो भागत्यागेन लक्षणयाऽखण्डवस्तुपर्यवसायित्वे दर्शितः स एव योज्यः । सत्यादिपदानां स्वरूपमात्रपरत्वं पदार्थविषयत्वात्तत्त्वमादीनामैक्यपरत्वं वाक्यार्थविषयत्वादिति वैषम्येऽपि तत्रैतयोर्वाक्यार्थयोरखण्डवस्तुप्रतिपादनेन विशेषकल्पो न प्रकारभेदोऽस्तीत्यर्थः । विशेषाभावमेव विशदयति—सत्यादिशब्दविषया इति । सत्यादीनां शब्दानामपि शबला विषया वाच्याः । तदर्थभागेषु लाक्षणिकवृत्तिरपीह सत्यादिपदेषु तुल्या तत्त्वंपदाभ्यामविशिष्टेत्यर्थः ॥ १७७ ॥

सु० टी०—तत्र सत्यपदवाच्यं शबलमाह—

आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता काचिदन्या ।
तत्संपर्कात्सत्यता तत्र चान्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ १७८ ॥

आकाशादाविति । व्योमादौ बुद्धिवृत्तौ च सत्यं ज्ञानमिति धीप्रयोगयोर्दर्शनादनृतजडस्वभावस्य च तन्मात्रस्य तद्विषयत्वायोगाद्धिष्ठानभूतसत्यज्ञानात्मकब्रह्मविशिष्टाकाशधीवृत्त्यादिकमेव शबलं सत्यज्ञानपदार्थः । तत्राऽऽकाशादौ व्यावहारिकमानाबाध्यत्वलक्षणाऽस्ति व्यावहारिकी सत्यता प्रत्यङ्मात्रे च लक्ष्येऽत्यन्ताबाध्यत्वलक्षणाऽस्ति पारमार्थिकी । तयोश्च व्यावहारिकवास्तवसत्ययोराकाशात्मनोः परस्पराध्यासान्निष्पन्ने

शबले या सत्यता द्वयमिथुनीकरणात्मिकाऽन्या सत्यता तत्र सत्यशब्दस्य शक्तिग्रह इत्यर्थः ॥ १७८ ॥

अ० टी०—के तर्हि सत्यादिपदानां शबला वाच्यार्था इत्यपेक्षायां क्रमेण तान्व्युत्पादयति—आकाशादावित्यादिनेति । आकाशादौ देशकालादिशब्दः । एषामविद्याकार्यत्वेन ब्रह्मज्ञानबाध्यत्वेऽपि व्यवहारे बाधादर्शनादेवान्यलक्षणापेक्षिकसत्यता काचिद्वर्तते आत्मस्वरूपे काचिदन्याऽऽकाशादिसत्यत्वाद्विलक्षणाऽत्यन्ताबाध्यार्थलक्षणा सत्यताऽस्तीति योजना । परस्पराध्यासलक्षणान्निमित्तात् ॥ १७८ ॥

सु० टी०—ज्ञानपदवाच्यं शबलमाह—

बुद्धेर्वृत्तौ ज्ञानता तावदेका
प्रत्यग्बोधे ज्ञानता काचिदन्या ।
तत्संपर्काज्ज्ञानता तत्र चान्या
व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥ १७९ ॥

बुद्धेरिति । बोधेद्धायां घटादिवृत्तौ संशयाज्ञाननिवृत्त्यनुकूलतारूपा व्यावहारिकी ज्ञानतैका प्रत्यग्बोधे चान्या वास्तवी चिदात्मतारूपा तत्संपर्कादित्यादि पूर्ववत् ॥ १७९ ॥

अ० टी०—ज्ञानपदार्थं व्युत्पादयति—बुद्धेरिति ॥ १७९ ॥

सु० टी०—आनन्दपदवाच्यमाह—

बुद्धेर्वृत्तौ तावदानन्दतैका
प्रत्यङ्मात्रे काचिदानन्दताऽन्या ।
तत्संपर्कात्तत्र चाऽऽनन्दताऽन्या
व्युत्पन्नोऽयं तत्र चाऽऽनन्दशब्दः ॥ १८० ॥

बुद्धेरिति । धर्मजन्यसत्त्वोद्रिक्तसुखाकारबुद्धिवृत्तावनुकूलवेदनीयस्वरूपैव व्यावहारिक्यानन्दता प्रत्यग्बोधात्मनि परमप्रेमार्हत्वरूपा वास्तवी ॥ १८० ॥

अ० टी०—तथाऽऽनन्दशब्दार्थमाह—बुद्धेर्वृत्ताविति । आनंदस्वरूपत्वमानन्दतेति पूर्ववत् । आनन्दो नाम विक्षेपोत्कलिकोपशान्त्या स्वस्थता विषयविशेषानुभवाज्जायमाने बुद्धिविशेषे लौकिकानां सुखित्वप्रसिद्धेरिति । समानमन्यत् ॥ १८० ॥

आकाशादौ नित्यता तावदेका
प्रत्यङ्मात्रे नित्यता काचिदन्या।
तत्संपर्कान्नित्यता तत्र चान्या
व्युत्पन्नोऽयं नित्यशब्दस्तु तत्र ॥ १८१ ॥

सु० टी०—आकाशादावस्त्यर्वाचीनापेक्षया चिरकालवृत्तित्वाद्व्यावहारिकी नित्यता प्रत्यङ्मात्रे लक्ष्येऽविनाशित्वलक्षणा पारमार्थिकी ॥१८१॥

अ० टी०—आकाशादौ नित्यतेति। अर्वाचीनविनश्वरसावयवतदाश्रितानित्यवस्त्वपेक्षया चिरकालावस्थायित्वान्निरवयवद्रव्यत्वप्रसिद्धेश्चाऽऽकाशादौ व्यावहारिकीत्यर्थः ॥ १८१ ॥

आकाशादौ शुद्धता तावदेका
प्रत्यङ्मात्रे शुद्धता काचिदन्या।
तत्संपर्काच्छुद्धता तत्र चान्या
व्युत्पन्नोऽयं शुद्धशब्दस्तु तत्र ॥ १८२ ॥

सु० टी०—आकाशादावस्ति मलादिलेपरहितत्वलक्षणा शुद्धता लौकिकी प्रत्यगात्मनि चासङ्गत्वादिप्रयुक्ता तात्त्विकी ॥ १८२ ॥

अ० टी०—आकाशादौ शुद्धतेति। निर्लेपत्वं शुद्धत्वम् ॥ १८२ ॥

गोवत्सादौ मुक्तता तावदेका
प्रत्यङ्मात्रे मुक्तता काचिदन्या।
तत्संपर्कान्मुक्तता तत्र चान्या
व्युत्पन्नोऽयं मुक्तशब्दस्तु तत्र ॥ १८३ ॥

सु० टी०—गोवत्सादावस्ति बन्धविमोकलक्षणा मुक्तता व्यावहारिकी प्रत्यगात्मनि तु प्रपञ्चोपशमरूपे निःसंसारत्वलक्षणा तात्त्विकी ॥१८३॥

अ० टी०—मुक्तपदं व्युत्पादयति—गोवत्सादाविति। वत्सादौ निगडविश्लेषरूपा मुक्तता पारतन्त्र्यविरुद्धा प्रसिद्धा। प्रत्यगात्मनि तु सा स्वाभाविकी तस्यासङ्गत्वश्रवणादित्यर्थः ॥ १८३ ॥

आकाशादावस्तिता तावदेका
प्रत्यक्तत्त्वे चास्तिता काचिदन्या ।
तत्संपर्कादस्तिता तत्र चान्या
व्युत्पन्नोऽयं तत्र चास्तीतिशब्दः ॥ १८४ ॥

मु० टी०—अस्त्याकाशादिरिति व्यवहारादाकाशादावस्तिता व्याव-हारिकसत्तालक्षणाऽस्ति प्रत्यङ्मात्रे तु पारमार्थिकसत्तारूपा । एवं सूक्ष्मा-दिशब्दानामपि शबलवाचित्वं व्याख्येयम् । तत्र सूक्ष्मता क्षित्याद्यपे-क्षया संहतावयववैधुर्यलक्षणतारतम्येनाऽऽत्मावसाना प्रसिद्धा । सा चाऽऽत्मानात्मशबलगता सूक्ष्मशब्दार्थः । विभुता च सर्वगतत्वलक्षणा गगनादावापेक्षिकी सर्वात्मके त्वात्मनि पूर्णा तदुभयशबलं विभुश-ब्दार्थः । अद्वितीयत्वं वस्तुपरिच्छेदशून्यत्वं सत्तासामान्ये प्रसिद्धं तस्य सर्वविशेषाभिन्नत्वात्तच्च विशेषात्मना भेदसत्त्वादकृत्स्नमात्मनि तु त्रिवि-धपरिच्छेदशून्ये संपूर्णमिति तदुभयशबलमनन्तशब्दार्थः ॥ १८४ ॥

अ० टी०—सच्छब्दप्रवृत्तिविषयमाह—आकाशादावस्तितेति । अस्तिता सद्बुद्धिवेद्यता भावप्रत्ययगोचरतेति यावत् । प्रत्यगात्मनि सा सर्वास्पदतया नित्यसिद्धा सूक्ष्मत्व-व्यापकत्वाद्वितीयत्वानामप्युपलक्षणमेतत् । अवयवमूर्छनावैधुर्यमिन्द्रियागोचरत्वं चात्र सूक्ष्मता विवक्षिता । सा चास्ति व्योमादौ लोकसिद्धा । प्रत्यगात्मनि सा सर्वप्रत्यक्तया ' अणोरणी-यान् ' [कठ० २ । २०] इतिश्रुतिप्रकाशिता नित्यसिद्धा तत्संपर्काद्वाय्वादिव्योमान्ततारतम्येन वर्तमानाऽमूर्छितावयवत्वमनोतिरिक्तेन्द्रियागोचरत्वरूपव्यावहारिकसूक्ष्मतायाः प्रत्यगात्मगत-निरतिशयनिरपेक्षसूक्ष्मतायाश्च संपर्कादेकीभूते तस्मिञ्छबले सूक्ष्मशब्दो व्युत्पन्नः । तथा विभुत्वमाकाशादौ सर्वगतत्वलक्षणमापेक्षिकं सातिशयं प्रसिद्धम् । प्रत्यगात्मनि तु निर-तिशयं तत् ' यस्मात्परं नापरमस्ति किंचित् ' [श्वेता० ३ । ९ ] इतिश्रुतेः । अन्यत्स-मानम् । अद्वितीयत्वमप्यनन्तत्वपर्यायास्पदम् । तच्चेह वस्तुपरिच्छेदराहित्यमात्रविषयं विभु-त्वनित्यत्वाभ्यां देशकालपरिच्छेदाभावलक्षणस्यानन्तत्वस्य सिद्धत्वात् । एतच्च वस्तुपरिच्छे-दवैधुर्यवति सामान्ये सर्वविशेषाभिन्ने प्रसिद्धं तच्चामुख्यं विशेषात्मना कथंचिद्भेदस्यापि तत्र सत्त्वात् । आत्मनि त्वेकरसे चिदेकस्वभावे भेदलेशस्याप्यनवकाशात्तदनन्तत्वं मुख्यम् । एतयोः संपर्काच्छाबले( ल्ये ) सति तत्र व्युत्पन्नोऽद्वितीयशब्दोऽनन्तपदपर्याय इति । अत्रेदं प्रकरणतात्पर्यं लोकव्यवहारे सत्यमिदं सत्यमिदं नित्यं शुद्धमिदमिदमित्यादिशब्दप्रत्यय-

१ क. तत्र वि° । २ क. ग. °र्नेति त° ।

गोचराणां पदार्थानामनेकत्वादनेकरूपत्वाच्चैकरूपरूपशब्दप्रत्ययविषयत्वायोगात्तेषु सर्वेष्वनुगतं सत्यादिपदगोचरः पिण्डेषु सामान्यवत्संभावनीयं तदेवाऽऽकाशादिषु प्रतीयमानं विशेषाकारपरित्यागेन सत्यादिपदैर्गृह्यत इति ॥ १८४ ॥

सु० टी०—नन्वेवमपि सत्यादिशब्दानामुक्तशबलवाचित्वात्कथमखण्डार्थत्वमित्याशङ्क्य पूर्ववल्लक्ष्यभेदादित्याह—

यो यः शब्दो यत्कृतेऽर्थे निरूढ-
स्तत्रैवार्थे लक्षणावृत्तिरस्य ।
वक्तव्या स्यात्पण्डितैरेवमेतत्
प्रत्यक्पूर्णं ब्रह्म वेदान्तवेद्यम् ॥ १८५ ॥

यो य इति । यन्निमित्ते शबले यो यः सत्यादिशब्दो व्युत्पन्नस्तस्य तस्य पदस्य तत्रैव निमित्तभूतेऽर्थेऽखण्डात्मके लक्षणावृत्तिर्वाच्या । तथा चाधिष्ठानसत्यत्वादिकृतत्वाच्छबलसत्यत्वादेस्तस्य चात्यन्ताबाध्यत्वादिरूपस्य ब्रह्माभिन्नस्यात्र लक्ष्यत्वान्नानुपपत्तिरित्यर्थः । एवं पूर्वोक्तरीत्यैतदेव प्रत्यग्वेदान्तवेद्यं पूर्णं ब्रह्मेति वाक्यार्थोपसंहारः ॥ १८५ ॥

अ० टी०—एवं सत्यादिशब्दानां वाच्यार्थानुक्त्वा लक्ष्यार्थमाह—यो यः शब्द इति । यो य इति वीप्सया सर्व एव नित्यः शुद्धो बुद्धमुक्तस्वभाव इति यथोक्ता नित्यादिशब्दाः संगृहीताः । यः शब्दो यत्कृते यन्निमित्तमर्थे विषये निरूढो व्युत्पन्नोऽस्य शब्दस्य तत्रैव तस्मिन्नेवार्थे लक्षणामाश्रित्य शबलः प्रवर्तते तत्रैव तत्पर्यवसानं युक्तं यथा गोशब्दो गोत्वसामान्यं निमित्तमुपादाय गोत्वाक्रान्तां व्यक्तिमपि व्यवहारदृष्ट्याऽभिदधन्न तत्र पर्यवस्यति किं तु प्रवृत्तिनिमित्तभूते गोत्व एवेति हि स्थितिः । तथा सत्यादिशब्दा अपि शबले व्युत्पन्ना आकाशादिप्रपञ्चविषया व्यवह्रियमाणा अपि न तस्मिन्पर्यवस्यन्त्याकाशादीनां तेषां परमार्थतः सत्यत्वनित्यत्वाद्यसंभवात् । किं तु येन परमार्थेन सत्याद्यात्मकेन व्यभिचारिणाऽनुविद्धाः सन्तः सत्यादिपदगोचरा जायन्ते तदेवैकं सत्यादिरूपमिति तत्रैव पर्यवस्यन्ति । तस्मात्प्रपञ्चशाबल्यं तस्य सामान्यस्य व्यक्तिशाबल्यवद्व्युत्पत्तिद्वारमात्रमेवेति । एवं स्वार्थपर्यवसानमेवेह लक्षणावृत्तिर्विवक्षिता वेदेऽर्थप्रतीतेः शब्दसामर्थ्यनिबन्धनत्वात्पुरुषविवक्षानुसारित्वाभावादित्यभिप्रेत्य वेदान्तानां ब्रह्मणि प्रामाण्यमेवं सत्युपपन्नमेवेति फलितमाह—एवमेतदिति । एवं सत्युक्तप्रकारेण परागर्थप्रपञ्चव्यावृत्तासाधारणस्वरूपत्वे

---

१ क. °त्र लक्षणत्वा° । ग. °त्र लक्षत्वा° ।

सतीति यावत् । एतद्ब्रह्म प्रत्यक्तया पूर्णमव्यावृत्ताननुगतरूपं त्वंपदार्थैकत्वान्वययोग्यं वेदान्तैरेवं प्रतिपादितं भवतीत्यर्थः ॥ १८५ ॥

सु० टी०—ननु कथं लक्ष्यार्थाभेदस्तत्तत्पदलक्ष्यसत्यत्वज्ञानत्वादेर्भेदादभेदे वा पदान्तरपौनरुक्त्यमिति चेत्तत्राऽऽह—

सत्येऽप्यस्ति ज्ञानता ज्ञानतायां
सत्यत्वं च स्पष्टमस्त्येव तद्वत् ।
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे ज्ञानसत्योपपत्तेः ॥ १८६ ॥

सत्येऽपीति । न तावदत्रार्थभेदाशङ्का यतः सत्येऽप्यस्ति ज्ञानता सत्यस्य ज्ञानभिन्नत्वे जडत्वादसत्यत्वं स्यात्तथा ज्ञानस्य सत्यभिन्नत्वे मिथ्यात्वादज्ञानत्वापत्तिरित्येवं परस्परान्तर्भावादित्यर्थः। न च पौनरुक्त्यं सत्यत्वेनाबाध्यत्वेन रूपेण ज्ञानपदेन वक्तुमशक्यत्वाज्ज्ञानत्वेन च रूपेण सत्यपदेनेति । नन्वेवमपि ज्ञानत्वसत्यत्वयोर्भेद एवानृतजडविरोधिरूपत्वात्तयोरित्यर्थाधिक्यं दुर्वारमिति चेत्तत्राऽऽह—सत्यप्येवमिति । औपाधिकधर्मयोर्भेदेऽपि ताभ्यां लक्ष्यमाणनिरुपाधिकस्वरूपस्याभेदाज्ज्ञानसत्यत्वयोरजडपरमार्थपूर्णे तत्त्वे तादात्म्येन समावेशान्नाऽऽधिक्यमित्यर्थः॥ १८६॥

अ० टी०—ननु प्रतिपदं लक्ष्यार्थानां सत्यज्ञानादीनां मिथो भेदोऽस्त्युत नाऽऽद्ये ब्रह्मानेकाकारं स्यादिति न निरवग्रहमहत्त्वं तस्य स्यादित्येकरसवाक्यार्थासिद्धिर्द्वितीये त्वेकेनैव पदेन तत्सिद्धेः पदान्तरवैयर्थ्यमिति चेत्तत्राऽऽह—सत्येऽप्यस्तीति । अयमर्थः—सत्यादीनां सत्यत्वाद्यात्मनाऽभेदपक्षे पदान्तरवैयर्थ्यशङ्काऽयुक्ता । यतः सत्यपदेनासत्यबाध्यप्रपञ्चव्यावर्त्यतया लक्ष्येऽपि ब्रह्मणि तस्य जाड्यव्यावृत्तज्ञानपदेन स्वविरोधिजडप्रपञ्चव्यावृत्ताकारतासमर्पणेऽपि ब्रह्मणोऽत्यन्ताबाध्यतालक्षणं सत्यत्वं तेन न समर्पितं भवेत् । अतः पदभेद एकार्थपर्यवसायित्वे नानपेक्षितः । तर्हि भेदः सत्याद्यर्थानामिति प्राप्तं तथा सति प्रथमपक्षोक्तदोषस्तदवस्थ इति चेन्न यतः सत्ये सत्यपदलक्ष्ये ज्ञानताऽस्ति । न हि सत्यपदलक्ष्याद्बहिर्भूता ज्ञानता भवति तथा सति सत्यस्यास्फुरणप्रसङ्गात् । यथा सत्ये ज्ञानताऽप्यस्ति तद्वज्ज्ञानतायां ज्ञानपदलक्ष्यस्वरूपे सत्यत्वं चास्त्येव । स्पष्टपदमुभयत्र योज्यं ज्ञानस्य सत्याद्बहिर्भावे तस्य तुच्छत्वापत्तेर्जगदान्ध्यप्रसङ्ग इत्यर्थः । अत एवं परस्परान्तर्भावे सत्यखण्डैकरसवस्तुपर्यवसानं पदानां सिध्यत्येवेति सिद्धम् । अथैवमुच्यते

---

१ क. म. °त्वेन रूपे° । २ क. ग. °माणा नि° । ३ क. नत्वस° । ४ क. °पदार्थ° ।

यद्यप्येवमन्योन्यस्य स्वलक्षितार्थनियामकत्वेनान्योन्यस्मिन्नन्तर्भावस्तथाऽपि न सत्यत्वमेव ज्ञानत्वं नापि ज्ञानत्वमेव सत्यत्वमिति तयोर्भेदे भाति कथमेकरसार्थसिद्धिरिति तत्राऽऽह—सत्यप्येवमिति । यद्यप्यनृतत्वविरोधिरूपसत्यत्वस्य जडविरोधित्वरूपज्ञानत्वस्य च परस्परमैकरसं(स्यं) नास्ति । एवंसत्यपि लक्ष्यस्वरूपे मनागपि नातिरेकावकाशो भेदशङ्कावकाशः ॥ १८६ ॥

सु० टी०—एवमानन्दज्ञानपदयोरपि ज्ञेयमित्याह—

आनन्दत्वे ज्ञानता ज्ञानताया-
मानन्दत्वं विद्यते निर्विशङ्कम् ।
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे ज्ञानसौख्योपपत्तेः ॥ १८७ ॥

आनन्दत्व इति । ज्ञानस्याऽऽनन्दत्व आनन्दस्य चाप्रकाशत्वेऽपुरुषार्थत्वं जडत्वं च स्यात् । दुःखजडविरोधित्वयोरतिरेकेऽपि ताभ्यां लक्ष्यमाणे चिदात्मनि ज्ञानसुखत्वयोः समावेशान्नाऽऽधिक्यमिति ॥ १८७ ॥

अ० टी०—यथा सत्यज्ञानपदलक्ष्ययोः परस्परतावन्मात्रत्वे शब्दभेदवैयर्थ्याभावः पूर्णाखण्डैकरसत्वं च तथा ज्ञानानन्दशब्दलक्ष्ययोरप्येतत्सर्वं योज्यमित्याह—आनन्दत्वे ज्ञानतेति । पदयोजना पूर्ववत् । ज्ञानपदलक्ष्यस्यासुखात्मत्वे तस्यापुरुषार्थत्वापत्तौ वेद्यत्वानुपपत्तिः स्यात् । आनन्दपदलक्ष्यस्यापि ज्ञानस्वरूपातिरेके प्रकाशमानतयाऽसत्तुल्यत्वं जडतयाऽपुमर्थत्वं वा प्रसज्येतेति तात्पर्यार्थः ॥ १८७ ॥

सु० टी०—सत्यानन्दपदयोरप्याह—

आनन्दत्वे सत्यता सत्यताया-
मानन्दत्वं निर्विवादं प्रसिद्धम् ।
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे सत्यसौख्योपपत्तेः ॥ १८८ ॥

आनन्दत्व इति । आनन्दस्यासत्यत्वे मृगतृष्णावदनुपादेयत्वं सत्यस्याप्यनानन्दत्वे हेयत्वादसत्यत्वमिति ॥ १८८ ॥

अ० टी०—आनन्दत्वसत्यत्वयोरप्येवं सर्वं योज्यमित्याह—आनन्दत्वे सत्यतेति । अत्राप्यानन्दस्यासत्यत्वेऽपुरुषार्थत्वेनानुपादेयता सत्यस्याप्यनानन्दत्वे काष्ठलोष्टादिवदकिंचित्करत्वादनुपादेयतैव स्यादिति भावः ॥ १८८ ॥

सु० टी०—सत्यज्ञानादिषूक्तन्यायमवशिष्टेषु सप्तस्वतिदिशति—

शेषेऽप्यूह्यं न्यायसाम्यादशेष-
मन्योन्यस्मिन्नस्तिता पूर्णता च ।
अन्योन्यस्याजामिताशब्दशक्ते-
रेवं सुस्थं सर्वमुक्तोपपत्तेः ॥ १८९ ॥

शेषेऽपीति । सदद्वितीयादिपदलक्ष्येष्वपि न्यायसाम्यात्पूर्वोक्तं सर्व-मूह्यमित्यर्थः । किं तदित्याह—अन्योन्यस्मिन्निति । अस्तित्वपूर्णत्वयोरपि परस्परान्तर्भावः सत एव पूर्णत्वात्पूर्णस्यैव सत्त्वात्तथा विरोधिव्यव-च्छेदेन शब्दाभ्यां प्रतिपादनादपौनरुक्त्यं लक्षणभेदेऽपि लक्ष्यार्थयोर-नतिरेकान्नाऽऽधिक्यमेवं नित्यत्वशुद्धत्वसूक्ष्मत्वादावप्यूह्यमित्यर्थः । एवं दशपदार्थानामप्यभिन्नतया वाक्यार्थत्वं सिद्धमित्युपसंहरति—एव-मिति ॥ १८९ ॥

अ० टी०—ज्ञानानन्दसत्येपूक्तन्यायं विशिष्टेषु सप्तसु नित्यशुद्धत्वादिपदार्थेष्वति-दिशति—शेषेऽप्यूह्यमिति । किं तदशेषमित्युक्तं तदाह—अन्योन्यस्मिन्नस्तिता पूर्णता चेति । अन्योन्यस्मिन्नन्योन्यस्यान्तर्भावेनास्तितैकैकस्यातिरेकेण पूर्णता च । तथा तत्तदनृतादिविरोध्यर्थव्यवच्छेदमुखेनैव तेन तेन सत्यादिशब्देन वस्तुसमर्पणात्पदान्तरा-वैयर्थ्यं च सर्वत्र द्रष्टव्यमित्याह—सुस्थमिति । सुस्थं वस्तुन एकरसत्वं तस्मिन्नेव वाक्यप्रामाण्यं चेत्येतदस्मन्मतमचालनीयमित्यर्थः ॥ १८९ ॥

सु० टी०–एवं शबलवाच्यत्वमाश्रित्य समन्वय उक्ते न शबलार्थत्वं क्वापि विद्वद्भिरुक्तमित्याशङ्कामपनुदति—

बोधात्मत्वे निर्निमित्ते प्रतीचो
बोधात्मत्वे तन्निमित्ते तु बुद्धेः ।
बोधात्मत्वे बुद्धिधर्मौ च बुद्धे[3]-
रुक्ते साक्षाद्वेदसिद्धान्तविद्भिः ॥ १९० ॥

बोधेति । नैष्कर्म्यसिद्धिकारैर्हि प्रतीचो बोधत्वमात्मत्वं च द्वे निर्नि-मित्ते स्वाभाविके उक्ते । तथा बुद्धेरपि ते तन्निमित्ते तेन सह परस्परा-

१ क. ग, सदिय° । २ क. बाधित्व । ३ ख. द्वे तत्त्वे सा° ।

ध्यासनिर्व्यूढे शबले उक्ते। तथा ते बुद्धिधर्मौ बुद्धिपरिणामात्मके व्यावहारिके उक्ते। एवं तात्त्विकाध्यासिकपारिणामिकभेदेन त्रिधा बोधात्मत्वे उक्ते। 'कूटस्थबोधः प्रत्यक्त्वमनिमित्तं सदाऽऽत्मनः। बोद्धृताहन्तयोर्हेतुः' इत्यादिनेत्यर्थः। एवं चान्यत्रापि शबलवाचित्वं तदभिमतमित्युन्नीयत इति भावः ॥ १९० ॥

अ० टी०—यदेतद्द्वयादावनात्मनि प्रतीच्यात्मनि च प्रत्यक्त्वादिकमस्ति तदुभयशबलमात्मनि शब्दवाच्यमिति बुद्धेर्वृत्तौ ज्ञानता तावदेकेत्यादौ स्वयमुपपादितेऽर्थे नैष्कर्म्यसिद्धावुक्तां सुरेश्वराचार्यसंमतिमर्थतो दर्शयति—बोधात्मत्व इति। एते च बोधात्मत्वे बुद्धेर्धर्मौ तस्यां तयोरन्यसंबन्धनिबन्धनत्वान्न प्रत्यगात्मनस्तस्मिंस्तयोः स्वाभाविकत्वादित्यभिप्रेत्योभयत्रोक्तयोः प्रत्यक्त्वबोधयोर्व्यवस्थामपि संगमयति—बोधेति। बुद्धेर्धर्मौ न स्वभावभूते उक्ते वेदसिद्धान्तविद्भिराचार्यैः। तथा चोक्तं नैष्कर्म्यसिद्धौ—

'कूटस्थबोधः प्रत्यक्त्वमनिमित्तं सदाऽऽत्मनः।
बोद्धृताहंतयोर्हेतुस्ताभ्यां तेनोपलक्ष्यते' इति ॥

अस्यार्थः—चिदात्मनो निर्विकारनित्यबोधः सर्वान्तरत्वं च क्रमेण तत्राध्यस्ताया बुद्धेर्बोद्धृत्वात्मत्वयोर्हेतुः स्वचिदाभासव्याप्त्या तत्र तद्व्यवहारप्रवृत्तिनिमित्तं यत एवं तेन हेतुना ताभ्यामागमापायिबुद्धिगताभ्यां बोधात्मत्वाभ्यां तत्कारणरूपकूटस्थबोधः प्रत्यगात्मोपलक्ष्यत इति। प्रत्यगात्मगतबोधात्मत्वनिमित्ते स्वाभाविकबोधात्मकप्रतीचि बुद्धेरध्यस्तत्वात्तस्यां सिद्धे इति वेदान्तसिद्धान्तविद्भिरुक्ते इति योज्यम् ॥ १९० ॥

सु० टी०—तत्त्वंपदार्थन्यायं सत्यादिषु सर्वात्मनाऽतिदिशति—

जहतीह च लक्षणा मता गुणवृत्तिश्च तथाऽभ्युपेयते।
न विशेषविनिर्णयक्षमं किमपीहास्ति विशेषकारणम् ॥ १९१ ॥

जहतीति। यदि सत्यादिशब्दः सामासाकाशवाची न शबलार्थस्तदा कृत्स्नवाच्यत्यागाज्जहल्लक्षणा। यद्वा 'सत्यस्य सत्यम्' [ बृहदा० २। १। २० ] इतिश्रुतेस्तस्यापि व्यवहारसत्यत्वात्तद्गुणयोगेन गौण्यभ्युपेया तुल्यन्यायत्वादित्यर्थः। वस्तुतः सत्यताद्वयशबलमविवेकादेकीभूतं शुद्धचुस्थबोधात्प्राङ्न विवेक्तुं शक्यमिति तदेव वाच्यं युक्तमयं तु प्रौढिवादः ॥ १९१ ॥

---

१ क. तं शुद्धचु°। २ क. °र्थादित्य°।

अ० टी०—तदेवं सत्यादिपदानां शबलार्थवाचित्वाङ्गीकारेण जहदजहल्लक्षणयाऽखण्डार्थपर्यवसायित्वमुक्तमिदानीमाकाशादिगतमेव सत्यत्वादि सत्यादिपदवाच्यं न शबलमित्यङ्गीकृत्य जहल्लक्षणागुणवृत्तिभ्यामपि सत्यादिपदानामखण्डवस्तुपर्यवसानं तत्त्वमस्यादिपदविरुद्धमिति प्रागल्भ्येनाऽऽह—जहतीह चेति । पूर्वार्धं स्पष्टार्थम् । विशेषविनिर्णयक्षमं महावाक्योक्तन्यायादित्यध्याहारः । इह सत्यादौ विशेषकारणं कारणविशेषः ॥ १९१ ॥

सु० टी०—ईश्वरपदमपि शबलार्थमङ्गीकृत्य सत्यादिवत्स्वरूपलक्षणतयोपसंहरन्ति केचित्तान्निरस्यति—

ऐश्वर्यमप्यनुभवादिवदात्मरूपं
तस्मादबोधगतमस्य च तानि कस्मात् ।
नेष्टानि पूर्ववदिति ब्रुवतो मुखस्य
सद्यः पिधानमनुसृत्य वचांसि कुर्मः ॥ १९२ ॥

ऐश्वर्यमिति । अनुभवादिवदात्मस्वरूपान्तर्गतमेकमैश्वर्यं तत्कृतं मायागतमेकम् । अस्य च मायाशबलस्याऽऽत्मनः परस्पराध्यासनिर्व्यूढं तदुभयशबलमेकमिति त्रीण्यैश्वर्याणि कुतो नेष्यन्त इति ब्रुवतां मुखमुद्रणाय पूर्वस्माद्विशेषं ब्रूम इत्यर्थः ॥ १९२ ॥

सु० टी०—ननु यद्यपुनरुक्तार्थैः सत्यादिपदैर्दशभिर्ब्रह्माखण्डं लक्ष्यत इत्यङ्गी क्रियते तर्हीश्वरपदमप्यपुनरुक्तार्थमुपसंह्रियताम् 'एष सर्वेश्वरः' [ बृ० ४ । ४ । २२] इति ब्रह्मणीश्वरत्वस्यापि श्रवणादिति कस्यचिच्छङ्कामुद्भाव्यापाकरोति—ऐश्वर्यमपीति । अपिशब्दो बोधसत्यादिदृष्टान्तार्थः । अनुभवादिवदैश्वर्यमप्यात्मरूपं स्वाभाविकमेकं तस्मादन्यदिति शेषः । अबोधगतं चिदात्मगतैश्वर्यमपरमस्य च तदुभयशबलस्य चापरमैश्वर्यमस्ति । तान्यैश्वर्याणि पूर्ववदीश्वरपदव्युत्पत्त्यर्थतया कस्मान्नेष्टानीति शङ्काग्रन्थयोजना । इति ब्रुवत इति निराकरणग्रन्थभागः स्पष्टार्थः ॥ १९२ ॥

सु० टी०—वक्तव्यमाह—

ऐश्वर्यवर्णनमतिस्फुटमेव कृत्वा
नेतीत्यवादि बहुशः श्रुतिभिः प्रयत्नात् ।
सत्यादिवस्तुनि पुनर्न तथाऽस्ति पूर्व-
मुक्त्वा निषेधनमितीह विशेषयुक्तिः ॥ १९३ ॥

ऐश्वर्येति । 'सर्वस्य वशी सर्वस्येशानः' [ बृ० ४ । ४ । २२ ] इति वशित्वादिना 'यः पृथिव्यां तिष्ठन्' [ बृ० ३ । ७ । ३ ] इत्यन्तर्या-

मित्वेन 'एवमेवास्मिन्नात्मनि सर्वाणि भूतानि' [बृ० २।५।१५] इति जगद्व्यवहाराश्रयत्वेन तत्रतत्रैश्वर्यं वर्णयित्वा पश्चात् 'नेति नेति' [बृ० २।३।६] इति, 'अस्थूलमनणु' [बृ० ३।८।८] इति, 'तदे-तद्ब्रह्मापूर्वम्।' [बृ० २।५।१९] इत्यादिश्रुतिभिः प्रतिपिध्यते। सत्यज्ञानादेस्तु समाम्नातस्य न क्वापि प्रतिषेध इति प्रतिपन्नोपाधौ निषिध्यमानमैश्वर्यं कल्पितमेव स्तुत्यर्थमुपात्तं न सत्यत्वादिवत्स्वरूपा-न्तर्गतमित्यर्थः ॥ १९३ ॥

अ० टी०—कथं वचांस्यनुभूत्यासम्मुखस्य सद्यः पिधानं कर्तुं शक्यते सत्यादिपदव-त्सर्वेश्वरपदस्यापि ब्रह्मवाक्येषु श्रवणाविशेषादिति चेत्सत्यमस्ति श्रवणं किं त्वपवादश्रुतिवच-नात्तदर्थवादतयाऽवतिष्ठत इत्यभिप्रेत्य प्रतिज्ञातमर्थं साधयति—ऐश्वर्यवर्णनमिति। अक्षरार्थोऽतिस्पष्टः। बहुश इत्ययमर्थो बृहदारण्यके तावत् 'सर्वस्य वशी सर्वस्येशानः' [बृ० ४।४।२२] 'सर्वमिदं प्रशास्ति' [बृ० ५।६।१] इत्यादिना ब्रह्मण ऐश्वर्य-वर्णनमतिस्फुटं कृत्वा पश्चात् 'स एष नेति नेत्यात्मा' [बृ० ३।९।२६] इति सर्वं विशेषं तस्मिन्प्रतिषेधति। 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' [बृ० ३।८ ११] इत्यादौ प्रतिषेधति। 'अतोऽन्यदार्तम्' [बृ० ३।४।२] इत्यपि पदे पदे ब्रह्मस्वरूपातिरिक्तस्यानित्यत्वप्रतिपादनेनैश्वर्यप्रतिषेधो गम्यते। 'तद्यथा रथनाभौ च रथ-नेमौ चाराः सर्वे समर्पिताः' [बृ० २।५।१५] इत्यादिना 'सर्व एत आत्मानः समर्पिताः' [बृ० २।५।१५] इत्यन्तेन सर्वाश्रयत्वैश्वर्यमुपवर्ण्यान्ते 'तदेतद्ब्रह्मापूर्वमन-परमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' [बृ० २।५।१९] इत्याद्यैकात्म्यप्रतिपादने-नैश्वर्यं प्रतिषेधति। तथा छान्दोग्येऽपि तेजोबन्नादिकारणत्वेनैश्वर्यं प्रकटीकृत्य 'ऐतदात्म्य-मिदं सर्वं तत्सत्यं स आत्मा' [छा० ६।८।७] इति पदे पद एकात्मत्वमुपसंहरन्नै-श्वर्यं प्रतिषेधति। तैत्तिरीये च 'सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च निलयनं चानि-लयनं च विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्। यदिदं किंच' [तै० २-६।१] इति सर्वात्मत्वेनैश्वर्यं प्रतिपाद्य 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽ-भयं प्रतिष्ठां विन्दते' [तै० २।७।१] इति तत्पुनः प्रतिषिध्यते। एवं प्रतिशाख-मैश्वर्यनिषेधेनाद्वैताखण्डैकरसत्वेनैवातियत्नेन श्रुतिषु ब्रह्मप्रतिपादनान्नैश्वर्यमस्य स्वाभाविकं किं तु मायातत्कार्योपाधिकृतमेवेत्यर्थः। यथैश्वर्यमुक्त्वा पुनस्तत्प्रतिषिध्यते न तथा सत्यादिवस्तु पूर्वमुक्त्वा प्रतिषेधनं पुनः श्रुतिभिः क्रियमाणमुपलब्धमस्ति। एवं सत्यादीनां स्वाभाविकत्वा-वधारणे विशेषयुक्तिरित्यर्थः। तस्मात्सत्यत्वादिकं ब्रह्मणः स्वरूपत्वेनैव श्रुतिभिरावेद्यते। ऐश्वर्यं तु व्यावहारिकमर्थवादत्वेनैवेति गम्यत इति भावः ॥ १९३ ॥

सु० टी०—ननु सर्वपदलाक्षणिकत्वे ब्रह्मणोऽशाब्दत्वादौपनिषदत्वव्याघात इति चेन्न लाक्षणिकत्वेऽपि शाब्दत्वाविरोधादित्याह—

शब्दस्य लाक्षणिकमुख्यविभागभिन्ना
वृत्तिर्हि लौकिकवचस्युपलब्धपूर्वा ।
यस्मादतो न घटते यदि मुख्यवृत्ति-
राश्रीयतामिह गिरश्चरमाऽपि वृत्तिः ॥ १९४ ॥

शब्दस्येति । ननु लक्षणायां श्रुतहान्यापत्तेर्मुख्यार्थ एवाऽऽश्रीयतामिति चेन्नासंभवादित्याह—न घटत इति ॥ १९४ ॥

अ० टी०—तदेवं सिद्धान्तो(ते)ऽपि क्रममारभ्य तत्त्वमस्यादिवाक्यानां सत्यादिपदानां च लक्षणयाऽखण्डे ब्रह्मण्यात्मस्वरूपे समन्वय उक्त इदानीं किमित्येवं लक्षणामाश्रित्याखण्डे समन्वय इत्याग्रहः क्रियते श्रुतहान्यश्रुतकल्पनाप्रसङ्गादित्याशङ्क्य मुख्यार्थासंभवे लक्षणाश्रयणेन वाक्यार्थावगमस्य लोके दृष्टत्वादिहापि मुख्यासंभवाल्लक्षणाश्रयणमित्यभिप्रेत्याऽऽह—शब्दस्येति । मुख्यार्थपरिग्रहे पूर्वं विरोधो दर्शितोऽतश्चरमाऽपि वृत्तिरविरोधायेहाऽऽश्रीयत इत्यर्थः ॥ १९४ ॥

सु० टी०—तथाऽपि लाक्षणिकस्याननुभावकत्वादेकमेव पदं लाक्षणिकं युक्तमतो नाखण्डार्थत्वमिति नेत्युपसंहरति—

तस्मादखण्डमवबोधयितुं समर्थो
वेदान्तभूमिगतशब्दसमन्वयोऽतः ।
संसर्गलक्षणमपास्य विरोधहेतो-
र्वाक्यार्थमद्वयमखण्डमिहाऽऽश्रयस्व ॥ १९५ ॥

तस्मादिति । एवं तत्त्वमस्यादिसमन्वयस्याखण्डानुभवजननसामर्थ्यात्संसर्गवाक्यार्थं विरुद्धमपास्याखण्डमेवाङ्गी कुर्या इत्यर्थः । लोके विषं भुङ्क्ष्वेत्यादौ वेदे च सर्वार्थवादेषु सर्वपदलणाया दृष्टत्वात् । नच लाक्षणिकमननुभावकं लाघवेन वृत्तिमच्छब्दत्वेनैवानुभावकत्वादिति भावः १३५ ॥

---

१ क. र्थादित्य° ।

अ० टी०—यस्मादेवमुक्तयुक्त्या सत्यादिपदानामखण्डब्रह्मणि पर्यवसानं सिद्धं तस्मात्ता-दृग्ब्रह्मपदस्थानीयेन तत्पदेन पारोक्ष्यप्रहाणेनाखण्डब्रह्मणः समर्पणात्त्वंपदेन चाऽऽत्मपद-स्थानीयेन सद्वितीयत्वादिप्रहाणेन प्रत्यक्चिन्मात्रस्य समर्पणात्तयोश्चैकस्वभावत्वादखण्डार्थे वेदान्तानां समन्वय उपपन्नः संसर्गसमन्वयानभ्युपगमेऽपीत्युपसंहरति—**तस्मादख-ण्डमिति** ॥ १९५ ॥

सु० टी०—कथं वाक्यादखण्डानुभव इति वीक्षायां तत्क्र-ममाह—

सामानाधिकरण्यमत्र भवति प्राथम्यभागान्वयः
पश्चादेष विशेषणेतरतया पश्चाद्विरोधोद्भवः ।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके
वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः ॥ १९६ ॥

सामानाधिकरण्यमिति । एकवाक्यस्थपदानां युगपद्विशिष्टार्थबोधने प्रवृत्ति-रन्वयः स चैकार्थविषयः सामानाधिकरण्यमनेकार्थगोचरो वैयधिक-रण्यं तत्र नीलमुत्पलमितिवत्तत्त्वमोरपि प्रथमान्तयोः प्रथममेकार्थत्वल-क्षणसामानाधिकरण्यमानं ततो नीलगुणोत्पलत्वयोरिव तत्त्वमर्थयोर्वि-शेषणविशेष्यता ततो नीलगुणोत्पलत्वजात्योः संसर्ग इव तत्त्वमर्थयोः संसर्गे विरोधबुद्धिस्ततस्तत्र नीलपदस्य द्रव्यलक्षणयेवात्रैकपदलक्षण-याऽप्यनुपशान्ते विरोधे पदद्वयस्यापि लक्षणयाऽखण्डैकरसे वृत्तिरिति क्रमो ज्ञेय इत्यर्थः ॥ १९६ ॥

अ० टी०—यद्येवं केन क्रमेण तर्ह्यखण्डार्थावगतिर्विदितपदार्थस्यापि पुंसो न हि प्रथमत एवाखण्डार्थावगमोऽस्तीति तत्राऽऽह—**सामानाधिकरण्यमिति*** ॥१९६॥

सु० टी०—किमेतत्संबन्धत्रयं पदानामर्थानां चेति वीक्षायां तद्व्यव-स्थामाह—

सामानाधिकरण्यमत्र पदयोर्ज्ञेयस्तदीयार्थयोः
संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्याऽऽत्मनः ।

---

* नास्य टीका पूर्णा ।

संबन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥ १९७ ॥

सामानाधिकेति । अधिक्रियत इत्यधिकरणमर्थस्तत्समानं ययोस्ते तथा तद्भाव इत्यर्थः तच्च पदयोरेकविभक्त्यन्तत्वात्ततस्तदर्थयोर्विशेषणविशेष्यतया संबन्धो ज्ञेयस्ततो विरोध उभाभ्यां विशेषणविशेष्याभ्यां शबलाभ्यां सहास्याऽऽत्मनः शुद्धस्य लक्ष्यलक्षणसंबन्धः शबलयोर्लक्षणत्वमात्मनो लक्ष्यतेति । अर्थपदान्यर्थप्रतिपत्तिस्थानानि ॥ १९७ ॥

अ० टी०—ननु किमेतेऽन्वयाः शब्दानामर्थानां वाऽथवोभयोर्विभागेन वेति जिज्ञासायामाह—**सामानाधिकरण्यमिति** । अत्र तत्त्वमस्यादिवाक्ये पदयोस्तत्त्वंपदयोः सामानाधिकरण्यं संबन्धो ज्ञेय इति संबन्धः । एतत्सत्यादिपदानामप्युपपद्यते । अयमपि पदानामेकार्थवृत्तित्वं सामानाधिकरण्यम् । इह पदयोरेकविभक्त्यन्ततयैकार्थबोधानुगुणव्यापारवत्त्वात्सामानाधिकरण्यं प्रथमं प्रत्येतव्यमित्यर्थः । ततस्तदीयार्थयोर्वाच्ययोर्मिथ्याविशेषणविशेष्यभावे संबन्धो ज्ञेयो वाक्यवृत्तेरनवगमे वाक्यार्थानवगमात् । अर्थान्वयावगमस्य पदान्वयावगमानन्तर्यम् । विशेषणविशेष्यभावो नाम व्यावर्तकव्यावर्त्यभावः । यथा विशेषणैर्विशेष्यं सजातीयादेर्व्यावर्त्यते तथा विशेषणान्यपि तदेकनिष्ठतया नियम्यन्तेऽन्यथा तद्विशेषणतया संबन्धो विज्ञेय इति । अत्र येयं वाच्यार्थलक्षितव्या लक्ष्यार्थप्रतीतिः सा पदशक्तितात्पर्यनिबन्धनेऽपि पदयोर्लक्षणावृत्तिरुच्यते । यतः पदशक्त्या पदार्थप्रतीतौ सत्यां विरोधात्तत्रान्वयाप्रतीतौ तत्प्रतीतिः सा पदशक्तितात्पर्यनिबन्धनेति कदम्बतात्पर्यगौरवतयोपस्थाप्यतेऽतः पदवृत्तिर्लक्षणेति । तदुक्तं नैष्कर्म्यसिद्धौ—

'सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसंबन्धः पदार्थः प्रत्यगात्मनाम्' इति ॥

अत्रत्यं बहुवचनं पदार्थयोः प्रत्यगात्मनश्चेति वा पदशब्देन पदद्वयमर्थशब्देन च द्वयं विवक्षित्वा वा योज्यम् । अयं च क्रमो बुद्धिमद्भिरादरणीय एवेत्याह—**एवं बुधैरिति** । एवमुक्तक्रमेण । एतानि सामानाधिकरण्यादीन्यर्थपदान्यर्थस्य प्रतिपत्तिस्थानानि बुधैर्बुद्धिमद्भिर्बुद्धिपदवीमारोहणीयानि बुद्धौ धारणीयानि तुशब्दो धारणार्थः । नैव विस्मर्तव्यानीत्यर्थः ॥ १९७ ॥

सु० टी०—ननु वाच्यसंबन्धित्वेनानुपस्थिते शुद्धे कथं लक्षणोप-

---

१ क. ग. °तो विशे° ।

स्थिते तु शक्तिग्रह एव संभवति किं शबलशक्तिमाश्रित्य लक्षणाक्लेशेनेत्याशङ्क्याऽऽह—

नि:संधि बन्धनमिदं चिदचित्स्वरूपं
संकीर्णमन्तरपरिस्फुरणेन शून्यम् ।
आ चित्तशुद्धिफलतः स्फुरितोपपत्तेः
शब्दार्थसंगतिमिहैव तु गृह्णतेऽज्ञाः ॥ १९८ ॥

निःसंधीति । आङ्मर्यादायाम् । चित्तशुद्धिफलभूतायाः स्फुरितोपपत्तेः प्रागिदं चिदचित्स्वरूपं चित्स्वरूपं प्रत्यगचित्स्वरूपमन्तःकरणं तद्द्वयं संकीर्णं परस्पराध्यासादेकीभूतगत एवानयोरन्तरं भेदो लेशतोऽपि न स्फुरतीत्यतोऽत्रैव शबल उपस्थिते शब्दार्थसंगतिमविवेकिनो गृह्णत इत्यर्थः । शबलमपि गुणगुण्यादि विविच्यमानं दृष्टमतो निःसंधीत्युक्तं ततोऽपीदं दुर्विवेचं यतः संधिर्बन्धनविवेचनप्रदेशस्तद्रहितमनयोर्बन्धनं संघटनमनयोरितरेतराध्यासस्य हृदयग्रन्थिसंज्ञस्यानादित्वेन दृढमूलत्वात् । तस्मादज्ञावस्थायां शक्तिग्रहः शबल एव संभवति न केवल इति ॥ १९८ ॥

अ०टी०—ननु 'यो यः शब्दो यत्कृतेऽर्थे निरूढः' इत्यत्राऽऽत्मगतमेव प्रत्यक्त्वादिकं प्रयोजकीकृत्य सत्यादिपदानां तत्र तत्राऽऽकाशादिषु प्रवृत्तिरिति भवतोक्तमेवं चेत्तन्निमित्तीकृत्यान्यत्रार्थे व्युत्पत्तिस्तत्रैव कस्मात्सत्यादिपदानां व्युत्पत्तिर्नाऽऽश्रीयत इति चेदाश्रीयत एव यतो व्युत्पत्तिकाले यद्यपि प्रतीच्येव शब्दशक्तिः स्वाभाविकी तथाऽपि तदा विवेकानवगमादेव शबले व्युत्पत्तिः पूर्वं प्रतिष्ठापितेति न विरोध इत्युत्तरमाह—निःसंधि बन्धनमिति । रूपभेदप्रतिभासेनापि शून्यमत्यन्तमेकरसमात्मानात्मविवेकनियामकतां मर्यादीकृत्येत्यर्थः ॥ १९८ ॥

सु० टी०—अस्तु चिदचिद्विभागानन्तरमेव व्युत्पत्तिः केवलात्मनीति चेन्न विपरीतक्रमत्वादित्याह—

शब्दार्थसंगतिविदामथ सत्त्वशुद्धे-
रुत्पन्नतर्कदृढलोहशलाकया तु ।

---

१ क. ग. 'त्सु चिदिभा' ।

दृश्यं दृशं च निपुणं द्वयमन्तरेण
निक्षिप्तया दृगदृशोः क्रियते विभागः ॥ १९९ ॥

शब्दार्थेति । यतः खल्वहमादिशब्दार्थेषु व्युत्पन्नानां तत्तात्पर्यानुसरणशक्तानामेव पश्चात्सत्त्वशुद्ध्याख्यधीतैक्ष्ण्यप्रभावाविर्भूतसत्तर्कलक्षणलोहशलाकया दृश्यं दृशं च षष्ठ्यर्थे द्वितीया दृग्दृश्ययोरत्यन्तसंकीर्णयोर्मध्ये निपुणं निक्षिप्तया तद्विवेकगोचरयेति यावत् । दृग्दृश्ययोर्विभागः क्रियतेऽतो न प्राग्विवेकावकाश इत्यर्थः । सत्तर्कस्त्वहंकारादि स्वभिन्नसाक्षिकं दृश्यत्वाद्घटवत्स्वसाक्षिकत्वे कर्तृकर्मत्वविरोधः । न चानुभवबाधो दुःखित्वप्रेमास्पदत्वाभ्यामहंबुद्धौ द्वैरूप्यानुभवात्स च द्रष्टा दृग्रूपो दृश्यत्वे जडत्वापत्तेः । अत एव सर्वावस्थानुगतत्वेन नित्यत्वादेकत्वाच्च भङ्गुरनानाबुद्धिवृत्तिभिन्नः । बुद्धिश्च सुषुप्तौ नश्यन्ती नाऽऽत्मा दृगेव तु सर्वदाऽव्यभिचारिणीति नूनं सैवाऽऽत्मेत्यादिः ॥ १९९ ॥

अ० टी०–एवं तर्हि विवेकिनामेव सत्यादिशब्दव्युत्पत्तिरस्तु किमविवेकिजनव्युत्पादनेनेत्यत आह–शब्दार्थसंगतिविदामिति । सत्त्वमन्तःकरणं तस्य शुद्धिरनेकजन्मानुष्ठितनिजकर्मतोषितेश्वरानुग्रहकृतः प्रसादस्तादृस्याः सत्त्वशुद्धेर्निमित्तभूताया उत्पन्ना तर्करूपा विचारात्मिका दृढाऽबाधिता लोहशलाका तया किंविषयव्यापारया दृश्यं दृशं चेति द्वयमन्तरेण चिज्जडयोर्द्वयोर्मध्ये निपुणं प्रयुक्तं यथा स्यात्तथा निक्षिप्तयेति तथा व्युत्पन्नानामपि पुरुषाणां यदा शुद्धान्तःकरणतया सम्यग्विचारे प्रवृत्तिर्येषां भवति तैरेव शास्त्रतात्पर्यविद्भिरात्मानात्मनोर्विवेकः क्रियत इति व्युत्पत्तिरस्त्विति न शङ्कावकाश इति तात्पर्यार्थः ॥ १९९ ॥

सु० टी०—नन्वज्ञावस्थायां शबलस्याप्यनिश्चयात्तत्र शक्तिरित्यपि कुतो निर्णय इति चेत्तदानीं विशिष्याज्ञानेऽपि पश्चात्तथाऽवसायादित्याह—

शुद्ध्युत्थतर्कजनितं चिदचिद्विभागं
प्राप्य स्थिताः पुनरिमां गिरमुद्गिरन्ति ।
सत्यादिशब्दगण एष तु तत्र तत्र
व्युत्पत्तिमाञ्छबलवस्तुनि नो दृशीति ॥ २०० ॥

शुद्ध्युत्थेति । उक्तेन शुद्ध्युत्थतर्केण यैश्चिदचिद्विभागः प्राप्तस्ते तस्यां

१ क. ग. °श्चिद्वि° ।

दृशायामेवं वदन्ति सत्यादिशब्दगणोऽयं तत्तच्छबले व्युत्पन्नो न केवलायां दृशीति । नत्वज्ञदशायां तेन पूर्वं शक्तिर्गृहीता पश्चाद्भागलक्षणेत्यपि विवेकदशायामेव ज्ञायत इत्यर्थः ॥ २०० ॥

अ० टी०—यदि व्युत्पत्तिकाले सर्वथैव विवेकाभावस्तर्हि कथमवगम्यते शबले व्युत्पत्तिरिति तत्राऽऽह—शुद्धदृगुत्थेति । तथा च शुद्धान्तःकरणानामुत्तरभावि दृग्दृश्यविभागज्ञानमपेक्ष्य व्युत्पत्तिः पुरा शबले जाते निश्चीयते तस्माद्युक्तमुक्तं सत्यादिपदानां चिदात्मनि शबलद्वारैव व्युत्पत्तिरिति भावः ॥ २०० ॥

सु० टी०—अत एवानेकशक्तिकल्पनाऽपि न प्रसज्यत इत्याह—

एकत्र शक्तिग्रहणोपपत्ता-
वनेकक्लृप्तिः क्रियते किमर्थम् ।
इत्येतदेवं सति नास्ति चोद्यं
पुराऽस्य पुंसः परमाविवेकात् ॥ २०१ ॥

एकत्रेति । दृशि दृश्ये वा शक्तिग्रहेण वाक्यार्थबोधोपपत्तौ किमित्यनेकात्मके शबले शक्तिः कल्प्या तत्र दृश्ये चेज्जहल्लक्षणा दृशि शक्तौ लक्षणैव नेत्यपि बोध्यम् । एवं सति नास्ति विभागात्पूर्वं व्युत्पित्सोः पुंसः परमाविवेकाद्दृग्दृश्ययोरत्यन्तमविवेचनादित्यर्थः ॥ २०१ ॥

अ० टी०—परमविवेकापन्ने वस्तुनि व्युत्पत्तेः साधनाच्छबले व्युत्पत्त्यङ्गीकारेऽनेकत्र शक्तिकल्पनाप्रसङ्ग इत्ययमपि दोषः परिहृत इत्याह—एकत्र शक्तिग्रहणेति । पुरा विवेकोदयात्पूर्वं पुंसो व्युत्पित्सोः परमविवेकादत्यन्तमविवेकादेकत्वेनैवार्थप्रतिभानादिति हेत्वर्थः । अन्यत्सुगमम् । मिथ्याभूते दृश्ये न सत्यादिपर्यवसानं किं तु तदधिष्ठाने दृगात्मन्येवेति नानेकशक्तिकल्पनं परमार्थ इति भावः ॥ २०१ ॥

सु० टी०—इदानीं किं शक्यशबलसंबन्धित्वेनोपस्थिते चिदात्मनि भागलक्षणा किं वा तदसंसृष्ट एव केवलात्मनीति दूषयितुं विकल्पयति—

अत्राऽऽह वाच्यशबलान्वितवस्तुनीयं
तद्वर्त्मना भवति लाक्षणिकी प्रवृत्तिः ।

---

१ क. ग. । किं शब° ।

किंवा तदन्वितविलक्षणवस्तुनि स्या-
च्छब्दस्य नोभयमपि प्रतिभाति युक्तम् ॥ २०२ ॥

अत्रेति । तद्वर्त्मना शबलसंबन्धद्वारा द्वयमपि वक्ष्यमाणदोषादयुक्तमित्यर्थः ॥ २०२ ॥

अ० टी०—नन्वस्त्वेवं व्युत्पत्तिमार्गस्तथाऽऽत्मनि कथं लक्षणावृत्तिरुपपद्यत इति शिष्याक्षेपमुत्थापयति—अत्राऽऽहेति । वाच्यं यच्छबलं तदन्विते संबन्धवस्तुन्यात्मनि शबलद्वारेण किं वाच्यसंबन्धित्वेनाऽऽत्मा लक्ष्य इत्येकोऽयं विकल्प उक्तः । विकल्पान्तरमाह—किमिति । शबलान्वितविलक्षणमसंबद्धं यद्वस्त्वात्मनि तस्मिन्वा किं शब्दस्य लाक्षणिकी प्रवृत्तिरिति द्वितीयविकल्पयोजना । किं वाच्यार्थसंबन्धे वाऽऽत्मा लक्ष्य इत्यर्थः । विवेकद्वयं दूष[यति]—नोभयमिति ॥ २०२ ॥

सु०टी०—आद्ये दोषमाह—

संबन्धिरूपं यदि वस्तु लक्ष्य-
मखण्डवाक्यार्थमतिः कुतस्त्या ।
अनन्वितं वस्तु पदार्थलभ्यं
न लक्ष्यते कुत्रचिदत्र लोके ॥ २०३ ॥

संबन्धीति । तत्संबन्धितया लक्ष्यत्वं चेन्नाखण्डार्थधीः स्याद्विशेषणविशेष्ययोः परस्परतावन्मात्रत्वाभावादित्यर्थः । अन्त्ये तु लोकविरोध इत्याह—अनन्वितमिति ॥ २०३ ॥

॥ २०३ ॥ *

सु० टी०—दोषद्वयमपि निराकरोति—

पूर्वक्षणे भवति वाच्यपदार्थभाग-
भागित्वसंगतिरिहाऽऽत्मनि निर्विभागे ।
मोहोपदर्शितवपुर्घटते ततोऽस्मि-
ञ्छब्दस्य लाक्षणिकवृत्तिरदोषदुष्टा ॥ २०४ ॥

पूर्वेति । निर्विभागात्मनि यद्यपि मुख्येन शबलेन सह भागभागि-

* त्र्यधिकशततद्वयश्लोकस्य टीका नास्ति ।

१ क. ग. °म्बन्धित्वेन द्व° । २ क. °पदृष्टा ।

स्वरूपः संबन्धो वास्तवो नास्ति तथाऽपि वाक्यार्थधीपूर्वक्षणेऽस्त्यविद्यकः संबन्धस्तादृशस्यापि मिथ्यारजतसंबन्धस्य शुक्तिलक्षकत्वाधिगतेः। स चातात्त्विकत्वान्न वाक्यार्थधीविषय इति नाखण्डार्थत्वक्षतिरित्यर्थः। शक्यसंबधो हि लक्षणा न तु वास्तवत्वविशेषितो गौरवादिति भावः॥ २०४॥

अ० टी०—उत्तरमाह—पूर्वक्षण इति। वाक्यार्थप्रतीतेः पूर्वकाले वाच्यभागस्यानात्मांशस्य यो भागस्तेन यद्भाग्यत्वं तद्रूपा संगतिः। वाच्यार्थैकदेशेनाविवेकदशायामात्मनोऽप्येकदेशित्वेनावास्तवः संबन्धोऽस्तीत्यर्थः। समुदाये व्युत्पन्नस्य शब्दस्यैकदेशवृत्तितया भागलक्षणयैवेहाङ्गीकाराल्लक्ष्यभागस्य चाऽऽत्मनः स्वत एकरसत्वादखण्डवाक्यार्थता घटत इत्याह—घटते ततोऽस्मिन्निति। यत एवमुक्तप्रकारेण वाच्यार्थः संभवति ततोऽस्मिन्द्वितीये प्रत्यगात्मनि लाक्षणिकवृत्तिरदोषदुष्टेत्यर्थः॥ २०४॥

सु० टी०—नन्वेवमपि (÷ लक्ष्यार्थधीः संबन्धित्वाकारा स्यान्नाखण्डाकारेति चेन्नेत्याह—

संबन्धिता भवति लाक्षणिकप्रवृत्तेः<br>
सर्वत्र कारणमितीदमभीष्टमेव।<br>
संबन्धिताकरणमेव तु लाक्षणिक्या<br>
बुद्धेरनिष्टमिह तव्द्यभिचारदृष्टेः॥ २०५॥

संबन्धितेति। सर्वत्रापि ) मुख्यसंबन्धो लक्षणाबीजमिति सत्यं ननु (तु) लाक्षणिकी धीर्मुख्यसंबन्धित्वमाकरोत्येव किं तु तदुपलक्षितस्वरूपमात्रमेवेति ब्रूमः कल्पकाज्ञाननाशेन वाक्यार्थधीकाले तत्संबन्धित्वनाशादतोऽवशिष्टाखण्डमात्राकारैव सा भवतीत्यर्थः। ननु तीरादिलक्षणायां गङ्गासंबन्धित्वाकारो दृष्ट इति चेन्न व्यभिचारादित्याह—इहेति। क्वचिदार्थिकं तन्न लक्षणामात्रव्यापकमित्यर्थः॥ २०५॥

अ० टी०—ननु कल्पितो वा वास्तवो वाऽस्तु संबन्धः सर्वथा मुख्यार्थसंबन्धितयैव लक्ष्यार्थावगतिरिति पूर्वक्षण इवोत्तरक्षणेऽपि संबन्धस्यावस्थानादखण्डार्थासिद्धिदोषतादवस्थ्यमित्यत आह—संबन्धिता भवतीति। अस्माकमप्यभीष्टमेव न संबन्धिता

---

÷ चिह्नितग्रन्थोऽयं ख. पुस्तकस्थः।

भवतीति तर्हि कथमखण्डार्थत्वसिद्धिस्तत्राऽऽह—संबन्धिताकरणमिति । संबन्धित्वाकारेण वस्तु लक्ष्यते संबन्धोपलक्षितस्वरूपेणैव । तथा च कल्पितसंबन्धेनैव द्वारेण केवलस्य लक्ष्यमाणत्वादखण्डविषयैव वाक्योत्था बुद्धिर्मोहस्य तदानीं विलयात्तत्कल्पितसंबन्धोऽपि पूर्वक्षण एवाभून्नोत्तरक्षणे पुनरस्ति देवदत्तस्येव तत्तद्देशकालवैशिष्ट्यमिति भावः । ननु गङ्गायां घोष इत्यादौ संबन्धिकरणस्यापि दृष्टत्वात्कथं संबन्धोपलक्षितमेव लक्षणमिति निश्चीयत इति चेन्मैवं व्यभिचारादित्याह—तद्व्यभिचारदृष्टेरिति । लक्षणस्थले संबन्धिताकरणस्य व्यभिचारादिति भावः ॥ २०५ ॥

सु० टी०—व्यभिचारस्थानमाह—

यत्रैष काक इदमेव तु देवदत्त-
वेश्मेति लाक्षणिकवृत्तिरिहाभ्युपेता ।
काकास्पदत्वमवधीर्य तथाऽपि वेश्म-
मात्राकृतिर्भवति लाक्षणिकी तु बुद्धिः ॥ २०६ ॥

यत्रेति । किं देवदत्तगृहमिति प्रश्ने काकास्पदं देवदत्तगृहमित्युत्तरं लाक्षणिकम् । न च तद्बुद्धिः काकास्पदत्वमाकरोति प्रश्नोत्तरयोस्तुल्यविषयत्वनियमात्किं तु तदवधीरणेन तल्लक्षितं वेश्ममात्रं काकापगमेऽपि तदर्थप्रतीतेः काकस्य वेश्मान्तर्भावेन प्रतीतौ तद्विगमे वेश्मैकदेशभङ्गधीः स्यादित्यर्थः ॥ २०६ ॥

अ० टी०—कुत्र व्यभिचारदृष्टिरिति तत्राऽऽह—यत्रैष काक इति । काकसंबन्धोपलक्षितं वेश्मैव लक्ष्यते संबन्धस्य वेश्मानन्तर्भूतत्वादन्यथा काकसंबन्धविगमे वेश्मैकदेशभङ्गप्रसङ्गादिति भावः ॥ २०६ ॥

सु० टी०—ननु काकास्पदत्वमुपलक्षणत्वादस्तु तथा शबलं तु स्वांशभूताखण्डलक्षकत्वान्नोपलक्षणमिति चेन्न तस्यापि स्वानुपरक्तधीजनकत्वादुपलक्षणत्वं सोऽयमित्यादौ तदिदंपदार्थवदित्याह—

सोऽयमित्यपि पदार्थरूपकं
लक्षणं यदुपलक्षणं हि तत् ।
अंशिता यदि पदार्थलक्ष्ययो-
र्गृह्यते ननु पुनर्विरोधिता ॥ २०७ ॥

सोऽयमिति । अथ तत्रापि विशिष्टयोर्वाच्ययोरंशांशिसंबन्धेन लक्षक-

त्वात्तदाकारैव देवदत्तधीरिति चेत्तर्हि विरोधस्तदवस्थ इत्याह—अंश(शि)-तेति ॥ २०७ ॥

अ० टी०—उपलक्षणादस्मात्स्वरूपलक्षणे विशेषो भविष्यतीत्याशङ्क्य तत्रापि विशेषोऽस्तीत्युदाहरणमाह—सोऽयमिति । सोऽयंदेवदत्तवाक्येऽपि पदार्थस्वरूपात्मकं लक्षणं तदुपलक्षणमेवेत्यभ्युपेयम् । विपक्षे दोषमाह—अंशितेति । वाच्यलक्ष्यार्थयोर्यदंशिता गृह्यते वाच्यार्थांशसंबन्धविशिष्ट एव यदि लक्ष्यार्थो लक्षणया गृह्यत इत्यर्थः । तदा पुनः पूर्ववन्ननु निश्चितं विरोधिता तदवस्थेत्यर्थः ॥ २०७ ॥

सु० टी०—लक्षणया साधितमखण्डार्थत्वमुपसंहरति—

एवं तावल्लक्षणावृत्तिहेतो-<br>रानीतैषाऽखण्डवाक्यार्थबुद्धिः ।<br>मुक्त्वाऽपीमां लक्षणावृत्तिमेषा<br>वक्तुं शक्येत्युच्यतेऽनन्तरेण ॥ २०८ ॥

एवमिति । मुख्यवृत्त्याऽप्यखण्डार्थत्वं सुवचमिति प्रौढिमाश्रित्याऽऽह—मुक्त्वाऽपीति ॥ २०८ ॥

अ० टी०—यदुक्तं पूर्वपक्षावसरे संसर्गार्थतया वाऽखण्डार्थतया वा न ब्रह्मात्मनि वेदान्तप्रामाण्यमिति तदेवमुक्तयुक्तिरखण्डार्थत्वसमर्थने[ति] परिहृतं यत्पुनरुक्तं—'नाखण्डवस्तुविषया वचसः प्रवृत्तिर्लोकेऽपि दृष्टिपथमापतिते(ता)' क्वाप्यखण्डार्थतैव नास्तीति तदप्युक्ताखण्डार्थयुक्त्या परिहृतमेवेत्युपसंहरत्यधिकं तत्र विवक्षन्—एवं तावदिति । अतो नोक्तदोषः कोऽप्यस्मन्मताखण्डार्थ इति शेषः । अधिकविवक्षां प्रतिजानीते—मुक्त्वाऽपीमामिति । अखण्डवाक्यार्थबुद्धिरनन्तरेण पद्येनोच्यत इति योजना । विनाऽपि लक्षणावृत्तिमपुनरुक्तशक्तशब्दानामखण्डार्थत्वं लोकेऽपि वक्तुं पार्यत इत्यर्थः ॥ २०८ ॥

सु० टी०—मुख्यवृत्त्या क्वाखण्डार्थत्वमिति चेत्तत्राऽऽह—

भिन्नाभिन्नरवौ घटादिवचसा साकं समुच्चारिता-<br>वन्यूनानधिके घटादिविषये तावत्प्रवृत्तौ तव ।<br>नो चेद्विश्वसृजोऽपि दुष्परिहरा भेदादिमालाऽऽगता<br>भेदादेरपि तत्र वाच्यमपरं भेदादिकं स्यादिति ॥ २०९ ॥

भिन्नेति । भिन्नो घट इति घटपदेन सह सामानाधिकरण्येनोच्चारितौ कृदन्तत्वात्समभिव्याहृतार्थौ भिन्नाभिन्नशब्दौ न घटादतिरिक्तं वदतो

घटतावन्मात्रप्रतीतेः। ननु भिन्नो भेदवानित्यधिकः प्रतीयत एव न राहोः शिर इतिवद्व्यपदेशमात्रत्वाद्भेदाभेदयोर्घटानात्मत्वेऽनन्ताप्रामाणिकभेदाभेदपरम्परापत्तेः। तथा हि किं तयोर्घटाद्भेदोऽस्ति न वा। आद्ये तस्य तस्यापीत्यनवस्था। अन्त्ये तु घट एव तावित्यखण्डार्थतैवेति ॥ २०९ ॥

अ० टी०—अत्राखण्डार्थत्वे केनापि विवादो न कर्तव्य इति दर्शयितुमिदमुदाहरणं तावदाह—**भिन्नाभिन्नरवाविति**। भिन्नाभिन्नशब्दौ घटादिवचसा साकं भिन्नो घटोऽभिन्नो घट इत्येव समुच्चारितौ घटादिविषयेऽन्यूनानधिके घटादिप्रातिपदिकमात्रे तावत्प्रवृत्तौ। अतोऽस्मिन्वाक्ये पदद्वयात्मके विनाऽपि लक्षणामखण्डार्थता दृष्टेत्यर्थः। भिन्नाभिन्नशब्दार्थयोर्भेदाभेदयोर्घटादिस्वरूपाद्भेदाभ्युपगमे दोषमाह—**तव नो चेदिति**। भेदादिशब्दस्य वस्तुतन्मात्रत्वं चेन्नाभ्युपेयते तदा तवैवं भेदवादिनो भेदादिमाला परम्परा विश्वसृजो ब्रह्मणोऽपि दुष्परिहराऽनिवार्याऽऽगताऽनवस्था प्राप्तेत्यर्थः। कथमिति तामुपपादयति—**भेदादेरपीति**। भेदस्य तावद्धर्मिणो भेदे घटपटयोर्भेदवद्धर्मधर्मिभेदस्य ततोऽतिरेकस्यावश्यंभावात्तस्यापि पूर्वभेदवद्भिन्नत्वाद्भेदान्तरभेद्यतेत्येवं तत्र तत्र भेदे परो भेदो वाच्यः स्यादिति। तथा भेदपक्षेऽपि यद्यभेदो धर्मो धर्मिणो भिद्यते तदा न तद्वशात्तयोरभेदबुद्धिः स्याद्भिन्नेनैक्यप्रतीतेर्भ्रमत्वात्। तथा चाभेदधर्मिणोर्धर्मधर्मिभावसिद्ध्यर्थमभेदान्तरस्येष्टव्यत्वादनवस्थादोषस्तदवस्थ इति तत्परिहाराय भेदाभेदयोरपि वस्तुतावन्मात्रत्वमङ्गीकार्यमित्यखण्डार्थत्वं सिद्धमित्यर्थः ॥ २०९ ॥

सु० टी०—तर्हि घटभिन्नशब्दयोः पर्यायत्वादेकस्य पौनरुक्त्यमिति चेन्न प्रवृत्तिनिमित्तभेदादित्याह—

> **परस्पराभावमुपाददानो निमित्तमर्थेषु हि भिन्नशब्दः**
> **प्रवर्ततेऽन्ये तु घटादिशब्दा निजं निजं वाच्यमुपाददानाः ॥ २१० ॥**

परस्परेति। अन्यप्रतियोगिकघटस्वरूपात्मकं परस्पराभावं निमित्तमुपाददानो भिन्नशब्दो द्रव्यगुणादिषु प्रवर्तते। अन्ये तु घटादिशब्दा निजं जात्यादिकमिति भेद इत्यर्थः ॥ २१० ॥

अ० टी०—एवं चेद्भिन्नाभिन्नपदयोर्घटपदेन सह पर्यायत्वप्रसङ्गात्सहप्रयोगायोग इत्याशङ्क्य प्रवृत्तिनिमित्तभेदान्मैवमित्याह—**परस्पराभावमिति**। भिन्नशब्दः परस्पराभावं निमित्तमुपाददानो ह्यर्थेषु घटादिषु प्रवर्तते। अन्ये तु घटादिशब्दा निजं निजं वाच्यं घटत्वादिकं निमित्तमुपाददाना अर्थेषु प्रवर्तन्त इति योजना। परस्पराभावो भिन्नशब्दस्य

तटस्थ एव निमित्तं न तु घटत्वादिवद्वाच्यत्वेनेति द्रष्टव्यम् । अन्यथाऽखण्डार्थत्वसिद्धेरिति भावः ॥ २१० ॥

सु० टी०—अभिन्नशब्दनिमित्तमाह—

परस्पराभावविहीनभावा-
दभिन्नशब्दस्य घटे प्रवृत्तिः ।
घटस्वरूपैकनिबन्धना तु
घटादिशब्दस्य घटे प्रवृत्तिः ॥ २११ ॥

परस्परेति । अन्योन्याभावशून्यत्वलक्षणवस्तुस्वरूपपर्यवसितधर्मान्निमित्तत्वेनोपात्तादभिन्नशब्दप्रवृत्तिर्घटशब्दस्य तु घटत्वनिबन्धनेत्यखण्डार्थत्वसहप्रयोगादित्यर्थः ॥ २११ ॥

अ० टी०—अभिन्नशब्दप्रवृत्तिनिमित्तमाह—परस्पराभावविहीनभावादिति । विहीनभावान्निमित्तादिति योज्यम् । घटस्वरूपं घटप्रातिपदिकार्थो घटत्वं वा तन्मात्रनिबन्धनेत्यर्थः । घटे घटादौ प्रवृत्तिरित्यर्थः । अन्यत्सुगमम् । अत्रापि परस्पराभावविहीनताया भावस्वरूपमात्रत्वात्तस्या वाच्यतया निमित्तत्वेऽपि नाखण्डार्थत्वविरोध इति द्रष्टव्यम् ॥ २११ ॥

सु० टी०—एकपदलक्षणयाऽप्यखण्डार्थत्वसंभव इत्याह—

अबोधनाशश्चितिरित्यमुष्मि-
न्पदद्वये त्वेकरसात्मनिष्ठे ।
अगौणमेकं पदमन्यदत्र
द्वितीयवृत्तीतरसंगमाय ॥ २१२ ॥

अबोधेति । अबोधो ज्ञानापनोद्यात्मनाऽभिव्यक्तमज्ञानं तस्य नाशोऽधिष्ठानरूपापत्तिरेवाधिष्ठानं तु चितिरेवेत्यखण्डार्थपरे वाक्य एकं पदं मुख्यमितरद्द्वितीयवृत्ति लक्षणावृत्तीत्यर्थः ॥ २१२ ॥

अ० टी०—विनाऽपि लक्षणामखण्डार्थत्व उदाहरणमुक्तं प्रतिपाद्यैकपदलक्षणयाऽप्यखण्डार्थत्वमाह—अबोधनाश इति । अज्ञाननाशश्चितिरिति समानाधिकृतेऽस्मिन्पदद्वये ।

तुशब्दः पूर्वोदाहरणाद्विशेषमस्य द्योतयति । किंलक्षण एकरसात्मनिष्ठे सामानाधिकरण्यादेकरसात्मवस्तुमात्रनिष्ठ इत्यर्थः । अत्रास्मिन्पदद्वय एकं पदमगौणं स्वार्थे मुख्यवृत्तिकम् । अन्यदत्र वाक्य इतरसंगमायार्थान्तरसिद्धये द्वितीयवृत्ति लक्षणावृत्तिमदित्यर्थः ॥ ११२ ॥

सु० टी०—किमत्र मुख्यं किं लाक्षणिकमिति चेत्तत्राऽऽह—

अज्ञाननाशपदमत्र हि मुख्यमिष्टं
विद्यानिबन्धननिवृत्तिसमर्पणत्वात् ।
तेनान्वयाय चितिवाचि पदं स्ववाच्ये
सौवं समुज्झति मतेः परिणामरूपम् ॥ २१३ ॥

अज्ञानेति । ब्रह्माकारान्तःकरणवृत्तिर्विद्या तन्निबन्धना याऽबोधस्य निवृत्तिरधिष्ठानचिन्मात्ररूपा तद्बोधकत्वादबोधनाशपदमेवात्र मुख्यमित्यर्थः । तत्सामानाधिकरण्योपपत्त्यर्थं तु तद्बुद्धिवृत्तिविशिष्टचैतन्यवाचि चितिपदं स्ववाच्यगतं स्वव्यञ्जकं धीपरिणामांशं समुज्झति भागलक्षणयेत्यखण्डार्थतेति ॥ २१३ ॥

अ० टी०—किमत्र मुख्यं किं वा लाक्षणिकमित्यत आह—अज्ञाननाशपदमिति । अज्ञाननाशपदस्य मुख्यत्वे हेतुमाह—विद्यानिबन्धनेति । विद्यानिबन्धननिवृत्तेरधिष्ठानमात्रत्वादज्ञाननिवृत्तिरधिष्ठानचित्स्वरूपान्नातिरिच्यत इति वाक्यजन्यबुद्धिवृत्त्युपाधिना मुख्यवृत्त्याऽज्ञाननाशपदं चिति वर्तते । तथा च विद्यानिबन्धना वाक्यजन्यधीवृत्तिनिमित्तका या निवृत्तिस्तया समर्पणं विषयनिवेशो यस्य तत्पदं तथोक्तं तस्मादित्यर्थः । चितिवाचि पदं मतेः परिणामरूपमिति संबन्धः । मतिपरिणामशबलवाचि पदमित्यर्थः । इदं तु पदं तेनाज्ञाननाशपदेनान्वयाय सामानाधिकरण्याय सौवं स्वस्येदं सौवं स्ववाच्याकारमर्थं समुज्झति त्यजति जहदजहल्लक्षणया पदान्तरेण समानार्थं भवतीत्यर्थः ॥ २१३ ॥

सु० टी०—ननु विपरीतमिदं यद्विधिमुखं पदं लाक्षणिकं निवृत्तिवाचकं तु मुख्यमिति चेन्नेत्याह—

विधिपदानि हि भागसमर्पणा-
दपरभागनिराकरणादपि ।

---

१ ग. °र्पकत्वा° ।

अविषयात्ममतिं जनयन्ति नो
न तु मृषार्थनिवृत्तिगिरस्तथा ॥ २१४ ॥

विधीति । शबलार्थानि हि विधिपदानि न केवलात्मनि मुख्यवृत्तिसमर्थानि ततोऽतात्त्विकभागं निराकृत्य वास्तवमंशं समर्पयन्ति ब्रह्माकारां वृत्तिं जनयन्ति न तु मृषार्थस्याज्ञानमयादेर्निवृत्तिवाचिनोऽबोधनाशाभयादिशब्दास्तेषु भागलक्षणाविरहादतात्त्विकांशनिरासस्याधिष्ठानरूपस्य मुख्यवृत्त्यैवोक्तत्वादित्यर्थः । न चावाग्गोचरत्वविरोधः स्वरूपेणावाच्यत्वादिति ॥ २१४ ॥

अ० टी०—नन्वेतदयुक्तं यच्चैतन्यवाचित्वेन प्रसिद्धं तल्लक्षणया वर्तते निवृत्तिवाचकं तु पदं मुख्यवृत्त्येति चेद्विधायकपदानां शबले व्युत्पन्नानां प्रत्यङ्मात्रेऽमुख्यवृत्त्ययोगान्निषेधपदानामध्यारोपितनिवृत्तिमात्रार्थत्वादारोपितानिवृत्तेश्चाधिष्ठानत्वादधिष्ठानात्मनिवृत्तिरुपपद्यत इति परिहरति—विधिपदानीति । सत्यं ज्ञानमित्यादीनि विधिपदानि हि स्ववाच्यशबलस्यैकदेशस्य समर्पणाद्भागान्तरस्य परित्यागाच्च भागलक्षणया नोऽस्माकमविषयात्ममतिं जनयन्ति मृषार्थनिवृत्तिपरा गिरस्तु न तथा न लक्षणयाऽविषयात्मनि वर्तन्त इति योजना । परोपाध्यपेक्षयैवाऽऽत्मनो निवृत्तिरूपत्वाभिधानात्स्वेन रूपेण तस्य न निवृत्तिरूपता स्वरूपस्यान्यानपेक्षत्वादतो निवृत्त्यात्मना परापेक्षेण वाच्यत्वेऽपि निरपेक्षेण स्वरूपेणावाच्यत्वोपपत्तेरविषयत्वविशेषणमात्मनो न विरुद्धमिति भावः ॥ २१४ ॥

सु० टी०—मुख्यवृत्त्याऽखण्डार्थान्तरमाह—

भेदो भिन्नश्चातिरेकोऽतिरिक्तोऽ-
भेदोऽभिन्नः संविदः स्वप्रकाशाः ।
इत्येतस्मिन्विद्यते नार्थभेदो
वेदान्तानामप्यखण्डस्तथाऽर्थः ॥ २१५ ॥

भेद इति । अत्र भेदस्य स्वाश्रयत्व आत्माश्रयो भेदान्तराश्रयत्वेऽन्योन्याश्रयानवस्थादिप्रसङ्ग इति भेदात्मकं स्वरूपमेव भिन्नशब्दार्थः । एवमतिरेके भेदाभेदनिर्वाहके धर्मेऽपि द्रष्टव्यम् । संविद इत्यत्र स्वपदस्य प्रकाशकपदस्य समासस्य च संविदेवार्थ इति । उपसंहरति—वेदान्तानामिति ॥ २१५ ॥

---

१ क. ग. नवाचागो° । २ क. ग. °के भेदनि° ।

अ० टी०—पुनरपि लक्षणां विनैवाखण्डार्थत्व उदाहरणान्तरमाह—**भेदो भिन्न इति**। अतिरेको नाम भेदात्मकत्वनिर्वाहको धर्मविशेषः। भेदातिरेकपदयोर्भिन्नातिरिक्तपदयोश्च सामानाधिकरण्येनैकरसार्थता तावदभ्युपगन्तव्या। न चेह पदार्थयोर्विशेषण-विशेष्यभावरूपसंसर्ग एव वाक्यार्थो नाखण्डार्थ इति वाच्यं स्वरूपभेदवादिनं प्रत्यस्योदाहरणात्। तेन चानवस्थादिदोषभयात्स्वरूपतावन्मात्रताया भेदस्येष्टत्वादिति तात्पर्यार्थः। भिन्नाभिन्नत्वाविति पूर्वोक्तमुदाहरणं धर्मभेदवादिनं प्रतीति ज्ञेयम्। संविदः स्वप्रकाशा इति पदद्वयेऽपि पूर्ववदखण्डार्थताऽवगम्यते। यतः स्वप्रकाशपदेनापि संविदेवाभिधीयते। न हि संविदतिरिक्तः प्रकाशपदाभिधेयोऽर्थोऽस्ति तदन्यस्य सर्वस्य जडत्वात्। स्वश्चासौ प्रकाशश्चेति समासार्थोऽपि स एव नान्यो लभ्यते। तथा च संविदः स्वप्रकाशत्वमभ्युपगच्छतामस्मिन्वाक्येऽखण्डार्थत्वमभिमतमेवेति। इत्येवमुक्तप्रकारेणैतस्मिन्भेदो भिन्न इत्यादिवाक्येऽर्थभेदो न विद्यते यथा तथा वेदान्तानामप्यखण्ड एवार्थोऽस्त्वित्यर्थः॥ १५॥

सु० टी०—प्रागुक्तमनूद्य पाणिनिनाऽपि 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति सूत्रेण प्रकृतिविभक्त्योरेकार्थत्वं वदताऽखण्डार्थत्वं सूचितमित्याह—

> एवं तावदखण्डवस्तुविषये शब्दान्वयो दर्शितो
> लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम्।
> येनायं स्मरति प्रकृत्यभिहिते वृक्षादिके केवले
> तन्मात्रे प्रथमेति सूत्रवचसैवाऽऽद्यां विभक्तिं मुनिः॥२१६॥

एवमिति। यद्यपि लिङ्गसंख्ये अपि तदर्थस्तथाऽपि वृक्षादावलिङ्गे गुणादावसंख्येऽपि प्रयोगाद्खण्डार्थताऽक्षतेति भावः॥ २१६॥

अ० टी०—एवं वेदान्तवाक्यानां न्यायवशेनाखण्डार्थत्वं साधयता संसर्गो वा विशिष्टो वा वाक्यार्थो नाखण्डार्थः क्वापि दृष्ट इत्युक्तवाक्यार्थस्याखण्डेतरनिष्ठत्वनियमोऽपोदित इदानीं न्यायसिद्धमेवाखण्डार्थत्वमभियुक्ततरपाणिन्याचार्यसंमत्याऽपि द्रढयति—**एवं तावदिति**। दृष्टनयेनेत्यत उक्तार्थानुवादः। अस्योक्तार्थस्याखण्डवाक्यार्थस्य पाणिनिवचोऽपि संसूचकमस्त्येवेति योजना। तदेवार्थतोऽनुक्रामति—**येनेति**। यस्मादित्यर्थः। तन्मात्रे प्रथमेति प्रातिपदिकार्थे प्रथमेति सूत्रार्थः संगृहीतः। यस्मादयं मुनिस्तन्मात्रे प्रथमेति सूत्रवचसा प्रकृत्यभिहिते प्रातिपदिकोक्ते वृक्षादिके केवले प्रत्ययार्थान्तरासंस्पृष्टे प्रथमाविभक्तिरिति स्मरत्येव तस्मात्पाणिनिवचोऽप्यस्यैव संसूचकमिति योजना। प्रातिपदिकप्रथमाविभक्त्योरखण्डार्थता पाणिनेरपि संमतेत्यर्थः॥ २१६॥

---

१ क. °-पयः श'।

सु० टी०—सूत्रकृदभिप्रायादप्यखण्डार्थत्वोन्नयनमित्याह—

सामानाधिकरण्यमन्वयगिरा हेतुं वदत्यादरा-
त्तस्यैवाथ विशेषणं समिति च व्यावृत्तये गृह्यते ।
गौणान्मुख्यमयं भिनत्ति भगवान्व्यावर्तकेनामुना
नीलेनोत्पलवस्तुवत्स्फुटतरद्वैविध्यसद्भावतः ॥ २१७ ॥

सामानेति । स हि 'तत्तु समन्वयात्' [ अ० सू० १ । १ । ४ ] इति सूत्रेऽन्वयशब्देनैव तत्त्वमसीति तुल्यविभक्त्यन्तत्वेन सामानाधिकरण्ये प्राप्ते यत्तस्यान्वयस्याऽऽदरेण समिति विशेषणं वदति तन्नूनं गौणात्सामानाधिकरण्याद्व्यावर्त्य प्रकृतं मुख्यमखण्डमभिप्रैतीति गम्यते नीलोत्पलवद्यथा शुक्लाद्व्यावर्तयितुमुत्पलं नीलपदेन विशिष्यते तथेत्यर्थः । नन्वप्रसिद्धं गौणमिति नेत्याह—स्फुटतरेति ॥ २१७ ॥

अ० टी०—एवं तत्त्वमस्यादिवाक्यस्याखण्डार्थविषयं प्रामाण्यं युक्त्याऽभियुक्तसंमत्या-चोपपाद्य वेदान्तसूत्रकारैरप्ययमेवार्थः समन्वयसूत्रे निरूपित इति प्रदर्शयितुं सूत्रगतसमन्वयपदार्थं तावदाह—सामानाधिकरण्यमन्वयगिरेति । 'तत्तु समन्वयात्' [ अ० १ । १ । ४ ] इतिसूत्रे तुशब्दो वेदान्तानामर्थान्तरपरत्वशङ्काव्यावर्तकः । तच्छब्दः प्रतिज्ञार्थः । तद्ब्रह्म जन्मादिसूत्रे लक्षितं 'शास्त्रयोनित्वात्' [ अ० १ । १ । ३ ] इति सूत्रे शास्त्रैकगम्यत्वेन चोक्तं यत्तदेव वेदान्तप्रमेयं तत्प्रमेयका एव वेदान्ता इति प्रतिज्ञावाक्यार्थः । तत्र हेतुः—समन्वयादिति । तत्र सोपसर्गस्य हेतु[भूत]स्यार्थं विविच्य कथयति—अन्वयगिरा सामानाधिकरण्यं हेतुमादराद्वदत्यन्वयादितिपदेन तत्त्वंपदयोः सत्यादिपदानां प्रत्येकं ब्रह्मपदेन च सामानाधिकरण्यादिहेतुं वदतीत्यर्थः । ब्रह्मात्मैक्ये तात्पर्यग्राहिभिर्लिङ्गैर्वाक्यानां तात्पर्यावगमादित्युक्तं भवति । तत्र समुपसर्गस्यार्थं प्रयोजनमाह—तस्यैवेति । अनेन कुतः किं व्यावर्त्यत इत्यपेक्षायामाह—गौणादिति । अयं भगवान् बादरायणाचार्योऽमुना विशेषणेन गौणात्सामानाधिकरण्यान्मुख्यं सामानाधिकरण्यं भिनत्ति व्यावर्तयति । व्यावृत्तिमात्रे दृष्टान्तः—नीलोत्पलवस्तुवदिति । सामानाधिकरण्ये गौणमुख्यभेदासिद्धौ कथमिदं गौणव्यावृत्त्यर्थमित्यत आह—स्फुटतरद्वैविध्यसद्भावत इति । सामानाधिकरण्यस्येति शेषः ॥ २१७ ॥

सु० टी०—द्वैविध्यमाह—

तद्धि द्विधैकाधिकरण्यमुक्तं
गौणं च मुख्यं च विविच्य सद्भिः ।

संसर्गरूपार्थनिवेशि गौणं
मुख्यं त्वखण्डार्थनिविष्टमाहुः ॥ २१८ ॥

तद्धीति । अन्वयशब्दितमैकाधिकरण्यं गौणमुख्यभेदेन द्विधेष्टमित्यर्थः । द्वे विधे विविनक्ति—संसर्गेति । भेदघटितं तादात्म्यं संसर्गः । यथा नीलगुणोत्पलत्वसंसृष्टनानारसार्थनिविष्टं सामानाधिकरण्यं तद्धि सखण्डत्वेऽप्येकार्थधीहेतुत्वगुणयोगाद्गौणम् । अखण्डार्थनिविष्टं तु मुख्यं तस्य धीविक्षेपकखण्डरहितनिरुपचरितैक्यगोचरत्वादित्यर्थः ॥ २१८ ॥

अ० टी०—द्वैविध्यमेव स्फुटयति—तद्धीति । ऐकाधिकरण्यं सामानाधिकरण्यं किं गौणं किं वा मुख्यमिति तदाह—संसर्गरूपार्थेति ॥ २१८ ॥

सु० टी०—किं पुनस्तत्सामानाधिकरण्यं यद्विशेषौ मुख्यगौणाविति चेत्तत्राऽऽह—

आदाय नानाविधकारणानि
गिरामथैकत्र तु या प्रवृत्तिः ।
तामाहुरेकाधिकरण्यनाम्ना
विपश्चितो वेदशिरःसु विप्राः ॥ २१९ ॥

आदायेति । भिन्नप्रवृत्तिनिमित्तानां पदानामेकत्रार्थे वृत्तिः सामानाधिकरण्यमित्यर्थः । अस्ति च नीलमुत्पलं सोऽयं पुमानिति गौणमुख्ययोरिदं सामान्यमिति भावः ॥ २१९ ॥

अ० टी०—संसर्गार्थनिवेशिनोऽखण्डार्थनिवेशिनश्चान्वयस्य सामानाधिकरण्यविशेषत्वं दर्शयितुं सामानाधिकरण्यसामान्यलक्षणमाह—आदायेति । नानाविधकारणानि विभिन्नानि प्रवृत्तिनिमित्तानीत्यर्थः । गिरां बह्वीनामेकत्रार्थे प्रवृत्तिः सामानाधिकरण्यमित्युक्ते पर्यायशब्देष्वतिव्याप्तिरतो नानाविधकारणान्यादायेत्युक्तम् । एकत्रेति । पदपरित्यागेन चोक्ते लक्षणे वैयधिकरण्ये प्रसङ्ग इति तद्वारणायैकत्रेति । वेदशिरःसु विपश्चित इत्यन्वयः ॥ २१९ ॥

सु० टी०—गौणमुख्यावुदाहरति—

नीलं सुगन्धि महदुत्पलमम्बुशायी-
त्येवंप्रकारमिह गौणमुशन्ति सन्तः ।

सोऽयं पुमानुदशरावगतो विवस्वा-
नाकाशगो रविरसाविति मुख्यमाहुः ॥ २२० ॥

नीलमिति । नीलमित्यादीनां नानारसतत्तद्गुणजातिविशिष्टद्रव्यवृत्तित्वेऽपि व्यावृत्तैकार्थधीहेतुत्वेनोपचाराद्गौणं सामानाधिकरण्यं सोऽयं पुमानित्यादौ त्वत्यन्तैकरसपुरुषादिस्वरूपमात्रवृत्तित्वान्मुख्यमित्यर्थः । उदशरावस्थसूर्याभासाविवेकेन प्रविष्टः प्रतिबिम्बात्मा यः सूर्यः स आकाशगो रवि(*रेतेनात्र जलपात्रगत्वाकाशगत्वाभ्यामुपलक्षितो रविरखण्डः प्रतीयत इति । मुख्यत्वमत्र रविपुंसोस्त) त्तद्वाक्यस्थपदोपात्तविशेषणखण्डराहित्यमेवाखण्डार्थत्वं न वस्तुत इति ध्येयम् ॥ २२० ॥

अ० टी०—इदानीं गौणमुख्यरूपौ सामानाधिकरण्यभेदौ विभज्योदाहरणेन क्रमेण बुद्धिमारोहयति—नीलं सुगन्धीति । उत्पलपदेन नीलादिपदानां सामानाधिकरण्यं यत्तद्गौणमुशन्ति मन्यन्ते सन्तो विद्वांस इत्यर्थः । मुख्यमुदाहरति—सोऽयमिति । य उदशरावगतो विवस्वानसावाकाशगो रविरिति योजना ॥ २२० ॥

सु० टी०—कथमेकार्थवृत्तित्वसाम्येऽप्यखण्डान्वयस्यैव मुख्यत्वं नेतरस्येति चेत्सामानाधिकरण्यस्यात्र कृत्स्नत्वादितरत्र चापूर्णत्वादित्याह—

एकत्र वृत्तिरिति लक्षणमत्र मुख्यं
संसर्गवस्तुनि पुनर्न हि तद्घटेत ।
नानारसे हि विषये वचसां प्रवृत्ति-
र्नीलं सुगन्धि महदुत्पलमित्यमीषाम् ॥ २२१ ॥

एकत्रेति । अत्यन्तैकरसवस्तुनिष्ठवाक्ये ह्येकत्र वृत्तिरिति लक्षणमाञ्जस्येन घटते संसर्गार्थकवाक्ये त्वत्यन्तभेदाभावेऽपि सखण्डनानारसार्थविषयत्वान्न तदित्यर्थः ॥ २२१ ॥

अ० टी०—कुतोऽखण्डार्थान्वयस्य मुख्यत्वं संसर्गान्वयस्य वा गौणत्वमित्यपेक्षायां सामानाधिकरण्यस्वरूपलक्षणस्याखण्डार्थान्वये संपूर्णत्वादितरत्र तदभावादिति विशेषमाह—

---

* ख. पुस्तकस्थोऽयं ग्रन्थश्छिन्नः ।

---

१ क. °वृत्त्यैका° । २ क. °णसामञ्ज° ।

एकत्र वृत्तिरिति । अत्र सोऽयमित्यादावखण्डार्थवाक्ये पदयोरेकत्र वृत्तिर्निरुपचारि-ताऽस्तीति सामानाधिकरण्यलक्षणं मुख्यं युक्तमिति योज्यम् । संसर्गवस्तुनि तन्मुख्यं कुतो न घटत इत्यत्र हेतुमाह—नानारसे हीति । गुणगुण्याद्यात्मकत्वेन विषयस्य नानारसत्वम् । सुगमाऽत्र योजना ॥ २२१ ॥

सु० टी०—एकत्रेत्यस्य व्यावर्त्यं वैयधिकरण्यं लक्षयति—

नानाविधैर्बहुभिरेव निमित्तभेदै-
र्भिन्नेषु वस्तुषु गिरामथ या प्रवृत्तिः ।
सर्वत्र वैयधिकरण्यमिति प्रसिद्धा
सा शब्दवृत्तिकुशलव्यवहारभूमौ ॥ २२२ ॥

नानेति । भिन्नवृत्तिनिमित्तानां भिन्नार्थेषु वृत्तिर्वैयधिकरण्यमि-त्यर्थः ॥ २२२ ॥

अ० टी०—'आदाय नानाविधकारणानि' इत्यस्मिन्पद्ये सामानाधिकरण्यलक्षणार्थे वैयधिकरण्ये प्रसङ्गवारणायैकत्र तु या प्रवृत्तिरित्येकत्रशब्दः प्रयुक्तस्तत्रैव नानाविधकार-णानीति पर्यायशब्दवारणाय च प्रयुक्तः । तत्र किं वैयधिकरण्यपर्याययोः स्वरूपमित्याका-ङ्क्षायां तयोर्लक्षणे क्रमेण दर्शयति द्वाभ्याम्—नानाविधैरित्याद्याभ्याम् । स्पष्टोऽर्थः । अत्र भिन्नेषु वस्तुष्विति सामानाधिकरण्यव्युदासः । सुगममन्यत् ॥ २२२ ॥

सु० टी०—भिन्नप्रवृत्तिनिमित्तानामित्यस्य व्यावर्त्यं पर्यायत्वमाह—

अभिन्नहेतुर्विषये समाने
विभिन्नवाचामथ या प्रवृत्तिः ।
पर्यायनाम्ना प्रवदन्ति धीराः
प्रवृत्तिमेनां वचसां बहूनाम् ॥ २२३ ॥

अभिन्नेति । अभिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः पर्याय इत्यर्थः। बहूनामभिन्नार्थप्रत्यायकत्वं हि तत् । तदुक्तं—'पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते' इति ॥ २२३ ॥

अ० टी०—पर्यायलक्षणमाह—अभिन्नहेतुरिति । विभिन्नवाचां समान एक-स्मिन्विषये या प्रवृत्तिरभिन्नहेतुरेकनिमित्तकैनां वचसां प्रवृत्तिं धीराः पर्यायनाम्नाऽभिवद-

न्तीत्यन्वयः । बहूनां वचसामेकार्थे प्रवृत्तिः पर्याय इत्युक्ते स्तम्भः कुम्भः पर्वत इत्यादौ प्रसङ्गस्तदर्थं समाने विषय इति । एवमपि सामानाधिकरण्ये प्रसक्तिरित्यत उक्तमभिन्नहेतुरिति । अभिन्नहेतुः समाने विषये प्रवृत्तिरित्युक्तेऽयं घटोऽयं घट इति धारावाहिकघटपदे प्रसङ्ग इत्यत उक्तं विभिन्नवाचामिति ॥ २२३ ॥

सु० टी०—वैयधिकरण्यपर्यायावुदाहरति—

कुड्यं गृहस्य सरसोऽम्बुजमस्य वस्त्र-
मित्यत्र वैयधिकरण्यमपि प्रसिद्धम् ।
एवं मुखं वदनमाननमित्यमीषां पर्याय-
ताऽपि विदितैव पुरोक्तहेतोः ॥ २२४ ॥

कुड्यमिति । वैयधिकरण्यस्य विरूपनानार्थविषयत्वेन धीविक्षेपकत्वात् । पर्यायत्वस्याप्यन्यायश्चानेकशब्दत्वमिति न्यायेन सर्वानादित्वादेकत्र मुख्यत्वे विनिगमनाभावादगत्यैवाभ्युपेयत्वेन जघन्यत्वात्पश्चादुक्तिः ॥ २२४ ॥

अ० टी०—उक्तलक्षणयोर्वैयधिकरण्यपर्याययोः क्रमेणोदाहरणान्याह—कुड्यमिति । पूर्वार्धोत्तरार्धयोरुभयोरुदाहरणे स्पष्टार्थे ॥ २२४ ॥

सु० टी०—अस्तु तर्हि तत्त्वमसीत्यत्राप्येतयोरन्यतरोऽन्वयः किमखण्डाग्रहेणेति चेन्नासंभवादित्याह—

पर्यायता न खलु तत्त्वमसीति वाक्ये
नापीह संभवति भेदकभेद्यभावः ।
तत्त्वंपदार्थगतमेकरसैकभागं
तत्त्वंपदे समुपलक्षयतो विरोधात् ॥ २२५ ॥

पर्यायतेति । न ह्यत्र पर्यायता भिन्नप्रवृत्तिनिमित्तत्वाद्युगपत्प्रयोगाच्च । ईशेशिनापि राज्ञः पुरुष इतिवद्वैयधिकरण्यं तुल्यविभक्तिकत्वात् । ईशेशित्व्यादिसंबन्धविवक्षायां तु—'षष्ठ्युत्पत्तिस्तु भेदकात्' इतिन्यायेन तस्य त्वमसीति स्यान्न तत्त्वमसीति । न च षष्ठ्यर्थ एवाविरोधाल्लक्ष्य उपक्रमोपसंहारादिविरोधापत्तेः । तस्मादुक्तलक्षणयैवाविरोधसमर्थनमिति न्याय्यमित्यर्थः ॥ २२५ ॥

अ० टी०—यद्येवमन्वयप्रकारा बहवः सन्ति तर्हि तत्त्वमस्यादेः किमित्यखण्डार्थत्वमेवेत्यभिनिवेश इति चेन्न प्रकारान्तरासंभवादित्याह—**पर्यायतेति** । तत्त्वमसीतिवाक्ये न खलु पर्यायता संभवति पदयोः प्रवृत्तिनिमित्तभेदे तदयोगात् । नापीह भेदकभेद्यभावलक्षणं वैयधिकरण्यं संभवत्येकविभक्त्यन्तत्वेन तदयोगात् । अनेनैव विशेषणविशेष्यभावरूपामुख्यसामानाधिकरण्यान्वयोऽपि निरस्तः । कुत इति तत्र हेतुमाह—**विरोधादिति** । पदवाच्यार्थयोर्विरोधाद्विरुद्धयोर्विशेषणादिभावासंभवात् । परिशेषात्तत्त्वंपदार्थगतो वाच्यार्थनिष्ठो य एकरसोऽखण्डचिदात्मक एको भागस्तमेकरसैकभागं तत्त्वंपदे समुपलक्षयतः सम्यगेकरसत्वेनैव संसर्गभेदवैशिष्ट्यांशेनाप्यसंस्पृष्टतया लक्षयत इत्यखण्डार्थपरमेवेदं वाक्यं मुख्यं च सामानाधिकरण्यं समन्वयशब्दार्थ इति सर्वं समञ्जसमिति सिद्धमित्यर्थः ॥ २२५ ॥

**सु० टी०—संप्रति सत्यं ज्ञानमनन्तमित्याद्यवान्तरवाक्यमप्यखण्डार्थं लक्षणवाक्यत्वात्प्रकृष्टप्रकाशादिवाक्यवदित्याह—**

**प्रकृष्टप्रकाशध्वनी व्यक्तिमेकां**<br>**यथा लक्षणावर्त्मनोपाक्षिपेताम् ।**<br>**शशाङ्कादिशब्दार्थसंकीर्तने स-**<br>**च्चिदानन्दशब्दाः परं ब्रह्म तद्वत् ॥ २२६ ॥**

प्रकृष्टेति । **यथेह ज्योतिश्चक्रे कश्चन्द्र इति प्रश्ने प्रकृष्टप्रकाशश्चन्द्र इत्युत्तरे प्रकृष्टप्रकाशशब्दौ स्वार्थत्यागेनाखण्डां चन्द्रव्यक्तिं लक्षयतस्तथा किं ब्रह्मेत्याकाङ्क्षायां सच्चिदानन्दादिशब्दा अपीत्यर्थः ॥२२६॥**

अ० टी०—तदेवं मुख्यसामानाधिकरण्यान्वयाख्यसमन्वयस्य तत्त्वमस्यादिवाक्येषूपपादनेन तेषामखण्डार्थता सम्यक्प्रतिपादिताऽथेदानीमवान्तरवाक्यस्यापि सत्यादिपदकदम्बस्य तथैवाखण्डार्थतां प्रतिपादयितुं दृष्टान्तमाह—**प्रकृष्टप्रकाशेति** । शशाङ्कादिशब्दार्थसंकीर्तने शशाङ्कश्चन्द्र इत्यादिशब्दार्थस्योद्देशे सति यथा प्रकृष्टप्रकाशध्वनी लक्षणावर्त्मनैकां चन्द्रव्यक्तिमुपाक्षिपेतां चन्द्रस्वरूपे जिज्ञासिते सति प्रकृष्टप्रकाशश्चन्द्र इतिलक्षणनिर्देशेन जिज्ञासितचन्द्रस्वरूपपरे वाक्ये यथा प्रकृष्टपदं प्रकाशपदं चाप्रकृष्टाप्रकाशवद्वस्तुव्यावृत्तं चन्द्रप्रतिपादिकार्थं लक्षणया बोधयत इत्यर्थः । दार्ष्टान्तिकमाह—**सच्चिदानन्दशब्दाः परं ब्रह्म तद्वदिति** ॥ २२६ ॥

सु० टी०—तर्हि नीलमुत्पलमित्यादेरपि वाच्यत्यागेनाखण्डलक्षकत्वसंभवात् संसर्गार्थत्वभङ्ग इति नेत्याह—

न नीलोत्पलाद्या गिरो व्यक्तिनिष्ठाः
स्ववाच्यार्थसंसर्गमात्राभिधानात् ।
विरोधे हि वाच्यच्युतिर्नाविरोधे
गिरां लक्षणाऽत्रापि चेदस्तु साम्यम् ॥ २२७ ॥

न नीलेति । तस्याखण्डार्थत्वं स्वार्थसंसर्गाभिधानपरत्वादित्यर्थः । ननूक्तं वाच्यार्थहानेनेति नेत्याह—विरोध इति । तत्र संसर्गार्थत्वाविरोधादित्यर्थः । अखण्डतात्पर्यकत्वे तु भवत्येवेत्याह—लक्षणाऽत्रापीति ॥ २२७ ॥

अ० टी०—नन्वेवं यदि वाच्यार्थपरित्यागेन लक्षणयाऽखण्डार्थता स्वी क्रियते तर्हि सर्वत्रैवं वक्तुं शक्यत्वान्नीलमुत्पलमित्यादावपि तथात्वप्रसङ्ग इति चेत्तत्राऽऽह—नीलोत्पलाद्या गिरो व्यक्तिनिष्ठा इति । नीलं सुगन्धि महदुत्पलमित्याद्या गिरः स्वभावतः स्ववाच्यार्थसंसर्गमात्राभिधानाद्धेतोर्न व्यक्तिनिष्ठा एकव्यक्तिमात्रपर्यवसिता न भवन्तीत्यर्थः । तत्र हेतुमाह—विरोधे हीति । वाच्यार्थान्वयिपदार्थप्रतीतिविरोधे हि गिरां वाच्यच्युतिर्लक्षणा चाविरोधायाऽऽद्रियते न त्वविरोधेऽपीत्यर्थः* । यदि क्वचित्प्रयोगविशेषे नीलोत्पलादिवाक्येऽपि विरोधस्फूर्त्या वाक्यार्थसिद्धिस्तदा तत्रापि लक्षणा स्यादित्याह—अत्रापि चेदस्तु साम्यमिति । नीलोत्पलादिवाक्येऽपि सत्यादिवाक्यचन्द्रलक्षणादिवाक्यसाम्यमस्तु लक्षणयाऽखण्डैकार्थपरत्वमस्तु को विरोध इत्यर्थः ॥ २२७ ॥

सु० टी०—कथमत्राखण्डार्थत्वसंभव इत्यत्राऽऽह—

न नीलत्वजात्याश्रयव्यक्तितः स्या-
द्विभिन्नोत्पलत्वाश्रयव्यक्तिरेषा ।
तथैवोत्पलत्वाश्रयव्यक्तितः स्या-
न्ननीलत्वजात्याश्रयव्यक्तिरन्या ॥ २२८ ॥

नेति । नीलत्वोत्पलत्वोपलक्षितव्यक्त्योर्वस्तुतो भेदाभावाद्गुणगुणिभेदस्य कल्पनामात्रत्वादित्यर्थः ॥ २२८ ॥

---

* अविरोधादिति पूर्वत्र हेतुरित्यर्थः । विरोधे लक्ष्यैकव्यक्तिमात्रपर्यवसितत्वं नीलमुत्पलमितिपदयोर्नाविरोध इति भावः ।

अ० टी०—नीलोत्पलवाक्ये यदा लक्षणाप्रसङ्गस्तदा* कथं तत्राखण्डार्थत्वप्रतीति-रिति तद्व्युत्पादयति—न नीलत्वजातीति । अत्र नीलोत्पलपदयोर्नीलत्वोत्पलत्वजाती वाच्यार्थौ जातिसंसृष्टे व्यक्ती अपि वेति हि मीमांसकतार्किकयोः संमतिस्तत्राशेषवाच्या-र्थपरित्यागेन वा तदेकदेशपरित्यागेन वा त+त्संबन्धिन्येकदेशे वा व्यक्तिमात्रे पदवृ-त्तिर्लक्षणाऽऽश्रीयते यदा तदा तत्राप्यखण्डार्थता निरपवादेति तात्पर्यार्थः । पदयोजना तु एषोत्पलत्वजात्याश्रयव्यक्तिर्नीलत्वजात्याश्रयव्यक्तितः सकाशाद्विभिन्ना न स्यादिति । तथा= नीलत्वजातिरितरस्या अन्या भविष्यतीत्यपि न शङ्कास्पदमित्याह—तथैवेति । पूर्ववद्योजना । तथा च व्यक्तिस्वरूपस्य सन्मात्रत्वाद्द्रव्यत्वगुणत्वयोश्च तत्र कल्पितत्वात् । सद्रूपाया व्यक्तेरभेदादखण्डार्थत्वमत्रापि नानुपपन्नमित्यर्थः ॥ २२८ ॥

सु० टी०—कथं तर्हि नीलोत्पलादौ न क्वाप्यखण्डप्रयोगस्तन्नूनं तदसंभवादिति नेत्याह—

> न नीलोत्पलादिप्रदेशेषु किंचि-
> द्गिरां लक्षणाकारणं तेन तत्र ।
> न नीलोत्पलत्वादिकव्यक्तिनिष्ठा
> गिरस्ता भवेयुः प्रमाणादृते नः ॥ २२९ ॥

न नीलेति । तत्र मुख्यार्थेऽप्यविरोधेन वाक्यप्रामाण्योपपत्तेर्न लक्षणा न त्वसंभवाद्विरोधं विनाऽपि लक्षणाश्रयणेऽतिप्रसङ्गादित्यर्थः ॥ २२९ ॥

अ० टी०—यद्येवमखण्डार्थत्वमित्थमत्रापि संभवति तर्हि कुतः सर्वेषामत्राखण्डार्थत्वसं-प्रतिपत्तिर्न जायतेऽतोऽत्र÷तद्विप्रतिपत्तेरेवं वाच्यार्थपरित्यागेनाखण्डार्थवृत्तिता व्याख्यानं भवतां साहसमेवेति मन्य इति चेत्तत्राऽऽह—न नीलोत्पलादिप्रदेशेष्विति । नीलोत्प-लादिवाक्यप्रयोगप्रदेशेषु गिरां पदानां लक्षणाकारणं किंचिन्नेत्यन्वयः । न दृश्यत इत्यर्थः । यत एवं तेन हेतुना नोऽस्माकं प्रमाणादृते कारणं विना ता नीलोत्पलाद्या गिरो न नीलोत्पलत्वादिव्यक्तिनिष्ठा भवेयुरिति योजना । मुख्यार्थोपादानेनात्र वाक्यार्थस्य संभा-वितत्वान्न लक्षणयाऽखण्डार्थत्वस्वीकारः क्रियते न पुनर्लक्षणाया× असंभवात् (?) । न हि गङ्गायां घोष इत्यत्र लक्षणा स्वीकृतेति गङ्गायां मीना इत्यत्रापि तत्स्वीकारः कार्यः । न चैवमपि गङ्गापदे लक्षणाभावो घोषपदान्वये तदङ्गीकारात् । तस्मात्प्रकृष्टप्रकाश

---

* यदातदापदाभ्यामभ्युपगमवादं दर्शयति । + जातिविशिष्टव्यक्तिशक्तिपक्षे पक्षद्वयं तद्गिति । = नीलत्वजात्याश्रयव्यक्तिरुत्पलत्वजात्याश्रयव्यक्तेः । ÷ नीलमुत्पलमित्यत्राखण्डार्थत्वविप्रतिपत्तेः । × मीमांसकतार्किकयोः पूर्वोक्तप्रकारेण लक्षणासंभवस्योक्तत्वात् ।

इत्यादौ स्वरूपप्रत्यायनपरत्वेनैव लक्षणा न त्वविरोधेन* संसृष्टार्थपरत्वेनापीति सर्वमुपपन्नमिति भावः ॥ २२९ ॥

सु० टी०—ननु गुणगुणिभेदस्य कल्पनामात्रत्वादभेद एव युक्त इत्यखण्डलक्षणेति चेत्तत्राऽऽह—

इदमुपेत्य किमप्युदितं मया
न तु तयोरभिदा परमार्थतः ।
गुणगुणित्वकृतोऽतिशयस्तयो-
र्भवति लक्षणयाऽपि गृहीतयोः ॥ २३० ॥

इदमिति । गुणगुणिनोः कथं चिदभेदमङ्गीकृत्याखण्डार्थत्वं मयोक्तं न तु वस्तुतस्तयोरत्यन्ताभेदो गुणगुणित्वव्यवहारार्थमीषदपि भेदस्यावश्यवाच्यत्वाल्लक्षणयाऽप्यभेदासंभवादित्यर्थः । नीलपदेनापि द्रव्यव्यक्तिलक्षणायां लक्षितलक्षणापत्तेः ॥ २३० ॥

अ० टी०—ननु यद्येवमुक्तप्रकारेण लक्षणाहेत्वभावात्संसृष्टार्थतैवाभिमता नीलोत्पलादिवाक्ये तर्हि किमिति ‘ न नीलत्वजात्याश्रयव्यक्तितः स्यात् ’ इतिपद्ये तस्याखण्डार्थता समर्थितेति तत्राऽऽह—इदमुपेत्य किमप्युदितं मयेति । प्रौढितोऽयमभ्युपगमवादो ममेत्यर्थः । परमार्थतस्तु तयोर्नीलोत्पलपदार्थयोरभिदाऽभेदलेशोऽपि नास्तीत्यर्थः । ननु लक्षणया व्यक्तिमात्रग्रहे कथमभेदाभाव इति तत्राऽऽह—गुणगुणित्वकृत इति । लक्षणया गृहीतयोरपि तयोर्नीलोत्पलपदार्थयोर्गुणगुणित्वकृतोऽतिशयो भेदलेशोऽपि भवत्येवेति योजना । अयं भावः—गुणत्वावान्तरजातिनीलत्ववाचिनीलपदेन गुणविशेषभूता नीलव्यक्तिर्लक्षणया सिद्ध्यन्ती सिध्येन्नोत्पलद्रव्याभिन्ना तथा द्रव्यत्वावान्तरजात्युत्पलत्ववाचि यदुत्पलपदं तेन द्रव्यविशेषोत्पलव्यक्तिर्लक्षणया सिध्येन्न नीलगुणाभिन्नाऽनयोर्गुणगुणिभावेन भेदस्य प्रतीयमानस्यानपवादात् । न च सन्मात्रमेवाभ्यां पदाभ्यां लक्ष्यत इति वाच्यं लक्ष्यमाणयोर्व्यक्त्योः सन्मात्रत्वाभावात् । न हि गुणगुणिभावेन विवेकतः प्रतीयमानयोर्व्यक्त्योः सन्मात्रत्वं संप्रतिपन्नं येन व्यक्तिलक्षणा सन्मात्रविषया स्यात् , व्यक्त्यनुगताखण्डसन्मात्रलक्षणायां लक्षितलक्षणाप्रसङ्गात् । तथा च स्यादस्यात् , व्यक्त्यनुगताखण्डसन्मात्रलक्षणायां लक्षितलक्षणाप्रसङ्गात् । तथा च स्यादतिप्रसङ्गात्सर्वव्यवहारलोपोऽन्ततो गत्वा सर्वपदानां न सन्मात्रार्थत्वाव्यभिचारादिति ॥ २३० ॥

---

* नीलमुत्पलमित्यादिवाक्येषु विरोधे तु तत्राप्यस्तीति प्रतिपादयिष्यत्यनन्तरश्लोक इति भावः ।

सु० टी०--तर्हि प्रकृष्टप्रकाशादावपि संमृष्टार्थतापत्तिः प्रकृष्टप्रकाश-त्वजात्याश्रयव्यक्त्योर्गुणगुणित्वकृतभेदेन मुख्यार्थान्वयसंभवाच्चन्द्रव्य-क्तिपरत्वे वा लक्षितलक्षणापत्तेरित्याशङ्क्याऽऽह--

प्रकृष्टप्रकाशत्वजाती हि लोके
प्रकृष्टप्रकाशाभिधानाभिधेये ।
तयोरन्वये कीर्त्यमाने तु ताभ्यां
शशाङ्काभिधानाभिधेयं न लभ्यम् ॥ २३१ ॥

प्रकृष्टेति । प्रकृष्टप्रकाशपदवाच्ययोर्जात्योरन्वये ताभ्यां प्रतिपाद्यमाने समभिव्याहृतचन्द्रपदाभिधेयं चन्द्रस्वरूपं न लभ्येतेत्यर्थः ॥ २३१ ॥

अ० टी०--नन्वेवं नीलोत्पलादिवाक्यवत्संसर्गपरत्वसंभवात्प्रकृष्टप्रकाशादिवाक्यस्या-प्यखण्डार्थनिष्ठता नास्तीति नैष दृष्टान्तः सत्यादिवाक्यस्याखण्डार्थत्वे समञ्जस इति चेत्तत्राऽऽह--प्रकृष्टप्रकाशत्वजाती हीति । ताभ्यां प्रकृष्टप्रकाशाभिधानाभ्यां तयोः प्रकृष्टप्रकाशत्वजात्योः स्ववाच्ययोरन्वये संसर्गे कीर्त्यमाने तु शशाङ्काभिधानाभि-धेयमङ्गेन पृष्टं चन्द्रप्रातिपदिकार्थरूपं न लभ्यमित्यबुभुत्सितार्थप्रतिपादनपरतयाऽस्यानव-धेयवचनत्वापत्तिरित्यतो लक्षणयाऽखण्डार्थपरत्वमस्याभ्युपेयमित्यर्थः । प्रकृष्टप्रकाशयोः संतमसखद्योतगतयोश्चन्द्रे संकीर्णत्वेऽपि तयोर्जातिवचननिर्देशो वैशेषिकप्रक्रियानादरेणेति * द्रष्टव्यम् ॥ २३१ ॥

सु० टी०--न लभ्यतां किं तत इति चेत्तत्राऽऽह--

शशाङ्काभिधानाभिधेये हि पृष्टे
तदेवोत्तरेणापि निर्णेयमत्र ।
प्रकृष्टप्रकाशत्वजात्यन्वयोऽयं
तदाक्षिप्ततद्व्यञ्जकव्यक्तिनिष्ठः ॥ २३२ ॥

शशाङ्केति । चन्द्रप्रातिपदिकार्थस्य पृष्टत्वात्प्रश्नोत्तरयोश्च तुल्यविषय-तानियमादन्यथानपेक्षितवादित्वापत्तेरुत्तरमपि तत्परमेव वक्तुमुचित-मित्यर्थः । (+संमृष्टाभिधाने कथमुत्तरस्यातत्परत्वमिति चेत्तत्राऽऽह--

---

* अन्यथा सांकर्याज्जातित्वमेव न स्यादिति भावः। + क. पुस्तके नायं ग्रन्थः।

---

१ क. ग. काश्यादा°।

मकृष्टेति। प्रकृष्टप्रकाशपदवाच्यजात्योर्योयं परस्परान्वयः स साक्षादसंभवन्ननुपपत्त्या तद्व्यञ्जकगुणव्यक्त्योरन्वये पर्यवस्यति न चन्द्रव्यक्ता-वित्यर्थः ) ॥ २३२ ॥

अ० टी०—नन्वस्य चन्द्रप्रातिपदिकार्थत्वमेव किमित्यभ्युपेयते येन तदप्रतिपादनेऽस्यानवधेयवाक्यत्वापत्तिरिति चेत्तत्राऽऽह—शशाङ्काभिधानाभिधेये हि पृष्ट इति। यदुद्दिश्य प्रश्नप्रवृत्तिस्तदेवोत्तरवाक्येनापि निर्णेयमिति हि न्यायमार्गः। तदत्रास्मिञ्ज्योतिर्मण्डले कश्चन्द्रपदाभिलप्य इति चन्द्रप्रातिपदिकार्थस्यैव तदनभिज्ञेन पृष्टत्वात्तत्स्वरूपप्रतीत्यनुरूप एवोत्तरवाक्यप्रवृत्तिर्युक्ता तत्र प्रकर्षप्रकाशवैशिष्ट्यस्य प्रतिपादने यश्चन्द्रः स प्रकृष्टप्रकाश इति पदयोजना भवेत्तत्र चानवबुद्धोद्देश्यचन्द्रस्वरूपस्य श्रोतुर्वैशिष्ट्यप्रतीतिः कस्येदं वैशिष्ट्यमिति साकाङ्क्षत्वान्न पर्यवसितार्था जायेत। यदा तु यः प्रकृष्टप्रकाशः स त्वद्बुभुत्सितश्चन्द्रपदाभिधेय इति योजना तदा स्वावबुद्धप्रकर्षप्रकाशशब्दार्थतया तत्संबन्धिनि चन्द्रस्वरूपे भवत्येव पर्यवसिता मतिरिति प्रकृष्टप्रकाशपदयोश्चन्द्रस्वरूपमात्रपर्यवसितत्वमेवोत्तरवाक्येऽपि युक्तं न वैशिष्ट्यपरमित्येतमर्थमभिप्रेत्य प्रकृतयोः पदयोर्लक्षणया चन्द्रैकव्यक्तिनिष्ठत्वं दर्शयति—प्रकृष्टप्रकाशत्वजात्यन्वयोऽयमिति। वाच्ययोर्जात्योः पदसामर्थ्यसिद्धयोरन्वयः प्रतीयमानोऽयं ताभ्यामाक्षिप्ता या तद्व्यञ्जिका व्यक्तिश्चन्द्रपदवाच्या तन्निष्ठस्तत्रैव पर्यवसित इति योजना। सामान्यान्वयस्यान्यत एव सिद्धत्वादप्रतिपाद्यत्वात्ततो विशेषान्वयस्तावद्वाक्यार्थोऽङ्गीकर्तव्यः। स च वाच्यप्रकृष्टत्वप्रकाशत्वाभ्यां द्वाराभ्यां तदाश्रयव्यक्तावेव पर्यवस्यति। तत्र न लक्षणं विनेति लक्षणाऽत्रावश्यंभाविनी लक्ष्यव्यक्त्योश्च स्वरूपतो भेदानिरूपणादखण्डार्थताऽपि सिद्धेति भावः ॥ २३२ ॥

सु० टी०—न चासौ चन्द्रप्रातिपदिकार्थ इत्याह—

शशाङ्काभिधानाभिधेयो न चेष्टः<br>
शशाङ्कस्य तेजोविशेषत्वहेतोः।<br>
ततश्चोपपन्ना जहल्लक्षणाऽतः<br>
पुरोक्ता पदाभ्यामखण्डार्थसिद्धिः ॥ २३३ ॥

शशाङ्केति। कुत इत्याह बुभुत्सितस्य तेजोविशेषात्मकत्वेन गुणद्वयसंसर्गानात्मकत्वात्। अतः प्रकृष्टप्रकाशपदाभ्यां जातिलक्षणवाच्य-

त्यागेन तात्पर्यविषयचन्द्रव्यक्तिलक्षणादखण्डार्थत्वं जहल्लक्षणातो न तु भागलक्षणातः शबलवाचित्वाभावादित्यर्थः । ततश्चाखण्डार्थमात्रे दृष्टान्तः—पुरोक्तेति । प्रकृष्टप्रकाशध्वनी इत्यत्रोपक्रान्तेत्यर्थः ॥ २३३ ॥

अ० टी०—एतमेव पूर्वपद्ये तदाक्षिप्ततद्व्यञ्जकव्यक्तिनिष्ठ इत्युपक्षिप्तमर्थमुपपादयति—शशाङ्केति । कुतो नेष्ट इति तत्र हेतुमाह—शशाङ्कस्येति । अयमर्थः—शशाङ्कपदाभिलप्योऽर्थो हि तेजोविशेषो व्यक्तिरेव तस्याश्चैकत्वान्न तत्र जातिरस्त्यतः प्रकृष्टप्रकाशशब्दस्य शशाङ्काभिधानाभिधेयः शशाङ्कत्वजातिर्वाच्योऽर्थो न चेष्ट इति । फलितमाह—ततश्चेति । जहल्लक्षणा प्रकृष्टत्वप्रकाशत्वधर्मरूपवाच्यार्थपरित्यागेन तदाधारतेजोविशेषात्मकव्यक्तिमात्रनिष्ठा पदवृत्तिरुपपन्नेत्यर्थः । ततश्चैकव्यक्तिनिष्ठत्वे पदयोः सिद्धे सति पुरोक्ताऽखण्डार्थसिद्धिरुपपन्ना पदाभ्यामित्यर्थः ॥ २३३ ॥

सु० टी०—तथाऽपि नाखण्डार्थसिद्धिर्जातिवाचिभ्यां पदाभ्यां स्वाश्रयव्यक्ती समुल्लङ्घ्य चन्द्रव्यक्तिलक्षणानुपपत्तेस्तथात्वे वा लक्षितलक्षणेति चेन्न चन्द्रस्थप्रकर्षप्रकाशगुणयोश्चन्द्रतावन्मात्रत्वादित्याह—

प्रकर्षः प्रकाशातिरिक्तो न चात्र
प्रकाशः प्रकर्षातिरिक्तो न चात्र ।
बहिश्चन्द्रमस्ति स्वरूपातिरेक-
स्तयोश्चन्द्रमस्येकतैवातिमात्रम् ॥ २३४ ॥

प्रकर्ष इति । बहिश्चन्द्रं चन्द्रादन्यत्रान्धकारादौ प्रकर्षस्य खद्योतादौ प्रकाशस्य च व्यक्तिभेदेऽपि तत एव पदयोरपौनरुक्त्येऽपि चन्द्रे तयोरन्योन्यं चन्द्रव्यक्तेश्चात्यन्तमैक्यमस्त्येवेत्यर्थः ॥ २३४ ॥

अ० टी०—नन्वेवमपि नाखण्डार्थत्वसिद्धिः प्रकर्षप्रकाशाख्यधर्मयोरन्योन्यं चन्द्रव्यक्तेश्च भेदादिति चेत्तत्राऽऽह—प्रकर्ष इति । अन्यत्र तमःखद्योतगतयोः प्रकर्षप्रकाशयोर्भेदेऽप्यत्र चन्द्रस्वरूपे न तयोरन्योन्यं स्वरूपतोऽतिरेकश्चन्द्रव्यक्तेश्च न ताभ्यामतिरेक इत्यर्थः । कुत इति चेत्तत्राऽऽह—बहिश्चन्द्रमस्तीति । तयोः प्रकर्षप्रकाशयोर्बहिश्चन्द्रं चन्द्राद्बहिश्चन्द्रस्वरूपात्पृथक्स्वरूपातिरेकः स्वरूपतो भेदो न चेत्यनुषज्यते । तस्मात्तयोश्चन्द्रमस्यतिमात्रमत्यन्तमेकतैव चन्द्रमस्तैव परमार्थतस्तयोरित्यन्यादृशस्य चन्द्रे शब्दस्यानिरूपणादित्यर्थः ॥ २३४ ॥

सु० टी०—तर्हि साङ्कर्यापत्तेरत्रापि भेद एवास्त्विति चेन्नाननुभवादित्याह—

न चन्द्रप्रकाशप्रकर्षं प्रकाशा-
त्तदीयात्पृथक्कश्चिदुत्पश्यतीह ।
तथाऽस्य प्रकर्षप्रकाशं प्रकर्षा-
त्ततो नानयोरस्ति भेदे प्रमाणम् ॥ २३५ ॥

न चन्द्रेति । प्रकाशप्रकर्षो हि प्रकाश एव तथेतरोऽपि प्रकर्षात्मा न हि चन्द्रे तयोः कश्चिद्गन्धरसादाविव भेदं पश्यतीति तदनुपलम्भात्तादृक्प्रकाशात्मक एव चन्द्र इति न भेदगन्धोऽपीत्यर्थः । नीलमुत्पलं सुगन्धीत्यादौ तु रूपगन्धादेर्भेदोपलम्भाद्युक्तं संसृष्टार्थत्वमिति ॥ २३५ ॥

अ० टी०—कुतो भेदाभाव इति चेदभेदानुभवविरोधादेवेत्याह—न चन्द्रप्रकाशप्रकर्षमिति । चन्द्रे यः प्रकाशस्तस्य च यः प्रकर्षस्तं प्रकाशात्प्रकाशस्वरूपात्तदीयाच्चान्द्रमसात्पृथग्विविक्तमिह व्यवहर्तृप्राणिषु न कश्चिदुत्पश्यति न कोऽपि सम्यग्भेदं पश्यतीति यावत् । यथा प्रकर्षस्यास्य प्रकाशाभेदस्तथा प्रकाशस्याप्यस्य प्रकर्षाभेद इत्याह—तथाऽस्येति । प्रकर्षात्तदीयान्न पृथक् कश्चिदुत्पश्यतीहेति पूर्वेणान्वयः । ततो भेदानुभवाभावादभेदेनैवानुभवादनयोर्भेदे नास्ति मानमुत्प्रेक्ष्यमाणानां मानानामबाधितानुभवविरोधादित्यर्थः । अर्थाच्चन्द्रव्यक्तेश्चानयोरभेद उक्तो वेदितव्यस्तस्याश्च प्रकर्षप्रकाशातिरिक्तस्वरूपस्यानुभवाभावाद्भेदकल्पनायां प्रमाणाभावाच्चेति । अयं भावः—रूपरसादिवत्प्रकर्षप्रकाशयोर्न स्वरूपभेदः कस्य चित्स्फुरति ततश्चेदृशप्रकाशातिरिक्तस्याऽऽकारस्य चन्द्रेऽभावादेव चन्द्रस्य स्वरूपमिति निश्चीयतेऽस्याश्च प्रतीतेर्बाधकादर्शनाच्चन्द्रस्वरूपमात्रपर्यवसितौ प्रकृष्टप्रकाशशब्दाविति ॥ २३५ ॥

सु० टी०—एवं विरुद्धासमभिव्याहृतमपि प्रकृष्टादिवाक्यमखण्डार्थं चेत्सुतरां ब्रह्मादिसमभिव्याहृतसच्चिदादिशब्दा इत्युपसंहरंस्तत्त्वमसीत्यत्रापि तदुपसंहरति—

तथा सच्चिदानन्दशब्दास्तदर्थं
तथा तत्त्वमावात्मनो ब्रह्मभावम् ।

---

१ क. नानुभ° ।

विरोधान्मिथो लक्षणावर्त्मनेमौ
किमर्थं न संभूय वक्तुं समर्थौ ॥ २३६ ॥

तथेति । प्रकृष्टप्रकाशादिशब्दवदित्यर्थः । तदर्थं तत्पदलक्ष्यमखण्डमित्यर्थः । यदा गुणशब्दानामप्यखण्डार्थत्वं तदा शबलार्थौ तत्त्वंशब्दौ स्वार्थविरोधात्कथमखण्डं लक्षयितुमशक्ताविव्यर्थः ॥ २३६ ॥

अ० टी०—एवं दृष्टान्तेऽखण्डार्थपरत्वं वाक्यस्योपपाद्य दार्ष्टान्तिकेऽपि तत्परत्वं सिद्धमित्येतदाह—तथा सच्चिदानन्देति । यथा प्रकृष्टः प्रकाश इति च पदे चन्द्रस्वरूपमात्राकाङ्क्षायां प्रवृत्ते लक्षणया चन्द्रस्वरूपं प्रतिपादयतस्तथा सच्चिदादिशब्दा ब्रह्मस्वरूपमात्राकाङ्क्षायां प्रवृत्तास्तदर्थं तत्पदार्थस्वरूपं संभूय लक्षणया कस्माद्वक्तुं न समर्थाः किं तु प्रागुक्तवर्त्मना समर्था एवेति योजना । तथा तथा च सति सत्यादिपदनामखण्डैकरसब्रह्मपरत्वे सतीतियावत् । तत्त्वमौ तत्पदं त्वंपदं चेमौ शब्दावात्मनः परिशोधितस्य प्रतीचो ब्रह्मभावं सत्यादिलक्षणतत्पदार्थानन्यत्वं स्ववाच्यार्थांशयोर्मिथो विरोधात्तदेकदेशाविरुद्धार्थलक्षणया संभूय वक्तुं किमर्थं न समर्थाविति योजना । तथा च ब्रह्मात्मविषयावान्तरवाक्यैस्तात्पर्येण प्रतिपादिते तत्त्वे स्वरूपतो भेदलेशस्याप्यसंभवान्महावाक्यैरप्यखण्ड एवार्थः पदार्थपरिशोधनदशायां निरस्यमानोपाधिभेदवशात्प्राप्तभेदानुवादेनाऽऽत्मैव ब्रह्म ब्रह्मैवाऽऽत्मेति प्रतिपाद्यत इत्यत्र न कोऽपि विघ्न इति सिद्धमिति भावः ॥ २३६ ॥

सु० टी०—नन्वात्मनो ब्रह्मभावस्य पयसो दधिभाववत्संसर्गरूपत्वात्कथमखण्डत्वमिति चेल्लक्ष्यांशाभेदादित्याह—

प्रत्यक्तत्त्वं लक्षयेत्त्वंपदार्थ-
स्तच्छब्दार्थो लक्षयेदद्वितीयम् ।
एवं पूर्णं प्रत्यगात्मानमेतौ
शब्दौ ब्रूतो लक्षणावर्त्मनैव ॥ २३७ ॥

प्रत्यगिति । त्वंपदं हि स्वार्थाच्छबलाद्दुःखित्वाद्यंशमतात्त्विकं हित्वा स्वांशं लक्षयेत्तत्पदमपि पारोक्ष्यादि विसृज्याद्वितीयमात्मांशमेवेत्येवमेतावुक्तलक्षणया पूर्णमात्मानमेव ब्रूत इत्यखण्डार्थतेत्यर्थः ॥ २३७ ॥

अ० टी०—किमत्र लक्ष्यं लक्षकं वेति वीक्षायां पूर्वोक्तमेव स्मारयति—प्रत्यगिति । त्वंपदार्थस्त्वंशब्दवाच्योऽर्थः पदप्रवृत्तौ द्वारभूतः प्रत्यक्तत्त्वं याथात्म्यं चैतन्यैकस्वभावं लक्षयेत् । तथा तच्छब्दार्थो वाच्यरूपोऽद्वितीयं ब्रह्मतत्त्वं लक्षयेत् । विरुद्धांशप्रहाणेनावि-

रूढार्थस्वरूपमात्रे पर्यवसितं स्वावाचकं पदद्वयं संपादयत इत्यर्थः । यद्वा प्रत्यक्तत्त्वं त्वंपदार्थ इति लक्ष्यस्वरूपनिर्देशः । लक्षयेत्त्वंपदमिति शेषः । उत्तरत्राप्येवं योजना । अखण्डतार्थस्यैतावता कथं सिद्धेति तदाह—एवमिति । अक्षरार्थः सुगमः । अध्यात्माधिभूतरूपोपाध्यंशोद्धारेण स्वस्वार्थलक्षकत्वात्परिच्छेदप्रहाणे सत्यपरिच्छिन्नैकरसं चिदात्मानमेवैतौ शब्दौ ब्रूतो ज्ञापयत इति विवक्षितोऽर्थः ॥ २३७ ॥

सु० टी०—ननु लक्षणया त्यक्तयोरपि दुःखित्वपारोक्ष्ययोः कथं निवृत्तिर्न हि गङ्गादेस्तीरादिलक्ष्यज्ञानाद्विनाशो दृश्यते ततश्चाखण्डबोधेऽपि न प्रागवस्थातः कश्चिद्विशेष इति विफलमिदं वेदान्तजन्यं ज्ञानमिति चेन्नेत्याह—

पारोक्ष्यं च ब्रह्मणि प्रत्यगर्थे
दुःखित्वं च ध्वान्तसंभूतमाहुः ।
सम्यग्ज्ञानध्वस्तमोहस्य पुंसः
प्रध्वंसेते हेत्वभावे फलत्वात् ॥ २३८ ॥

पारोक्ष्यं चेति । ब्रह्मणि पारोक्ष्यादि प्रतीचि च दुःखित्वादि ब्रह्माज्ञानजन्यत्वादसत्यमतो ब्रह्मज्ञानेन स्वहेत्वज्ञाननिवृत्तौ ते बाध्येते फलत्वादज्ञानकार्यत्वात्सविलासाज्ञाननिवृत्तेर्बाधत्वादित्यर्थः । गङ्गादेस्तु तीराद्यज्ञानाजन्यत्वान्न तज्ज्ञानेन बाध इति ॥ २३८ ॥

अ० टी०—नन्वेवमपि न वाक्यार्थस्यैकरसता संभवति यतः पदाभ्यां परित्यक्तस्याध्यात्माधिभूतलक्षणस्योपाधेः पदार्थस्वरूपेऽवस्थितिस्तयोर्लक्ष्यमाणवस्त्वाश्रितत्वात् । न हि सोऽयंपदाभ्यां भागपरित्यागेन लक्ष्यमाणदेवदत्तस्वरूपैक्येऽपि परित्यक्तदेशादिवैशिष्ट्यमपगच्छत्यतो न पूर्वावस्थातः कोऽप्यतिशय इत्याक्षेपमाशङ्कमानः परित्यक्तांशस्य पुनरवस्थाने कारणाभावात्प्रकृतवाक्यार्थे नाक्षेपावसर इति प्रकृतोपयुक्तमर्थमाह—पारोक्ष्यं चेति । ब्रह्मणि तत्पदार्थे यत्पारोक्ष्यं प्रत्यगर्थे त्वंपदार्थे च यद्दुःखित्वं तदुभयं ध्वान्तसंभूतं चिदविद्याविलासितमाहुर्वेदान्ततत्त्वविद इति शेषः । यतोऽयमर्थो निर्णीतोऽतः सम्यग्ज्ञानेन ध्वस्तो मोहः सर्वविकारमूलकारणं यस्य तस्य पुंसः पदार्थद्वयगतपारोक्ष्यदुःखित्वे प्रध्वंसेते नाऽऽत्मानं धारयत इत्यर्थः । तत्र लौकिकं न्यायं दर्शयति—हेत्वभाव इति । बीजाभावे तत्फलाभाव इति न्यायादित्यर्थः । तथा च तद्देशकालवैशिष्ट्यस्याविद्यामयत्वाभावाद्देवदत्तस्वरूपज्ञानेन न तन्निवर्तत इह तु सद्वितीयत्वादेरात्माविद्याविलासत्वादविद्यानिवृत्तौ निवर्तते शुक्तितत्त्वज्ञानेन शुक्त्यज्ञाननिवृत्ताविव तत्कल्पितं रजतत्वमिति भावः॥ २३८ ॥

सु० टी०--ननु गुरुमते प्रथमावगतं क्रियाकार्यत्वमुत्सृज्य विवेकदशायां वैदिककार्ये लिङादेरिव तत्त्वमादेरप्यज्ञस्य प्रथमावगतशबलशक्तिमुत्सृज्य विवेककालावगताखण्डार्थ एव शक्तिराश्रीयतां किं लक्षणयेति चेन्न प्रवृत्तिनिमित्तासंभवादित्याह--

षष्ठीजातिगुणक्रियादिरहिते सर्वस्य विज्ञातरि
प्रत्यक्षे परिवर्जिताखिलजगद्द्वैतप्रपञ्चे दृशौ ।
संत्यक्तव्यवधानके परमके विष्णोः पदे शाश्वते
त्वय्यज्ञानविनिर्मिता न हि गिरो मुख्यप्रवृत्तिक्षमाः॥२३९॥

षष्ठीति। त्वयि निर्विशेषे तत्त्वमादिगिरो न मुख्यवृत्तिसमर्थाः। कुत इत्यपेक्षायां विशिनष्टि षष्ठीत्यादिना। षष्ठी संबन्ध इत्यर्थः। संबन्धनिमित्ता हि समासतद्धितादयो जातिनिमित्ता गवादयः शब्दा गुणनिमित्ताः शुक्लादयः क्रियानिमित्ताः पाचकादयः स्वरूपनिमित्ता डित्थादयः। तत्र ब्रह्म न तावत्संबन्धनिमित्तैः शब्दैरभिधेयमसङ्गत्वान्न जातिगुणक्रियानिमित्तैरधर्मकत्वान्नापि स्वरूपनिमित्तेन व्यवहारातिवर्तिनि स्वरूपे तन्निबन्धनव्युत्पत्त्ययोगात्। अत एवाऽऽह--सर्वस्य विज्ञातरीति। सर्वसाक्षिणि सर्वान्तरे सर्वशक्तिग्राहकमानागोचरे। तर्हि नित्यपरोक्षः स्यान्नेत्याह--प्रत्यक्ष इति। विज्ञातृत्वेनापरोक्षत्वेऽप्यज्ञैरनिरूप्यमाणे। तर्हि विज्ञव्युत्पत्तिविषयत्वादस्तु विज्ञातृपदवाच्यत्वमिति नेत्याह--परीति। तदपि विज्ञेयापेक्षत्वान्नाऽऽत्मनः स्वरूपमिति न ज्ञेयसंबन्धहीनस्य विज्ञातृपदवाच्यत्वमपीत्यर्थः। तर्हि किमस्य स्वाभाविकं रूपमिति तत्राऽऽह--दृशाविति। किं तदेतादृशं वस्तु जगद्विलक्षणमिति तदाह--परमक इति। ननु जगत्कारणस्य पदं जगत्संबन्धि कुतो नेत्यत्राऽऽह--शाश्वत इति। न तद्वस्तुतः कारणमधिष्ठानमात्रत्वादित्यर्थः। तर्ह्यधिष्ठानत्वेन व्यवहितत्वात्परोक्षं स्यादिति नेत्याह--संत्यक्तेति। न हि तत्पदमात्मनो व्यवहितं स्वरूपत्वाद्व्यवधानस्य कल्पितत्वादित्यर्थः। अवस्तुभूताश्च गिरो न वस्तुनि संबन्धमर्हन्तीत्याह--ज्ञानेति। वस्तुतः स्वप्रकाशत्वेऽप्यावृतत्वाच्छुद्धे च किंचिल्लिङ्गाभावाद्व्युत्पत्तिं विना शब्दाप्रवृत्तेर्न तत्र शक्तिग्रह इति तत्त्वम्॥ २३९ ॥

अ० टी०—यद्येवं प्रपञ्चास्पृष्टाद्वितीयात्मतत्त्वं प्रतिपिपादयिषितं वेदान्तानां तर्हि तदेव साक्षाच्छब्दशक्त्यैव प्रतिपाद्यतां किमेवं लक्षणाप्रयासेनेति चेन्मैवं शब्दस्याऽऽत्मतत्त्वे प्रवृत्तिनिमित्ताभावादित्याह—**षष्ठीजातीति**। षष्ठीशब्देन तदर्थः संबन्धो लक्ष्यते संबन्धराहित्याद्राजपुरुषशब्दवद्राजपुरुषे न ब्रह्मणि शब्दप्रवृत्तिरित्यर्थः। जातिर्गोत्वादिसामान्यं तन्निमित्तो गोशब्दो यथा द्रव्ये प्रवर्तते न तथाऽत्रेत्याह—**जातिरहित इति**। एकव्यक्तिकत्वाज्जातिराहित्यम्। नीलादिशब्दा हि द्रव्येषु गुणनिमित्ताः प्रवर्तन्ते नीलमुत्पलमित्यादौ न तथाऽत्रेत्याह—**गुणरहित इति**। 'केवलो निर्गुणश्च' [श्वे० ६।११] इति श्रुतेर्गुणराहित्यम्। क्रियानिमित्तकाश्च पा[च]कादयो नात्र क्रियाऽपीत्याह—**क्रियारहित इति**। 'निष्कलं निष्क्रियम्' [श्वे० ६। १९] इति श्रुतेरस्य क्रियाराहित्यमादिपदात्स्वरूपसंकेतसादृश्यादिग्रहः। न ह्यस्य डित्थादिशब्दवद्गोत्वादिजातौ गोत्वादिशब्दवद्वा स्वरूपतः संकेत उपपद्यते व्यवहारागोचरत्वादस्य 'अदृष्टमव्यवहार्यम्' [माण्डू० ७] इति श्रुतेः। यथा सादृश्यनिबन्धनः शब्दश्चन्द्रमुखत्वादिर्न तथाऽस्य केनचित्सादृश्यमस्ति गुणावयवाद्यभावात् 'न संदृशे तिष्ठति रूपमस्य' [कठ० ६। ९] इति श्रुतेश्चेत्यर्थः। पष्ठ्यर्थादिराहित्ये हेत्वर्थतयाऽऽत्मानं विशिनष्टि—**परिवर्जिताखिलजगद्द्वैतप्रपञ्च इति**। परित्यक्ताखिलानात्मद्वैतविस्तारे कार्यकारणधर्मवर्जित इति यावत्। षष्ठ्यर्थादयो हि कार्यकारणात्मके वस्तुन्येवोपलभ्यन्ते नायं तथेति षष्ठ्यादिरहित इत्यर्थः। अत्र हेत्वर्थं विशेषणं—**सर्वस्य विज्ञातरीति**। अशेषस्य विज्ञातुर्न विज्ञेयधर्मसंसर्ग इत्यर्थः। स किं नित्यमपरोक्षस्तर्हि स नास्तीत्यपि शङ्का स्यादिति नेत्याह—**प्रत्यक्ष इति**। नित्यापरोक्ष इत्यर्थः। प्रत्यक्षत्वे हेतुः—**दृशाविति**। चित्स्वरूपस्याऽऽत्मनः परोक्षत्वे हेत्वभावात्सर्वावस्थाननुसंधानप्रसङ्गाच्चेति भावः। पारोक्ष्याभावे हेत्वन्तरमाह—**संत्यक्तव्यवधानक इति**। व्यवहितोऽर्थो हि द्रष्टुः परोक्षो भवति न त्वात्माऽऽत्मनोऽव्यवहितो न परोक्ष इत्यर्थः। स किमहंकारादिरूपो नेत्याह—**परमक इति**। पर एव परमः परम एव परमकोऽहंकारादिभ्यस्तत्कारणाविद्यायाश्च परस्तादुपलक्ष्य इत्यर्थः। 'अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः' [मुण्ड० २। १। २] इति श्रुतेः। यद्वोक्तवस्तुनोऽपरोक्षद्रूपत्वेऽप्यपुरुषार्थसंबन्धादुपेक्ष्यमेतदिति तत्राऽऽह—***परमक इति**। परमानन्दस्वभाव इत्यर्थः। उक्तविशेषणवस्तुस्वरूपमाह—**विष्णोः पद इति**। परमात्मस्वरूप इत्यर्थः। विष्णुपदशब्दस्य पुराणोक्तवैकुण्ठलोकविषयत्वशङ्कां वारयति—**शाश्वत इति**। सदैकरूपे नित्य इत्यर्थः। स किं प्रत्यगात्मनोऽर्थान्तरं हन्त तर्हि परोक्ष एवेत्यत आह—**त्वयीति**। प्रत्यक्स्वरूप इत्यर्थः। किं च शब्दस्यापि प्रपञ्चान्तःपातितया मायामयत्वान्न सत्यवस्तुनि संबन्ध उपपन्न इत्याह—**अज्ञानविनिर्मिता इति**॥ २३९॥

---

* कशब्दस्य सुखवाचित्वात्।

सु० टी०—नन्वात्मनो मनोवेद्यत्वान्न व्यवहारातीतत्वमतः कथं तत्र गिरो न प्रवर्तन्त इति चेत्तत्राऽऽह—

आस्तामत्र वचःप्रवृत्तिविरहः प्रत्यक्त्वहेतोर्दृशि-
व्यापाराय मनोऽपि न प्रभवति भ्राम्यत्पराग्भूमिषु ।
एवं चेदखिलप्रमाणपदवीः षोढा विभिन्ना भवा-
नुल्लङ्घ्य व्यवतिष्ठते त्वयि गिरः स्यान्मुख्यवृत्तिः कथम्॥२४०॥

आस्तामिति । तत्र वचो न प्रवर्तत इत्यल्पं मयोक्तं वस्तुतः सर्वान्तरं मनोऽपि न तत्र व्याप्रियत इति क्व शक्तिग्रहावकाश इत्यर्थः । कुत इति चेत्तत्राऽऽह—प्रत्यक्त्वेति । इन्द्रियेभ्यः प्रतीपाञ्चनादित्यर्थः । प्रवर्ततां मनः प्रतीच्यपीति चेन्नेत्याह—भ्राम्यदिति । प्रमाणसहकारेण बाह्येषु व्याप्रियमाणं न तत्प्रत्यग्ग्रहणयोग्यमित्यर्थः । 'पराञ्चि खानि' [ कठ० ४ । १ ] इति श्रुतेः । एवं च 'मनसा ह्येव पश्यति' [ मैत्र्यु० ६ । ३० ] इत्यादिश्रुत्या मनस एव सर्वग्राहकत्वान्मनोविषयत्वाभावे सर्वमानाविषयत्वान्न वाग्विषयत्वमित्याह—एवं चेदिति ॥ २४० ॥

अ० टी०—इदानीं मनोविषयत्वमप्यात्मनो निराकुर्वंस्तस्य सर्वप्रमाणाविषयत्वे कैमुतिकं न्यायं दर्शयति—आस्तामत्रेति । अत्राऽऽत्मनि शब्दप्रवृत्तिनिमित्तानामसंभवाद्वचसां प्रवृत्तिविरहो य उपपादितः स तिष्ठतु तावत्तत्र किं वक्तव्यं यतो मनोऽपि यत्र दृशिव्यापाराय न प्रभवति । कीदृशं पराग्भूमिषु भ्राम्यत्सर्वानात्मवस्तूनि विषयीकुर्वत् । कस्मादित्यत आह—प्रत्यक्त्वहेतोरिति । आत्मन आन्तरत्वादविषयत्वादित्यर्थः । मनोवृत्त्युत्पादनद्वारा हि सर्वप्रमाणानां विषयेषु प्रवृत्तिस्तद्यत्र न प्रभवति तत्र सर्वप्रमाणाविषयत्वं विशेषतः शब्दविषयत्वं च किमु वक्तव्यमित्याह—एवं चेदिति । एवं मनसोऽप्यविषयत्वे सति भवान्प्रत्यक्चिदात्मरूपः षोढा त्रिभिन्ना अखिलप्रमाणपदवीः सर्वप्रमाणप्रचारमार्गानुलङ्घ्य व्यवतिष्ठते । त्वयि गिरो वाक्यस्य पदस्य वा मुख्यवृत्तिः कथं स्यान्न कथमपि द्वाराभावादित्यर्थः ॥ २४० ॥

सु० टी०—ननु लक्षणागम्यत्वेऽप्यात्मनः कर्मत्वं[1] दुर्वारमिति नेत्याह—

आत्मानं न तु कर्मतामुपनयञ्छब्दो वदेल्लक्षणा-
मार्गेणापि यतः पराग्विषयवन्नास्येष्यते कर्मता ।

---

१ क. ग. °ति कथं श° ।

प्रत्यक्ता हि विरुध्यते यदि भवेदस्याऽऽत्मनः कर्मता
यद्यत्कर्म न तस्य तस्य भवति प्रत्यक्त्वभावो यतः॥२४१॥

आत्मानमिति । शब्दप्रमेयत्वेऽप्यविषयत्वेन फलाव्याप्यत्वान्नाऽऽत्मनः कर्मत्वमित्यर्थः । ननु मेयत्वादेव कर्मत्वमिति नेत्याह—यत इति । पराग्वस्तुन एव कर्मतया मेयत्वं प्रतीचस्त्वकर्मत्वेऽपि मेयत्वं वृत्तिव्याप्यत्वेन भवतीत्यर्थः । ( * नन्वात्मानं जानामीत्यनुभवादात्मनः कर्मत्वमिति नेत्याह—प्रत्यक्ता हीति । कर्मत्वे प्रत्यक्त्वविरोधः । अनुभवस्तु सामासान्तःकरणविषयज्ञानाध्यासरूपो नाऽऽत्मविषय इत्यर्थः । ) विरोधं कथयति—यद्यदिति । क्रियाव्याप्यस्य तत्फलशालिन इदंरूपस्य कर्मत्वं न कूटस्थस्य स्वप्रकाशस्याऽऽत्मनस्तद्विरुद्धस्येत्यर्थः ॥ २४१ ॥

अ० टी०—यद्येवमात्मतत्त्वं शब्दो मुख्यवृत्त्या विषयत्वाल्लक्षणावृत्त्या विषयी करोतीति मतं तदपि लोके लक्षणयोपस्थाप्यमानस्यापि तीरादेः शब्दकर्मत्वदर्शनादात्माऽपि कर्म वेदान्तशब्दानां स्यादिति चेन्नेत्याह—आत्मानमिति । लक्षणामार्गेणाप्यात्मानं बोधयञ्छब्दस्तं कर्मतामुपनयन्कर्मीकुर्वन्न तु वदेद्बोधयेदिति योजना । ननु तीरादिवन्मेयत्वादस्यापि कर्मता स्यादिति चेन्नानुभवविरोधादनुमानानुत्थानादित्याह—यत इति । कर्मत्वेन विषयत्वेऽनात्मत्वं प्रयोजकं न प्रमेयत्वमित्यभिप्रेत्य पराग्विषयवदित्युक्तं यथा पराग्विषयस्य कर्मताऽस्ति न तथाऽस्याऽऽत्मनः कर्मतेष्यते तथाऽननुभवादसंभवाच्च प्रमेयत्वं त्वकर्मणोऽपि कथंचित्प्रमाकृतातिशय+विशेषयोगितामात्रेणाप्युपपद्यत एवेति भावः । न केवलं कर्मत्वेनाननुभवादेवाऽऽत्मनः कर्मत्वानङ्गीकारः प्रत्यक्त्वकर्मत्वयोर्विरोधादपीति युक्तिमप्यत्रोपोद्बलयति—प्रत्यक्ता हीति । हिशब्देन सर्वसाक्षितया सर्वान्तरतया च परागर्थव्यावृत्ताकारेणाहमित्युल्लिख्यमानतया च प्रत्यक्ता श्रुत्यनुभवप्रसिद्धा द्योत्यते । कुतो विरुध्यत इति चेत्कर्मणः पराक्त्वेनैव व्याप्तत्वादित्याह—यद्यत्कर्मेति । प्रत्यक्त्वभावः प्रत्यक्ता ॥ २४१ ॥

सु०टी—अस्तु करणव्यापारविषयत्वादात्मनः कर्मत्वमिति चेन्नेत्याह—

वागादेः खलु बाह्यवस्तुविषयो नाऽऽत्मा यतो नाऽऽत्मनि
व्यापारं करणस्य कस्यचिदपि प्रेक्षामहे न्यायतः ।
यत्किंचित्करणं जगत्त्रयगतं तत्प्रत्यगात्मेक्षितं
बाह्ये वस्तुनि वर्ततेऽनुभवनं तत्र प्रमाणं मतम् ॥ २४२ ॥

वागादेरिति । वागादेर्हि करणस्य बाह्यमेव विषयो न त्वात्मा । ततश्च

---

* अयं ग्रन्थः क. पुस्तके नास्ति । + अज्ञाननिवृत्तिरूपः ।

मनःशब्दौ नाऽऽत्मविषयौ करणत्वाच्चक्षुर्वदिति। विपक्षे मनःप्रामाण्या-पत्तिः। न चेष्टापत्तिरात्मनः स्वप्रकाशत्वेन सुखादीनां च साक्षिभास्य-त्वेनासाधारणविषयाभावात्। अत एव न बहिर्मात्रविषयत्वमुपाधिर्हे-तुव्याप्तेस्तर्कमूलत्वेनास्य साध्याव्यापकत्वात्। तत्र सव्याप्तिकं हेतु-माह—यत इति। कस्यचिदपीति व्याप्त्यर्थम्। ननु विराजः सर्वज्ञस्याऽऽ-त्मनि वागादिव्यापारसंभवइति नेत्याह—न्यायत इति। न्यायमेवाह—यत्किंचिदिति। समष्टिव्यष्ट्यात्मकं ब्रह्मादिकीटान्तगतं करणमित्यर्थः। 'पराञ्चि' [ कठ० ४। १ ] इत्यादिश्रुतेरसंकोच एव न्यायः। करणस्य कर्तृव्यापारविषयतामाह—प्रत्यगिति। सामासान्तःकरणभासकेन तदवि-वेकाच्च प्रमातृत्वमापन्नेन साक्षिणेक्षितं सच्चिदाभं करणं जडमप्यजडव-त्प्रवर्तत इत्यनुभव एवात्र मानमित्यर्थः॥ २४२॥

अ० टी०—किं च मनःशब्दौ न साक्षादात्मविषयौ करणत्वाच्चक्षुरादिवदित्यनुमा-नादप्यात्मनोऽकर्मत्वसिद्धिरित्याह—वागादेरिति। 'पराञ्चि खानि' [ कठ० ४ १ ] इति श्रुतिसिद्धनिश्चयद्योतकः खलुशब्दः। बाह्यवस्त्वेव वागादेर्वाङ्मनसयोर्विषयो नाऽऽत्मा विषयः। कुतः कस्यचिदपि करणस्याऽऽत्मनि प्रतीचि व्यापारं न्यायतो न प्रेक्षामहे करणत्वाद्वाङ्मनसी चक्षुरादिवन्नाऽऽत्मगोचरव्यापारे इत्यर्थः। करणगोचरस्य जड-त्वनियमाज्जडस्य च करणाधिष्ठातृत्वासंभवादात्मनोऽपि तथात्वे जडत्वापत्तौ जगदान्ध्यप्र-सङ्गात्करणाव्यापारप्रसङ्गाच्चाऽऽत्मा न करणगोचर इति भावः। उक्तन्यायमेवानुभव-प्रमाणकतया विशदयति—यत्किंचिदिति। जगत्त्रयगतं यत्किंचित्करणमस्ति तत्प्रत्य-गात्मेक्षितं सत्स्वाभासव्याप्त्या प्रकाशितं सद्बाह्ये वस्तुनि द्रव्यगुणादौ वर्तते प्रवर्तते। किमत्र प्रमाणं तदाह—तथाऽनुभवनमिति। यथा—'केनेषितं पतति प्रेषितं मनः। केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति' [ के० १ ] इति प्रश्नपूर्वकं 'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः। अतिमुच्य धीराः' [ केनो० २ ] इति श्रुत्या निर्णीतं तथा विद्वदनुभवनं तत्रोक्तार्थे प्रमाणं मतमिष्टमिति योजना॥ २४२॥

सु० टी०—प्रतीचः शब्दाविषयत्वमुपसंहरति—

प्रत्यग्रूपमतो न शब्दविषयो बुद्धेरवेद्यं यतो
बुद्धिर्यत्र हि वर्तते स विषयः शब्दस्य नाऽऽत्मन्यसौ।

तेनाऽऽत्मानमसौ न गोचरयितुं शब्दः क्षमो मुख्यया
वृत्त्यैवेतरयाऽपि तेन न तया तस्याऽऽत्मनः कर्मता॥२४३॥

प्रत्यगिति । अतो न प्रत्यग्वस्तु शब्दस्य विषयः कर्मेत्यर्थः । यतो बुद्ध्यविषयस्तथाऽप्यौपनिषदत्वादस्तु शब्दविषय इति चेन्नेत्याह—बुद्धिरिति । बुद्ध्यविषयमात्मानं न शब्दः कर्मीकर्तुं शक्नोति बोधस्य बुद्धिविपरिणामत्वादित्यर्थः ॥ २४३ ॥

अ० टी०—इत्थं प्रत्यगात्मनोऽविषयत्वं प्रतिपाद्य विषयत्वायोग्यत्वादेवाविषयत्वमपि तस्येत्युक्तार्थं निगमयति—प्रत्यग्रूपमत इति । यतो बुद्धेरवेद्यत्वं प्रत्यग्रूपमतो हेतोर्न शब्दविषय इति संबन्धः । ननु व्यधिकरणमेतद्बुद्धिगम्यत्वाभावाच्छब्दगम्यत्वाभाव इति । न हि चक्षुरगम्यत्वाच्छब्दस्य श्रोत्रागम्यत्वं साध्यते । 'तं त्वौपनिषदं पुरुषम्' [ बृह० ३ । ९ । २६ ] इतिश्रुतिबाधितविषयं चैतत्स्यादित्याशङ्क्य व्यापाराय मनोऽपि न प्रभवतीत्युक्तं प्रपञ्चयन्परिहरति—बुद्धिर्यत्र हीति । यत्र विषये बुद्धिर्वर्तते शब्दस्य स एव विषयो नान्यः । न हि चक्षुःश्रोत्रयोरिवानयोर्विषयभेदः सर्वप्रमाणानां मनोगोचर एव प्रवृत्तेः । न हि मनःप्रत्याख्यायकस्यापि प्रमाणस्य विषयसंबन्धस्तदवबोधनं वोपपद्यतेऽतो यत्र शब्दवेद्यत्वं तत्र बुद्धिवेद्यत्वं यत्र बुद्धिवेद्यत्वाभावस्तत्र शब्दवेद्यत्वस्याप्यभाव इति निश्चीयते । एवमप्यात्मनि किमायातमिदमायातमित्याह—नाऽऽत्मन्यसाविति । असौ बुद्धिरात्मनि न वर्तते आत्मानं न विषयी करोतीत्यर्थः । व्यापकाभावाद्व्याप्यस्याप्यभाव इति फलितमुपसंहरति—तेनेति । असौ शब्द इति संबन्धः । वृत्त्यैवेत्यत्रैवकारो भिन्नक्रमो नैव कर्मतेति योज्यो नैव गोचरयितुमिति पूर्वेण वा योज्यः । इतरया लक्षणावृत्त्या तेनोक्तन्यायेन तया लक्षणया वृत्त्या बोध्यमानस्याप्यात्मनो न कर्मतेति सिद्धमित्यर्थः । औपनिषदत्वमस्यकर्मतयैवेति भावः ॥ २४३ ॥

सु० टी०—नन्ववेद्यत्वे प्रतीचः शास्त्रयोनित्वप्रतिज्ञाविरोधो वेद्यत्वे तु समन्वयात्मकहेतुविरोध इति शङ्कते—

नन्वज्ञेयमिदं भवेद्यदि मम प्रत्यक्स्वरूपं ततः
प्रामाण्यं कथमस्य वेदशिरसस्तत्र प्रतिज्ञायते ।
यन्मेयं न भवेत्कदाचिदपि तद्वेदान्तवेद्यं भवे-
दित्येतद्वचनं पराहतपदं वक्तुं न युक्तं बुधैः ॥ २४४ ॥

नन्विति । अवेद्ये मम स्वरूपे कथं वाक्यप्रामाण्यमित्यर्थः । वाक्यस्यैव

---

१ ग. °त्मामित्वा° । २ क. ग. अवोचे ।

महिमा यदज्ञेयमपि बोधयतीति चेन्न विरोधादित्याह—यदिति । तथा चैकवक्तृकवाक्यांशविरोधः प्रतिज्ञाविरोध इति निग्रहस्थानम् ॥ २४४ ॥

अ० टी०—यद्येवं सर्वप्रमाणाविषयत्वमात्मनो विशेषतः शब्दाविषयत्वमप्यभ्युपेयते तर्हि ब्रह्मण्येव वेदान्तवाक्यप्रामाण्यप्रतिज्ञाविरोधः शास्त्रयोनित्वाधिकर[ण]विरोधश्चेति चोदयति—नन्वज्ञेयमिदमिति । ममेदं प्रत्यक्स्वरूपं यद्यज्ञेयं सर्वप्रमाणाविषयो भवेत्ततस्तदा तत्र प्रत्यक्स्वरूपेऽस्य वेदशिरसः प्रामाण्यं कथं प्रतिज्ञायत औपनिषदैरिति योजना । अविषयेऽपि वेदान्ताः प्रमाणं किं न स्युरिति चेन्मैवं विरोधादित्याह—यन्मेयं न भवेदिति । स्पष्टार्थः । प्रमाणाविषयश्च प्रामाणिकश्चेति व्याहतवचनं विदुषां न शोभत इति भावः ॥ २४४ ॥

सु० टी०—अवेद्यत्वेऽपि न वाक्यप्रामाण्यमविरुद्धमिति समाधत्ते—

> नैतद्वस्तुनि कल्पितस्य जगतो वाक्यप्रसूतप्रमा-
> बुद्धिर्मूलधगिष्यते तव निजस्वाकारमात्रग्रहात् ।
> कर्मत्वं न करोति वाक्यजनिता बुद्धिः स्वरूपे तव
> स्वाकारग्रहणेन केवलमियं संसारमूलं दहेत् ॥ २४५ ॥

नैतदिति । वाक्यजा हि तव निजस्वरूपमात्राकारा बुद्धिवृत्तिः स्वाभिव्यक्तचिन्महिम्ना वस्तुन्यध्यस्तस्य प्रपञ्चस्य मूलभूतमज्ञानं दहतीत्युपपन्नम् । तत्र वाक्यस्य प्रामाण्यं सिद्धं तु निवर्तकत्वादिति न्यायादित्यर्थः । तर्हि तद्वृत्त्याहितसंवित्फलाश्रयत्वेनाऽऽत्मनः कर्मत्वं दुर्वारमिति चेन्नेत्याह—कर्मत्वमिति । संविदात्मके[१] संविदन्तराजननात्कर्मत्वं फलव्याप्यत्वं न करोतीत्यर्थः । संविदजनने कथमज्ञाननिवर्तकत्वमित्यत्राऽऽह—स्वाकारेति । इयं वृत्तिरात्माकारतामात्रेणैव संवित्फलं विनाऽप्यविद्यां निवर्तयेदात्मन एव संविद्रूपस्य वृत्त्यवच्छिन्नस्य फलस्थानीयत्वाद्घटादेस्तु संविद्रूपत्वाभावादज्ञाननिवृत्तावस्ति संविदन्तरापेक्षेति युक्तं कर्मत्वमित्यर्थः ॥ २४५ ॥

अ० टी०—आत्मतत्त्वस्याविषयत्वेऽपि तस्मिन्वेदान्तप्रामाण्यमविरुद्धमिति परिहरति—नैतदिति । नैतदस्मद्वचनं पराहतपदमिति योज्यम् । कुत इत्यत आह—वस्तुनीति । यतो वेदान्तमहावाक्यप्रसूता प्रमारूपा बुद्धिरन्तःकरणवृत्तिस्तव त्वमर्थभूतस्य निजोऽसाधा-

---

१ क. ग. वस्तुक° । २ ख. °केऽपि सं° ।

रणो यः स्वाकारः स्वाभाविकब्रह्माकारस्तन्मात्रग्रहादनात्मांशापोहेनानुगतचिदंशतत्त्वात्मतापत्त्येति यावत् । वस्तुनि कल्पितस्य जगतो मूलभङ्गमूलाज्ञानप्रदग्धीष्यतेऽस्माभिरङ्गी क्रियतेऽतो मूलोन्मूलनेनाऽऽत्मनि संसारनिवृत्तिफलस्य समर्पणात्तस्मिन्वेदान्तानां प्रामाण्यमविरुद्धमित्यर्थः । फलवद्धि ज्ञानमज्ञातवस्तुनि निश्चयरूपं जनयदेव हि वाक्यं प्रमाणं तदेतावताऽपि सिद्धमित्यभिप्रायः । तदुक्तं द्रविडाचार्यैः—'सिद्धं तु निवर्तकत्वात्' इति । ननु विषयस्य कर्मतामन्तरेण बुद्धेस्तदाकारग्रहणायोगात्प्राप्तं पुनरात्मनः कर्मत्वमित्यत आह—**कर्मत्वं नेति** । अयमर्थः—कथमपि क्रियाकृतातिशययोगितया व्यवहारयोग्यत्वमात्रं कर्मत्वं विवक्षितं चेत्तदङ्गी क्रियते स्वाध्यस्ताज्ञानतत्कार्यनिवृत्त्यातिशयस्य वाक्यजवृत्तिकृतस्याऽऽत्मन्यङ्गीकारात् । न चैवमतिशययोगित्वे विकारित्वापत्तिरारोपितनिवृत्तेर्विकारहेतुत्वासंभवात् । अथ वृत्तिकृतस्फूर्त्याश्रयतयाऽऽत्मनः कर्मत्वमिति चेत्तन्न यतस्तत्र स्वरूपे स्वयंप्रकाशात्मनि वाक्यजनिता बुद्धिः कर्मत्वं स्वकृतफलव्याप्यत्वलक्षणं न करोति प्रकाशस्वभावे तस्मिन्ननुपयोगादिति । ननु संविदनुत्पत्तौ कथमज्ञानमपि निवर्तेताऽऽगन्तुकसंविद्विरोधाद्धि तन्निवृत्तिरिति चेत्तत्राऽऽह—**स्वाकारग्रहणेनेति** । इयमात्माभिमुख्येन वाक्यजनिता बुद्धिः स्वाकारग्रहणेन केवलम् । स्वशब्दः प्रकृतात्मवचनः । न आत्मचैतन्यव्याप्ततयोत्पत्तित एवाऽऽत्माकारापत्तिमात्रेण संसारमूलमज्ञानं दहेदिति योजना । एतदुक्तं भवति—यद्यपि बुद्धिवृत्तिरेव केवला नाज्ञानहन्त्री जडत्वान्नापि चिन्मात्रं तद्धन्तृ विरोधाभावात् । तथाऽप्युभयसंवलने सत्यज्ञानं निवर्ततेऽन्ययःपिण्डन्यायेनेति । तत्रापि चिज्जडयोरेव विरोधाच्चैतन्यमेवाज्ञाननिवर्तकं तत्स्वरूपेणोदासीनमपि काष्ठायःपिण्डाद्यारूढ इवाग्निर्विशिष्टबुद्धिवृत्तिफलकारूढं सदज्ञानादि दहेदत एवंरूपतायाश्चिदात्मप्रकाशस्याऽऽगन्तुकत्वादज्ञानविरोधित्वं चोपपन्नम् । जडविषयेऽपि यद्यपि चित्प्रकाशः स्वरूपेण न जन्यते तथाऽपि विषयावच्छेदेन विषयात्मता तत्र वृत्तिकृतेति जन्यतोपचर्यते, आत्मनस्तु प्रागेव प्रकाशस्वरूपत्वात्तत्र वृत्तिद्वारा प्रकाशसंचारापेक्षेति विशेषः । आकारग्रहणं तु करणसामर्थ्यनिबन्धनं सर्वत्राविशिष्टमेव । तस्माद्वेदान्तप्रमाणसामर्थ्यादेव वृत्तेरात्माकारत्वसिद्धेः प्रकाशमान आत्मनि प्रकाशरूपफलाजननाच्च तत्कर्मकत्वायोगाद्वेदान्तवेद्यत्वेऽपि न चिदात्मतत्त्वस्य कर्मतेति सर्वं समञ्जसमिति ॥ २४५ ॥

**सु० टी०—अजडबोधकमानस्य संवित्फलानपेक्षत्वं परेषामपि प्रसिद्धमित्याह—**

**संविद्व्युत्पादकं यद्वचनमभिमतं कर्म मीमांसकानां**
**तत्कर्मत्वं न तावत्क्षिपति घटपटाद्यर्थसंवित्स्वरूपे ।**

किं त्वज्ञानापनुत्त्या फलवदभिमतं तत्र शिष्यस्य तद्व-
त्सर्वं वेदान्तवाक्यं फलवदिदमपि प्रत्यगात्मस्वरूपे ॥२४६॥

संविदिति। भाट्टानां हि ज्ञानताख्या संवित्स्वप्रकाशा गुरूणां च घटादिज्ञानं तयोश्च संविदोर्व्युत्पादकम्। संवित्केन वेद्येति प्रश्ने स्वसंवेद्येत्युत्तरवाक्यम्। तन्न तावत्स्वविषये संवित्स्वरूपे कर्मत्वं करोति तद्विषयसंविदन्तराजनकत्वात्। तथाऽपि तेषां तद्वाक्यं प्रमाणत्वेनाभिमतमेवं प्रतीचि संवित्फलाजनकमपि वेदान्तवाक्यमित्यर्थः। तेषामपि तद्वाक्यमफलमेवेष्टमिति चेन्नेत्याह—किं त्विति। संविदि परप्रकाश्यत्वभ्रमसंशयापनुत्त्या तद्वाक्यं फलवदेव तैरिष्टमित्यर्थः ॥ २४६ ॥

अ० टी०—अजडात्मप्रमाणस्य स्वविषये संविदजनकत्वेन प्रामाण्यमस्माभिरुक्तमन्यैरपि वादिभिरभ्युपेयमेवेत्यभिप्रेत्य प्राभाकरस्य भाट्टस्य चात्र संमतिमाह—संविद्व्युत्पादकमिति। प्राभाकराणां संवेदनं विषयविज्ञानाख्यं स्वप्रकाशमिति मतं भाट्टानां च विषयप्राकव्याख्यं विज्ञानजन्यं फलं स्वप्रकाशमभिमतमेव स्वप्रकाशतयाऽविषयत्वेऽपि संविदो व्युत्पादकं परप्रकाश्यत्वादिविप्रतिपत्तिविपर्य[य]योरपनयनेन तत्स्वरूपव्युत्पादकं यद्वचनं कर्ममीमांसकानामभिमतं तद्वचनं घटपटार्थसंवित्स्वरूपे न तावत्कर्मत्वं क्षिपति संविद्रूपं फलं तत्र नोत्पादयति। तथासति संविदः स्वप्रकाशत्वाङ्गीकारबाधादित्यर्थः। तर्हि किं करोतीति चेत्तदाह—किं त्वज्ञानापनुत्त्येति। अस्वप्रकाशभ्रान्त्यादिनिवृत्त्या केवलं तत्र स्वविषये फलवत्तद्वाक्यं प्रमाणमभिमतं शिष्यस्य व्युत्पाद्यस्य श्रोतुः स्वविनेयस्येत्यर्थः। तद्वदित्यादि सुगमम् ॥ २४६ ॥

सु० टी०—तथाऽपि क्वचित्संविदाधायकत्वेन प्रामाण्यं क्वचिदज्ञानापनुत्त्येति वैरूप्यमिति चेत्तथाऽन्यत्र दर्शनादित्याह—

अकार्यस्वरूपस्य कार्यत्वमिष्टं
यथा कारकैर्मूर्तमुत्सारयद्भिः।
तथैवाप्रमेयस्य मेयत्वमिष्टं
प्रमाणैस्तमस्तद्वदुत्सारयद्भिः ॥ २४७ ॥

अकार्येति। यथा हि पाकादाविन्धनादेरुत्पादकत्वेनैव कारकत्वमकार्ये तु भूछिद्रादौ व्योमात्मनि खनित्रादेरुत्पादकत्वासंभवान्मृदादिमूर्तद्रव्यापसारकत्वेनैव करणत्वमिष्यते तथा प्रमाणत्वमपि जडेषु संविदाधा-

नादनुभूतमप्यप्रमेये चिदात्मनि फलाधानासंभवात्तमोनिरासकत्वेनैवेष्ट-मित्यर्थः । तमश्च तज्जं चेत्यर्थः ॥ २४७ ॥

अ० टी०—येषां स्वयंप्रकाशं किमपि नाभिमतं तान्प्रति करणजन्यातिशयाश्रयत्वा-भावेऽपि करणगोचरतया तद्विषयत्वव्यवहारयोग्यत्वं संमतयति—अकार्यस्वरू-पस्येति । अकार्यस्वरूपस्य रूपावयवादिहीनतयाऽनिष्पाद्यस्वरूपस्याऽऽकाशादेर्यथा तद्विरोधि मूर्तमुत्सारयद्भिर्लौकिकैः परीक्षकैरपि कार्यत्वमिष्टं तथैवाप्रमेयस्येति सुगमम् । तद्वन्मूर्तवदुत्सारयाद्भिरस्माभिरिति शेषः । मूर्तेषु कारकादिषु कारकाणामुत्पादकतया कारक-त्वेऽपि यथा तेषाममूर्ते व्योमादौ तत्स्वरूपाभिव्यक्तिविरोध्युत्सारणमात्रेणैव कारकत्वं तथा प्रमाणानां संविदुत्पादकत्वेन जडेषु प्रामाण्येऽपि संविद्रूपे चिदात्मनि तत्स्वभावाभिव्यक्तिं-विरोध्यपसारकत्वेनैव प्रामाण्यमिति निरवद्यमिति भावः ॥ २४७ ॥

सु० टी०—ननु वाक्योत्थवृत्त्या समूलाज्ञानदाहश्चेच्छृण्वन्तोऽपि बहवो यं न विद्युरित्यादि विरुध्येत निदिध्यासनादिवैफल्यं चेत्याश-ङ्क्यापराधोपशमेन स्वच्छाया एव वृत्तेः फलपर्यन्तत्वमिति दर्शयति—

वाक्योत्थापितबुद्धिवृत्तिरमला यज्ञादिभिर्निश्चला
वेदान्तश्रवणादिभिः स्फटिकवत्स्वच्छा सती तावकम् ।
रूपं दर्पणवद्बिभर्ति परमं विष्णोः पदं संनिधे-
रेतस्मादिह कारणादथ भवेत्संसारबीजक्षयः ॥ २४८ ॥

वाक्येति । एतस्मादेव फलपर्यन्तावगतेः कारणादिहाऽऽत्मनि संसार-मूलाज्ञानस्य क्षयो न तु प्राथमिकस्यैव वृत्त्येत्यर्थः । का पुनरसौ या तत्कालश्रुतेन स्मृतेन वा वाक्येनोत्थापिता प्रमाणमूलत्वादज्ञानदाहस-मर्था बुद्धिवृत्तिरपराधकल्पितबह्वर्थाकारपरिहारेण स्वच्छा सती तावकं केवलात्मस्वरूपं प्रतिफलितं बिभर्ति तत एवेत्यर्थः । किं तत्केवलं रूप-मित्यत्राऽऽह—परममिति । मायातीतं विष्णोः पदमित्यर्थः । ननु व्यव-हितं तत्कथं बिभर्तीत्याशङ्क्य मोहकल्पितव्यवधानस्य संविन्महिम्ना विलीनत्वादित्याह—संनिधेरिति । वृत्तेः प्रतिबिम्बग्रहणयोग्यतामाह—स्फटिकेति । ननु रागादिदूषितबुद्धिजत्वेन कुतः स्वच्छेत्याह—अमलेति । यज्ञादिजन्यबुद्धिशुद्धिविवेकवैराग्यादिभिः सहजबहिर्मुखतानिरासाद-मलेत्यर्थः । तथाऽप्यसंभावनादिभिरपरिनिष्ठितत्वात्कथमखण्डाकारतं-

१ क. ग. °मन्याज्ञानजं चे° । २ क. ग. °द्विविरो° ।

त्याह—निश्चलेति । श्रवणादिभिरपराधनिरासादेकरसे वस्तुन्येकाग्रतया निश्चलेत्यर्थः । दृष्टान्तमाह—दर्पणेति । यथा दर्पणो निर्मलो निश्चलः स्वच्छः संनिहितश्च मुखाद्याकारं प्रतिबिम्बितं बिभर्तीत्यर्थः । 'अथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इति स्मृतेः ॥ २४८ ॥

अ० टी०—तदेवमात्मासाधारणाकारग्रहणेनैवाज्ञाननिवृत्तिमात्रफलतया ब्रह्मणि वेदान्तप्रामाण्यमुपपादितमुपसंहरन्बुद्धेरात्माकारग्रहणक्रममाह—वाक्योत्थापितेति । वेदान्तवाक्येनोत्पादिता बुद्धिवृत्तिस्तावकं रूपं दर्पण इव मुखस्वरूपं बिभर्ति । कीदृशं विष्णोः परमं पदं निर्विशेषपरमात्मरूपम् । कुतः संनिधेर्मुखसंनिहितदर्पणवच्चिदात्मसंनिधानादित्यर्थः । ननु वाक्यजनिता चेद्वृत्तिरात्मसांनिधानमात्रात्तत्त्वं गृह्णीयात्तदा सकृच्छ्रवणमात्रेऽपि वाक्यश्राविणां सर्वेषां कस्मात्तत्त्वावभासो न जायत इति चेद्रागादिदोषप्रतिबन्धादित्यभिप्रेत्य वृत्तिं विशिनष्टि—अमला यज्ञादिभिरिति । परमेश्वरार्पणेन निष्कामतया सम्यगनुष्ठितैः स्वाश्रमविहितधर्मैर्यज्ञादिभिरमला क्षपितरागादिमलेत्यर्थः । निर्मलबुद्धितयाऽऽत्माभिमुखप्रवृत्तीनामपि केषांचिद्वाक्येभ्योऽनेकशाखागतेभ्योऽन्यथाऽन्यथा प्रतिपत्त्या विवाददर्शनादसंभावनाग्रस्तेयं बुद्धिवृत्तिः कथमुक्तरूपतत्त्वं बिभृयादित्यत आह—निश्चलेति । पुनःपुनर्वेदान्तश्रवणमनननिदिध्यासनैरसंभावनादिरहिततया स्वविषये तत्त्वे निश्चला सतीत्यर्थः । श्रवणादिपराणामपि केषांचिद्यथापूर्वं संसारप्रवृत्तिदर्शनान्न संभावित उक्तार्थ इत्याशङ्क्य पुनर्विशिनष्टि—स्फटिकवत्स्वच्छेति । विपरीतवासनाक्षयपर्यन्तं निदिध्यासनेन स्वच्छीकृतेत्यर्थः । यदेवमुक्तलक्षणायां बुद्धिवृत्तौ ब्रह्मात्मतत्त्वस्य प्रतिफलनं जायत एतस्मात्कारणादथ बुद्धिवृत्त्युदयसमय एवेहाऽऽत्मनि संसारबीजक्षयो भवति ॥ २४८ ॥

सु० टी०—संप्रति प्रतिज्ञाहेत्वोः शास्त्रयोनिसमन्वययोरुक्तमाविरोधमुपसंहरति—

एवं वेदशिरः प्रमाणमुदितं प्रत्यक्स्वरूपे तव
कर्मत्वं विरहय्य तत्र न हि नो बाधः प्रतिज्ञागिरः ।
कर्मत्वं न करोति बोधयति च स्पष्टं वचो वैदिकं
रूपं तावकमेवमस्य भवति प्रामाण्यमत्राऽऽत्मनि॥ २४९ ॥

एवमिति । तव प्रत्यक्स्वरूपे फलानाश्रये करणव्यापाराविषये चोक्तरीत्या कर्मत्वं विनाऽप्यज्ञाननिवृत्तिमात्रेण वाक्यं प्रमाणमित्युक्तमिति न त्वदुक्तप्रतिज्ञाविरोध इत्यर्थः । न च हेतुविरोधोऽपीत्याह—कर्मत्वमिति । तावकं रूपं बोधयति समन्वयेनेत्यर्थः ॥ २४९ ॥

अ० टी०—विधिमुखेन प्रवृत्तवाक्यार्थनिरूपणप्रकरणमुपसंहरति—एवं वेदशिरः प्रमाणमिति। अविषयत्वेनैवाऽऽत्मानं बोधयन्ति वेदान्तवाक्यानीति प्रतिज्ञातार्थप्रतिपादनोपसंहारपरं पूर्वार्धम्। उपपादितार्थानुवादेन वेदान्तानां ब्रह्मात्मनि स्थिरीकृतप्रामाण्योपसंहारपरमुत्तरार्धमित्यर्थभेदान्न पौनरुक्त्यशङ्का कार्या। अक्षरार्थः स्पष्टः॥ २४९॥

सु० टी०—अधुना मुख्यवृत्त्याऽपि नेतिनेतिवाक्यादद्वैतसिद्धौ किं लक्षणयेति मण्डनमतमुपन्यस्यति—

पृष्ठेन पूर्णवपुषा क्रियते प्रतीति-
र्नेतीतिवाक्यजनिता जगतो निषेध्री।
प्राधान्यमस्तु विधिना सममेव तस्मा-
त्तस्याथ वा भवतु तद्वचनं प्रधानम्॥ २५०॥

पृष्ठेनेति। यद्यपि नेतीतिवाक्यजनिता धीः शब्दशक्त्या मूर्तामूर्तजगन्निषेधाकारा प्रथमं जायते न ब्रह्माकारा तथाऽपि निषेधस्य निराधारस्यासंभवात्पृष्ठेन पश्चाद्धर्मिणमाक्षिप्य परिच्छिन्नस्य सर्वात्मना निषेधात्तद्विलक्षणपूर्णरूपेणाऽऽक्रियते तदाकारा भवतीत्यर्थः। तेन नेतिनेतीतिवाक्यस्यापि पूर्णाकारधीजनकत्वाद्विधिना तत्त्वमसीत्यादिवाक्येन समप्राधान्यमस्तु। यद्वा 'अथात आदेशः' [बृ० २। ३। ६] इत्यादेशसमाख्यया तस्य पूर्णात्मबोधे विनियोगात्तदेव प्रधानम्। तत्त्वमसीति विधिवाक्यं तु शबलार्थत्वेन निर्भासबुद्ध्यहेतुत्वात्तस्यार्थवाद इत्यर्थः॥ २५०॥

अ० टी०—एवं तत्त्वमस्यादिवाक्यस्य मुक्तिफलतत्त्वज्ञानोत्पादकत्वमुपपाद्य निषेधवाक्यस्यापि सत्यादिवाक्यवत्तत्रोपकारं वक्तुं प्रकरणान्तरमारभमाणः परमतं तावदाह—पृष्ठेनेति। नेतिनेत्यादिवाक्यजनिता जगतः सर्वस्यानात्मजातस्य निषेध्री प्रतीतिर्न निषेधमात्रे पर्यवस्यति धर्मिणमवधिमन्तरेण निषेधस्यापर्यवसानात्पृष्ठेन पश्चाद्धर्मिणमवधिभूतमाश्रित्य पर्यवस्यन्ती सा प्रतीतिः पूर्णवपुषा क्रियते परिच्छिन्नस्य परागर्थस्य सर्वात्मना निषेधादर्थात्तद्विपरीतब्रह्माकारा जायत इत्यर्थः। एवं सजातीयविजातीयस्वगतसमस्तभेदनिकरस्य समूलस्य प्रतिषेधेनाद्वितीयाखण्डैकरसवस्तुपर्यवसानं यस्मात्तस्माद्विधिना तत्त्वमस्यादिवाक्येन कैवल्यफलवद्विज्ञानजनकतया समं तुल्यं प्राधान्यमेवास्तु निषेधवाक्यानां विधिनिषेधवाक्यानामेकार्थत्वाद्विकल्पो ब्रह्मात्मैक्यज्ञानं प्रत्यस्त्वित्यर्थः। अथ वा तद्वचनं

---

१ क. प्रमाणम्।

निषेधवाक्यं तस्य विधिवाक्यस्य प्रधानं भवतु सर्वथा निषेधवाक्यं प्रधानमेवेत्यभिप्रायः ॥ २५० ॥

सु० टी०—समप्राधान्यमुपपादयति—

अद्वैतीकरणं निषेधवचनादुत्पन्नबुद्धेरपि
तुल्यं तत्त्वमसीतिवाक्यजनितप्रत्यक्प्रतीत्या सह ।
आर्थं शाब्दमथापि वा भवतु तत्किं तेन यद्वा विधि-
र्नो कर्तुं शबलार्थगोचरतया निर्भेदमर्थं क्षमः ॥२५१॥

अद्वैतेति । नेतीतिवाक्यजबुद्धेरपि विधिवाक्योत्थधिया पूर्णाकारत्वाज्ञाननिवर्तकत्वसाम्यात्तत्साम्यमित्यर्थः । ननु नेतीत्यत्राऽऽर्थं तदाकारत्वं विधौ तु शाब्दमित्याशङ्क्याप्रयोजकतया निरस्यति—किं तेनेति । निषेधप्रामाण्यमाह—यद्वेति । विधेः सखण्डार्थस्याखण्डबुद्ध्यहेतुत्वादित्यर्थः ॥ २५१ ॥

अ० टी०—स एवैकदेशी पक्षद्वयेऽपि क्रमेण हेतू आह—अद्वैतीकरणमिति । अद्वैतात्मबोधनमित्यर्थः । ननु निषेधवाक्यजन्या प्रतीतिरर्थादद्वैती क्रियते विधिवाक्यजन्या तु साक्षान्मुखत एवेति वैषम्यात्कथमनयोस्तुल्यार्थत्वमिति चेन्नाप्रयोजकत्वादस्य विशेषस्येत्याह—आर्थमिति । तदद्वैतीकरणमार्थं वाऽथापि शाब्दं वा भवतु किं तेन विशेषेण फलभेदाभावादित्यर्थः । निषेधवाक्यप्राधान्ये हेतुः—यद्वेत्यादि । विधिर्विधिवाक्यं शबलार्थगोचरतया निर्भेदमखण्डमर्थं कर्तुमैक्यं मुख्यं बोधयितुं न क्षमो यतोऽतो निषेध्योपस्थापकतया तदपि निषेधशेष एवेति योजना ॥ २५१ ॥

सु० टी०—न च भागलक्षणया विधेर्निर्भेदाकारधीहेतुत्वमित्याह—

संबन्धजातविरहान्न च लक्षणाऽस्मि-
न्संभाव्यते परिहृताखिलदृश्यराशौ ।
ब्रह्मात्मवस्तुनि ततः प्रतिषेधवाक्य-
शेषत्वमेतु विधिरित्यपि केचिदन्ये ॥ २५२ ॥

संबन्धेति । वास्तवसंबन्धाभावादित्यर्थः । तत्र हेतुः—परिहृतेति । तत्रापि हेतुमाह—ब्रह्मात्मेति । असङ्गत्वादिश्रुतेः शक्यसंबन्धाभावान्नात्र लक्षणाऽपीति निषेध एव प्रधानमित्यर्थः ॥ २५२ ॥

---

१ ग. °र्भिन्नक° ।

अ० टी० ननु लक्षणया विधिवाक्यानामपि मुख्यैकार्थता स्यादिति चेन्नेति पुनः स एवाऽऽह—संबन्धजातमिति । यद्यपि प्राग्वाच्यार्थसंबन्धोपपादनमपि लक्षणासिद्धये कृतं तथाऽपि पुनराक्षिप्यते पूर्वोक्तसंबन्धस्यावास्तवत्वात्तत्प्रयुक्तलक्षणाऽप्यवास्तवीति ततोऽर्थसिद्धिं परमार्थाममन्यमानस्येयं प्रवृत्तिरिति द्रष्टव्यम् । अतो वस्तुतः संबन्धजातस्य संयोगादेरसङ्गे चिदात्मन्यभावादित्यर्थः । परिहृताखिलद्वयराशाविति विशेषणं संबन्धजातविरहे हेतुः । फलितमाह—तत इति ॥ २५२ ॥

सु० टी०—दूषयति—

वाक्यं मुक्तिफलां धियं जनयति स्पष्टं विधिव्यापृतं
साक्षादेव तव स्वरूपकथनान्नैवं निषेधात्मकम् ।
अध्यारोपितरूपभेदविलयव्यापारनिष्ठं तव
स्वाकारग्रहणक्षमां न हि धियं कर्तुं समर्थं यतः॥२५३॥

वाक्यमिति । विधीयते साक्षान्निरूप्यते न त्वभाववत्प्रतियोगिव्यवधिनेति भावात्मकं वस्तु विधिस्तत्र व्यापृतं वाक्यं कल्पितसंबन्धाल्लक्षणया मुक्तिफलां धियं जनयतीत्येतत्स्पष्टमित्यर्थः । कुत इत्याह—साक्षादिति । तव प्रतीचो यत्स्वरूपं पूर्णता तद्बोधनादित्यर्थः । ननु नेतीत्यपि तत्समर्थमेवेत्यत्राऽऽह—नैवमिति । तस्य प्रपञ्चनिषेधमात्रार्थत्वादित्यर्थः । ननूक्तमर्थात्तदपि तदाकारधीहेतुरिति नेत्याह—अध्यारोपितेति । तद्धि कल्पितमूर्तामूर्तादिप्रपञ्चापह्नवमात्रपरमार्थादपि न पूर्णाकारधीहेतुरित्यर्थः । धर्मसिद्धौ हि निषेध एव न सिध्येन्न तु तदनुपपत्त्या धर्मिसिद्धिः । निषेधसामर्थ्यं हि लिङ्गम् । न च प्रत्यक्षविधिश्रुतौ सत्यां लैङ्गिकसामाख्यानिकश्रुतिकल्पनेति भावः ॥ २५३ ॥

अ० टी०—एकदेश्युत्प्रेक्षितं पक्षद्वयमपि सिद्धान्ती दूषयति—वाक्यं मुक्तिफलामिति । विधिव्यापृतं वाक्यं साक्षाद्व्यापारान्तरव्यवधानं विनैव तव स्वरूपकथनात्स्पष्टमसंदिग्धमविपर्यस्तं च यथा स्यात्तथा मुक्तिफलां धियं जनयत्येवं विधिवाक्यवन्निषेधात्मकं वाक्यं न मुक्तिफलां धियं जनयतीति योजना । कुतो नैवमित्यत्र हेतुमाह—अध्यारोपितेति । रूपभेदः प्रपञ्चो विलयः प्रतिषेधः । यतस्तत्र स्वाकारग्रहणक्षमां धियं कर्तुं न समर्थमतो नैवं निषेधात्मकमिति संबन्धः । जडाजडयोः पारमार्थिकसंबन्धस्यासंभवात्काल्पनिक एव संबन्धः प्रागुक्तः । न हि चित्यध्यासं विना जडस्य सिद्धिरस्यतो दैवेनैव जडस्य चित्संबन्ध आसादित इति लक्षणोपपत्तिः । संबन्धमात्राल्लक्षणोपपत्तौ परमार्थत्व-

विशेषणस्य तत्राकिंचित्करत्वमित्येतदप्युपपादितमेव। निषेधावधेरपि निषिध्यमानं संबन्धस्याव-स्थापेक्षितत्वादन्यथाऽप्रसक्तप्रतिषेधप्रसङ्गात्प्रमाणप्रसिद्धं च न निषेद्धुं शक्यत इत्यधिष्ठान-निषेध्ययोरारोप एव संबन्धोऽभ्युपेय इति स्थिते चिदात्मन आभासद्वारा दृश्येन सह कल्पितसंबन्धाल्लक्षणया प्रत्यग्ब्रह्मस्वरूपाकारां धियं जनयितुं शक्नोत्येव तत्त्वमस्यादिविधि-वाक्यमित्यभिप्रायः॥ २५३॥

सु० टी०—ननु नामेदाकारमेव ज्ञानमविद्यानिवर्तकं किं त्वस्थूलाद्या-कारमपीति चेत्तत्राऽऽह——

अस्थूलादिवचःसमुत्थितमतिर्नाऽऽकारमादास्यते
साक्षादद्वयवस्तुनस्तव विभोरज्ञानविच्छेदिनः।
अज्ञातस्य हि वस्तुनो न हि धिया स्वाकारसंवेदनं
मुक्त्वा तद्विषयस्य विभ्रमकृतो ध्वान्तस्य विध्वंसनम्॥२५४॥

अस्थूलेति। अस्थूलादिवाक्यजाऽपि धीरज्ञानात्तच्छेदमापन्नस्य तव प्रतीच आकारं ब्रह्माभेदं नाऽऽदातुमलमस्थूलादिवचसां तद्बोधकत्वादि-त्यर्थः। तथाऽपि सर्वस्थूलादिनिषेधादेवाज्ञाननिवृत्तिः स्यादिति चेन्ने-त्याह—अज्ञातस्येति। अभेदाकारमेव हि ज्ञानमभेदावरकाज्ञाननिवर्तकं तस्य समानविषयज्ञाननाश्यत्वान्न निषेधाकारमित्यर्थः॥ २५४॥

अ० टी०—एवं विधिवाक्यानां साक्षादद्वयबोधनमुपपाद्य निषेधवाक्यानां तदसंभवमु-पपादयति—अस्थूलादीति। निषेधवाक्यजा मतिर्विभोः परिपूर्णस्याज्ञानविच्छेदिनोऽज्ञा-नविरोध्याकारस्याद्वयवस्तुनस्तवाऽऽकारं नाऽऽदास्यते न ग्रहीष्यतीति योजना। अयं भावः—न हि निषेधवाक्यं साक्षादेव ब्रह्मात्मानं गोचरयेत्तस्य तत्रासामर्थ्यात्। नाप्यर्थात्प्रमा-णान्तरमन्तरेणार्थसिद्धस्याधिष्ठानस्य ब्रह्मात्मत्वनिश्चयायोगात्। निषेधान्यथानुपपत्त्या किंचि-दस्त्यवधिभूतमित्येतावत्तावत्सिध्यति न पुनः किं तद्वस्तु यदवशेषो निषेध इत्याकाङ्क्षा शाम्यत्यतो निषेधवाक्यं न ब्रह्मात्माकारां धियं जनयितुं पारयतीति न विधिवाक्यसमं तदपेक्षया प्रधानं वा किं तु विधिवाक्यशेषभूतमेवेति। तर्हि मा भूदात्माकारा धीः समस्त-द्वैतनिषेधेऽनर्थस्तावच्छाम्यत्यात्मा च स्वयंप्रकाशत्वात्स्वयमेव प्रथेतेति चेन्नेत्याह—अज्ञातस्य चेति। स्वाकारेत्यत्र स्वशब्दो धीवचनोऽथवाऽऽत्मस्वरूपवचनः। आद्ये पक्षेऽज्ञातस्य वस्तुनः संबन्धि यत्स्वाकाररूपं संवेदनं तन्मुक्त्वा विहाय ध्वान्तस्य विध्वंसनं न हि धिया क्रियत इति योजना। ध्वान्तविशेषणे तद्विषयस्य विभ्रमकृत इति च। अज्ञातवस्तु-विषयस्य तत्स्वरूपविशेषाच्छादकस्य तस्मिन्विभ्रमकृतो विक्षेपकारिणश्चेत्यर्थः। यदा पक्षान्तरं तदाऽज्ञातवस्तुनः स्वोऽसाधारणो य आकारः सत्यज्ञानादिलक्षणस्तत्संवेदनं तदव-भासनं विना धिया बुद्धिवृत्त्या तद्विषयस्य विभ्रमकृतो ध्वान्तस्य विध्वंसनं न हि क्रियत

इति योजना । यदि साक्षाद्ब्रह्मात्माकारधीवृत्त्युदयो न भवेत्तदा तद्विषयध्वान्तनिवृत्तिर्न स्याद्यतो न निषेधमात्रेण द्वैतानर्थस्य तत्कारणाज्ञानस्य वा निवृत्तिरधिष्ठानयाथात्म्यज्ञानं विना निवृत्त्ययोगादन्यथा निषेधानन्तरं किमिदमिति जिज्ञासा न स्यात् । न चाज्ञानानिवृत्तावात्माऽपि यथावत्स्फुरेत्स्वयंप्रकाशस्वभावत्वेऽपि तस्याज्ञानव्यवहितत्वादिति भावः ॥२५४॥

सु० टी०—रज्जौ सर्पभ्रमात्पलायमानस्य नायं सर्प इति शाब्दबोधादप्यज्ञाननिवृत्तेर्नोक्तनियम इति चेन्न तत्र भ्रमविलयेऽपि किं तदिति जिज्ञासादर्शनान्नाज्ञाननिवृत्तिरित्याह—

रज्ज्वज्ञानविजृम्भितस्य फणिनो रज्जुप्रकाशक्षमं
विज्ञानं विरहय्य न प्रशमनं दृष्टं निषेधे कृते ।
तद्वत्प्रत्यगविद्यया विरचितं संसारदुःखं न तत्सं-
वित्तिं विरहय्य शाम्यति धिया नेतीतिशब्दोत्थया ॥ २५५ ॥

रज्ज्वज्ञानेति । अज्ञानकार्यस्य सर्पस्य नायं सर्प इति शतकृत्वो निषेधेऽप्यधिष्ठानज्ञानं विना स्वहेत्वज्ञानानिवृत्तेर्न प्रशमनं प्रकृष्टं शमनं दृष्टं किं तु स्वकारणे लयमात्रमित्यर्थः । अत एव तत्र पुनर्भ्रमसंशयादि दृश्यत इति । एवमविद्याकार्यमपि दुःखं तत्त्वमस्यादिवाक्यजज्ञानं विना नेत्यस्थूलमित्यादिवाक्यजधिया स्वहेत्वज्ञानानिवृत्तेर्न शाम्यतीत्यर्थः ॥ २५५ ॥

अ० टी०—अधिष्ठानतत्त्वज्ञानं विना निषेधमात्रात्तदज्ञाननिवृत्त्यसंभवे दृष्टान्तमाह—रज्ज्वज्ञानेति । ऋज्वर्थमिदं पद्यम् ॥ २५५ ॥

सु० टी०—तर्हि निषेधवाक्यानामफलत्वादानर्थक्यमित्याशङ्क्य फलवद्विधिवाक्याङ्गत्वमुपकारप्रदर्शनेनाऽऽह—

अस्थूलादिवचो निषेधकतया भेदस्य संशोधना-
द्वाक्यार्थान्वयसिद्धये नु घटते वाच्यार्थलक्ष्यार्थयोः ।
एवं तत्त्वमसीतिवाक्यगतयोस्तत्त्वंपदोक्तार्थयोः
संशुद्ध्यैव तु नेति नेति वचनं मोक्षाय साक्षान्न तु ॥ २५६ ॥

अस्थूलेति । तद्धि न स्थूलाद्यतिरिक्तपरं लक्षणापत्तेः किं तु नञो मुख्यार्थत्वेनासूर्यंपश्या राजदारा इतिवन्निषेधकत्वेन वाच्यार्थलक्ष्यार्थ-

१ क. ग. °त्वानिश्चमत्वमि° २ क. ग. °भ्रसर्पभ्र° ।

योर्भेदकस्य हेयांशस्य मिथ्यात्वप्रदर्शनेनाखण्डवाक्यार्थसिद्धावुपयुज्यते 'आनर्थक्यात्तदङ्गेषु' [ जै०मि० ३ । १ । १८ ] इतिन्यायान्न तु साक्षादखण्डधीजननेनेत्यर्थः । ननु नेतीत्यस्य साक्षादभेदबोधकत्वमाचार्यैरुक्तं न तस्य प्रौढिमात्रत्वादित्याह—एवमिति । तत्त्वंपदार्थशोधनप्रणाड्यैव तन्मोक्षोपयोगीत्यर्थः ॥ २५६ ॥

अ० टी०—तदेवं न निषेधवाक्यं मुक्तिफलां धियं जनयति न चास्य विधिवाक्येन साम्यं नापि प्राधान्यमिति निर्धारितं तर्हि किमर्थानि निषेधवाक्यानीति तदाह—अस्थूलादीति । अस्थूलादिवचो भेदस्य स्थूलत्वादिधर्मकस्य प्रपञ्चस्य निषेधकतया वाच्यार्थलक्ष्यार्थयोः संशोधनाद्वाक्यार्थान्वयसिद्धये तत्त्वमसिवाक्यगततत्त्वंपदार्थयोर्वाक्यार्थान्वयित्वसिद्धये घटत इति योजना । वाक्यार्थान्वयिपदार्थोपस्थापकत्वेन निषेधवाक्यानां महावाक्यशेषतयाऽर्थवत्त्वं घटत इत्यर्थः । अस्थूलादिवाक्योक्तं न्यायम् 'अथात आदेशो नेति नेति' [ बृ० २ । ३ । ६ ] इत्यादिष्वतिदिशति—एवं तत्त्वमसीति । एवमस्थूलादिवाक्यवन्नेतिवचनमपि तत्त्वमसीतिवाक्यगतयोस्तत्त्वंपदोक्तार्थयोः संशुद्ध्यैव संशोधनेनैव तु द्वारेण कथंचिन्मोक्षाय भवेन्न तु साक्षादिति योजना । अत्रेयमन्यधिका शङ्का भाष्यकारैर्हि नेतिनेतिवाक्यार्थस्य निषेधमुखेनैव साक्षादवगतिपर्यन्तता बृहदारण्यकभाष्ये निरूपितैवमेव नेतिनेतिवचनमित्यादिनेति । तदपि पदार्थशोधने निषेधवाक्यानां स्वातन्त्र्यमभिप्रेत्याध्यस्तरूपनिषेधस्य ब्रह्मावगतिपर्यन्तत्वमुक्तं न तु साक्षान्महावाक्यनिरपेक्षत्वमभिप्रेत्य यतस्तैरेव सहस्रोपदेशग्रन्थे तत्त्वमसिप्रकरणे विधायकप्रमाणं विना वस्तुसिद्धिरिति 'किमन्यद्ग्राहयेत्काधिःप्रमाणेन तु केनचित्' इत्यादिना प्रबन्धेन प्रतिष्ठापितमतोऽस्मदुक्तमुपपन्नमिति ॥२५६॥

सु० टी०—एवमङ्गप्रधानवाक्यानामिव विधिनिषेधयोर्वाक्यैकवाक्यतोक्ता संप्रत्यैरक्रत्वोद्धेयमितिविधिप्राप्तानुवादस्य न गिरा गिरेत्यादेरिव नेतीत्यादेरर्थवादतयैकवाक्यत्वमिति मतान्तरमुपन्यस्यति—

अन्ये पुनर्विधिवचोजनितात्मबुद्धि-
सामर्थ्यसिद्धमनुवक्ति निषेधवाक्यम् ।
द्वैतोपमर्दमिति शासति शिष्यवर्गं
तच्च प्रशस्तमनवद्यमभीष्टमेव ॥ २५७ ॥

अन्य इति । नेतीत्यादिवाक्यं हि तत्त्वमस्यादिवाक्यजाखण्डार्थबुद्धिसामर्थ्यसिद्धं द्वैतस्य तत्र त्रैकाल्यासत्त्वमनुवदतीति पद्मपादाचार्या वदन्तीत्यर्थः । अस्मिन्पक्षे पदैकवाक्यताभ्युपगमात् । प्राशस्त्यमाह—तच्चेति ॥ २५७ ॥

अ० टी०—मतान्तरमाह–अन्ये पुनरिति । सत्यज्ञानादिविधिवचोजनितात्मबुद्धिरखण्डाद्वयात्मतत्त्वावगाहिनी तत्त्वमादिवाक्यजन्या च तथाविधैवाऽऽत्मबुद्धिस्तत्सामर्थ्यात्सिद्धमद्वयवस्तुनि तात्पर्येण बोध्यमाने तद्विरुद्धद्वैतापवादस्यार्थसिद्धत्वात्तं द्वैतोपमर्दमनुवक्ति निषेधवाक्यमतोऽनुवादकत्वान्न स्वतन्त्रमित्यर्थः । अन्ये पुनरिति शासति शिष्यवर्गमिति संबन्धः। इमं पक्षमङ्गी करोति—तच्च प्रशस्तमिति । यतोऽनवद्यं निर्दुष्टमतश्चाभीष्टमेवेत्यनुवादस्यार्थमतिदार्ढ्यार्थत्वादिति भावः ॥ २५७ ॥

सु० टी०—लोकेऽपीदं संप्रतिपन्नमित्याह—

दृष्टश्च रज्जुविधिनाऽवगतार्थवस्तु-
सामर्थ्यसिद्धभुजगप्रशमानुवादः ।
रज्जुस्तवाग्रत इयं न भुजङ्गमोऽय-
मित्येव तद्वदिह योजयितव्यमेतत् ॥ २५८ ॥

दृष्टश्चेति । यथा रज्जुरियमित्यज्ञातरज्जुबोधकवाक्यावगतरज्जुतत्त्वसामर्थ्यसिद्धाध्यस्तसर्पाभावानुवादो नायं सर्प इत्येवं नेतीत्यादिकमपीत्यर्थः ॥ २५८ ॥

अ०टी०—अस्य पक्षस्याङ्गीकारे हेतुमाह—दृष्टश्चेति । अनुवादप्रकारमभिनयति—रज्जुस्तवेति । स्पष्टार्थमन्यत् ॥ २५८ ॥

सु० टी०—ननु न तत्त्वमस्यादेः प्राधान्यं झटित्यज्ञाननिवर्तकत्वादर्थवादोपबृंहितस्य तस्य तथात्वं चेन्नेतीत्यादेरपि तुल्यमित्याशङ्क्याऽऽह—

अस्यैव तत्त्वविनिवेदनशक्तिभाजः
संसारमूलविनिवृत्तिफलप्रसूतौ ।
सामर्थ्यमस्ति पटुभिः परिबृंहितत्वा-
द्वेदान्तभूमिगतपञ्चविधार्थवादैः ॥ २५९ ॥

अस्यैवेति । पटुभिरर्थवादैः परिबृंहितत्वेऽप्यस्यैव विधेरेव सामर्थ्यं न तु नेतीत्यादेरित्यर्थः । अत्र हेतुस्तत्त्वेत्यादि । शक्तस्य हि सहकारिण उपकुर्वन्तीत्यर्थः ॥ २५९ ॥

---

१ ग. °मित्यत्र त° ।

अ० टी०—निषेधवाक्यानां पदार्थशुद्ध्यर्थत्वं वा विधिवाक्यजन्यज्ञानसामर्थ्यसिद्धाज्ञानतत्कार्यनिवृत्त्यनुवादकत्वं वा न साक्षाद्वस्तुप्रतिपादकत्वमित्युपपाद्य परोक्तं निषेधवाक्यस्य स्वातन्त्र्यमसंगतमेवेति द्योतयन्विधिवाक्यस्यैव शेषितां प्रपञ्चयति—अस्यैवेति। अस्यैव विधिवाक्यस्य। एवकारान्न निषेधवाक्यस्य संसारमूलविनिवृत्तिफलप्रसूतौ सामर्थ्यमस्ति। अत्र हेत्वर्थं विशेषणं—तत्त्वविनिवेदनशक्तिभाज इति। स्वरूपसमर्पणसामर्थ्यस्य विधिवाक्य एव संभवादित्यर्थः। तत्रैव हेत्वन्तरमाह—पटुभिरिति। अर्थवादानां पटुत्वमद्वैतज्ञापकयुक्तिपरत्वादिति बोध्यम्। अत्राप्यस्यैवेत्यनुवृत्तेः पञ्चविधार्थवादोपबृंहणं न निषेधवाक्यस्येत्यर्थः॥ २५९॥

सु० टी०—ननु के पञ्चार्थवादाः कथं च ते विधेरेवोपकुर्वन्तीत्यत्राऽऽह—

> सृष्टिस्थितिप्रलयसंयमनप्रवेश-
> व्यापारजातकथनच्छलतः प्रवृत्तेः।
> सानुग्रहादवगतिः खलु तत्त्वमादे-
> र्वाक्यात्परस्य घटते न ततोऽपरस्मात्॥ २६०॥

सृष्टीति। सृष्टिः 'यतो वा इमानि' [तैत्ति० ३।१] इति। स्थितिः 'येन जातानि जीवन्ति' [तै० ३।१] इति। प्रलयो 'यत्प्रयन्ति' [तै० ३।१] इति। संयमनं 'योऽन्तरो यमयति' [बृह० ३।७।१] इति। प्रवेशः 'तत्सृष्ट्वा तदेवानुप्राविशत्' [तैत्ति० २।६] इत्याद्युक्त्वा 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' [तैत्ति० ३।१०] इति। 'एष त आत्माऽन्तर्याम्यमृतः' [बृहदा० ३।७।३] इत्यादि यजुर्वेदे। छान्दोग्ये च 'बहु स्याम्' [छा० ६।२।३] इत्युपक्रम्य 'तत्त्वमसि' [छा० ६।८।७] इत्युपसंहारादस्त्यर्थवादानुग्रहो विधिवाक्यस्येति। स एव विधिः 'अथ संपत्स्ये' [छा० ६।१४।२] इत्यादिवाक्यशेषावगतमुक्तिफलतया स्वार्थपरः प्रधानमतस्तत्त्वमादेरेव सा परस्यावगतिरनुग्रहादपि घटते नापरस्मान्निषेधवाक्यात्तत्र धर्मिण एवासिद्ध्याऽनुग्रहाभावादित्यर्थः। अत्र सृष्ट्या सार्वात्म्यं स्थित्या सर्वाधिष्ठानत्वं प्रलयेनाद्वितीय-

१ क. °जाड्य°। २ क. ग. °र्पोद्भितत्वं।

यत्वं संयमनेन सर्वान्तरत्वं प्रवेशेन जीवब्रह्मैक्यं सिध्यतीत्यनुग्रहः । छलतः प्रवृत्तेरिति तत्कथनस्य निष्फलत्वेन मुक्तिफलाद्वैतबोधनपरतयैव प्रवृत्तेरित्यर्थः ॥ २६० ॥

अ० टी०—अर्थवादानां स्वरूपकथनपूर्वकं तत्र हेतुमाह—सृष्टिस्थितीति । एषामर्थवादत्वं स्वार्थे फलराहित्येन फलवद्विज्ञानवाक्यशेषत्वात् 'वायुर्वै क्षेपिष्ठा' इत्यादिवदिति द्रष्टव्यम् । अत्र सृष्ट्यादित्रयं विजातीयजडप्रपञ्चस्य स्वातन्त्र्यनिराकरणेन । तेन चिदात्मनो द्वैतभावं वारयति । प्रवेशवादस्तु स्रष्टुरेव साक्षाज्जीवरूपतां दर्शयन्सजातीयभेदं तस्यापाकरोति । नियमनवादस्तु तस्य सर्वनियन्तृत्वोक्त्या सर्वाधिष्ठानत्वमनन्याधीनत्वं च सर्वप्रत्यक्त्वं च दर्शयति । एवमेतैर्भोग्यभोक्तृत्वानामेकत्र कल्पितत्वोक्त्या सर्वकल्पनाधिष्ठानस्य चिदात्मनः कल्पितप्रपञ्चाभेदेन 'सर्वं खल्विदं ब्रह्म' [ छा० ३ । १४ । १ ] इति वाक्यस्य वाच्यार्थत्वं प्रदर्श्यते । कार्यस्य वाचारम्भणप्रदर्शनपरवाक्यैकवाक्यतया चापबाधितप्रपञ्चाकारस्य लक्ष्यार्थत्वमिति विवक्षन्नाह—व्यापारजातकथनच्छलत इति । कथनमिषेणेति यावत् । प्रवृत्तेरर्थवादवाक्यानामिति शेषः । सानुग्रहादेवमर्थवादप्रपञ्चककृतानुग्रहसहितात्तत्त्वमादेर्वाक्यात्खलु परस्परमात्मनोऽवगतिर्यथार्थानुभवो घटते । ततस्तत्त्वमादिविधिवाक्यादपरस्मान्निषेधवाक्यान्न परस्यावगतिर्घटते निषेधवाक्यस्य सृष्ट्यादिकृतोपकारानिरूपणादित्यर्थः ॥ २६० ॥

सु० टी०—सूत्रकृदभिप्रायादपि विधेः प्राधान्यमित्याह—

सूत्रं तत्तु समन्वयादिति विधिव्यापारनिष्ठं वचो
मोक्षायेति निवेदनाय कृतवान्वेदान्तवेदी मुनिः ।
न्यायेनाऽऽकलयन्नशेषवचनव्यापारमूरीकृत-
स्वातन्त्र्यः सकलेऽपि वेदशिरसि स्वैरं चरन्नीश्वरः ॥२६१॥

सूत्रमिति । विधिव्यापृतमेव तत्त्वमादिवाक्यं रात्रिसत्रवदर्थवादिके मोक्षे लिङ्गेन विनियुक्तमिति निवेदयितुं मुनिः 'तत्तु समन्वयात्' [ ब्रह्म० १ । १ । ४ ] इति सूत्रं कृतवानित्यर्थः । अखण्डार्थानां हि समन्वयः संभवति निषेधप्राधान्ये तु तत्तु निषेधादित्यवक्ष्यत् । मुनित्वे हेतुमाह—वेदान्तेति । 'एतमेव विदित्वा मुनिः' [ बृह० ४ । ४ । २२ ] इति श्रुतेः । कथमिदं ज्ञातवानित्यत्राऽऽह—न्यायेनेति । तर्केणेत्यर्थः । कथमस्येदृशं साम-

र्थमित्यत्राऽऽह—ईश्वर इति। 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः' इति स्मृतेः। ईश्वरत्वलिङ्गमाह—सकलेऽपीति। तर्हि स्वार्थाभावान्न प्रवर्तेत नेत्याह-ऊरीकृतेति। लीलयैव लोकानुग्रहायेत्यर्थः॥ २६१॥

अ० टी०—तथा च तत्पदार्थशोधनार्थमेव निषेधवाक्यं न स्वरूपबोधनार्थमित्येतत्सूत्रकारप्रवृत्तिपर्यालोचनयाऽप्येवमेवेति दर्शयति—सूत्रमिति। सम्यगखण्डार्थतयाऽन्वयः समन्वय इति समन्वयशब्दार्थः। वेदान्तवेदी वेदान्तानां सम्यगर्थवेदनशीलः। अनेनास्य वेदान्तविषये ज्ञानसंशयविपर्ययराहित्यं सूचितम्। वेदान्तवेदी मुनिर्विधिव्यापारनिष्ठं वचो मोक्षाय न तु निषेधव्यापारनिष्ठमित्यर्थाल्लभ्यत इति निवेदनाय 'तत्तु समन्वयात्' [ ब्र० १।१।४ ] इति सूत्रं कृतवान्। निषेधवाक्यगतपदान्वयस्य निषेधैकपदेन ब्राह्मणपरिव्राजकन्यायेन सिद्धत्वात्तद्विवक्षायां तत्तु निषेधादिति निर्दिशेत्। नैवं निर्दिशत्यतो विधिव्यापारनिष्ठमेव वाक्यं वस्तुग्राहकमित्यर्थः। किं कुर्वन्नेवं सूत्रं कृतवान्मुनिर्न्यायेन युक्तिनिवहेनाशेषवेदान्तगतपदवाक्यव्यापारमर्थप्रतिपादनप्रवृत्तिप्रकारमाकलयन्ननेकैः सूत्रपदैर्निबध्नन्नित्यर्थः। अनेनाविचारपूर्वत्वशङ्का सूत्रप्रणयनेऽस्य निरस्ता। किमित्ययं सूत्रशास्त्रनिर्माणे प्रवृत्त इत्यत आह—ऊरीकृतस्वातन्त्र्य इति। अपर्यनुयोज्य इत्यर्थः। कुत एतदपीति यत ईश्वरः समर्थ इत्यर्थः। कृतमप्यनेन शास्त्रं वचनान्तरेण तन्त्रान्तरेण वा प्रतिहन्येतेति नेत्याह—सकलेऽपीति। समस्तवेदान्तवाक्याविरोधेनैव प्रवृत्तत्वात्तन्त्रान्तरस्य पौरुषेयतया मूलप्रमाणापेक्षस्य वेदान्तविरोधे बाधितार्थतया प्रतिपक्षत्वासंभवादित्यर्थः॥ २६१॥

सु० टी०—नेतीत्यादेर्विध्यङ्गत्वमपि सूत्रकृतैवोक्तमित्याह—

वाक्यार्थान्वयितत्पदार्थकथने नेतीति वाक्यं पुनः
साक्षात्सूचयति स्म सूत्रकृदतस्तत्तत्परं निश्चितम्।
एवं हस्ततलार्पितामलकवत्तात्पर्यसंवेदने
सत्यन्याद्युदीरयन्ति यदि तत्क्षन्तुं कथं शक्नुमः॥२६२॥

वाक्यार्थेति। विधिवाक्यार्थान्वयितत्पदार्थशोधन इत्यर्थः। 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' [ ब्र० सू० ३।२।२२ ] इति सूत्रे। अतस्तच्छोधनपरं न तु मोक्षपरमित्यर्थः। ततश्च निषेधस्वातन्त्र्यवर्णनं न क्षन्तव्यमित्याह—एवमिति॥ २६२॥

अ० टी०—एवं विधायकवाक्यानामेव साक्षादात्मस्वरूपपर्यवसानेन मोक्षसाधनज्ञानोत्पादकतेत्यत्र सूत्रकारस्य संमतिमुक्त्वा निषेधवाक्यं तु केवलं तत्पदार्थपरिशोधनपरमेवेत्य-

त्रापि 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' [ ब्र० ३ । २ । २२ ] इति सूत्रोक्तमर्थं संकलयंस्तत्संमतिमाह—वाक्यार्थान्वयीति । स्पष्टान्वयपदेन पूर्वार्धेन सूत्रकृत्संमतिर्दर्शितोत्तरार्धेन तु युक्त्या संमत्या चोपपादितं तात्पर्यमुपसंहरति—एवं हस्तेति ॥ २६२ ॥

सु० टी०—विधौ निषेधोपकारमाह—

सत्यं ज्ञानमनन्तमित्यभिहिते संभावना नीयते
नास्थूलादिवचःसमुद्भवधिया द्वैतोपमर्दं विना ।
तेनावान्तरवाक्यलक्ष्यविषयां बुद्धिं दृढीकुर्वता
सर्वद्वैतनिषेधकेन वचसा वाक्यार्थधीर्जन्यते ॥ २६३ ॥

सत्यमिति । सत्यं ज्ञानमित्यादिस्वरूपलक्षणैरद्वैते प्रतिपादिते स्थूलादिद्वैतानुवृत्तेरस्थूलादिवाक्यजबुद्ध्या तदपह्नवं विना संभावना न नीयते न प्राप्यते। अतस्तेन वचसा सर्वद्वैतनिषेधादसंभावनां निरस्य तल्लक्ष्याद्वैतबुद्धिं दृढीकुर्वता तत्त्वमसीत्यादितोऽखण्डधीर्जन्यत इत्यर्थः ॥ २६३ ॥

अ० टी०—इदानीं निषेधवाक्यानां तत्पदार्थशुद्धावुपकारप्रकारं दर्शयति—सत्यं ज्ञानमिति । अस्थूलादिवचनैः समुद्भवो यस्यास्तया धिया कृत्वा यो द्वैतोपमर्दस्तं विना सत्यं ज्ञानमनन्तमित्यभिहितेऽखण्डवस्तुनि संभावना न नीयत इति योजना । तत्पदलक्ष्यार्थे सत्यज्ञानादिवाक्यैस्तात्पर्येण प्रतिपादिते वाच्यशबलैकदेशस्य हेयांशस्य पृथगवस्थाने सर्वात्मनाऽखण्डाद्वयवाक्यार्थस्यासंभावनास्पदत्वात्ततो न तत्र निश्चिता दृढा मतिर्भवति तेन कारणेन सत्यज्ञानाद्यवान्तरवाक्यलक्ष्यार्थविषयां बुद्धिं दृढीकुर्वता सर्वद्वैतनिषेधकेन नेतिनेत्यस्थूलमित्यादिवचसा हेयांशस्यापबाधने सति वाक्यार्थधीर्ययोक्ता निश्चला जन्यतेऽतः सत्यादिवाक्यैकवाक्यतया पदार्थपरिशोधनपरं सर्वमेव निषेधवाक्यं न साक्षादविद्यानिवृत्तिफलकवस्तुतत्त्वसाक्षात्कारसमर्थमित्यर्थः ॥ २६३ ॥

सु० टी०—एवं निषेधैर्लक्ष्यार्थे शोधिते विधिवाक्यान्निर्विचिकित्समभेदं साक्षात्कुर्वित्याह—

अस्थूलादिवचोनिरस्तनिखिलद्वैतप्रपञ्चं परं
जाग्रत्स्वप्नसुषुप्तिवर्जितमिदं प्रत्यक्स्वरूपं तथा ।

एकीकृत्य परस्परेण पदयोरर्थद्वयं तत्त्वतः
प्रत्यक् चाद्वयमद्वयं च तदिति प्रेक्षस्व निःसंशयम्॥२६४॥

अस्थूलादीति। परं परोक्षत्वेन कल्पितं परमात्मस्वरूपमिदं चापरोक्षं प्रत्यग्रूपमेवं तात्त्विकं पदार्थद्वयं परस्परेणैकीकृत्येक्षस्वेत्यर्थः। शबलयोर्भिन्नत्वावगमात्कथमेकीकरणमित्याशङ्क्योपाधिवर्जनेन शोधितत्वादित्याह-अस्थूलादीति ॥ २६४ ॥

अ० टी०—एवं विधिनिषेधवाक्याभ्यां लक्ष्यार्थशोधने सति कथं वाक्यार्थधीजन्मेति तदाह—अस्थूलादिवचोनिरस्तेति। अशेषनिषेधवाक्यनिरस्तनिखिलद्वैतप्रपञ्चं सत्यज्ञानादिलक्षणं परं परमात्मानं तत्पदार्थं जाग्रदाद्यवस्थासाक्षित्वेनान्वयव्यतिरेकाभ्यामवस्थाधर्मसंस्पृष्टतया संशोधितमिदं त्वंपदार्थसाक्षिलक्षणं प्रत्यक्स्वरूपं च पदयोस्तत्त्वमोरर्थद्वयं पदार्थप्रतीतिसमये सर्वाधिष्ठानत्वेन सर्वावभासात्मना चावगतं सच्चिद्रूपं परस्परेणैकीकृत्योपाधिद्वारं विना स्वतो भेदादर्शनात्तत्त्वतः स्वत एवैकीभूतं प्रेक्षस्व निःसंशयं निःशङ्कं यथा स्यात्तथा भोः सुबुद्ध इति योजना। कथमेकीभूतमीक्षणीयमिति तदभिनीय व्यपदिशति—प्रत्यक्चाद्वयं ब्रह्म। चकारोऽवधारणार्थः। प्रत्यगात्मा निष्प्रपञ्चं ब्रह्मैव न ततोऽर्थान्तरं तथाऽद्वयं च ब्रह्म तत्प्रत्यगात्मस्वरूपमेव न तटस्थमिति प्रेक्षस्वेत्यर्थः ॥ २६४ ॥

सु० टी०—ननु व्यवहितस्य ब्रह्मणः परोक्षत्वात्कथं प्रत्यक्षत्वमिति चेत्परिशोधनेन व्यवधानापनयादित्याह—

अद्वैतं परिशोधितं भगवतो विष्णोः परं यत्पदं
तच्छब्देन समर्पितं परिगृहीतादेयमात्मप्रभम्।
यच्चोपाधिविवर्जितं तव निजं साक्षात्स्वरूपं तयो-
रेकत्वं परिवर्जितव्यवधिकं प्रत्यक्षमीक्षस्व भोः ॥ २६५ ॥

अद्वैतमिति। यच्च तच्छब्दलक्ष्यमद्वैतमस्थूलादिवाक्यैर्निरस्तहेयांशं यच्च तव बुद्ध्यादिवर्जितं प्रत्यग्रूपं तयोरेकत्वं निरस्तव्यवधित्वादतिसंनिहितमीक्षस्वेत्यर्थः ॥ २६५ ॥

अ० टी०—ननु ब्रह्मणः परोक्षत्वात्परोक्षमेवेदं तत्त्वं स्यात्कथमपरोक्षप्रत्यगैक्येन निःसंशयं तदीक्षणमित्यत आह—अद्वैतं परिशोधितमिति। भगवतो नित्यसिद्धनिरङ्कुशैश्वर्यवतो विष्णोः श्रीनारायणस्य जगत्कारणतयोपलक्षितस्य यत्परमं पदं सत्यज्ञाना-

---

१ क ग. कथितं। २ क. 'तत्पदल'।

धात्मकं स्वरूपं परिगृहीतादेयं यथा स्यात्तथा तच्छब्देन समर्पितं विरुद्धांशप्रहाणेन तच्छब्दलक्षितमिति यावत् । आत्मप्रभं स्वप्रकाशस्वभावम् । इदं विशेषणं पदार्थद्वयसाधारणं ज्ञेयम् । यच्च देहेन्द्रियमनोबुद्धिप्राणाहंकारोपाधिवर्जितं तव निजमसाधारणं साक्षान्निरुपचरितं स्वरूपमेतदुभयं यत उक्तविधया परिवर्जितव्यवधिकं व्यवधायकोपाधिरहितमतः प्रत्यक्षमीक्षस्व भोः । निरस्तोपाधिकस्य स्वयंप्रकाशस्य चिदात्मनस्तत्त्वंपदलक्षितस्वरूपस्य परोक्षावभासहेत्वभावादिति भावः ॥ २६५ ॥

सु० टी०—ननु शोधितयोरपि नैक्यसंभवस्तत्पदार्थस्य सत्यज्ञानादिरूपत्वान्मम तु तद्विपरीतत्वानुभवादित्याशङ्क्याऽऽह—

अनृतजडविभक्तदुःखतुच्छा-
सहनवपुः परमं पदं मुरारेः ।
परिहृतसकलप्रपञ्चमात्मा
तव तदवेहि तमो निरस्य वाक्यात् ॥ २६६ ॥

अनृतेति । सत्यत्वादनृतासहं चित्त्वाच्चेत्यजडरूपासहमद्वैतत्वाद्विभक्तरूपासहं सुखत्वाद्दुःखासहं सत्त्वात्तुच्छरूपासहमस्थूलादिवाक्यैः परिहृतद्वैतप्रपञ्चं यन्मुरारेः परमं पदं तदेव तव स्वरूपं विपरीतं त्वज्ञानकल्पितत्वादौपाधिकमिति वाक्यादज्ञानं निरस्य जानीहीत्यर्थः । मुखं व्यादाय स्वपितीतिवत् क्त्वानिर्देशः ॥ २६६ ॥

अ० टी०—ननु यद्यप्येवं परिशोधितयोः पदार्थयोः स्वरूपतो विरोधाभावादेकरसत्वं सम्यगवगन्तुं शक्यते तथाऽपि तवोपदेशं सम्यगवधारयतोऽपि ममानृतजाड्यादिविरोधिब्रह्मात्मता किमिति न यथावदवभासत इति चेत्सम्यक्पदार्थतत्त्वावधानाभावादित्यभिप्रेत्योक्तपदार्थतत्त्वोक्तिपूर्वकं वाक्यार्थं पुनः स्मारयति—अनृतजडेति । विभक्तेत्यन्तवत्त्वनिर्देशः । तुच्छत्वमसत्त्वमनृताद्यसहनवपुः सत्यज्ञानानन्तानन्दसद्रूपं परमं पदमत एव परिहृतसकलप्रपञ्चं यत्तदेव तवाऽऽत्मेति त्वमवेहि । किं कृत्वा भेदप्रतिभासहेतुं तमोऽविवेकलक्षणं वाक्यान्निरस्येति योजना । पुनः पुनरवस्थात्रयापोहेन त्वमर्थस्वरूपविवेके तदविवेकलक्षणतमसो विलयादात्मब्रह्मणोर्भेदहेत्वभावान्निःसंशयमात्मैत्यैकलक्षणं ब्रह्मैक्षस्वेत्यभिप्रायः ॥ २६६ ॥

सु० टी०—एवं यत्नेन गुरुणोपदिष्टमप्यात्मतत्त्वमनादिवासनावशी-

कुतः शिष्यो न श्रद्दध्यादिति शङ्कया श्रद्धालोर्निर्विचिकित्समेव ज्ञानं मुक्तिहेतुरिति साधयति—

श्रद्धत्स्व सौम्येति हि शास्ति शास्त्रं
श्रद्धाधनत्वश्रुतिरस्ति चान्या ।
श्रद्धा तु यस्येत्यपरं च वाक्य-
मधीयते संशयकुत्सनाय ॥ २६७ ॥

श्रद्धत्स्वेति । शास्त्रं छान्दोग्यश्रुतिः । 'श्रद्धावित्तो भूत्वा' इति माध्यन्दिनश्रुतिः । 'यस्य स्यादद्धा न विचिकित्साऽस्ति' [ छा० ३ । १४ । ४ ] इति काण्वश्रुतिः । चकारात् 'श्रद्धावाल्लँभते ज्ञानम्' [ गी० ४ । ३९ ] इति स्मृत्यादिकं सूचितं तेन संशयस्य श्रुत्यादिभिर्निन्दितत्वान्न प्रामाणिकेऽर्थेऽश्रद्धा कार्येत्यर्थः ॥ २६७ ॥

अ० टी०—एवमुपपादितेऽपि करतलामलकवत्तत्त्वे यत्तथाविश्वासास्पदमिवावभासते तत्तथात्र श्रद्धादार्ढ्याभावाद्यतः श्रद्धाऽपि सूक्ष्मवस्त्ववधारणकारणमाम्नायतेऽतः श्रद्धालुतया मयोक्तमालोचयेत्यभिप्रेत्याऽऽह—श्रद्धत्स्व सोम्येति हीति । शास्त्रं छान्दोग्यषष्ठगतम् 'एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्य' [ छा० ६ । १२ । २ ] इति शास्तीत्यर्थः । अन्या श्रुतिर्बृहदारण्यकाख्या 'श्रद्धावित्तो भूत्वा' इति श्रद्धाधनत्वश्रुतिरस्तीत्यर्थः । तथा छान्दोग्य एव तृतीयप्रपाठके 'यस्य स्यादद्धा न विचिकित्साऽस्ति' [ छा० ३ । १४ ४ ] इत्यपरं वाक्यमधीयते । शास्त्रे श्रद्धाविधानप्रयोजनमाह—संशयकुत्सनायेति । अतः श्रद्धयैवोपबृंहितं वाक्यजातं संशयादिनिवर्तकमिति भावः ॥ २६७ ॥

सु० टी—भगवद्वचनादप्येवमित्याह—

अज्ञो विनश्यति पुमानतिमूढभावा-
दश्रद्धयोपहतबुद्धिरतोऽपि कष्टः ।
कष्टाच्च कष्टतर एव तु संशयात्मा
दुःखी सदेति भगवानपि वासुदेवः ॥ २६८ ॥

अज्ञ इति । अज्ञस्तावन्मुक्त्युपायाज्ञानादेव संसरति । सोऽपि श्रद्दधानश्चेत्कदाचिद्गुरुमाराध्य जानीयादपीत्यश्रद्दधानस्ततोऽपि कष्टः । ततोऽपि त्यक्तकर्मा ब्रह्मतत्त्वे च संदिहान उभयमार्गभ्रष्टः कष्टभागीति 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' [ गी० ४ । ४० ] इत्याहेत्यर्थः । स्वरूपाप्राप्तिर्विनाशः ॥ २६८ ॥

अ० टी०—श्रुतिशासितेऽर्थे भगवद्गीतास्मृतिमप्युदाहरति—अज्ञो विनश्यतीति । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' [ गी० ४ । ४० ] इतिभगवद्वचनविवरणार्थकमिदं पद्यम् । अतोऽप्यज्ञादप्यश्रद्धयोपहतबुद्धिः कष्टो ज्ञात्वाऽपि स्वहितमविश्वासतः प्राप्तपुरुषार्थलाभित्वाद्विनष्ट इत्यर्थः । संशयात्मा तु कष्टादश्रद्धोपहतबुद्धेरपि कष्टतरोऽतिनष्टस्तस्यैकत्रापि निश्चयाभावेनास्वस्थमनस्कत्वादतो भगवान्वासुदेवः सदा दुःखीति त्वमाहेत्यर्थः ॥ २६८ ॥

सु० टी०—इत्थमतिस्पष्टोपदिष्टे क्वाश्रद्धासंशयावकाश इति हृष्यन्तं शिष्यमाश्वासयति—

रूपं तावकमुज्झितद्वयमभूदद्वैतमेवाञ्जसा
तच्चाद्वैतमपास्य मोहजनितं पारोक्ष्यमात्मा ह्यभूत् ।
एवं वेदशिरःपदान्वयवशादेकत्वमेकान्ततः
सिद्धं प्रत्यगनन्तयोरिति तव श्रेयः समाप्तिं गतम् ॥२६९॥

रूपमिति । तावकं प्रत्यग्रूपमद्वैतं सदुज्झितद्वयमभूत्तव सद्वयत्वं निवृत्तमित्यर्थः । तच्चाद्वैतं पारोक्ष्यमपास्य प्रत्यगेवाभूत्तस्य पारोक्ष्यं निवृत्तमित्यर्थः । एवं च पदयोरखण्डान्वयवशाल्लक्ष्ययोः प्रत्यगनन्तयोरैकान्तिकमेकत्वं सिद्धमिति तव श्रेयः पुरुषार्थसर्वस्वं समाप्तिं सम्यगाप्तिं गतमित्यर्थः । कृतं कृत्यं प्राप्तं प्रापणीयमात्मलाभान्न परमित्युक्तेः ॥ २६९ ॥

अ० टी०—ननु यः श्रद्धां न करोति तं प्रतीदमुदाहरणीयमहं तु विरोधादेव न त्वदुक्तं प्रतिपद्य इति चेन्मैवं विरोधस्य प्राक् परिहृतत्वादिति स्मारयति—रूपं तावकमिति । तावकं रूपं द्वयहेतूपाधिनिरसनेनोज्झितद्वयं सदञ्जसा साक्षादद्वैतमेवाभूत् । तच्चाद्वैतं मोहजनितं पारोक्ष्यमपास्याऽऽत्मा प्रत्यगभूत् । पारोक्ष्यसद्वयत्वे कारणत्वकार्यत्वोपाधिकृते तयोरपोहे सति हेत्वभावात्पारोक्ष्यादिनिवृत्तौ पूर्णात्मता तत्र स्वयमेवाऽऽविर्भूतेत्यर्थः । यत एवमतः सिद्धं ब्रह्मात्मनि मुख्यवसानं वेदान्तप्रामाण्यमित्युपसंहरति—एवमिति । स्पष्टार्थम् ॥ २६९ ॥

सु० टी०—किं च वैशेषिकैरप्यखण्डार्थोऽभ्युपेय इति क्वासंभावनाप्रसङ्ग इत्याह—

संबन्धः समवाय इत्यपि पदे वैशेषिकोच्चारिते
नाखण्डव्यतिरिक्तवस्तु वदितुं शक्तोऽनवस्थाभयात् ।

---

१ क. ग. 'त्यामिति'। २ क. 'कं प्राभू'।

पञ्चानां समवायितेतिवचनव्याघातभीतेरपि
संबन्धान्तरमस्य नाभिमनुते वैशेषिकः कातरः ॥ २७० ॥

संबन्ध इति । समवायः संबन्ध इति वैशेषिकोक्ते पदे पद्यतेऽनेनेति व्युत्पत्त्या वाक्य इत्यर्थः । अखण्डादन्यत्प्रतिपाद्यमस्तीति न स वक्तुं शक्नोति संबन्धान्तराभ्युपगमेऽनवस्थानात्समवायाभ्युपगमे द्रव्यादीनां पञ्चानां समवायित्वमिति प्रशस्तपादोक्तिव्याघातादनवस्थानाच्च संयोगाभ्युपगमे द्रव्यत्वापत्तेः स्वरूपसंबन्धस्य स्वाभिन्नत्वेऽखण्डार्थत्वाविरोधाद्भिन्नत्वेऽनवस्थानादिति विचार्य कातरो निष्प्रतिम इत्यर्थः ॥ २७० ॥

अ० टी०–एवं वाक्यस्याखण्डार्थत्वमुपपाद्य वादिभिरपि नात्र विवादः कर्तव्य इति सर्ववाद्यविप्रतिपत्त्या स्वपक्षं द्रढयति–संबन्ध इत्यादिना । संबन्ध्यनाश्रितस्य संबन्धस्याभावात्तदाश्रितः संबन्धो वाच्यः । आश्रितत्वं च संबन्धाधीनमिति हि स्थितिः । तत्र समवायः संबन्ध इति पदद्वयात्मके वाक्ये वैशेषिकोच्चारितेऽखण्डव्यतिरिक्तवस्तु वदितुं न कोऽपि शक्तो वैशेषिकमते स्थित्वा न वक्तुं शक्यत इत्यर्थः । कुतोऽनवस्थाभयात् । समवायस्य संबन्धिसंबन्धे समवायातिरिक्तसंबन्धस्यानिरूपणात्समवायान्तराभ्युपगमः कार्यः । तथा च तस्यापि संबन्धत्वात्समवायान्तरापेक्षेति स्यादनवस्थेत्यर्थः । भवत्वनवस्था को दोष इति चेत्स्वसिद्धान्तबाध एवेत्याह–पञ्चानामिति । समवायातिरिक्तानां पञ्चानां द्रव्यादिपदार्थानां समवायित्वं साधर्म्यमितिवचनव्याघातभीतेरप्यस्य समवायस्य संबन्धान्तरं वैशेषिको नाभिमनुते । यतः स्वसिद्धान्तभङ्गात्कातरो भीत इत्यर्थः । अतोऽत्र गत्यन्तराभावाद्वैशेषिकमते तावत्सिद्धमखण्डार्थत्वमित्यर्थः ॥ २७० ॥

सु० टी०—प्राभाकरैरप्यखण्डार्थोऽभ्युपेय इत्याह—

शब्दो गकार इति लौकिकमस्ति वाक्यं
विस्पष्टमस्ति च पदद्वयमत्र वाक्ये ।
प्राभाकरे च समये न गकारमात्रा-
दन्यत्पदद्वयनिगम्यमभीष्टमस्मिन् ॥ २७१ ॥

शब्द इति । एतद्वाक्यस्थपदद्वयेनापि न तन्मते गकारस्वरूपादधिकं किंचित्प्रतिपाद्यमस्तीत्यखण्डार्थत्वं सिद्धमित्यर्थः ॥ २७१ ॥

अ० टी०–प्राभाकरं प्रत्यप्याह—शब्दो गकार इति । अस्मिन्वाक्ये । सुबोधमन्यत् ॥ २७१ ॥

सु० टी०—ननु शब्दशब्देन शब्दत्वं जातिरुच्यतेऽपरेण गकार इत्यर्थभेद इति चेन्नेत्याह—

शब्दत्वजातिवचनो न हि शब्दशब्दः
श्रोत्रोपलम्भनतया तु निवन्धनेन ।
वर्णान्ब्रवीति न हि जातिरिहाभ्युपेता
साक्षाद्गकारमयमाह गकारशब्दः ॥ २७२ ॥

शब्दत्वेति । स हि श्रोत्रग्राह्यत्वेन तटस्थोपाधिना निमित्तेन गकारादिष्वेव वर्तते न शब्दत्वजातौ व्यञ्जकाभावादौपाधिकधर्मेणाप्यनुगतधीसंभवे गत्वादिजात्यभावाच्चेति । तथाऽपि धर्मान्वितगकारप्रतिपादनान्नाखण्डार्थत्वमिति चेन्नेत्याह—साक्षादिति । धर्मस्यापि व्यक्तिपर्यवसानाद्वर्णात्स्वरूपे कार इति विधानादयमपि साक्षाद्गकारमात्रमेवाऽऽहेत्यर्थः ॥ २७२ ॥

अ० टी०—प्राभाकरसमये गकारवाच्यमेव शब्दस्यापि वाच्यमिति कुतोऽवगम्यते तत्राऽऽह—शब्दत्वजातीति । शब्दशब्दो न हि शब्दत्वजातिवचनः । जातिवाचित्वाभावेऽपि जातिं पुरस्कृत्य शब्दव्यक्तिं वदिष्यतीति चेत्तत्राऽऽह—श्रोत्रेति । श्रोत्रोपलभ्यमानत्वेनोपाधिना निमित्तभूतेन शब्दो वर्णान्ब्रवीति। श्रोत्रग्राह्यत्वमेव शब्दत्वं न जातिस्तत्र प्रमाणाभावादनेनैवोपाधिना सर्वशब्देष्वनुगतव्यवहारोपपत्तौ जातिकल्पनायोगादित्यर्थः । अत एवेह शब्दे प्राभाकरैर्जातिर्न ह्यभ्युपेताऽतः शब्दशब्दो यथा वर्णमात्रं ब्रूते तथाऽयमपि गकारशब्दः साक्षाद्गकारमाह । अतः शब्दो गकार इति सामानाधिकरण्यमखण्डगकारमात्रपरमिति स्थितम् ॥ २७२ ॥

सु० टी०—तस्मान्नाखण्डार्थत्वे तैर्विवदितव्यमित्याह—

तस्मादखण्डविषये वचने विवादं
प्राभाकराः परिहरन्तु न चेदशक्यम् ।
निर्वोढुमेतदिह वाक्यमितोऽन्यथा चेद-
स्यार्थकल्पनमभीप्सितमिष्टहानिः ॥ २७३ ॥

---

१ क. पेगका॰ ।

तस्मादिति । उक्तवाक्ये गत्यन्तराभावादित्यर्थः । इतोऽन्यथेति । संसर्गार्थत्वाभ्युपगमे जातिवाच्यत्वाश्रयणात्सिद्धान्तहानिरित्यर्थः ॥ २७३ ॥

अ० टी०—एवं स्थिते प्राभाकरैरखण्डवाक्यार्थे विवादो न कार्य इत्याह—तस्मादिति । न चेत्ते विवादं परिहरेयुस्तदैतच्छब्दो गकार इति वाक्यमिह शब्दार्थव्यवहारे निर्वोढुमशक्यमुक्तन्यायादित्यर्थः । विपक्षे दण्डं पातयति—इतोऽन्यथेति । जातिवाचित्वकल्पनया चेदस्य वाक्यस्य संसृष्टार्थकल्पनमभीप्सितं तदेष्टहानिः सिद्धान्तक्षतिरित्यर्थः ॥ २७३ ॥

सु० टी०—पाणिन्युक्तिमपि पुनः स्मारयति—

प्रातिपदिकान्यनतिरिक्तविपयाणि
प्राह भगवान्प्रथमशब्दितविभक्त्या ।
पाणिनिरतः सकलतर्कसमयज्ञो
वष्टि वचसोरनतिरिक्तविपयत्वम् ॥ २७४ ॥

प्रातिपदिकानीति । स हि प्रथमाख्यविभक्त्याऽभिन्नार्थानि प्रातिपदिकान्याह । अतः सोऽपि पदयोरखण्डविपयत्वं वष्टि कामयत इत्यर्थः । किं तत इत्यत्राऽऽह—सकलेति । तस्य सर्वपार्षदत्वेन तत्संमत्या सर्वसंमतिरुन्नीयत इत्यर्थः ॥ २७४ ॥

अ० टी०—अत्र पाणिन्याचार्यसंमतिमप्याह—प्रातिपादिकानीति । भगवान्पाणिनिः प्रथमशब्दितविभक्त्याऽनतिरिक्तविपयाणि प्राहेत्यन्वयः । सकलतर्कसमयज्ञ इतिविशेषणेन पाणिनिसंमत्यैव सर्ववादिसंमतिरिति सूचयति । तथा यतोऽर्थभेदाभावोऽतो हेतोर्वष्टि वचसोर्धातुभावप्रत्यययोरनतिरिक्तविपयत्वमखण्डार्थत्वं प्राहेति संबन्धः ॥ २७४ ॥

सु० टी०—नाखण्डविपया वचःप्रवृत्तिर्लोकेऽपीत्युक्तं निरस्यति—

इयं घटव्यक्तिरितीदृशेपु च
प्रसिद्धमेवैकरसार्थगोचरम् ।
पदद्वयं लोकवचःसु तेन च
प्रशस्यते नात्र विवादसंग्रहः ॥ २७५ ॥

इयमिति । सर्वनाम्नो बुद्धिस्थव्यक्तिवाचित्वाद्घटपदस्यापि व्यक्तिपदसामानाधिकरण्येन तत्परत्वात्तत एव च विभक्त्यर्थैकत्वेनापि स्वरूपाभेदस्य लक्ष्यत्वादीदृशेपु लोकवाक्येष्वपि पदद्वयमखण्डार्थमिति नात्र विवाद इत्यर्थः ॥ २७५ ॥

अ०टी०—तथाऽन्यदपि सर्वपरीक्षकसंमतमुदाहरणमाह—इयं घटव्यक्तिरिति । 'सर्वनामप्रसिद्धार्थं प्रसाध्यार्थविघातकृत्' इति न्यायेन संनिहितोपाधिवशादियमित्यस्य वस्तुस्वरूपवाचकता तावत्सिद्धा । घटव्यक्तिशब्दस्य च व्यक्तिवाचकता संमतैव । तथा चेयं घटव्यक्तिरियं पटव्यक्तिरितीदृशेषु वाक्येषु लोकवचःसु पदद्वयमेकरसार्थगोचरं प्रसिद्धमेवेत्यन्वयः । चकारोऽप्यर्थ ईदृशेषु लोकवचःस्विति संबध्यते । तेन चेत्यादि स्पष्टार्थम् । चकारोऽत्रायं परीक्ष[क]संवादैः प्रागुक्तैः सहास्य समुच्चयार्थः ॥ २७५ ॥

सु० टी०—यच्च ब्रह्म मानान्तरयोग्यं सिद्धत्वात्फलवदिति वेदस्यानुवादकत्वमुक्तं तत्र सधर्मकत्वमुपाधिमाह—

न च प्रमाणान्तरयोग्यतायां
प्रयोजकं स्यात्परिनिष्ठितत्वम् ।
यतः प्रमाणान्तरयोग्यतायां
प्रयोजकं रूपरसादिमत्त्वम् ॥ २७६ ॥

न चेति । सिद्धत्वं न तत्र प्रयोजकं किं तु रूपरसादिमत्त्वं धर्मत्वमित्यर्थः ॥ २७६ ॥

अ० टी०—तदेवमखण्डवाक्यार्थे न कस्यापि विवाद इति प्रदर्शनेनाखण्डे ब्रह्मात्मनि वेदान्तप्रामाण्यं निरपवादमिति प्रतिष्ठापितमिदानीं यदुक्तं परिनिष्ठितस्य वस्तुनो मानान्तरयोग्यत्वाद्ब्रह्मात्मनश्च परिनिष्ठितरूपत्वान्न तत्र मानान्तरनिरपेक्षं वाक्यप्रामाण्यं संभवतीति तत्राऽऽह—न च प्रमाणान्तरयोग्यतायामिति । सविशेषत्वमेव मानान्तरयोग्यतायां प्रयोजकं न परिनिष्ठितत्वं मानान्तरयोग्यत्वस्य सविशेषत्वव्याप[क]त्वादित्यर्थः । विमतं मानान्तरयोग्यं परिनिष्ठितत्वात्स्तम्भादिवदिति प्रयोगः सविशेषत्वमुपाधिरित्युक्तं भवति ॥ २७६ ॥

सु० टी०—न च तस्य साधनव्यापकत्वमात्मनो निर्धर्मकत्वादतोऽत्र मानान्तरायोग्ये ब्रह्मणि निरपेक्षं सद्वेदान्तवाक्यं प्रमाणमेवेत्याह—

ततोऽस्तु रूपादिविहीनरूपे
प्रमान्तरागोचरचित्स्वरूपे ।
वचः प्रमाणान्तरनिःस्पृहं सत्
प्रमाणमत्राऽऽत्मनि निर्विवादम् ॥ २७७ ॥

---

१ ग. °मापणीयमे°।

तत इति । निर्विवादं निरपवादम् ॥ २७७ ॥

अ० टी०—न च साधनव्यापकत्वमित्याह—ततोऽस्तु रूपादिविहीनरूप इति । रूपादिविहीनस्वरूपत्वं तावदात्मवस्तुनोऽशब्दमित्यादिश्रुतिसंमतं वादिसंमतं च चित्स्वरूपत्वादेव प्रमाणान्तरागोचरत्वमिति न साधनव्यापकत्वादीत्यर्थः । स्पष्टमन्यत् ॥ २७७ ॥

सु० टी०—उपाध्यन्तरमाह—

लोकप्रसिद्धपदगोचरतानिमित्त-
मन्यप्रमाणविषयत्वमिह प्रसिद्धम् ।
लोकप्रसिद्धपदगोचरता न चास्मि-
न्ब्रह्मात्मनीति च तदत्र निवारणीयम् ॥ २७८ ॥

लोकेति । मानान्तरयोग्यत्वे स्वतन्त्रलौकिकवाक्यगम्यत्वं निमित्तमुपाधिरित्यर्थः । साधनव्यापकत्वमुद्धरति—लोकेति । न च ब्रह्मण्यलौकिके तदस्तीति तन्मानान्तरसापेक्षत्वमत्र निवारणीयमित्यर्थः॥ २७८ ॥

अ० टी०—ननु मानान्तरयोग्यत्वं न रूपादिमत्त्वव्याप्तं रूपादिहीनेऽपि कालादौ मानान्तरयोग्यत्वदर्शनादतः साध्याव्यापकत्वमुपाधेरिति चेत्तर्हि लोकव्युत्पन्नपदवाच्यत्वं मानान्तरयोग्यतायामुपाधिरस्त्वित्याह—लोकप्रसिद्धेति । इह व्यवहारभूमौ । अत्रापि साधनव्यापकत्वं पराकरोति लोकप्रसिद्धेत्युत्तरार्धेन । अत्र ब्रह्मात्मनि तदन्यप्रमाणविषयत्वं निवारणीयमित्यर्थः । न च पूर्वोक्तोपाधेरपि साध्याव्याप्तिः कालादेरपि सगुणत्वे सविशेषत्वाद्रूपादिमत्त्वशब्देन विशेषत्वमात्रस्य विवक्षितत्वाद्ब्रह्मणि च विशेषाभावादिति द्रष्टव्यम् ॥ २७८ ॥

सु० टी०—किं च तवैव कार्यवादिन इदं दूषणमित्याह—

लोकप्रसिद्धपदगोचरताऽस्ति कार्ये
तेनास्तु कार्यपरवाक्यमशेषतस्ते ।
मानान्तरेषु परतन्त्रतया प्रमाणं
स्वार्थे न दूषणमिदं श्रुतिमस्तकेषु ॥ २७९ ॥

लोकेति । तव हि नियोगे लौकिकपदगोचरत्वमस्ति लिङादेर्लोकव्युत्पन्नत्वात्तेन च कार्यपरं सर्वं वेदवाक्यं स्वार्थे मानान्तरपरतन्त्रत्वेनाप्र-

---

१ क. °प्रयुक्तप° । २ क. ग. °देर्लौकिक ।

माणं स्यादित्यर्थः । स्वतोऽप्यापत्तिं निरस्यति—नेति । वेदान्तेषु तदभावादित्यर्थः ॥ २७९ ॥

अ० टी०—एवं सति कार्यवाक्यस्य मानान्तरसापेक्षत्वप्राप्तिर्न वेदान्तवाक्यस्येति लोकप्रसिद्धपदगोचरत्वस्य मानान्तरगोचरत्वाव्यभिचारं द्रढयति—**लोकप्रसिद्धपदगोचरताऽस्ति कार्य इति** । कार्यवाचिनो लिङादिपदस्य लोक एव व्युत्पन्नत्वात्कार्ये लोकप्रसिद्धपदगोचरताऽस्ति तेन हेतुना कार्यवादिनः कार्यपरवाक्यमशेषतोऽशेषेषु मानान्तरेषु परतन्त्रतया स्वार्थे प्रमाणमस्त्विति योजना । इदं दूषणं मानान्तरायत्तं स्वार्थे प्रामाण्यमित्येवंरूपं न श्रुतिमस्तकेषु वर्तते ब्रह्मपदस्य लिङादिपदवल्लौकिकपदत्वाभावादित्यर्थः ॥ २७९ ॥

सु० टी०—क्रियां विना न वाक्यत्वमित्युक्तं निरस्यति—

> न च क्रियाकारितसंहतानि
> पदानि लोके नियमेन वक्तुम् ।
> समीहते पक्वमतिः पदानां
> क्रियां विनाऽप्यन्वयदर्शनेन ॥ २८० ॥

न चेति । प्रधानया क्रियया कारिता संहतिरन्वयो येषामीदृशान्येव पदानि प्रयोक्तुं पक्वमतिर्व्युत्पन्नमतिः समीहत इति नायं नियमः । क्रियां विनाऽपि पदानामन्वयदर्शनादित्यर्थः ॥ २८० ॥

अ० टी०—यत्पुनः क्रियां विना पदानामन्वयायोगात्क्रियापदाङ्गीकारे च वाक्यस्य तत्प्राधान्यान्न सिद्धे प्रामाण्यसंभव इत्युक्तं तत्राऽऽह—**न च क्रियेति** । पक्वमतिः प्रेक्षापूर्वकारी ॥ २८० ॥

सु० टी०—उदाहरणमाह—

> महीभुजोऽयं पुरुषो मनस्वी
> वनस्पतेस्तत्फलमित्यपीह ।
> क्रियां विनाऽप्यन्वयवन्ति
> लोके पदानि दृष्टानि वहूनि वक्तुः ॥ २८१ ॥

महीति । वक्तुरीदृशवाक्येषु क्रियां विनाऽप्यन्वितानि पदानि दृष्टानीति संबन्धः । न चात्रापि क्रियापदाध्याहारः संबन्धमात्रपरत्वेनात्र तदसंभवादिति भावः ॥ २८१ ॥

अ० टी०—क्रियापदं विनाऽपि पदानामन्वयदर्शनमुदाहरति—महीभुजोऽयमिति। इह लोके क्रियां विनाऽप्यन्वयवन्ति बहूनि पदानि वक्तुर्मुखान्निर्गतानि दृष्टानीति योजना। उदाहरणार्थः सुगमः। संबन्धनिष्ठत्वादेतादृशवाक्यानां नात्र क्रियापदाध्याहारसंभव इति भावः॥ २८१॥

सु० टी०—इष्यते च प्रकृतेऽपि क्रियापदमित्याह—

क्रियापदं वेदशिरःस्वपीष्यते
विवक्षितार्थानुगुणं तु तन्मतम्।
विवक्षितार्थप्रतिपत्तिघाति तु
क्रियापदं स्वीकृतमप्यनर्थकम्॥ २८२॥

क्रियेति। ननु तदभ्युपगमे विवक्षितार्थभङ्ग इति नेत्याह—विवक्षितेति। यादृक्क्रियापदाङ्गीकारे वस्तुपरत्वं न विहन्यते तादृगित्यर्थः। ननु तर्हि कार्यपरमेव लिङादि तत्र किं नेष्यत इति चेद्विवक्षितार्थविरोधित्वादित्याह—विवक्षितेति। यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र विवक्षितदधिफलसंबन्धविरोधि क्रियापदमानर्थक्यात्संनिहितहोमानुवाद इति॥ २८२॥

अ० टी०—क्रिययाऽन्वयसंभव इत्यभ्युपगमेऽपि वेदान्ते न विवक्षितार्थत्वविरोध इत्याह—क्रियापदमिति। यत्र क्रियापदमिष्यते तद्विवक्षितार्थानुगुणमेवेष्यते। यत्तु क्रियापदं विवक्षितार्थप्रतिपत्तिघाति तत्स्वीकृतमपि निरर्थकमतो वेदशिरःस्वपि स्वार्थप्रतिपत्त्यविघातकतयाऽर्थप्रतीत्यनुकूलमेव क्रियापदमेष्टव्यं तदप्यस्तीत्यर्थः॥ २८२॥

सु० टी०—किं तदनुगुणं क्रियापदमिति चेत्तत्राऽऽह—

अस्त्यस्म्यसीति च पदं प्रचुरं क्रियाया
वेदान्तवाक्यगतमादरतः पठन्ति।
तन्मात्रतः सकलवेदशिरःपदानां
संघातसिद्धिरिति वेदशिरोनिपण्णाः॥ २८३॥

अस्त्यसीति। अस्ति ब्रह्माहं ब्रह्मास्मीत्येतादृशक्रियापदैर्वस्तुसत्तामात्राभिधायिभिर्वस्तुप्राधान्याविघातात्तावतैवोपनिषदां वाक्यत्वसिद्धिरिति मन्यन्त इति शेषः॥ २८३॥

अ० टी०—किमत्र क्रियापदं यदङ्गीकारे वाक्यस्य वस्तुपरत्वाविरोध इति तत्राऽऽह—**अस्त्यस्म्यसीति**। अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते। ब्रह्मास्मि तत्त्वमसीति च वेदान्तवाक्यगतं क्रियायाः पदमिति संबन्धः। तन्मात्रतस्तादृशक्रियायोगमात्रतो वेदशिरोनिषण्णाः संप्रतिपन्ना इति शेषः। न चैवंविधक्रियाङ्गीकारेऽपि वाक्यस्य क्रियाप्राधान्याद्वस्तुपरत्वानुपपत्तिरिति वाच्यमस्त्यादिशब्दस्य सत्तामात्रविषयत्वात्। न हि सत्ताऽपि क्रिया तस्या वस्तुस्वरूपमात्रत्वादन्यथा द्रव्येतरपदार्थानामसदात्मत्वप्रसङ्गात्। तस्माद्वस्तुस्वरूपसत्तैव क्रियात्वोपचारेणाऽऽख्यातपदेनोच्यते। अतो नैतादृशक्रियापदैर्वस्तुप्राधान्यहानिरिति भावः॥ २८३॥

**सु० टी०—नन्वेवं सत्युपनिषदां सापेक्षत्वप्रसङ्ग इति प्राभाकरीयं चोद्यमनुभाषते—**

**यत्तु प्रमाणमनुभूतिरिति प्रमाण-**
**सामान्यलक्षणमनूद्य पुनर्वदन्ति।**
**सत्ताप्रमाणघटनां प्रति योग्यताऽतो**
**नास्त्यर्थनिष्ठवचनेष्वनपेक्षतेति॥ २८४॥**

यत्त्विति। **अनुभूतिः प्रमाणमिति प्रमाणसामान्यलक्षणं (*लोकसिद्धमनूद्य प्रमाणप्रवृत्तियोग्यता सत्तेति सत्तालक्षणं) वदन्तीत्यतो वस्तुनिष्ठवाक्येषु सत्ताविषयत्वाज्ज्ञानपेक्षत्वरूपं प्रामाण्यमस्तीत्यर्थः॥ २८४॥**

अ० टी०—यद्यस्त्यर्थनिष्ठं वाक्यं स्यात्तदा सत्तायाः प्रमाणयोग्यतालक्षणत्वात्प्रमाणयोग्यतैव वाक्यार्थः स्यात्तथा च प्रमाणान्तरयोग्यताऽपि स्यादिति मानान्तरसापेक्षत्वप्रसङ्ग इति प्राभाकराणां चोद्यमनुवदति—**यत्तु प्रमाणमिति**। अनुभूतिः प्रमाणमिति प्रमाणसामान्यलक्षणं स्वशास्त्रसिद्धमनूद्य यत्तु पुनर्वदन्ति तद्दुर्घटमिति परेण संबन्धः। किं वदन्ति तदाह—**सत्तेति**। प्रमाणघटनां प्रति योग्यता सत्ता प्रमाणाधीना सत्तेति यावत्। एवं यतोऽतोऽस्त्यर्थनिष्ठवचनेषु नानपेक्षतेति वदन्तीति योजना॥ २८४॥

**सु० टी०—दूषयति—**

**तद्दुर्घटं न खलु संविदियं स्वयोग्या**
**न ह्यात्मनि स्थितिमुपैष्यति योग्यताऽस्याः।**

---

* ग्रन्थोऽयं क, पुस्तके नास्ति।

वस्त्वन्तरोपनिहितस्वपदत्वहेतो-
र्नह्यात्मरूपदहने दहनस्य शक्तिः ॥ २८५ ॥

तदिति । कथं दुर्घटमित्यत्राऽऽह–न खल्विति । अनुभूतिर्हि संवित्तद्योग्यता च सत्तेत्युक्तम् । न च संवित्संविद्योग्या विषयताया भिन्ननिष्ठत्वेन स्वात्मन्यभावात् । नापि संविदन्तरयोग्या स्वप्रकाशत्वात् । न च परोक्षसंविद्विषयत्वात्तथा तदनावश्यकत्वादिति न सा सती स्यात्तदे-तदाह–न हीति । कुत इत्याह–वस्त्वन्तरेति । वस्त्वन्तरं घटादि तत्रोपनि-हितं स्वपदं स्वकर्मत्वं यया तस्या भावस्तत्त्वं तत इत्यर्थः । न ह्यात्मेति । यथा वह्नेर्वस्त्वन्तरमेव दाह्यं नाऽऽत्मेत्यर्थः ॥ २८५ ॥

अ० टी०—अनूदितं मतं दूषयति—तद्दुर्घटमिति । कथं दुर्घटमिति तदाह—न खल्विति । इयं संवित्र खलु स्वयोग्या स्वग्राह्या न भवतीत्यर्थः । तत्र हेतुः—न हीति । योग्यता ग्राह्यताऽऽत्मनि ग्राहकस्वरूपे स्थितिं निष्ठां न ह्युपैष्यति । कुत इत्यत आह—अस्या वस्त्वन्तरेति । पदशब्दो विषयवचनः । विषयस्य भावो विषयत्वं स्वं च तद्विषयत्वं च स्वविषयत्वं वस्त्वन्तरेणोपनिहितं च तत्स्वपदत्वं चेति वस्त्वन्तरोपनिहितस्वपदत्वं तस्माद्धेतोरिति विग्रहः । स्वातिरिक्तप्रमा-णवस्तुकृतत्वाद्ग्राह्यगताविषयत्वस्येत्यर्थः । भेदाभावे ग्राह्यग्राहकत्वायोगे दृष्टान्तं द्योतयन्नाह—न हीति । आत्मरूपदहने दहनस्वरूपदाहे तस्यैव दहनस्य न हि शक्तिर्दृष्टा दाह्यदाह-कभेदाभावादित्यर्थः । एकस्यैवैकदैकस्यां क्रियायां कर्मकर्तृभावेन गुणप्रधानत्वविरोधान्ना-नुभूतिः स्ववेद्या नाप्यन्यवेद्याऽन्यस्य जडत्वे वेदकतासंभवादजडत्वे तस्याप्यनुभूतिमात्र-त्वात्समानस्वभावतया प्रदीपयोरिव मिथो विषयविषयिभावायोगादनुभूतिर्न मानग्राह्येति मानयोग्यत्वं सत्त्वमितिपक्षेऽनुभूतेरसत्त्वप्राप्तिरिति भावः ॥ २८५ ॥

सु० टी०–ततः किमिति चेत्तत्राऽऽह–

संवित्प्रमाणघटनां प्रति योग्यतां चे-
न्नेयं बिभर्ति न सती भवितुं समर्था ।
तद्योग्यतैव यदि मातृघटादिसत्ता
तस्याप्यसत्त्वमिति शून्यमुपाजिहीथाः ॥ २८६ ॥

संविदिति । प्रमाणघटनां प्रति प्रमाणविषयत्वं प्रति । अस्तु संविद-

सती किं नश्छिन्नमिति चेत्तत्राऽऽह—तद्योग्यतेति । तस्या असत्त्वे मातृमान-घटादेरपि तद्योग्यता । लक्षणसत्त्वाभावे शून्यवाद इत्याह—शून्यमिति । उपाजिहीथा उपागच्छेः ॥ २८६ ॥

अ० टी०—उक्तमेवार्थं स्फुटयन्सत्त्वस्य मानाधीनतायां सर्वार्थासिद्धिं दोषं प्रसञ्जयति—संवित्प्रमाणघटनामिति । इयं संविदिति संबन्धः । प्रमाणविषयतां चेन्न विभर्तीत्यर्थः । तदा प्रमाणाधीना सत्त्वेति मते सा सती भवितुं न समर्था सत्त्वासिद्धेरनुभूतेरसत्त्वमेव स्यादित्यर्थः । एवमनुभूतेः प्रमाणस्यासत्त्वे तद्योग्यतालक्षणं सत्त्वमितरेषामपि न स्यादिति जगच्छून्यतापत्तिरित्याह—तद्योग्यतैवेति । तस्यापि मातृघटादेरपीति यावत् । उपाजिहीथा उपगतवानसीत्यर्थः ॥ २८६ ॥

सु० टी०—तस्मादन्यादृशमेव सत्त्वमभ्युपेयमित्याह—

वस्तुस्वभाव इति सत्त्वमतो गृहाण
तच्च द्विधेति वितथावितथत्वभेदात् ।
सत्त्वं द्विरूपमितरेतरसंकरेण
सच्छब्दवाच्यमिति च व्यवहारकाले ॥ २८७ ॥

वस्तुस्वभाव इति । बाधायोग्यं वस्तुस्वरूपमेव सत्त्वं न तु मानान्तरयोग्यत्वमित्यस्त्यर्थनिष्ठवाक्येषु न सापेक्षत्वमित्यर्थः । तथाऽपि नावाग्गोचरे शुद्धेऽस्त्यादिशब्दवृत्तिरिति तद्वाच्यं शबलं वक्तुं सत्ताद्वयं विभजते—तच्चेति । तच्च सत्त्वं द्विधेति गृहाणेत्यनुषङ्गः । अवितथस्य व्यवहारातीतत्वेन शबलस्यैव वाच्यत्वमित्याह—सत्त्वमिति । संकरेण परस्पराध्यासेनैकीभूतं द्विरूपं सत्त्वं व्यवहारदशायां सच्छब्दवाच्यमित्यपि गृहाणेत्यर्थः ॥ २८७ ॥

अ० टी०—तस्मादनुभूतिः प्रमाणमित्यङ्गीकुर्वता मानयोग्यत्वं सत्त्वमिति दुराग्रहं परित्यज्य वस्तुस्वरूपमेव सत्त्वमिति ग्राह्यमित्याह—वस्तुस्वभाव इति । सत्त्वस्य वस्तुस्वभावत्वे तस्य मानाधीनत्वासिद्धेर्मानान्तरयोग्यता दूरापास्तेति सिद्धमिति भावः । तथाऽपि सन्मात्रे ब्रह्मण्यवाच्ये कथमस्त्यर्थनिष्ठस्य शब्दस्य प्रवृत्तिरिति तत्राऽऽह—तच्च द्विधेति । तच्च सत्त्वं द्विधेति गृहाणेत्यनुषङ्गः । परमार्थत्वापरमार्थ[त्व]भेदाद्द्विधेत्यर्थः । एकमेव सत्त्वं चिदात्मरूपं स्वरूपतो बाधानिरूपणादवितथं तदेव वाच्यदृश्यो-

परक्ततया वाच्यत्वाद्वितथं च न सत्त्वद्वैविध्यमपि निरपेक्षमस्तीति भावः। तच्च द्विरूपं सत्त्वमविवेकापन्नं सद्व्यवहारकाले सच्छब्दवाच्यमिति गृहाणेत्यन्वयः। स्वरूपेणावाच्यमपि ब्रह्म शबलाकृति सद्वाच्यमिति भवेच्छब्दवृत्तिगोचर इति भावः॥२८७॥

सु० टी०—तत्र शबलार्थत्वे विरोधाद्वाक्यानन्वय इति भागलक्षणामाह—

उत्सृज्य तत्र वितथांशमथेतरस्मि-
न्संवित्स्वरूपपरमार्थसति स्वरूपे।
बुद्धिं कुरु प्रणिदधत्प्रणयेन भूम्नि
ब्रह्माहमस्मि परमार्थसदित्यजस्रम्॥ २८८॥

उत्सृज्येति। वितथांशमुत्सृज्याथेतरस्मिन्नुपादेये परमार्थसति स्वीये रूपे प्रणिदधदेकाग्रं मनः कृत्वाऽहं ब्रह्मास्मीति बुद्धिं कुर्वित्यर्थः। अस्मीत्यस्यार्थः परमार्थसदिति॥ २८८॥

अ० टी०—शबलस्य शब्दगोचरत्वेऽपि स्वरूपे कथं शब्दप्रवृत्तिस्तदभावे च कथं तत्र वाक्यस्य प्रामाण्यमिति शङ्कायां वेद्यांशप्रहाणेन शोधिते पदार्थस्वरूपे लक्षणया पर्यवसानसंभवाद्युक्तं तत्र शब्दप्रामाण्यमित्याह—उत्सृज्य तत्रेति। इतरस्मिन्नित्युक्तांशस्वरूपमाह—संविदिति। संवित्स्वरूपं च तत्परमार्थसच्चेति। तथाऽस्मिन्स्वरूपे वस्तुनि भूम्नि परिपूर्ण इति योज्यम्। एवंविधे स्वरूपे प्रणिदधत्प्रणयेन सम्यगाहितस्नेहेन सादरतरवृत्त्येति यावत्। परमार्थसद्ब्रह्माहमस्मीत्यजस्रं निरन्तरं बुद्धिं कुर्विति योजना॥ २८८॥

सु० टी०—किं च प्रमान्तरमिहेत्यादिश्लोकोक्तं चोद्यमुद्धरति—

ब्रह्म स्वयंप्रभमतः शबलेषु तस्य
मानान्तरानधिगतेष्वपि शब्दशक्तिः।
रूपेषु वृद्धजनसंव्यवहारहेतोः
शक्या ग्रहीतुमुदितेन पथाऽनभिज्ञैः॥ २८९॥

ब्रह्मेति। स्वयंप्रभत्वादेव मानान्तरानधिगतेष्वपि शबलस्वरूपेषु प्रत्यगात्मादिपदानां शक्तिर्वृद्धव्यवहारेण सुग्रहैव सिद्धत्वमात्रस्य शक्तिधीहेतुत्वादित्यर्थः। उदितेन पथा निःसंधिबन्धनमित्यत्रोक्तेन॥ २८९॥

१ क. ग. उचिते°।

अ० टी०—यत्पुनरुक्तं ब्रह्मणो मानान्तरगोचरत्वे वेदान्तानामनुवादत्वं स्यात्तदगोचरत्वे तत्र न शब्दशक्तिग्रह इत्यबोधकतेति तत्परिहरति—**ब्रह्म स्वयंप्रममिति।** यतो ब्रह्म स्वप्रकाशमतो मानान्तरानधिगतेष्वपि तस्य ब्रह्मणो रूपेषु वृद्धजनसंव्यवहारहेतोरनभिज्ञैः प्रागुदितेन पथा शब्दशक्तिर्ग्रहीतुं शक्येति योजना। ब्रह्मणो मानाविषयत्वे स्वयंप्रकाशत्वात्तस्यानात्मशबलान्यपि रूपाणि साक्षिसिद्धानि भवन्ति व्यवहारदशायामिति तन्निबन्धनस्तेषु प्रागुपपादितप्रकारेण सत्यादिशब्दशक्तिग्रहः संभवतीति नोक्तदोषद्वयावकाश इति भावः॥ २८९॥

**सु० टी०—अलौकिकमायाशबलब्रह्मभूमादिपदानां शक्तिग्रहोपायमाह—**

**लोकप्रसिद्धार्थपदान्तराणां समीपसंकीर्तनतोऽपि शक्तिः।**
**ब्रह्मादिशब्दस्य सुखावसेया यथा हि यूपादिगिरस्तथैव॥२९०॥**

**लोकेति। लोके प्रसिद्धानि यानि 'यतो वा इमानि' [तैत्ति० ३। १] इत्यादिपदानि तेषां समीपे 'तद्ब्रह्म' [छा० १।७।९] इत्येवं ब्रह्मशब्दसंकीर्तनाज्जगत्कारणमद्वैतं ब्रह्मशब्दार्थ इति निर्श्चीयते तथा 'यत्र नान्यत्पश्यंति नान्यच्छृणोति नान्यद्विजानाति स भूमा' [छा० ७।२४। १] इत्यादौ भूमादिशब्दार्थ इति। यथा 'यूपं तक्षति यूपमष्टास्री करोत्यग्निमादधीत' इत्यादिप्रसिद्धार्थपदसमभिव्याहारात्तत्तत्संस्कारविशेषविशिष्टे दारुणि यूपशब्दस्याऽऽधानसंस्कृते चाग्नावाहवनीयादिपदस्य शक्तिग्रह इत्यर्थः॥ २९०॥**

अ० टी०—ब्रह्मलक्षणवाचिनां सत्यादिपदानां व्युत्पत्तिप्रकारः 'आकाशादौ सत्यता तावदेका' इत्यादिना प्रागुपपादित इदानीं लक्ष्यवाचिब्रह्मपरमात्मसदादिपदानां व्युत्पत्तिप्रकारमाह—**लोकप्रसिद्धेति।** लोकप्रसिद्धार्थपदान्तराणि ब्रह्मादिपदेभ्योऽन्यान्यस्ति भाति सत्यमिदमित्यादीनि तेषां समीपे संकीर्तनतस्तत्समभिव्याहारादपि ब्रह्मादिशब्दस्य शक्तिः सुखावसेयेति योजना। अपिशब्दात्स्वरूपतोऽपि शक्तिः सुखावसेयेति। एतदुक्तं भवति—बृहतिधात्वर्थस्तावत्प्रसिद्धो लोके महत्त्वावद्योतकः। स च स्वार्थसंकोचकप्रकरणोपपदयोरभावे निरङ्कुश एवावतिष्ठते। तच्च निरङ्कुशमहत्त्वं दृश्येषु न संभावितं दृश्यस्य सर्वस्य देशतः कालतो वस्तुतश्च परिच्छेदादतो ब्रह्मशब्द एव बृहेर्धातोर्निष्पन्नः स्वमहिम्ना प्रपञ्चविलक्षणं ब्रह्म

---

१ क. ग. °त्यग्नीनाद°। २ क. ग. संस्तुते।

ग्राहयतीति स्वरूपतोऽपि ब्रह्मपदस्य ब्रह्मणि व्युत्पत्तिः। तथाऽस्ति भाति सत्यं ज्ञानमित्यादीनि पदानि व्यवहारदृष्ट्या लोके प्रसिद्धार्थघटपटादिविषयाणि तैः सह ब्रह्मपदस्य समभिव्याहारे सति 'यतो वा' [ तै० ३ । १ । १ ] इत्यादिवाक्यैर्जगदुदयस्थितिलयहेतुत्वेन नियम्यमानं सर्वजगदाधारभूतं सर्वकार्यस्यूतं महद्वस्तु ब्रह्मेति वैदिकपदकदम्बसत्यज्ञानादिवाक्यगतब्रह्मशब्दव्युत्पत्तिरप्युपपद्यत इति । प्रसिद्धपदसमभिव्याहारादप्यप्रसिद्धपदार्थव्युत्पत्तिर्भवतीत्यत्र दृष्टान्तमाह—यथा हीति । यूपादीत्यादिपदादाहवनीयग्रहः । यथा यूपशब्दार्थो लौकिकोऽपि 'खादिरो यूपो वैल्वो यूपो यूपं तक्षति यूपमष्टास्त्री करोति' इत्यादिषु प्रसिद्धार्थखादिरादिपदसमभिव्याहारात्तक्षणविशेषादिसंस्कृतः काष्ठविशेषो यूप इति व्युत्पत्तिर्जायते तथा 'आहवनीये जुहोति' इति प्रसिद्धार्थहोमवाचिपदसमभिव्याहारादाहुतिप्रक्षेपाधारोऽग्निराधानसंस्कृत आहवनीय इति व्युत्पत्तिर्भवतीति ॥ २९० ॥

सु० टी०—संप्रति शक्तिग्रहं विनाऽप्युपनिषत्पदानां ब्रह्मणि प्रमितिजननसंभव इत्याह—

विनाऽपि शक्तिग्रहणं पदानां परात्मनोर्वाचकभावभाजाम् ।
भवेत्परब्रह्मणि वेदवाक्यात्प्रतीतिरन्यप्रतिषेधनेन ॥ २९१ ॥

विनाऽपीति । परात्मनोर्जीवब्रह्मणोर्वाचकानां पदानां शक्तिग्रहं विनाऽप्यधिष्ठानानुवादेनेतरप्रतिषेधसामर्थ्यादेव नेतीत्यादिवाक्यात्परब्रह्मणि विषये प्रतीतिर्भवेदित्यर्थः ॥ २९१ ॥

अ० टी०—मा भूद्ब्रह्मणि कथंचिदपि शब्दशक्तिग्रहो विनाऽपि तेन तत्र वेदान्तप्रामाण्यसंभवादित्याह—विनाऽपीति । परस्तत्पदार्थ आत्मा त्वंपदार्थस्तयोः परात्मनोर्वाचकभावभाजां पदानां ब्रह्मात्मादिशब्दानां शक्तिग्रहणं विनाऽप्यन्यप्रतिषेधनेनानात्मापोहेन वेदवाक्याद्ब्रह्मणि प्रतीतिर्भवेदिति योजना ॥ २९१ ॥

सु० टी०—व्युत्पत्तिं विना वाक्यार्थबोधेऽतिप्रसङ्ग इति चेन्न पदान्तरव्युत्पत्त्यैव तत्सिद्धिरित्याह—

नञः प्रपञ्चप्रतिपादकस्य च
प्रतीत्य शक्तिं व्यवहारतः स्थितः ।

१ क. ग. °तिषेव° ।

पदस्य शक्नोति परं समीक्षितुं
श्रुतेः प्रपञ्चप्रतिषेधमार्गतः ॥ २९२ ॥

नञ इति । नञ्पदस्य निषेध्यप्रपञ्चवाचिमूर्तामूर्तादिपदस्य च व्यवहारा-च्छक्तिं प्रतीत्य स्थितः सन्नेतीत्यादितस्तन्निषेधद्वारा परिशिष्यमाणमा-त्मानं द्रष्टुं शक्नोतीत्यर्थः ॥ २९२ ॥

अ० टी०—ननु निषेधवाक्यवर्तिनामपि पदानां तुल्या व्युत्पत्त्यपेक्षेति चेत्सत्यं तेषां त्वनात्मविषयव्युत्पत्त्यैव ब्रह्मणि प्रवृत्तिसंभवात्पृथक्तत्र न व्युत्पत्त्यपेक्षेत्याह—नञः प्रपञ्चेति । व्यवहारतो व्यवहारे स्थितः पुमान्प्रपञ्चप्रतिपादकस्यानात्मवाचकपदस्य नञो नञ्पदस्य च शक्तिं प्रतीत्य श्रुतेर्वेदान्तवाक्यात्प्रपञ्चप्रतिषेधमार्गतः परं ब्रह्म समीक्षितुं शक्नोतीति योजना । अभ्युपगम्यवादोऽयं विधिवाक्यं विना वस्त्वसिद्धेरुक्तत्वात् । यद्वा संभववाद एवायं सर्वानात्मनिषेधस्य सावधित्वादवधेश्चैकत्वान्निषेध्यासजातीयत्वाच्च परिच्छेदज्ञापकहेत्व-भावादपरिच्छिन्नवस्तुत्वेनावधेर्ब्रह्मपदगोचरत्वोपपत्तेः । न चैवं सति पूर्वापरोक्तिपराहतिः पूर्वत्र निषेधवाक्यानामखण्डवस्तुनि स्वातन्त्र्याभावमात्रस्योपपादितत्वादिह पदार्थसन्मात्र-स्योपस्थापकतया ब्रह्मपदार्थसमर्पकत्वस्य विवक्षितत्वादिति द्रष्टव्यम् ॥ २९२ ॥

सु० टी० पूर्वं[1] प्रवृत्त्याद्यहेतोर्वाक्यस्य न प्रामाण्यमित्युक्तं तत्र न प्रवृत्त्यादिहेतुत्वं प्रामाण्ये तन्त्रं किं तु प्रमाहेतुत्वम् । न वा प्रवृत्त्यादि-विषयत्वं मेयत्वे तन्त्रमपि त्वज्ञातत्वमेवेत्याह—

ब्रह्मास्मीति वचो निविष्टपदयोर्मानं भवेदन्वयः
साक्षादद्वयवस्तु तस्य च भवेन्मेयं ततस्तद्गतेः ।
यद्यत्र प्रमितिं करोति भवति प्रामाण्यमत्रास्य च
स्पष्टं दृष्टमिदं हि युक्तिघटितं रूपे यथा चक्षुषः ॥ २९३ ॥

ब्रह्मास्मीति । पदयोरन्वयोऽन्वितं पदद्वयमित्यर्थः । तन्मानं भवेद्ब्रह्मा-स्मप्रमाहेतुत्वादेवमद्वितीयं ब्रह्म तस्य मेयं भवेन्मानान्तरानधिगतत्वा-दित्यर्थः । तर्हि ग्रावाणः प्लवन्त इत्यपि स्वार्थे मानं स्यान्नेत्याह—यदिति । यद्यत्र प्रमाजनकं तत्तत्र प्रमाणं यथा रूपे चक्षुरि-त्यर्थः ॥ २९३ ॥

---

१ क. ग. °र्वमतीत्यस्थितः सन्नाय° ।

अ० टी०—यत्पुनः प्रवृत्तिनिवृत्त्यनुपयोगिनि वस्तुनि न प्रामाण्यं शब्दस्येत्युक्तं तत्रेदं वक्तव्यं किं प्रामाण्योपयोगित्वेनार्थस्य प्रवृत्त्याद्युपयोगोऽपेक्ष्यते किं वा प्रयोजनसिद्ध्यर्थमिति तत्र नाऽऽद्यो बोधकत्वेनैव प्रामाण्यसिद्धेरित्याह—**ब्रह्मास्मीति वच इति।** वचो वाक्यम्। अन्वयः सामानाधिकरण्यरूपः संबन्धः। समानाधिकृतं पदद्वयात्मकं वाक्यं मानं भवेदित्यर्थः। तस्य च वाक्यस्य साक्षादद्वयवस्त्वेकरसं ब्रह्मात्मकं मेयं भवेदिति संबन्धः। कुत इत्यत आह—**ततस्तद्गतेरिति।** तस्मात्प्रमाणात्तस्य प्रमेयस्यावगमादित्यर्थः। उक्तमर्थं सामान्यव्याप्तिकेनानुमानेन साधयति—**यद्यत्रेति।** विमतं विमते प्रमाणं तत्र प्रमितिजनकत्वाद्यद्यत्र प्रमितिं जनयति तत्तत्र प्रमाणं यथा रूपे चक्षुरित्यर्थः। इदं हि युक्तिघटितमित्यस्यायमर्थः। ज्ञानं ह्युत्पद्यमानं न निर्विषयमुत्पद्यते विषयप्रकाशनं च तस्य स्वभावः। तथा च येन केनापि करणेनोत्पन्नं ज्ञानं करणदोषाद्बाधकज्ञानाद्वा विना नाप्रमा भवेदुत्सर्गतः सर्वज्ञानानां प्रमारूपत्वोपगमात्। एवंसति वेदान्तवाक्यानामदुष्टज्ञानकरणत्वात्तद्विषयापहारिमानान्तराभावाच्चार्थावबोधकत्वेनैव प्रामाण्यं चक्षुरादिवदुपपन्नमिति ॥ २९३ ॥

सु० टी०—तर्हि सोऽरोदीत्यादेरपि स्वार्थे प्रामाण्यं स्यादिति चेन्नेत्याह—

> मानान्तरानधिगतं परिनिष्ठितं य-
> द्वेदः समर्पयति चेतसि तत्परः सन्।
> तत्तथ्यमेव भवतीति समाश्रयस्व
> श्रेयस्करो विधिगिरोऽवगतो यथैव ॥ २९४ ॥

मानान्तरेति। **तत्र स्वार्थे तात्पर्याभावादप्रामाण्यं यत्पुनर्मानान्तराज्ञातं सिद्धमपि वस्तु तात्पर्येण वेदः समर्पयति तद्वेदप्रमाणकमेव भवति। यथा विधिवाक्यावगतो धर्म इति समाश्रयस्वेत्यर्थः ॥ २९४ ॥**

अ० टी०—ननु नोक्तयुक्त्यनुमानाभ्यां ब्रह्मणि वेदान्तमानत्वसिद्धिर्युक्ता सोऽरोदीदित्यादिवाक्ये मानान्तराबाधितार्थबुद्धिजनकत्वेऽपि स्वार्थे प्रामाण्यादर्शनादतः प्रवृत्तिनिवृत्त्युपयोग्यर्थकत्वाभावात्सप्तद्वीपा वसुमतीवाक्यवदप्रामाण्यं वेदान्तानामिति द्वितीयं पक्षमाशङ्क्य सोऽरोदीत्सप्तद्वीपेत्यादिवाक्यानां स्वार्थमात्रज्ञानस्याफलत्वादेवाप्रामाण्यं न प्रवृत्त्याद्युपयोग्यर्थावबोधकत्वात्प्रकृतवाक्ये तु स्वार्थज्ञानस्य साक्षात्फलवत्त्वादित्यभिप्रेत्याऽऽह—**मानान्तरेति**—यत्परिनिष्ठितं सिद्धं वस्तु वेदः समर्पयति तद्वस्तु तथ्यमेव तथारूपमे-

चेति समाश्रयस्वेति योजना । तर्हि ' वायुर्वै क्षेपिष्ठा देवता ' इत्यादेरपि तथा भूतार्थत्वेन प्रामाण्यं स्यादित्यत आह—मानान्तरानधिगतमिति । तथाऽपि सोऽरोदीदित्यादौ प्रसङ्गोऽत उक्तं तत्परः सन्निति । तात्पर्यं साक्षात्फलवदर्थावबोधकत्वं सोऽरोदीदित्यादौ न साक्षात्फलवदर्थावबोधकत्वमिति विशेषः । फलवत्त्वार्थबोधकत्वेन प्रामाण्ये दृष्टान्तमाह—श्रेयस्कर इति । यथैव विधिगिरो विधिवाक्याच्छ्रेयस्करोऽर्थोऽवगतस्तथेत्यर्थः । तस्माच्चोदनाया इव धर्मे ब्रह्मणि समन्वयस्य प्रामाण्यमविशिष्टं तात्पर्येणार्थावबोधकत्वाविशेषादिति भावः ॥ २९४ ॥

**सु० टी०—नन्वज्ञातत्वेऽपि न ब्रह्म वेदप्रमेयमकार्यत्वात्तथा समन्वयोऽपि न तत्र प्रमाणमचोदनात्वादिति चेत्तत्राऽऽह—**

निष्पन्नमेव यदि वा पुरुषप्रयत्न-<br>
निष्पाद्यमस्तु तदनङ्गमिह प्रमेये ।<br>
एवं विधिर्भवतु शब्दसमन्वयो वा<br>
प्रामाण्यकारणमिदं न वदन्ति सन्तः ॥ २९५ ॥

निष्पन्नमेवेति । इह प्रमेये धर्मेऽद्वैते वा निष्पन्नत्वं निष्पाद्यत्वं वा न शब्दप्रमेयत्वप्रयोजकं किं त्वनधिगतत्वतात्पर्यविषयत्वे एव तथाविधत्वं समन्वयत्वं वा न प्रामाण्ये तन्त्रमपि त्वज्ञातार्थत्वतत्परत्वे एव लाघवादित्यर्थः ॥ २९५ ॥

अ० टी०—नन्वज्ञातार्थत्वतत्परत्वे यद्यपि वेदप्रामाण्यप्रयोजके तथाऽपि न तन्मात्रेण प्रामाण्यसिद्धिः किं त्वर्थस्य प्रयत्ननिष्पाद्यत्वं शब्दस्य चोदनात्वं चापेक्ष्यैव प्रमाणप्रमेयभाव इति चेत्तत्राऽऽह—निष्पन्नमेवेति । प्रमेयेऽर्थे यन्निष्पन्नत्वं निष्पाद्यत्वं वा तन्न शब्दप्रामाण्येऽङ्गमिह शब्दार्थ व्यवहार इत्यर्थः । यथा प्रमेये नियमाभाव एवं विधिरित्यादि सुगमम् । सन्त इदं विधित्वं समन्वयत्वं वा प्रामाण्यकारणं न वदन्तीत्यर्थः । अज्ञातार्थत्वतत्परत्वयोः सतोरपि विषयगतकार्यत्वस्य वा वेदगतचोदनात्वस्य वाऽभावमात्रापराधेनाप्रामाण्यदर्शनान्नेदमुभयत्र कारणमिति भावः ॥ २९५ ॥

**सु० टी०—ननु क्वचित्सिद्धं वेदे प्रमेयं क्वचित्साध्यमित्यननुगमापत्तेः कार्यमेव वेदार्थ इति चेन्नेत्याह—**

नीलैकगोचरतया नियतं न चक्षु-<br>
र्नाप्यस्य पीतविषये नियमोऽस्ति शक्तेः ।

तद्वन्न वेदवचसामपि शक्तियोगः
कार्यादिवस्तुषु कथं च न पक्षपाती ॥ २९६ ॥

नीलेति । यथा हि रूपत्वावान्तरजातिविशेषा नीलत्वपीतत्वादयो न चक्षुर्विषयत्वे प्रयोजकाः किं तु रूपत्वमेवं वेदशक्तिविषयत्वेऽपि कार्यत्वं सिद्धत्वं वा न प्रयोजकं किं त्वज्ञातत्वादिकं तच्च सिद्धकार्यसाधारणमिति क्वाननुगम इत्यर्थः ॥ २९६ ॥

अ० टी०—ननु चक्षुरादे रूपादिवद्वेदस्यापि किंचिन्नियतप्रमेयं वक्तव्यं न तु सिद्धं वा साध्यं वेत्यनियम उक्त इति चेन्मैवमवान्तरविषयभेदस्य चक्षुष्येकस्मिन्नपि दर्शनात्तस्य च तत्राप्रयोजकत्वादित्याह—नीलैकेति । अस्य चक्षुपः शक्तेरिति संबन्धः । कार्यादिवस्तुष्विति कार्ये वा सिद्धे वोभयस्मिन्वेत्यर्थः । तथा चाज्ञातज्ञापकत्वेनैव वस्तुनि प्रामाण्यं चक्षुषो वा वेदस्य वा न विषयविशेषनियतत्वेनेति भावः ॥ २९६ ॥

सु० टी०—किं च जैमिनेरपि न चोदनात्वं प्रामाण्यप्रयोजकमभिमतमपि त्वनपेक्षत्वं तच्चात्रापि तुल्यमेवेत्याह—

यद्बादरायणमतं परिगृह्य पूर्वं
श्रेयस्करेऽनधिगते खलु चोदनायाः ।
प्रामाण्यमुक्तमिदमस्य समन्वयस्य
वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति ॥ २९७ ॥

यद्बादरायणेति । यत्पूर्वम् 'अर्थेऽनुपलब्धे तत्प्रमाणम्' [जै० १।१।५] इति बादरायणमतमाश्रित्याज्ञाते धर्मे चोदनायाः प्रामाण्यं जैमिनिनोक्तं तदस्य समन्वयस्याप्यज्ञातब्रह्मबोधकस्य समानमित्यर्थः ॥२९७॥

अ० टी०—ननु जैमिनिना पूर्वतन्त्रे 'आम्नायस्य क्रियार्थत्वात्' [ जै० सू० १ । २ । १ ] इत्यादिनाऽऽक्षेपसमाधानाभ्यां सर्वस्य वेदस्य क्रियापरत्वप्रतिपादना-(नात्) क्रियायाश्च चोदनालक्षणत्वात्कार्यत्वं चोदनात्वं च वेदे मेयमानत्वप्रयोजकं न त्वनियमेनाज्ञातज्ञापकत्वादिति चेन्नेत्याह—यद्बादरायणमतमिति । 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' [ जै० सू० १ । १ । ५ ] इत्यस्मिन्सूत्रे पूर्वं प्रथमाम्नायस्येत्यादेरिति

---

१ क. ग. तच्छेषप° ।

शेषः । पूर्वोक्तेऽस्मिन्सूत्रेऽनुपलब्धेऽर्थे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति बादरायणाचार्यमतमनधिगतार्थविषयत्वमनपेक्षालक्षणवेदप्रामाण्यमिति परिगृह्य श्रेयस्करेऽनधिगतेऽर्थे धर्मरूपे यत्खलु प्रामाण्यमुक्तं जैमिनिनाऽऽचार्येणेदं प्रामाण्यप्रयोजकमस्य समन्वयस्येति सुगमम् । तथा चोत्तरमीमांसाकारबादरायणमतस्यानुकर्षणेनानुपलब्धे मानान्तरानधिगतेऽर्थे वेदशब्दप्रामाण्यस्य साधितत्वाज्जैमिनेरपीदमेव प्रामाण्यप्रयोजकमभिमतं लक्ष्यते न चोदनात्वं कार्यार्थत्वं वा तच्च सिद्धे ब्रह्मणि समन्वयप्रामाण्येऽपि समानमिति न पूर्वतन्त्रकृद्वचनविरोधः । तत्र यदाम्नायस्येत्यादिना सिद्धबोधिवाक्यानां विधिशेषत्वेन प्रामाण्यनिरूपणं तत्कर्मकाण्डगतार्थवादवाक्यविषयं वेदितव्यमिति भावः ॥ २९७ ॥

मानान्तरानधिगतं त्ववगम्यमानं
मेयं भवेदिति हि मेयविदो वदन्ति ।
मानान्तरानधिगते विषयेऽवबोधं
कुर्वत्प्रमाणमिति मानविदां प्रसिद्धिः ॥ २९८ ॥

सु० टी०—एतच्चानधिगतं प्रवृत्तावगतिकं मेयमनधिगते बोधजनकमानमिति वदतां भट्टादीनामपि संमतमित्याह—मानान्तरेति ॥ २९८ ॥

अ० टी०—न पुनरिदं पूर्वतन्त्रे सूत्रकारस्यैव संमतमपि तु तद्व्याख्यातॄणां शबरस्वामिप्रभृतीनामपीत्याह—मानान्तरानधिगतं त्विति । निगदव्याख्यातं पद्यम्॥२९८॥

सु० टी०—ततश्च धर्मे चोदनाप्रामाण्यमिच्छद्भिर्ब्रह्मण्यपि समन्वयप्रामाण्यमेषितव्यं तुल्यन्यायत्वादित्याह—

एवं सतीह यदि वेदशिरो न मानं
श्रेयस्करे विधिगिरोऽपि न मानता स्यात् ।
श्रेयस्करे विधिगिरो यदि मानता स्या-
द्वस्तुस्वरूपकथनेऽपि समन्वयस्य ॥ २९९ ॥

एवं सतीति । अज्ञातार्थत्वतत्परत्वयोरुभयत्राविशेषे सतीत्यर्थः ॥२९९॥

अ० टी०—एवमुक्तेन प्रकारेण प्रामाण्यप्रयोजकस्योभयत्रापि तुल्यत्वात्सर्ववैदिकसंमतत्वाच्च चोदनाया धर्मे प्रामाण्यमिच्छद्भिः समन्वयस्य ब्रह्मण्यपि प्रामाण्यमेष्टव्यमन्यथा तत्रापि तदसिद्धिरित्युपपादितमर्थं निगमयति—एवं सतीति । इह ब्रह्मात्मनि श्रेयस्करे स्वर्गादिश्रेयःसाधने यागादौ समन्वयस्य मानता स्यादित्यनेनानुषङ्गः । न विधिलक्षणत्वं वेदप्रामाण्यमपि त्वबाधितानधिगतान्यशेषार्थे फलवद्विज्ञा[ न ]जनकत्वमिति भावः ॥२९९॥

सु० टी०—ननु प्रयोजनवदर्थावबोधकत्वेन शब्दस्य प्रामाण्यं न च वस्तुमात्रकथनपरेषु वेदान्तेषु विधाविव सुखदुःखपरिहारादिफलसंभव इति कथं द्वयोस्तुल्यत्वमिति शङ्कते—

वस्तुस्वरूपकथने ननु नास्ति पुंसः
किंचित्फलं विधिवचःसु पुनः प्रवृत्तिः ।
संभाव्यते फलमतः किल वस्तुनिष्ठं
वाक्यं विधिस्तुतिपरं त्विति जैमिनीयाः ॥ ३०० ॥

वस्तुस्वरूपेति । का तर्हि वेदान्तानां गतिरित्यत्राऽऽह—अतः खल्विति । फलाभावाद्विध्यपेक्षितकर्तृस्तुतिपरत्वं तेषामित्यर्थः ॥ ३०० ॥

अ० टी०—ननु प्रयोजनपर्यवसितत्वं शब्दप्रामाण्ये प्रयोजकं तथैव व्युत्पत्तेर्वेदस्य च विशेषतोऽप्यध्ययनविधिना प्रयोजनवदर्थावबोधफलत्वस्य दर्शितत्वात्प्रयोजनाभावेऽर्थवादत्वप्रसङ्गात्प्रयोजनं च तत्तत्पुरुषप्रकृतिसाध्यमतो वस्तुस्वरूपमात्रज्ञानस्य पर्यवसानाभावात्सिद्धार्थस्वरूपपरत्वेन वाक्यप्रामाण्यासंभव इति मीमांसकः शङ्कते—वस्तुस्वरूपकथन इति । प्रवृत्तिः प्रवृत्तिसाध्यमिति यावत् । किलेत्यस्मिन्मते स्वस्यानभिरुचिं सूचयति । तर्हि वेदे वस्तुनिष्ठवाक्यस्य का गतिस्तामाह—वस्तुनिष्ठं वाक्यं विधिस्तुतिपरमिति ॥ ३०० ॥

सु० टी०—सत्यमप्रवृत्तिपराणामपि तेषां फलवदर्थावबोधकत्वादस्ति प्रामाण्यमिति परिहरति—

स्यादेतदेवमनवद्यपुमर्थसिद्धि-
र्वेदान्तवेद्यविषयावगतौ न चेत्स्यात् ।
स्वाराज्यमत्र कवलीकृतभोगभूमी
संपूर्णमस्य विदुषो भवतीति दृष्टम् ॥ ३०१ ॥

स्यादेतदिति । स्यादेवं यदि वेदान्तार्थावगतौ पुमर्थो न सिध्येद्भवति हि तस्यामुत्पन्नायामस्य विदुषः संपूर्णं स्वाराज्यं (*स्वानन्दानुभवितृत्वं 'स स्वराड्भवति' [ छा० ७ । २५ । २ ] इति श्रुतेः । ननु

* ग्रन्थोऽयं ख. पुस्तकस्थः ।

निर्विषयत्वान्मोक्षसुखस्य न तल्लाभेन कृतार्थ )त्वमित्याशङ्क्य विशिनष्टि—कवलीकृतेति । कवलीकृता ग्रस्ताः स्वस्मिन्नन्तर्भाविता विषयभोगभूमयः स्वर्गादयो येन तत्तथा 'एतस्याऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' ( बृ० ४ । ३ । ३२ ) इति श्रुतेः ॥ ३०१ ॥

अ० टी०—सत्यं प्रयोजकत्वमत्र प्रामाण्ये प्रयोजकतयाऽभ्युपेयं तत्तु प्रवृत्तिनिवृत्तिव्यतिरेकेणापि लभ्यते विशेषतश्चात्र वेदान्तार्थज्ञाने संपूर्णं फलं लभ्यत इति नाध्ययनविधिविरोध इत्यभिप्रेत्य परिहरति—स्यादेतदेवमिति । वेदान्तवेद्यविषयावगतावनवद्यपुमर्थसिद्धिर्न चेत्स्यात्तदैतदेवं स्यात्प्रयोजनाभावादप्रामाण्यप्रसङ्गः स्यान्नैतदस्तीति योजना । कथमिति तदाह—स्वाराज्यमत्रेति । वेदान्ताः विद्वदनुभवो वा सप्तम्यर्थः । अत्रास्य विदुषः स्वाराज्यं संपूर्णं भवतीति दृष्टमित्यन्वयः । स्वाराज्यविशेषणं संपूर्णत्वसाधकं कवलीकृतभोगभूमीति । कवलीकृता स्वात्मन्युपसंहृता ब्रह्मादिस्तम्बपर्यन्ता कर्मफलभोगभूमिर्यस्मिंस्तत्तथोक्तम् । तथा च श्रुतयः—'ब्रह्मविदाप्नोति परम्' [ तै० २ । १ ।१] 'ब्रह्म वेद ब्रह्मैव भवति' [ मुण्ड० ३ । २ । ९ ] 'स स्वराड्भवति' [ छा० ७ । २५ । २ ] 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' [ तै० २ । ४ । १ ] इत्याद्याः ॥ ३०१ ॥

सु० टी०—ननु स्वाराज्यं प्राप्तस्यापि 'स यदि पितृलोककामो भवति' ( छा० ८ । २ । १ ) इत्यादिकामश्रवणादस्ति ततोऽप्यधिकं भोगस्थानमिति नेत्याह—

यस्यापि विप्रुषि कृतार्थतया निषण्णाः
शक्रादयो जलचरा इव सागरस्य ।
प्रत्यक्स्वभावकमपास्तसमस्तदुःखं
तद्वैष्णवं सुखमवाप्तवतः किमन्यत् ॥ ३०२ ॥

यस्यापीति । यस्याऽऽनन्दाब्धेर्विप्रुषि लवमात्रेऽपि स्वर्गसुखे शक्रादयः कृतार्थतया निषण्णा नातः परतरं पदमस्तीत्यध्यवस्य तद्रक्षणे प्रतिक्षणं यतमाना यथा जलचराः क्षुद्राः सागरस्य बिन्दुमात्रेणापि परमप्रीतिभाज इत्यर्थः । तदेतादृशमानन्दाब्धिं वैष्णवं प्राप्तवतो विदुषः किमन्यदभ्यर्थनीयं स्यादिति शेषः । ननु तत्सुखं दूरस्थतया परोक्षं परिच्छिन्नमेवेत्यत्राऽऽह—प्रत्यक्स्वभावकमिति । प्रत्यक्स्वरूपत्वाददूरमपरोक्षं चेत्यर्थः ।

निरवद्यत्वमाह—अपास्तेति । 'स यदि पितृलोककामः' इत्यादीनि तु सगुणविद्यैश्वर्यपराण्यर्थवादरूपाणि वेति भावः ॥ ३०२ ॥

अ० टी०—कवलीकृतभोगभूमीति स्वाराज्यविशेषणेन स्वाराज्यशब्दिते मोक्षानन्दे वैषयिकानन्दानामशेषाणामन्तर्भावः सूचितस्तमेवार्थं विशदयति–यस्यापीति । यस्य परमानन्दस्य विप्रुष्यपि परमानन्दस्यांशमात्रेऽपि स्वानुभवगोचरे शक्रादयश्चतुर्मुखान्ताः सर्व एव प्राणिनः कृतार्थतया निषण्णा यस्य लेशलाभमात्रेण कृतार्थमात्मानं मन्यन्ते स्म यथा सागरस्य विप्रुषि जलचरा इति पूर्वार्धयोजना । यदेवं सर्वप्राणिनां स्वस्वबुद्धिवृत्त्यविच्छिन्नतयोत्पत्तिविनाशवति विषयभूते दुःखानुविद्धे सातिशयेऽपि चेत्सुखलेशे लब्धे कृतार्थता भवति तदाऽखण्डानन्दरूपं मोक्षसुखं लब्धवतः कृतकृत्यतयाऽन्यत्र नैरपेक्ष्यं भवतीति किमु वक्तव्यमित्याह— प्रत्यक्स्वभावमिति । अनेन मोक्षसुखस्य विषयत्वनिरासादनित्यत्वसातिशयत्वादिदोषः परास्तः । अपास्तसमस्तदुःखमिति प्राप्तपरमानन्दस्यानभिभवं निरन्तरं दर्शयति । यदेतादृशं यस्य लेशमात्रलाभोऽपि कृतार्थताहेतुस्तद्वैष्णवं विष्णोः पूर्णात्मनः स्वरूपभूतं सुखमवाप्तवतः किमन्यद्विषयसुखमर्थनीयं न किमपीत्यर्थः । तथा च श्रुती भवतः— 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' [ बृह० ४ । ३ । ३२ ] इति 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' [ तै० २ । १ । १ ] इति । भगवत्स्मृतिरपि—

'यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' ॥ [भ० गी० २ । ४६] इति ।

एतेनेदमपास्तं वेदितव्यमभिलषितलाभेनैव पुंसां कृतार्थत्वाद्विषयोपभोगविकले मोक्षसुखे चाभिलाषाभावान्न तल्लाभेन कृतार्थतेति यद्रागिभिरभिधीयते निरतिशयनित्यानन्दस्य सर्वाभिलाषविषयत्वात्तस्यैव च मोक्षसुखत्वादिति ॥ ३०२ ॥

सु० टी०—नु कथमीदृशस्य मोक्षसुखस्य ज्ञानमात्रात्प्राप्तिर्न हि पित्तदूनरसनस्य मधुरो गुड इति ज्ञानमात्रान्माधुर्यप्राप्तिस्तस्माद्रोगहरभेषजादिपानवद्भोगमोपकं कर्माप्यपेक्षणीयमिति भास्करादयस्तान्निरस्यति—

अज्ञानमात्मविषयं भवहेतुभूतं
प्रच्छादकं च परमात्मसुखस्य तूर्णम् ।

---

१ क. ग. 'पाण्येवे' ।

अध्यन्तवाक्यजनितात्ममतिर्विपाक-
मासाय हन्ति यदि तत्र किमर्थनीयम् ॥ ३०३ ॥

अज्ञानमिति । ज्ञानमात्रापनोद्यमज्ञानमेव हि परमात्मसुखस्य प्रच्छादकं नान्यत्तच्च तूर्णं झटिति । ननु क्रियाफलवद्विलम्बेन वाक्यजाखण्डात्ममतिर्हन्ति चेत्किमिति तन्निमित्तं साधनान्तरं प्रार्थनीयमित्यर्थः । तर्हि मननाद्यपि नापेक्षेत नेत्याह—विपाकमिति । प्रतिबन्धनिरासमित्यर्थः । पित्तादेस्तु ज्ञानानपनोद्यत्वाद्भेषजापेक्षेति विशेषः । श्रुतिश्च 'नास्त्यकृतः कृतेन' [ मुण्ड० १ । २ । १२ ] इति । स्मृतिरपि—

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति ॥ ३०३ ॥

अ० टी०—नन्वेतादृशस्य मोक्षानन्दस्य कथं ज्ञानमात्रात्सिद्धिर्महते फलाय हि महायासानुष्ठानं कुर्वन्ति महाधियोऽपीति चेन्मैवमज्ञानमात्रव्यवहितत्वान्मोक्षानन्दस्य ज्ञानमात्रस्यैव तन्निवृत्तयेऽपेक्षणादित्याह—अज्ञानमिति । विषयशब्द आश्रयत्वस्याप्युपलक्षणार्थः । आत्माश्रयमात्मविषयं चाज्ञानमिति यावत् । भवहेतुभूतमिति विक्षेपकत्वमज्ञानस्योक्तम् । प्रच्छादकमित्यावरणनिर्देशः । एवमुक्तैर्विशेषणैरज्ञानमेव स्वकार्यसहितं सर्वानर्थहेतुरिति दर्शितम् । यद्येवंविधमज्ञानं अध्यन्तवाक्यजनितात्ममतिरसंभावनाद्यपोहेन विपाकमासाद्य तूर्णं हन्ति तदा किमन्यत्परमानन्दमोक्षाभिव्यक्त्यावर्थनीयमिति योजना । यदिप्रयोगोऽत्रासंदेहे संदेहारोपो वेदाः प्रमाणं चेदितिवदिति द्रष्टव्यम् ॥ ३०३ ॥

सु० टी०—नन्वात्मसुखस्य नित्यप्राप्तत्वेन ज्ञानासाध्यत्वादपुरुषार्थत्वमिति चेन्न प्राप्तस्याप्यत्र प्राप्यत्वभ्रमनिवृत्तेः पुरुषार्थत्वदर्शनादित्याह—

करमुष्टिनिविष्टमुत्तमं कनकं प्रस्मरणादलब्धवत् ।
प्रतिभाति तदाप्तवाक्यतः प्रतिपत्त्या लभते यथा जनः॥३०४॥
परमात्मपदं पराकृतद्वितयं प्राप्तमपि स्वभावतः ।
अनवाप्तवदेव लिप्सते लभते चैवमयं प्रमाणतः ॥ ३०५ ॥

करमुष्टीति श्लोकद्वयेन । स्वमुष्टिगतस्य विस्मृतस्य कनकस्य प्राप्तस्याप्यज्ञानव्यवहितत्वेनाप्राप्तत्वभ्रमाल्लिप्सायामाप्तवाक्यजज्ञानाद्व्यवधानापनयद्वारा प्राप्तिं यथा पुरुषार्थतया लोको मन्यत एवं परमात्मसुखमपि पराकृतविभागत्वेन स्वभावादेव नित्यप्राप्तमप्यविद्यया विभक्तव्यवहितत्वाध्यासेनानवाप्तमिव मन्यानो लब्धुमिच्छति ज्ञानमात्रादेव च महा-

वाक्यजन्यादृज्ञानव्यवधिनिरासे सति लभत इवेत्याह—लभत इति। प्रमाणतो न तु कर्मादितः ॥ ३०४ ॥ ३०५ ॥

अ० टी०—नन्वप्राप्तप्राप्तिरनपहृतपरिहारो वा पुरुषार्थो न तु भ्रान्तिनिवृत्तिमात्रमिति चेन्नैवं भ्रान्तिनिवृत्तिमात्रेणापि लोके पूर्वसिद्धपुरुषार्थलाभदर्शनादिति सदृष्टान्तमाह—करमुष्टीतिद्वाभ्याम्। प्रस्मरणाद्विस्मरणादलब्धवत्प्रतिभाति न त्वलब्धं तदित्यर्थः। आप्तवाक्यतो जाता या प्रतिपत्तिस्तयेत्यर्थः। चरणाभरणे समारोपितफणिनिवृत्तिरप्याप्तवाक्यजज्ञानमात्रकृताऽत्रोदाहर्तव्या। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—परमात्मपदमिति। सदैव स्वभावतः पराकृतद्वितयं नित्यप्राप्तमपीति योजना। लिप्सते भ्रान्त्येति शेषः। प्रमाणतो वेदान्तवाक्यतो लभते। एवमिति यथादृष्टान्तमित्यर्थः। अयमित्यधिकार्युक्तिः ॥ ३०४ ॥ ॥ ३०५ ॥

सु० टी०—तदेवं समन्वयसूत्रप्रथमवर्णकोक्तन्यायात्सिद्धे ब्रह्मणि शास्त्रप्रामाण्येऽपि संभवति ब्रह्मानन्दावाप्तिः फलमित्युक्तं यत्तु सर्ववाक्यानां कार्यार्थत्वाद्ब्रह्मापि कार्यशेष इति विधिफलमेव मोक्ष इत्युक्तं तन्निराकरोति—

> न स्वाध्यायवदाप्यता न च पुनस्त्रेताग्निवज्जन्यता
> न व्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया।
> पाठाधानजलोक्षणाभिषवणैः कूटस्थरूपं हि त-
> द्ब्रह्मापास्तविकारजन्ममरणं निःश्रेयसं साधनैः ॥ ३०६ ॥

न स्वाध्यायेति। यस्माद्ब्रह्मैव निःश्रेयसं नान्यदतो न तद्विधेयक्रियाफलमित्यर्थः। अस्तु ब्रह्मात्मिका मुक्तिरपि विधिफलमिति चेन्न विधिफलस्य कर्मत्वेन प्राप्यविकार्यादिरूपत्वनियमाद्ब्रह्मणश्च नित्यस्य तथात्वासंभवादित्याह—नेत्यादि। न हि साधनैः पाठादिभिस्तस्याऽऽप्यत्वादिसंभवस्तथा हि न तस्याध्ययनविधिविहितपाठक्रियया स्वशाखावदाप्यत्वम्। नाप्यग्नीनादधीतेतिविधिविहिताधानेनाऽऽहवनीयादिवन्निवर्त्यत्वम्। नापि व्रीहीणामिव व्रीहीन्प्रोक्षतीतिविहितप्रोक्षणसंस्कार्यत्वम्। नापि सोमस्येव सोममभिषुणोतीत्यादिविहिताभिषवणेनान्यथाभावलक्षणं विकार्यत्वम्। कुत इत्यत आह—अपास्तेति। अत्रापि हेतुमाह—कूटस्थेति ॥ ३०६ ॥

अ० टी०—एवं प्रवृत्तिनिवृत्तिरहितकेवलात्मतत्त्वप्रतिपत्तौ परमप्रयोजनसिद्धिरुपपादिता वेदान्तानां तत्र प्रामाण्यसिद्ध्य इदानीमात्मतत्त्वात्मकस्य मोक्षस्य न क्रियासाध्यत्वं संभाव्यते तस्य क्रियानुप्रवेशयोग्यत्वाभावादिति दर्शयञ्ज्ञानमात्रायत्तो मोक्ष इति प्रागुक्तं दृढी करोति—**न स्वाध्यायवदिति** । उत्पत्त्याप्तिविकारसंस्कारा हि क्रियासाध्या नातः परं तत्साध्यमस्ति* । ब्रह्मरूपं तु निःश्रेयसं नान्यतमेनापि रूपेण साध्यं तस्य कूटस्थनित्यत्वान्नित्यनिवृत्तानर्थत्वाच्चेति विवक्षितोऽर्थः । अभिपवणैः साधनैरित्यन्वयः । पाठादिपदानि स्वाध्यायादिपदैर्यथाक्रमं योज्यानि । अस्येति यथोक्तनिःश्रेयसस्येत्यर्थः । अस्य पाठेन साधनेन स्वाध्याय+ वदाप्यता नेत्येवं प्रत्येकं विभज्य योज्यम् । जलेक्षणं जलेन प्रोक्षणमभिपवणं कण्डनादि ॥ ३०६ ॥

**सु० टी०—ननु ' ब्रह्मैव सन्ब्रह्माप्येति ' [ बृ० ४ । ४ । ६ ] इति ब्रह्मभावाप्तिश्रुतेरस्तु विधिफलमेव मुक्तिरिति नेत्याह—**

**ब्रह्मैव सन्निति वचः प्रथमश्रुतत्वा-**
**दप्येति शब्दमुपसंहरणस्थमुच्चैः ।**
**प्रच्यावयत्स्वविषयादुचिताद्बलीयो**
**ब्रह्मात्मनोरनतिरेकमसाध्यमाह ॥ ३०७ ॥**

ब्रह्मैवेति । **ब्रह्मैव सन्नित्येतदुपक्रमस्थं वचनं ' मुख्यं वा पूर्वचोदनात् ' [ जै० १२ । २ । २३ ] इतिन्यायेनासंजातविरोधित्वाद्बलीय इत्युपसंहारस्थं दुर्बलमप्येति शब्दं ब्रह्मभावाप्तिलक्षणात्स्वविषयात्प्रच्यावयत्सिद्धमेव ब्रह्मात्मनोरभेदं तात्पर्येणानुवदति ननु(तु) साध्यमिति क्व विधिफलतेत्यर्थः ॥ ३०७ ॥**

अ० टी०—ननु ' ब्रह्मैव सन्ब्रह्माप्येति ' [ बृ० ४ । ४ । ६ ] इति ब्रह्मभावस्याऽऽप्यत्वश्रवणात्तस्य क्रियासाध्यत्वमस्तीति प्रतीयत इति चेत्तत्राऽऽह—**ब्रह्मैव सन्निति वच इति** । प्रथमश्रुतानुसारेण चरमश्रुतं नेयमिति न्यायाद्ब्रह्मैव सन्नितिवचोऽस्मिन्वाक्ये प्रथमश्रुतत्वादुपसंहरणस्थं चरमश्रुतमप्येतिशब्दमुचितान्मुख्यात्स्वविषयादुच्चैः स्फुटं प्रच्याव्य ब्रह्मात्मनोरसाध्यमनतिरेकमाह यतो बलीयः प्रथमश्रुतत्वेनासंजातविरोधितयाऽतिप्रबलमिति योजना । ब्रह्मैव सन्निति ब्रह्मभावस्य नित्यसद्भावावधारणविरोधादप्येतिशब्दस्तत्रोपचरितार्थः करकलितकनकपिण्डन्यायेनाभिव्यक्त्यपेक्ष इति भावः ॥ ३०७ ॥

---

* एतच्चतुष्टयव्यतिरिक्तं क्रियासाध्यं नास्तीति भावः । + तथैतस्य ज्ञानेनाप्यज्ञाततेति भावः ।

सु० टी—नन्वाख्यातप्रधानत्वाद्वाक्यस्याप्येतिपदं चरमत्वेऽपि मुख्यार्थयुक्तं ब्रह्मैव सन्निति तु नामत्वेनाप्राधान्यात् 'गुणे त्वन्यार्थकल्पना' इति न्यायादुपचरितार्थं देवो भूत्वा देवानप्येतीतिवदिति चेन्नाप्येतीत्यस्याऽऽख्यातत्वाभावादित्याह—

आग्नेय इत्याद्यपि तद्धितान्त-
मष्टाकपालादिसमन्वितं सत् ।
आख्यातशब्दस्य धुरं बिभर्ति
भव्यार्थसंवित्तिनिबन्धनत्वात् ॥ ३०८ ॥

आग्नेय इति । भूतार्थबोधकं नाम भव्यार्थबोधकमाख्यातं न तु सुबन्तं तिङन्तं वा यथाऽऽग्नेयोऽष्टाकपालो भवतीत्याग्नेयपदं सुबन्तमपि द्रव्यवाचिपदसमभिव्याहाराद्द्रव्यदेवतासंबन्धात्मकं यागं बोधयद्यजेतेत्याख्यातस्य धुरं कार्यं बिभर्तीत्यर्थः ॥ ३०८ ॥

अ० टी०—ननु नायं न्यायोऽत्र युक्तो वाक्येषु सर्वत्राऽऽख्यातपदस्यैव प्रधानत्वान्नामपदस्याप्रधानत्वात्प्रधानानुरोधेनाप्रधानं नेयमिति न्यायस्यैवात्र प्रयुक्तत्वादप्येति शब्द एव मुख्यार्थ इतरो गौणार्थ इति चेन्मैवं सुबन्तत्वतिङन्तत्वयोर्नामाख्यातविभागनियामकत्वाभावादर्थवशादेव तन्नियमदर्शनादप्येतीत्ययमाख्याताभास इत्यभिप्रेत्य नाम्नोऽप्याख्यातत्वमर्थवशादित्येतदुदाहरति—आग्नेय इत्यादीति । भूतार्थबोधकं पदं नाम भव्यार्थबोधकं पदमाख्यातमिति तयोर्लक्षणे न सुप्तिङन्तत्वं यत आग्नेय इत्यादि तद्धितान्तं सुबन्तमपि पदमष्टाकपालादिसमन्वितमाग्नेयोऽष्टाकपालः पुरोडाश इत्येवमाकारं सदाख्यातशब्दस्य यजत्यादेर्धुरमर्थकृत्यं बिभर्ति पूरयति । कुत इत्यपेक्षायां द्रव्यदेवतासंबन्धस्य यागाविनाभूतत्वात्तदवगमे तत्प्रतीतेस्तस्य च भव्यत्वादाग्नेयोऽष्टाकपाल इत्यनयोर्भव्यार्थधीहेतुत्वादर्थवशादाख्यातत्वमस्य सिद्धमित्याह—भव्यार्थसंवित्तिनिबन्धनत्वादिति । आद्यमादिपदमैन्द्राग्नमित्यादिसंग्रहार्थं द्वितीयमेकादशकपालादिसंग्रहाय । अष्टाकपालादिसमन्वितमित्यस्यायमर्थः—'साऽस्यदेवता' इति देवतैदमर्थ्ये तद्धितस्यास्य विधानादग्निर्देवताऽस्येति पदविग्रहेऽस्येति सर्वनाम्नः संनिहितार्थपरत्वात्तेन विना तस्याभिधानपर्यवसानासंभवादष्टाकपालपदेन तद्विषय एव समर्प्यते नार्थान्तरमिदमर्थमस्य विशेषणविशेषभूतं वाऽत आग्नेयपदस्याभिधानपर्यवसानायाष्टाकपालसमन्वितत्ववचनमिति ॥ ३०८ ॥

सु० टी०—तिङन्तत्वमप्यतन्त्रमित्याह—

आख्यातमेव सदिदं भवतीति नाम
भव्येतरार्थमतिजन्मनिबन्धनत्वात् ।

---

१ ग. °मपि ज° ।

अप्येतिशब्दमपि तद्वदिमं प्रतीमो
भव्येतरार्थगतबुद्धिनिबन्धनत्वात् ॥ ३०९ ॥

आख्यातमेवेति । यथा चात्रैव वाक्ये भवतिपदं तिङन्तत्वादाख्यातमपि सदर्थतो नामैवाननुष्ठेयभवनात्मकसिद्धार्थबुद्धिजनकत्वात् । एवमप्येतिशब्दोऽपि नामैव ब्रह्मैव सन्निति प्रथमश्रुतस्वतःसिद्धब्रह्मभावधीविरोधात् । अन्यथा देवो भूत्वेतिवद्ब्रह्म भूत्वेति वदेदित्यर्थः ॥ ३०९ ॥

अ० टी०—नन्वाग्नेयोऽष्टाकपालो भवतीति तत्राऽऽख्यातपदस्य सत्त्वात्तदधीना तत्र भव्यार्थत्वप्रतीतिर्न तद्धितान्तपदावसेयद्रव्यदेवतासंबन्धमात्रावगमादिति चेन्मैवं भवतिशब्दस्यानुष्ठेयार्थाबोधकत्वेन भव्यार्थत्वाभावादित्याह—आख्यातमेव सदिदमिति । भवतीतीदंशब्दत आख्यातमेव सदर्थतो नामैवेति योजना । कुत इति तत्राऽऽह—भव्येतरेति । भवतिशब्दे साध्यार्थाप्रतीतेरित्यर्थः । उक्तं न्यायं प्रकृते योजयति—अप्येतिशब्दमपीति । एवं भवतिशब्दवदिममप्येतिशब्दमपि प्रतीमोऽर्थतोऽस्यापि नामत्वादित्यर्थः । अत्रापि हेतुमाह—भव्येतरेति । प्रथमश्रुतविरोधादेव भव्यार्थबुद्धिहेतुत्वाभावादित्यर्थः ॥ ३०९ ॥

सु० टी०—ततश्च नाप्येतीत्यस्य प्राधान्यमित्याह—

ब्रह्मैव सन्निति गिरं प्रति शेषितार्थै
नाप्येतिगीरियमलं कथितोपपत्तेः ।
आख्यातमेव खलु नाम पदस्य शेषि
नाऽऽख्यातमेतदनृतत्वनिवेदकत्वात् ॥ ३१० ॥

ब्रह्मैवेति । कथितेत्युपसंहारदौर्बल्यादित्यर्थः ॥ ३१० ॥

अ० टी०—अतश्चाप्येतिशब्दस्यार्थत आख्यातत्वाभावादेव नास्मिन्वाक्ये प्राधान्यमपीत्याह—ब्रह्मैव सन्नितिगिरमिति । शेषितार्थे प्राधान्याय नालमिति संबन्धः । कथितोपपत्तिमेव स्फोरयन्नाख्यातस्य स्वार्थे स्थितस्य प्राधान्यं मया न भज्यतेऽस्य त्वाख्यातत्वबाधनान्न स्वार्थतेत्याह—आख्यातमेवेति ॥ ३१० ॥

सु० टी०—तस्माद्गुणभूताप्येतिपदमुपचरितार्थमित्याह—

ब्रह्मैव सन्निति ततः प्रथमश्रुतं स-
दप्येतिशब्दमपसारयति स्ववाच्यात् ।

---

१ क. °नृतं च नि°

अस्याङ्गभावविरहादमुना सहातो
ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः ॥ ३११ ॥

ब्रह्मैवेति । लक्षणाबीजमाह—अस्येति । सन्नित्यन्तस्य । अमुनाऽप्येतिशब्देन । तेन शेषिविरोधाद्ब्रह्मात्मनोरभेदमप्येतिपदलक्ष्यमिच्छन्तीत्यर्थः ॥ ३११ ॥

अ० टी०—तस्माद्ब्रह्मैव सन्निति शब्द एवात्र प्रधानं नाप्येतिशब्द इत्युपपादितमुपसंहरति—ब्रह्मैव सन्निति तत इति । अतो हेतोरस्य ब्रह्मैव सन्नित्यस्याङ्गभावविरहादमुनाऽप्येतिपदेन सह ब्रह्मात्मनोरनतिरेकमनेन वाक्येन प्रतिपाद्यमुशन्ति धीरा इति योजना । अमुना सहास्याङ्गभावविरहादिति वा संबन्धोऽस्मिन्पक्षे प्रच्यावयतीत्यस्य हेतुरस्येत्यादिसहान्त इति द्रष्टव्यम् । अत इत्यादिरत्र विद्वत्संवादप्रदर्शनार्थः ॥ ३११ ॥

सु० टी०—एतच्चाऽऽख्यातप्राधान्यमभ्युपेत्योक्तं वस्तुतो ज्ञानकाण्डे नाम प्रधानमेव सर्वमिति न मोक्षस्य विधिशेषत्वमित्याह—

भव्याय भूतमिति किं च विधिप्रधाने
काण्डे नयोऽयमिह तद्विपरीतमाहुः ।
भूताय भव्यमिति भूतपरं हि सर्वं
वेदावसानमिति सूत्रकृदाचचक्षे ॥ ३१२ ॥

भव्यायेति । भूतं भव्यायोपदिश्यत इत्ययं न्यायः कर्मकाण्डविषयस्तत्र विधिप्राधान्यादिह तु वस्तुप्राधान्याद्विपरीतमाहुरित्यर्थः । तत्र हेतुमाह—भूतेति । यज्ञादिवाक्यस्यापि परम्परया विज्ञेयब्रह्मशेषत्वमिति 'सर्वापेक्षा च यज्ञादिश्रुतेः' [ब्र० सू० ३।४।२६] इति सूत्रकृदाहेत्यर्थः ॥३१२॥

अ० टी०—स्वार्थस्याऽऽख्यातपदस्य प्राधान्यं सर्ववाक्यसाधारणमित्येतदङ्गीकृत्य प्रकृतेऽप्येतिशब्दस्य स्वार्थप्रच्युतेरेवाप्राधान्यमित्युक्तमिदानीं वस्तुतो नायमपि नियम इत्याह—भव्याय भूतमिति । भूतं भव्यायोपदिश्यत इति नयो न्यायो विधिप्रधाने काण्डे भव्यार्थपदं प्रधानं भूतार्थपदमखिलमपि तच्छेषार्थसमर्पकत्वेन तदङ्गमिति कर्मकाण्डे स्थितो न्याय इत्यर्थः । किं चेतिपदं युक्त्यन्तरोपक्रमार्थं तत्प्रथमं द्रष्टव्यम् । इह तु वेदान्तेषु तद्विपरीतमाहुर्न्यायविद इति शेषः । वैपरीत्यमेवाऽऽह—भूताय भव्यमितीति ।

१ क. ग. यतश्चास्या° ।

भव्यवादस्य भूतार्थत्वे प्रमाणमाह—**भूतपरं हि सर्वमित्यादि** । सर्वं वेदावसानं सर्वे वेदान्ता इति यावत् । सूत्रकृद्बादरायण आचचक्षे 'तत्तु समन्वयात्' [ब्र० सू० १ । १ । ४ ] इत्यादिभिः सूत्रैरिति शेषः । यदि सर्वे वेदावसानमिति पाठस्तदाऽयमर्थः—हि यस्मात्सर्ववेदानां कर्मोपासनापराणामप्यवसानं परिसमाप्तिलक्षणं भूतपरं सिद्धब्रह्मात्मपरमिति सूत्रकृदाचचक्ष इति योजना । तथा चोक्तं 'सर्वापेक्षा च यज्ञादिश्रुतेः' [ब्र० सू० ३ । ४ । २६ ] इत्यग्निहोत्रादि तु तत्कार्यायैवेति च ॥ ३१२ ॥

**सु० टी०—न केवल त्रयो वेदा इत्यादिवद्ब्रह्मैवेत्यु(*पक्रमस्थत्वादेव बलीय इत्याह—**

> **ब्रह्मैव सन्निति ततोऽपि बलिष्ठमेत-**
> **दप्येतिशब्दमवसानगतं व्यपेक्ष्य ।**
> **तस्मादमुष्य परिपीडकमेतदेव**
> **ब्रह्मैव सन्निति पदं गुणकल्पनायै ॥ ३१३ ॥**

ब्रह्मैवेति । **ततोऽपि वेदान्तानां भूतपरत्वन्यायादपीत्यर्थः । किम)पेक्ष्य बलिष्ठमित्यत्राऽऽह**—अप्येतीति । **किं तत इत्याह**—तस्मादिति । **अमुष्याप्येतीत्यस्य परिपीडकं बाधकं सद्गौणत्वं कल्पयतीत्यर्थः ॥ ३१३ ॥**

अ० टी०—अस्मिन्मते ब्रह्मैव सन्नित्यस्य सुतरां प्राबल्यमित्याह—**ब्रह्मैव सन्निति ततोऽपीति** । तत इति भव्यस्यापि भूतार्थत्वादित्यर्थः । अपीति प्राथम्यादपीत्यर्थः । तत इह भूतभव्यन्यायवैपरीत्यादवसानगतमप्येतिशब्दमपेक्ष्यापि ब्रह्मैव सन्नित्येतत्प्रथमं श्रुतं पदं बलिष्ठमेवेति योजना । फलितमाह—**तस्मादिति** । अमुष्याप्येतिशब्दस्य गुणकल्पनायै गौणत्वकल्पनार्थमेतदेव ब्रह्मैव सन्नितिपदं परिपीडकं मुख्यार्थात्प्रच्यावकमिति योजना ॥ ३१३ ॥

**सु० टी०—अतश्चाऽऽप्यत्वादिचतुर्विधसाध्यत्वासंभवात्क्रियाभिर्यज्ञादिभिर्ब्रह्मात्मैक्यज्ञानेन ज्ञानकर्मसमुच्चयद्वारा वा न साध्यं निःश्रेयसमपि त्वविद्यामात्रव्यवहितत्वात्तन्निरासेन विद्यैकव्यङ्ग्यमेवेत्याह—**

> **निःश्रेयसं न खलु साध्यमतः क्रियाभि-**
> **र्ज्ञानेन वा द्वयसमुच्चयवर्त्मना वा ।**

* अयं ग्रन्थः ल. पुस्तकस्थः ।

उत्पत्तिराप्तिविकृती च न संस्कृतिश्च
यस्मान्न संभवति वर्णितवर्त्मनेह ॥ ३१४ ॥

निःश्रेयसमिति । तथा हि ज्ञानकर्मसाध्या मुक्तिरुक्तदोषात् । न चाविकृतब्रह्मप्राप्तिः क्रियाधीना निर्विशेषात्मविदः प्राणात्मकलिङ्गोत्क्रमणनिषेधाद्विकारस्य च लिङ्गस्याविकृतदेशगमनासंभवात् । न च जीवस्योपहितचिद्रूपस्य स्वतो गमनं संभवतीत्यतो नित्यैव मुक्तिः । तदुक्तं 'तत्कैवल्यमतः साध्यमुपचारात्प्रचक्षते' इति ॥ ३१४ ॥

अ० टी०—यत एवमप्येतिशब्दो नाप्राप्तिप्राप्तिपरो यतश्चतुर्विधक्रियाफलविलक्षणो मोक्षोऽतो न क्रियासाध्यः किंत्वविद्यामात्रव्यवहिततया विद्यैकलभ्य एवेत्युपसंहरति—निःश्रेयसं न खल्विति । अत आभ्यः प्रागुक्तयुक्तिभ्यो निःश्रेयसं न खलु नैव क्रियाभिः केवलाभिः साध्यं ज्ञानेन वा न साध्यं ज्ञानस्याकारकत्वात् । द्वयसमुच्चयवर्त्मना वा ज्ञानकर्मसमुच्चयोपायेन वा न साध्यं कुतो यस्मादिह निःश्रेयसेऽस्मदभिमते वर्णितवर्त्मना प्रागुक्तयुक्तिमार्गेणोत्पत्तिराप्तिविकृती न च नैव संभवन्तीति शेषः । संस्कृतिश्च न संभवतीति योजना । तथा च श्रुतिः 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' [ बृह० ४ । ४ । २३ ] इति ॥ ३१४ ॥

सु० टी०—तस्मात्प्रवृत्त्यादिरहितवस्तुबोधकत्वं वेदान्तानां न दोषस्तत्फलस्यासाध्यत्वादित्याह—

तस्मात्प्रवृत्तिविनिवृत्तिविवर्जितत्वं
ब्रह्मात्मवस्तुविषयावगतेर्न दोषः ।
सर्वप्रवर्तकनिवर्तकमूलदाहा-
त्स्वाराज्यहेतुरिति भूषणमेव तन्नः ॥ ३१५ ॥

तस्मादिति । प्रत्युत गुण एवेत्याह—सर्वेति । सर्वप्रवर्तकनिवर्तकरागद्वेषादेर्मूलस्याज्ञानस्य निःशेषदाहे एवं सति भवति न प्रवृत्त्यादिपरत्वे कर्मभिस्तदसंभवात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' [ भ०गी० २ । ५९ ] इति स्मृतेरतस्तद्वर्जितत्वं स्वाराज्यहेतुत्वादलंकार एवेत्यर्थः ॥ ३१५ ॥

अ० टी०—एवं सति प्रवृत्तिनिवृत्त्यगोचरवस्तुपरत्वे वाक्यस्य न प्रामाण्यमिति यदुक्तं तन्नास्माकं दोषाय यतस्तत्साध्याभावात्प्रत्युत गुणायैव प्रवर्तकरागादेतद्बीजस्याज्ञानस्य

---

१ क. ग. स्मृत्यन्तर° ।

चैवं सति दाहसिद्धेः प्रवृत्त्यादिपरत्वे तदसंभवात्तदसंभवे चानर्थनिवृत्तिपुरुषार्थासिद्धिरित्य-भिप्रेत्य पूर्वप्रकृतमुपसंहरति—तस्मात्प्रवृत्तीति । स्पष्टार्थः ॥ ३१५ ॥

सु० टी०—ननु कस्य निःशेषदाहः स्वप्रकाशचिदात्मन्यज्ञानासंभव-स्योक्तत्वादिति चेत्तत्राऽऽह—

अज्ञाततताऽपि घटतेऽत्र दृशोऽनुभूते-
र्जानामि नाहमिति दृश्यपि दृश्यते हि ।
अज्ञातताऽनुभवनं न च वास्तवं त-
दज्ञाततोद्वहति कल्पिततां हि तस्याः ॥ ३१६ ॥

अज्ञाततेति । (*दृगात्मनोऽप्यज्ञानविषयता घटते कुतोऽनुभूतेरनुभूयमा-नत्वादित्यर्थः । असिद्धिं परिहरति—जानामीति । दृगात्मन्यप्यबोधोऽनु-भवादेवाभ्युपेयतेऽरजत इव शुक्तौ रजतमित्यर्थः । बोधस्वभावकमबुद्धि-मित्याद्युक्तविरोध इति चेत्तत्राऽऽह—न चेति । बोधसमसत्ताकमेव ह्यज्ञा-तत्वं बोधात्मनि विरुद्धमित्यर्थः । नन्वज्ञातत्वस्य कल्पित्वमज्ञानान्तरा-च्चेदनवस्था स्वतश्चेदात्माश्रय इत्यत्राऽऽह—अज्ञाततेति । तस्याः स्वपर-निर्वाहकत्वस्योक्तत्वादित्यर्थः ॥ ३१६ ॥ )

अ० टी०—यत्पुनरुक्तमज्ञातार्थविषयत्वं प्रमाणानां प्रामाण्यमात्मनश्च स्वयंप्रकाशत्वान्न तस्मिन्नज्ञानं संभवतीत्यतो न वेदान्तानां ब्रह्मणि प्रामाण्यमिति तत्राऽऽह—अज्ञातताऽ-पीति । अत्र दृगात्मन्यप्यज्ञातता घटत इति संबन्धः । पराग्र्थे यद्यपि नाभिमतम-ज्ञातत्वं वेदान्तिनां तथाऽप्यङ्गीकृत्यात्रापीत्यपिशब्दप्रयोग इति द्रष्टव्यम् । कुत एतज्ज्ञान-स्वरूप आत्मन्यज्ञानानुपपत्तेरित्याशङ्क्यानुभवविरोधान्मैवमित्याह—दृश इति । नाहं जानामीति दृश आत्मनोऽज्ञतयाऽनुभूतेर्हेतोर्हि यस्माद्दृश्यप्यज्ञातताऽनुभवनं दृश्यत इति योजना। यद्येवमनुभवबलेनानुपपत्तिर्निरस्यते तर्ह्यनुभवबलादेवाऽऽत्मन्यज्ञातता वास्तवी स्यादिति नेत्याह—न च वास्तवं तदिति । तदनुभवमात्रसिद्धमज्ञातत्वं न वास्तवं प्रामाणिकं हि यस्मादस्या अज्ञाततायाः अज्ञातता कल्पिततामुद्वहति दृक्स्वरूपे प्रामाणिके दृगात्मन्यनुपप-द्यमानत्वेऽप्यनुभूयमानत्वादज्ञातता स्वात्मनः कल्पिततां गमयतीत्यर्थः ॥ ३१६ ॥

सु० टी०—किं चाज्ञानस्य ज्ञानाभावत्वे चिदात्मनि तद्विरोधः स्यात्तत्तु ज्ञानानिरूप्यत्वाद्भावरूपमेवेत्याह—

अज्ञानमित्यजडबोधतिरस्क्रियात्मा
जाड्यं च मौढ्यमिति च प्रकृतिः प्रसिद्धा ।

---

* अयं ग्रन्थः ख. पुस्तकस्थः

सा चातिदुःस्थितवपुर्दृशमाद्वितीया-
मालिङ्गति स्म घृतपिण्ड इवाग्निमिद्धम् ॥ ३१७ ॥

अज्ञानमिति । अजडस्य बोधात्मनः स्वप्रकाशस्य तिरस्क्रिया आवरणं तदात्मिका जगद्विक्षेपोपादानं प्रकृतिः 'अज्ञानेनाऽऽवृतं ज्ञानम्' [ भ० गी०५।१५ ] 'मायां तु प्रकृतिं' [ श्वे० ४ । १० ] इत्यादिषु प्रसिद्धा । ननु तस्या न जानामीतिरूपाद्रूपान्तराप्रसिद्धेरभावत्वमेव वक्तव्यमिति चेत्तत्राऽऽह—जाड्यं चेति । जडप्रपञ्चस्य जडोपादानं सिध्यल्लाघवादेकं सिध्यति तदेव स्वकार्येऽनुस्यूतं जाड्यमित्यनुभूयत उपादानातिरिक्ते जाड्ये मानाभावात् । उपादानं चाज्ञानमेवेति । तदेव जाड्यं तच्च स्वस्मिन्नपि जडव्यवहारहेतुः परेषां प्रमेयत्ववत् । एवमज्ञो मूढोऽहमित्यनुभवान्मौढ्यमप्यज्ञानमेव तच्च निष्प्रतियोगिकत्वाद्भावरूपमिति भावः । सा तर्हि सत्यैवास्तु सांख्यवदित्ति चेन्नेत्याह—सा चेति । भावाभावत्वविरोधाभावेऽपि नाश्यनाशकत्वादिविरोधात्सदसत्त्वादिविकल्पासहत्वाच्चातिदुःस्थितत्वेन कल्पितैवेत्यर्थः । कथं पुनर्निवर्त्यायास्तस्या निवर्तकेन चैतन्येन प्रतिभास इत्यत्राऽऽह—दृशमिति । समिद्धमपि नाशकमग्निं प्रतिबद्धदाहशक्तिं यथा नाश्योऽपि घृतपिण्ड आलिङ्गति तथाऽनाद्यविद्यावरणप्रतिबद्धशक्तिं बोधमविद्याऽप्यालिङ्गन्ती तेनैव प्रकाश्यत इत्यर्थः ॥ ३१७ ॥

अ० टी०—ननु किमिदमज्ञानं नाम न तावज्ज्ञानाभावः स्वरूपज्ञानस्य नित्यत्वेन तदभावासंभवान्नापि वृत्तिज्ञानाभावस्तस्य वृत्त्यविषये चिदात्मन्यसंभवादथ ज्ञानादन्यदज्ञानमिति मतं तदा घटस्याप्यज्ञानत्वप्रसङ्गोऽथ ज्ञानविरोधि तदिति मतं तदपि न तथात्वे मानाभावादिति चेन्मैवं ज्ञानविरोध्यज्ञानमिति पक्षस्योपपत्तेरित्याह—अज्ञानमितीति । अजडबोधतिरस्क्रियात्मा प्रकृतिरज्ञानमिति प्रसिद्धेत्यन्वयः । स्वयंप्रकाशत्वं बोधस्याजडत्वं स्वतःसिद्धप्रकाशाच्छादनस्वभावेत्यर्थः । सा प्रकृतिरेव ज्ञानपर्युदासेनाज्ञानमिति च ज्ञानविरोधित्वेन जाड्यमिति चास्वच्छतया मौढ्यमिति च प्रसिद्धा श्रुतिस्मृतिपुराणेष्विति योजना । तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । ' [श्वेता० ४ । १० ] 'नीहारेण प्रावृताः' 'तम आसीत्तमसा गूढम् । ' इत्याद्या । 'मम माया दुरत्यया ' [भ०गी० ७ । १४ ] 'तरत्यविद्यां वितताम् ' इत्यादिस्मृतयश्चात्र सहस्रशः । नन्वेवमात्मनि चेत्प्रमाणसिद्धा प्रकृतिस्तर्ह्यस्या विरोधाभावादेव सत्येति चेन्नेत्याह—

---

१ क. °द्धते स° ।

सा चेति । सा च प्रकृतिरतिदुःस्थितवपुः सत्यद्वितीयां दशामाश्लिष्टे स्मेति भूतत्वनिर्देशो विद्वदनुभवाभिप्रायः । विरोधिनोरपि संबन्धे दृष्टान्तमाह—घृतपिण्ड इति । एतदुक्तं भवति यद्यपि चैतन्याज्ञानयोर्भावाभावात्मत्वे विरोधाभावस्तथाऽपि वध्यघातकभावविरोधः संभवति । एवं च घृतपिण्डानलयोरिव भावयोरेवानयोः संबन्ध इति प्रकृतेरभाववैलक्षण्यसिद्धेर्जगदुपादानताऽपि शास्त्रप्रसिद्धा सिद्धा भवति । न चाज्ञानस्याऽऽत्मन्यनादिकालमारभ्यावस्थानाद्वध्यघातकयोस्तदभावविरोध इति वाच्यं निवर्तकोपनिपातपर्यन्तं संबन्धस्याऽऽवश्यकत्वाद्विरोधिनोरपि यथा मन्दप्रकाशतमसोस्तथा । यथा च स्नेहवर्त्यादिसहकारिविशेषसंवलनेन वा मेघाद्यावरणापगमेन वा प्रकाशस्योपबृंहितत्वे प्राबल्ये सति निःशेषतमोनिवर्तकता तथा वाक्योत्थबुद्धिवृत्तिसंवलनरूपसहकार्युपेततया प्राबल्ये सति निःशेषाज्ञाननिवर्तकत्वोपपत्तिर्दृश्यते हि दाह्यदाहकयोर्विरुद्धस्वभावयोरप्यरणिपावकयोरा विशेषाभिव्यक्तेः संबन्ध इति ॥ ३१७ ॥

सु० टी०—नन्वहमज्ञ इति जडाहंकारनिष्ठाज्ञानाभावानुभवोऽयमित्याशङ्क्य जडसंबन्धित्वेनाज्ञानासिद्धेर्वक्ष्यमाणत्वाद्विधिमुखेन प्रसिद्धेश्च चिन्निष्ठभावरूपाज्ञानानुभव एवायमित्याह—

चिद्वस्तुनश्चिति भवेत्तिमिरं तमिस्रं
तामिस्रमन्धतमसं जडिमा तमिस्रा ।
माया जगत्प्रकृतिरच्युतशक्तिरान्ध्यं
निद्रा सुषुप्तिरनृतं प्रलयो गुणैक्यम् ॥ ३१८॥

चिद्वस्तुन इति । चिद्रूपस्य विषयस्य चित्येवाश्रये तिमिरादिपदवाच्यमज्ञानमित्यर्थः । तिमिरतमिस्रतामिस्रान्धतमसान्ध्यशब्दा आवरणावस्थाभेदनिमित्ताः श्रुतिस्मृतिप्रसिद्धाः । तमिस्रा रात्रिरविद्याया रात्रित्वेन प्रसिद्धेः । निद्रासुषुप्तिप्रलयगुणैक्यशब्दाः कार्यस्य कारणरूपेणावस्थितिनिमित्ताः ॥ ३१८ ॥

अ० टी०—नन्वेवं वस्तुगत्या चिदात्मन्यसंभवदप्यज्ञानं किमिति तस्मिन्नभ्युपेयते किमिति च तत्र युक्तिसंचारे यत्यतेऽतश्चिदात्मनोऽन्यत्रैवास्तु तन्माऽस्तु वा कुत्रापीति चेन्मैवमनुभवसिद्धत्वादस्यापलापासंभवात्तस्य भावरूपत्वसमर्पकैस्तिमिरादिशब्दैः श्रुतिस्मृतिपुराणेष्वभिधीयमानस्य नाऽऽत्माश्रयविषयत्वासंभवाच्चेत्यभिप्रेत्याऽऽह—चिद्वस्तुन इति । चिद्रूपं यद्वस्तु परमार्थसत्तस्य या स्वरूपभूता चित्तस्यां तिमिरं भवेच्चानात्मवस्तुनि तत्राज्ञा-

नासंभवस्य वक्ष्यमाणत्वादित्यर्थः। तिमिरादिशब्दा हि निष्प्रतियोगिकमर्थमावेदयन्त्यतोऽज्ञानमितिशब्दो ज्ञानपर्युदासेनोच्यमानोऽप्यधर्मशब्दवन्नाभावविषय इति भावः ॥ ३१८ ॥

सु० टी०—ननु कथं चिन्मात्राश्रयविषयमज्ञानमहं ब्रह्म न वेदेति जीवाश्रयत्वेन ब्रह्मविषयत्वेन चानुभवादतश्चाहंकारविशिष्टं चैतन्यमज्ञानाश्रय इत्यभ्युपेयमिति चेत्तत्राऽऽह—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाऽऽश्रयो भवति नापि गोचरः॥३१९॥

आश्रयत्वेति। जीवब्रह्मविभागशून्या केवलैव चितिरज्ञानस्याऽऽश्रयत्वं विषयत्वं च भजते न त्वहंकारादिविशिष्टेत्यर्थः। कुत इत्याह—पूर्वसिद्धेति। जीवेश्वरविभागस्याविद्यातन्त्रत्वात्ततः पूर्वमविद्यासिद्धिर्वाच्या। तस्याश्च स्वकल्पितविभागो जीव ईश्वरो वा नाऽऽश्रयो न वा विषयः संभवति तत्सिद्धेः पूर्वं तदसिद्धेरित्यर्थः। ततश्चाहंकारोपलक्षितप्रत्यगाश्रयेविषय एवाज्ञत्वानुभव इति भावः। यद्यपि चाज्ञानवज्जीवेश्वरविभागोऽप्यनादिस्तथाऽपि तस्याज्ञानतन्त्रत्वादज्ञानविभागयोः पौर्वापर्यमप्यनादीति कल्प्यते वैदिकवर्णपदवाक्यपौर्वापर्यवदिति। अत्र वदन्ति। कथं चिन्मात्राश्रयादज्ञानाज्जीवे संसारस्तस्य विशिष्टचिद्रूपत्वेन चिन्मात्रभिन्नत्वादज्ञानस्य च स्वाश्रय एव कार्यजनकत्वात्। उपाधेः प्रतिबिम्बपक्षपातित्वव्याप्तेरिति चेत्कीदृशं तन्न तावत्तत्र स्वधर्मभासकत्वमज्ञत्वकर्तृत्वादेरज्ञानधर्मत्वाभावात्। नापि तत्र स्वकार्यभासकत्वं तत्कार्यस्य विच्छेदादेर्बिम्बेऽपि दृष्टेः। नापि स्वकार्यधर्मभासकत्वं दर्पणादावदृष्टेः। अज्ञानाश्रयचित एव बिम्बप्रतिबिम्बरूपत्वात्तत्र बन्ध इति चेदीश्वरेऽपि तत्प्रसङ्ग इति उच्यते—

'उपाधिकृतधर्माणामध्यासो नियमेन यत्।
प्रतिबिम्बे भवत्येपोपाधेस्तत्पक्षपातिता॥'

नयनगोलकोपाधिप्रयुक्ता ह्यल्पता न कदाऽपि बिम्बेऽध्यस्यते किं त्वक्षिणुरुप एव। न चासौ गोलकधर्म इति वाच्यम्। गोलकस्य ततोऽप्यधिकत्वात्। एवं जीवगताज्ञत्वकर्तृत्वाद्यप्यज्ञानप्रयुक्तं न त्वज्ञानधर्मः।

१ क. ग. °य एवाश्रय°।

चेतनस्यैव तदुपपत्तेः । प्रतिबिम्ब एव स्वधर्मासञ्जकत्वं वा तत्पक्षपातित्वं दर्पणेन स्ववर्णमालिन्यबिम्बभेदादेः प्रतिबिम्ब एवाऽऽसञ्जनात् । अज्ञानेनापि स्वनिष्ठस्य ब्रह्मभेदस्य जीव एवाऽऽसञ्जनं कृतं न सर्वज्ञे बिम्बे । ननु बिम्बेऽप्युपाधिधर्मभेदभानान्नोक्तनियम इति चेन्न तस्योपाधिधर्मत्वाभावात् । बिम्बे दर्पणस्थबिम्बभेदासञ्जने बिम्बमुखं ग्रीवास्थमुखं नेति ज्ञानापत्तेः । प्रतिबिम्बभेदश्च तत्र स्फुरन्न दर्पणधर्म इति युक्तो जीव एव संसार इति । यच्चोक्तमीश्वरेऽपि तत्प्रसङ्ग इति तन्नाज्ञानस्य सर्वज्ञेश्वरं वशिनं प्रति वाक्यार्थब्रह्मस्वरूपानावरकत्वेन तत्र भ्रमाजनकत्वात् । न हि विशेषदर्शिनो भ्रमः संभवतीति सर्वं सुस्थम् ॥ ३१९ ॥

अ० टी०—ननु चिन्मात्राश्रयविषयत्वमज्ञानस्यायुक्तं ज्ञानवदज्ञानस्यापि विषयाश्रयभेदस्याभ्युपेयत्वात्तथा चाहमज्ञ इत्यनुभवादहंकारविशिष्टचैतन्यमाश्रयः परमात्मा तु विषय इति तद्भेदसिद्धिरिति चेत्तत्राऽऽह—**आश्रयत्वविषयत्वेति** । अज्ञानं प्रतीति प्रथमं योज्यम् । निर्विभागेति निरवयवत्वोक्त्या स्वरूपभेदो निरस्तः । केवलेति सजातीयविजातीयभेदनिरासः । एवकारेण स्वगतधर्मभेदव्युदासः । एवंविधा चिदेवाज्ञानं प्रत्याश्रयत्वविषयत्वभागिनीत्यर्थः । कुत इत्यत आह—**पूर्वसिद्धेति** । प्राक्सिद्धस्याज्ञानस्य पश्चिमः पश्चात्सिद्धस्तत्कार्यभूतोऽहंकारादिस्तद्विशिष्टो वा चिदात्मा नाऽऽश्रयो भवति नापि गोचरः कार्यस्य कारणाश्रयत्वायोगात्तद्व्यापकत्वायोगाच्चेत्यर्थः । अतोऽहमज्ञ इत्यज्ञत्वानुभवोऽप्यन्तःकरणोपलक्षितप्रत्यङ्निर्विभागचिद्विषय एवेत्यभ्युपेयमिति भावः ॥ ३१९ ॥

सु० टी०—यच्चोक्तमज्ञानमप्यसदित्यादि तद्दूषयति—

नाभावताऽस्य घटते वरणात्मकत्वा-
न्नाभावमावरणमाहुरभावशौण्डाः ।
अज्ञानमावरणमाह च वासुदेव-
स्तद्भावरूपमिति तेन वयं प्रतीमः ॥ ३२० ॥

नाभावतेति । नाभावरूपमज्ञानमावरकत्वाद्भित्त्यादिवत् । न च हेत्वसिद्धिः सुषुप्तौ ब्रह्मानवभासस्याऽऽवरणैकप्रयुक्तत्वात् । न चासौ भेदकृतोऽभेदस्य 'स्वमपीतो भवति' [ छा० ६ । ८ । १ ] इत्यादिश्रुतिन्यायसिद्धत्वात् । नापि ग्राहकाभावकृतस्तस्य स्वप्रकाशत्वस्यापि श्रुतियुक्तिसिद्धत्वात् । आवरणं च तत्र नाज्ञा(*नादन्यदित्यत्र मान-

* ग्रन्थोऽयं ख. पुस्तकस्थः ।

मस्ति। अज्ञानस्याऽऽवरकत्वे च 'नीहारेण प्रावृताः' इत्यादिश्रुतिर्मानम्। न चाज्ञा)नमपि न तदेति वाच्यं 'न किंचिदवेदिषम्' इति परामर्शात्। प्रतितर्कमप्याह—नेति। तार्किका अपि नाभावस्याऽऽवरकत्वमाहुः सर्वस्याप्यभावाधारत्वेनातीन्द्रियत्वापत्तेरित्यर्थः। 'अज्ञानेनाऽऽवृतं ज्ञानम्' [भ०गी०५। १५] इति गीताऽप्यत्र मानमित्याह—अज्ञानमिति॥ ३२०॥

अ० टी०—पूर्वं शब्दनिर्देशसामर्थ्येनाज्ञानस्याभावविलक्षणत्वमुक्तमिदानीं युक्त्याऽप्यभाववैलक्षण्यमुपपादयति—नाभावताऽस्येति। विमतमज्ञानं नाभावो वरणात्मकत्वादावरकत्वात्पटवदित्यर्थः। आवरकत्वेऽप्यभावत्ता किं न स्यादित्यत आह—नाभावमावरणमिति। अभावशौण्डा अभावस्वभावविदस्तार्किका इत्यर्थः। हेत्वसिद्धिं परिहरति—अज्ञानमिति। 'अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः।' [भ० गी० ५। १५] इत्यज्ञानस्याऽऽवरकत्वं भगवान्वासुदेव आहेत्यर्थः। 'तस्मिंश्चान्यो मायया संनिरुद्धः' [श्वे० ४।९] इत्यादिश्रुतिसमुच्चयार्थश्चकारः। उपनयननिगमने कथयति—तद्भावरूपमिति। तदज्ञानं भावरूपमिति निगमननिर्देशः। तेनेत्युपनयनकथनम्॥ ३२०॥

सु० टी०—व्यासवचनादपि न हेत्वसिद्धिरित्याह—

एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन्।
येनाऽऽवृतः कुरुते संभ्रमत्तो
घोराणि कर्माणि सुदारुणानि॥ ३२१॥

एक इति। येनाज्ञानेनाऽऽवृतस्तिरोहितज्ञानः सन्नित्यर्थः। घोराण्यैहिकभयंकराणि। दारुणान्यामुष्मिकनरकफलानि॥ ३२१॥

अ० टी०—अत्रैवार्थे इतिहासवचनमप्युदाहरति—एकः शत्रुरिति। घोराणि साहसानि सुदारुणानि दु सहविपाकानि॥ ३२१॥

सु० टी०—अर्थापत्तिरप्यज्ञानस्य भावत्वे मानमित्याह—

जाड्यं जगत्यनुगतं खलु भावरूपं
मौढ्यं च पुंगतमिति प्रतिभाति तादृक्।
जाड्यं च मौढ्यमिति चानुभवप्रसिद्ध-
मज्ञानमाहुरपवर्गपिधानदक्षम्॥ ३२२॥

जाड्यमिति। जगति सर्वत्रानुस्यूतं भावरूपं जाड्यं भासमानं जडात्म-

१ क. ग. °रणकर्मत्व°।

कमुपादानं कल्पयद्भावरूपमेव कल्पयति । तथा सर्वपुरुषेष्वनुभूयमानं मौढ्यं तादृगेव निष्प्रतियोगिकं प्रतिभातीति बहिर्जाड्यात्मनाऽन्तर्मौढ्यात्मनाऽनुभवसिद्धमज्ञानमेव बन्धकारणमाहुरित्यर्थः ॥ ३२२ ॥

अ० टी०—इतश्च भावरूपत्वमज्ञानस्येत्याह—जाड्यं जगतीति । जगति देहघटादौ कार्येऽनुगतमनुभूयमानं खलु जाड्यं भावरूपमिति प्रतिभाति तथा पुंगतं मौढ्यं च तादृग्भावरूपमिति प्रतिभातीति योजना । जगत्यात्मनि च दृश्यमानं जाड्यं मौढ्यं च कार्यत्वात्स्वानुरूपमुपादानं कल्पयति । न हि चेतनं जडस्योपादानं भवति परिशेषादचेतनमुपादानं सदज्ञानं सिध्यति तस्य चाभावरूपत्वे कार्योपादानत्वासंभवाद्भावरूपमेव तदज्ञानमुन्नीयत इत्याह—जाड्यं च मौढ्यमिति चेति । जगद्गतं जाड्यं चाऽऽत्मगतं मौढ्यमिति चानुभवेन प्रसिद्धमनुभवबलादनुमानतश्च प्रसिद्धमज्ञानमेवापवर्गपिधानदक्षं परमानन्दब्रह्मात्माच्छादनावरणविक्षेपकरत्वेन संसारोत्पत्तिस्थितिनिर्वाहकमित्याहुर्ब्रह्मविद इत्यर्थः ॥ ३२२ ॥

सु० टी०—ननु नाज्ञानं बन्धकारणं 'यतो वा इमानि भूतानि' [ तैत्ति० ३ । १ । १ ] इत्यादिश्रुतौ ब्रह्मण एव सर्वोपादानत्वश्रुतेरिति कुतो जडेष्वज्ञानानुगतिरिति चेत्तत्राऽऽह—

साभासमेतदुपजीव्य चिदद्वितीया
संसारकारणमिति प्रवदन्ति धीराः ।
साभासमेतदिति संसृतिकारणत्वे
द्वारं परं भवति कारणता दृशस्तु ॥ ३२३ ॥

साभासमिति । यतश्चिदद्वितीया न तत्र द्वैतं वास्तवमतः साभासमज्ञानं द्वारीकृत्यैव सा जगद्विवर्तोपादानं न केवलेति प्रवदन्ति तदन्यत्वमित्यादौ व्यासादय इत्यर्थः । ननु नासङ्गायाः सर्वशक्तिमत्याश्चितेरुपजीव्यमज्ञानमसंबन्धादनुपयोगाच्च । तथात्वे वा तदेव कारणमस्तु किं ब्रह्मणेत्यत आह—साभासमेतदिति । कूटस्थासङ्गस्य ब्रह्मणः साभासाज्ञानावच्छेदं विना कारणत्वासंभवात्तदुपपादकत्वेन द्वारमात्रमज्ञानं कारणत्वं तु शक्तिमत्याश्चित एवेत्यर्थः 'प्रकृतिं स्वामधिष्ठाय' [ भ० गी० ४ । ७ ] इति स्मृतेः ॥ ३२३ ॥

अ० टी०—ननु कथमज्ञानस्य बन्धरूपजगत्कारणत्वं यावता 'आत्मन आकाशः संभूतः' [ तै० २ । १ । १ ] 'आत्मन एवेदं सर्वम्' [ छा० ७ । २६ । १ ]

इत्यादिश्रुतय आत्मन एव ब्रह्मरूपात्तदुत्पत्त्यादि बोधयन्तीति चेत्सत्यं साभासाज्ञानद्वारा ब्रह्म तत्कारणं न केवलमित्यज्ञानोपाधिकब्रह्मकारणत्वपरत्वाच्छ्रुतीनामित्याह—**साभासमिति**। साभासं चित्यध्यासेन चिदाभासखचितमेतदज्ञानमुपजीव्योपाधिं पुरस्कृत्याद्वितीया कूटस्थाद्वयानन्दरूपा चिच्चिदात्मा ब्रह्मेति यावत्संसारकारणं न केवलमिति धीरा धीमन्तो वेदान्तार्थनिपुणबुद्धयः प्रवदन्ति। 'तर्हि तद्धेतोरेवास्तु किं तेन' इतिन्यायेनाज्ञानमेवास्तु जगतः कारणं माऽस्तु तथा तस्य कूटस्थत्वादिति चेन्नेत्याह—**साभासमेतदित्युत्तरार्धेन**। सर्वश्रुतिषु ब्रह्मण एव प्राधान्येन जगत्कारणत्वश्रवणात् 'मायां तु प्रकृतिं' [श्वे० ४। १०] इत्यादौ तु मायायाः 'मायिनं तु महेश्वरम्' [श्वे० ४। १०] इतिवाक्यशेषेणेश्वराधीनत्वश्रुतेरप्राधान्यावगमाच्चातः कारणता तु दृशश्चिदात्मन एव तस्य कूटस्थतया स्वतो जगद्रूपत्वेनाऽऽविर्भावासंभवात्तस्य संसृतिकारणत्वे द्वारं सहकारिमात्रपरं भवति। जडस्यास्य द्वारत्वमपि कथमित्यत आह—**साभासमेतदितीति**। इति यत एतदज्ञानं साभासमतो द्वारमिति योजना। एतदुक्तं भवति—अज्ञानस्य तत्र तत्रेश्वरशक्तित्वश्रवणाच्छक्तेश्च शक्तिमत्परतन्त्रत्वादविद्याशक्तेश्चाऽऽत्मन्यध्यस्ततया तावन्मात्रत्वादभेदे सत्यज्ञानकारणश्रवणमपि ब्रह्मकारणपरमेव ब्रह्मण एव रज्जुशुक्त्यादीव सर्परजताद्यात्मनाऽविद्यया विवर्तमानत्वादिति ॥ ३२३ ॥

**सु० टी०—न ब्रह्म जगत्कारणं प्रधानस्य परमाणूनां वा तथात्वसंभवादिति सांख्यादयस्तान्निरस्यति—**

**यावद्दृशोऽन्यदिह संसृतिकारणं त-**<br>**द्वेदान्तवादिसमये न मतं जडत्वात्।**<br>**यद्यज्जडं भवति संसृतिकारणं त-**<br>**न्नेति स्फुटं वदति सूत्रकृदत्र यस्मात् ॥ ३२४ ॥**

यावदिति। **नाचेतनस्य स्वातन्त्र्येण जगत्कारणमिष्टमस्माभिः 'ईक्षतेर्नाशब्दम्' [ब्रह्म सू० १। १। ५] इत्यादिषु सूत्रकृतैव जडकारणस्य युक्तिभिर्निरासादित्यर्थः ॥ ३२४ ॥**

अ० टी०—ननु जडशक्तेः स्वातन्त्र्येण कारणत्वाभ्युपगमे को विरोध इति तत्राऽऽह—**यावद्दृशोऽन्यदिति**। अथ वा कुत एवं व्यवस्थाऽऽस्थीयते सूत्रकृत्प्रवृत्तिपर्यालोचनयेत्याह—**यावद्दृशोऽन्यदिति**। दृशोऽन्यदचेतनं संसृतिकारणं यावत्सांख्यादिभिरुत्प्रेक्षितं तदिह वेदान्तवादिसमये न मतं नेष्टं कुतो जडत्वात्स्वतःप्रवृत्त्याद्यसमर्थत्वादित्यर्थः। कथमिदं वेदान्तिनो न मतमित्यवगम्यते तत्राऽऽह—**यद्यदिति**। 'रचनानुपपत्तेश्च नानु-

भानम्' [ ब्र० सू० २ । २ । १ ] 'उभयथाऽपि न कर्मातस्तदभावः' [ ब्र० सू० २ । २ । १२ ] इत्यादिभिः सूत्रकृता स्वतन्त्रजडकारणस्य स्पष्टं निराकरणादित्यर्थः ॥ ३२४ ॥

सु० टी०—ननु 'आकाशाद्वायुर्वायोरग्निः' [ तैत्ति० २ । १ । १ ] इति जडानामपि कारणत्वश्रुतेः कथमेतदिति चेत्तत्राऽऽह—

अजडकारणभावनिबन्धनं
सकलमेव जडं न तु कारणम् ।
इति हि वेदशिरःसु विचक्षणाः
कपिलपक्षनिराकरणे जगुः ॥ ३२५ ॥

अजडेति । भाष्यकारादयोऽपि सांख्यमतनिराकरणे रचनानुपपत्तिसूत्रे स्थित्वेति होचुः । किं तदजडस्य चैतन्यस्य कारणत्वे द्वारमात्रं सकलं जडं न स्वतः कारणमिति । तत्राऽऽत्मन आकाशजन्मनि तमोद्वारमाकाशत्वापन्नादात्मनो वायुजन्मनि नमस्तमसी वायुरूपापन्नाच्च तेजोजन्मनि वायुतमसी ( *तेजस्त्वापन्नाच्च जलोत्पत्तौ तेजस्तमसी ) जलत्वापन्नाच्च पृथिवीजन्मनि जलतमसी इति ॥ ३२५ ॥

अ० टी०—तदेव स्पष्टयति—अजडेति । अजडस्य चिदात्मनः कारणभावे कारणत्वव्यवहारयोग्यत्वे सकलमेव जडमविद्याकाशादिव्याकृतमव्याकृतं च निबन्धनं द्वारं भवति न तु स्वयं कारणमित्यर्थः । इति हीति स्पष्टार्थम् । वेदशिरःसु विचक्षणा भाष्यकारप्रभृतयो महान्त इत्यर्थः ॥ ३२५ ॥

सु० टी०—एकदेशिमतमाह—

शबलमात्मपदेन निगद्यते
सकलमात्मजमित्यपि च श्रुतिः ।
शबलमात्मपदं जगतस्ततः
प्रकृतिरित्यपरे च जना जगुः ॥ ३२६ ॥

शबलमिति । 'आत्मन आकाशः' [ तै० २ । १ । १ ) इत्यादिश्रुतिः सकलमात्मजमित्याह । तत्राज्ञानशबलं ब्रह्माऽऽत्मशब्देनोच्यते तत्रैव व्युत्पत्तेः । अतस्तदेव जगदुपादानं कार्येषु चिदंशजाड्यांशयोरनुवृत्तिदर्शनादित्याहुरित्यर्थः ॥ ३२६ ॥

---

* क. पुस्तके नास्त्ययं ग्रन्थः ।

अ० टी०—'देवात्मशक्तिं स्वगुणैर्निरूढाम्' [ श्वे० १ । ३ ] 'इन्द्रो मायाभिः' [ बृ० २ । ५ । १९ ] इति श्रुत्यनुसारेण ब्रह्मैव कारणमज्ञानं शक्तिस्तत्र द्वारमित्युक्तं तत्र पुनर्वचनान्तरमाश्रित्य मतान्तरमाह—**शबलमात्मेति** । आत्मपदेन तत्पर्यायसद्ब्रह्मादिपदेन च शबलमज्ञानविशिष्टं तत्त्वं निगद्यते । श्रुतिरपि—**सकलमात्मजमिति** । 'आत्मन आकाशः संभूतः' [ तै० २ । १ । १ ] इत्यादिरूपा पठ्यत इति शेषः । चकारोऽवधारणार्थः । फलितमाह—**शबलमात्मपदमिति** । अज्ञानविशिष्टश्चिदात्मा जगत उपादानकारणमित्यपरे जगुरित्यर्थः ॥ ३२६ ॥

सु० टी०—तत्किं कर्तृत्वमपि शबलस्यैव नेत्याह—

**सुकृतदुष्कृतकर्मणि कर्तृतां**
**मतिगतात्मचितिप्रतिबिम्बकम् ।**
**व्रजति तद्वददः परमात्मनो**
**जगति याति तमःप्रतिबिम्बकम् ॥ ३२७ ॥**

सुकृतेति । यथा हि पुण्यापुण्यकर्तृत्वमात्मनो बुद्धिगताभासाविविक्तस्य प्रतिबिम्बचैतन्यस्यैव बुद्धिस्तु तदाश्रयमात्रमिति 'कर्ता शास्त्रार्थवत्त्वात्' ( ब्र० सू० २ । ३ । ३३ ) इत्यत्र स्थितमेवं जगत्कर्तृत्वमपि परमात्मनः सामासतमःप्रतिबिम्बस्यैव न विशिष्टस्येत्यर्थः ॥ ३२७ ॥

अ० टी०—अत्रैवाधिष्ठातृकारणत्वे विशेषमाह—**सुकृतदुष्कृतेति** । मतिगतात्मचैतन्यप्रतिबिम्बकं जीवाख्यं सुकृतदुष्कृतकर्मणि कर्तृतां व्रजति यद्वदित्यध्याहारः । तद्वददः परमात्मनोऽपि तमसि कारणोपाधावज्ञाने प्रतिबिम्बकमीश्वराख्यं जगति कर्तृतां यातीति योजना । यथाऽन्तःकरणप्रतिबिम्बस्यैव कर्तृत्वं 'कर्ता शास्त्रार्थवत्त्वात्' [ ब्र० सू० २ । ३ । ३३ ] इतिन्यायान्न त्वन्तःकरणविशिष्टस्य तथा जगत्कर्तृत्वमपि तमःप्रतिबिम्बस्यैव न तमोविशिष्टस्येत्यर्थः ॥ ३२७ ॥

सु० टी०—ननु किं द्वैरूप्येणोपादानत्वं कर्तृत्वं च प्रतिबिम्बस्यैवाऽऽस्तामिति नेत्याह—

**सुकृतदुष्कृतयोः शबला यथा**
**भवति कारणमात्मचितिस्तथा ।**
**गगनवायुपुरःसरकारणं**
**परमचेतनता शबलाकृतिः ॥ ३२८ ॥**

सुकृतेति । यथा बुद्धिशबला चितिः पुण्यापुण्ययोरुपादानं तयोः परिणामरूपत्वात् । कूटस्थात्मपरिणतेः शाबल्याधीनत्वात्तथाऽज्ञानश-

बलैव गगनादिपरिणामोपादानं न प्रतिबिम्बात्मिकेत्यर्थः । चेतनता चैतन्यम् ॥ ३२८ ॥

अ० टी०—तर्ह्युपादानत्वमपि प्रतिबिम्बस्यास्तु किमनात्मशाबल्येनेत्यत आह—सुकृतदुष्कृतयोरिति । यथाऽन्तःकरणशबलाऽऽत्मचितिः सुकृतदुष्कृतयोः कारणमुपादानं भवति सुकृतादेः परिणामात्मत्वात्परिणामस्य च चिदात्मनोऽन्तःकरणशाबल्याधीनत्वाच्छबलमुपादानं यथेत्यर्थः । तथा गगनेत्यादि सुगमम् । कूटस्थस्यापरिणामित्वाज्जडस्य स्वतःप्रवृत्त्यभावाच्चेत्यर्थः ॥ ३२८ ॥

सु० टी०—दूषयति—

शबलताकवलीकृततावशा-
त्परमचेतनतैव निगद्यते ।
शबलमात्मपदेन न कथ्यते
शबलमात्मनिवृत्तिनिबन्धनम् ॥ ३२९ ॥

शबलतेति । परमचेतनता सर्वोपाधिविवर्जितं चैतन्यं तदेव तत्र जिज्ञास्यत्वादात्मपदेन निगद्यते 'यत्परः शब्दः' इति न्यायान्न तु शबलं तस्य वस्तुतोऽनात्मत्वात् । किं तु केवलस्याव्यपदेश्यत्वादुपाधिधिशाबल्यकवलीकृतं तदभिधीयत इति निमित्तमात्रं शाबल्यमित्यर्थः ॥ ३२९ ॥

अ० टी०—तदेतदन्यमते शोधयित्वा स्वमते प्रवेशयति—शबलताकवलीकृततेति । आत्मपदेन तत्पर्यायैश्च शबलं न कथ्यते किं तु परमचेतनतैव निगद्यते । चेतनता चैतन्यरूपं तस्याः परमत्वं सर्वोपाधिरहितत्वं निर्विशेषत्वमित्येतत् । तर्हि शबलतायाः कोपयोग इति तत्राह—शबलमात्मनीति । वृत्तिः शब्दप्रवृत्तिस्तत्कारणं शबलता लक्षणया चित्स्वरूपे शब्दपर्यवसाने द्वारमित्यर्थः । कथं द्वारतेति तत्र संबन्धिता तस्याऽऽह—शबलताकवलीकृततावशादिति । शबलतयाऽनात्मशाबल्येन परमचेतनाया आत्मसात्कृतत्वात्तस्मिन्नन्तर्भूतत्वादित्यर्थः । परमचेतनायाः शबलताकवलीकृततावशाच्छबलमात्मनिवृत्तिनिबन्धनमित्यन्वयः ॥ ३२९ ॥

सु० टी०—(* तर्हि शबलमात्मादिपदवाच्यमिति व्यवहारः किंनिबन्धन इति चेत्तत्राऽऽह—

शबलतापरिधानसमन्वया-
त्परमचेतनताऽऽत्मगिरः पदम् ।

---

* अयं ग्रन्थः क. पुस्तके नास्ति ।

भवति तेन जनस्य तु विभ्रमः
शबलमात्मगिरः पदमित्ययम् ॥ ३३० ॥

शबलतेति । शाबल्यद्वारा तात्पर्यविषयीभूतं शुद्धमेवाऽऽत्मादिशब्दैरुच्यते । जनस्य त्वज्ञस्य) तदविवेकाच्छबलमात्मपदवाच्यमित्ययं भ्रमो भवतीत्यर्थः ॥ ३३० ॥

अ० टी०—एवं शबलमात्मादिशब्दवाच्यमित्ययं भ्रम इत्युक्तद्वारत्वानुवादेन स्वमतमुपसंहरति—शबलतापरिधानसमन्वयादिति । आत्मगिरः पदं व्युत्पत्तिस्थानं भवति तेन हेतुनेत्यर्थः ॥ ३३० ॥

सु० टी०—ननु कथं व्यवहारातीतस्य शुद्धस्य कारणत्वं वाच्यत्वं चेति मायावशादित्याह—

बहु निगद्य किमत्र वदाम्यहं
शृणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः
सकलवाङ्मनसव्यवहारभाक् ॥ ३३१ ॥

बहु निगद्येति । प्रत्येकोक्तौ यत्र गौरवात्संक्षेपोक्तिं शृणुतेत्यर्थः । संग्रहमाह—अद्वयेति । अस्मन्मते हि सकलव्यवहारातीता चितिः शुद्धैव स्वाध्यस्तघटकुड्याद्यधिष्ठानतया तत्तदात्मना स्फुरती सकलक्रियाकारकव्यवहारहेतुः स्वतो रजतव्यवहारातीतेव शुक्तिरज्ञानद्वारा रजतरङ्गादिव्यवहारभागिति । 'त्वं स्त्री त्वं पुमानसि' [श्वे० ४ । ३] इत्यादिश्रुतेरित्यर्थः ॥ ३३१ ॥

अ० टी०—तदेवमात्मन एव तत्तच्छब्दैः समर्पणात्तस्यैव कारणत्वं श्रुतिभिरभिधीयते । अनात्मशाबल्यं तु तत्र द्वारमात्रमिति सिद्धः सर्वश्रुतिसमन्वयः केवले चिदात्मनीति स्थितमिदानीं न केवलं ब्रह्मादिशब्दवाच्यत्वकारणत्वयोरेवायं न्यायः किं तु सर्वव्यवहारेऽपीत्याह—बहु निगद्येति । अद्वयशासने वेदान्तशास्त्रे संग्रहमर्थसंग्रहं सकलवाङ्मनसागोचरैव चितिस्तत्तद्व्यवहारसमये तत्तदर्थशाबल्येन सकलवाङ्मनसव्यवहारभाग्भवति नान्यज्जडं तद्विशिष्टं चैतन्यं वेत्यर्थः । उक्तं च—

'अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्' इति ॥ ३३१ ॥

१ क. लताग° ।

सु० टी०—ननु केवलस्य जगदुपादानत्वं चेत्किमज्ञानद्वारकल्पनयेति तत्राऽऽह—

चित्रायागः पशुफल इति श्रूयमाणेऽपि चित्रा-
पूर्वं द्वारं पशुफलतयाऽऽक्षिप्यते तत्र तद्वत् ।
चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽत्रापि पश्चा-
न्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन् ॥ ३३२ ॥

चित्रेति । यथा 'चित्रया यजेत पशुकामः' इति यागस्य चिरनष्टस्य कालान्तरीयफलहेतुत्वश्रुत्यन्यथानुपपत्त्याऽपूर्वं द्वारमाक्षिप्यते तद्वत् 'सत्यं ज्ञानमनन्तम्' [तै० २ । १ । १] इत्याद्युक्त्वा 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' [तै० २ । १ । १] इति कूटस्थचिदात्मनस्तद्विपरीतजगदुपादानत्वश्रुत्यन्यथानुपपत्त्याऽस्मिञ्जगद्रूपकार्ये मायाकामकर्मादेर्द्वारत्वं कल्प्यत इत्यर्थः । मायिकप्रपञ्चं प्रति ब्रह्मणो वास्तवकारणत्वासंभवाज्जगदाकारेणान्यथाभावमापद्यमानां मायामनुसृत्य तदधिष्ठानं ब्रह्मापि तथैव स्फुरज्जगदुपादानमिति व्यवह्रियत इति भावः ॥ ३३२ ॥

अ० टी०—कथमात्मनः केवलस्य सर्वसंव्यवहारेऽज्ञानादेर्द्वारत्वमवसितमिति वीक्षायां तत्सदृष्टान्तमाह—चित्रायाग इति । 'चित्रया यजेत पशुकामः' इति वाक्येन चित्रायागः पशुफल इति श्रूयमाणेऽपि साक्षात्पशुफलत्वे चित्रायागजन्यमपूर्वं तत्र पशुफलतया मध्ये क्षिप्यते यद्वदिति योज्यम् । यथा श्रूयमाणफलसाधनत्वान्यथानुपपत्त्या क्षणिकस्यापि यागस्य कालान्तरभाविफलसाधनत्वसिद्धयेऽपूर्वद्वारत्वमास्थीयत इति दृष्टान्तार्थः । दार्ष्टान्तिकमाह—तद्वच्चैतन्यात्मेति । अस्मिन्फले फलभूते जगतीति संबन्धः । पश्चादनुपपत्तिप्रतीतिदशायामित्यर्थः ॥ ३३२ ॥

सु० टी०—इतश्च शुद्धचैतन्यमेवाज्ञानद्वारा कारणमित्याह—

कारणत्वमुपलक्षणं चिते-
र्ब्रह्मणो न खलु तद्विशेषणम् ।
इत्यपीदमुपपद्यते तदा
चेतना भवति कारणं यदा ॥ ३३३ ॥

कारणत्वमिति । लक्ष्यस्य ब्रह्मणो जगत्कारणत्वं न विशेषणं किंतूपलक्षणमेवेत्यपि वक्ष्यमाणं केवलस्य कारणत्व एवोपपद्यते । अज्ञान-

मात्रस्य शबलस्य वा कारणत्वं चेत्तद्यावत्स्वरूपभावित्वेन विशेषणमेव स्यादिति ॥ ३३३ ॥

अ० टी०—तदेवं कूटस्थचिदेकरसस्य जडप्रपञ्चकारणत्वं श्रूयमाणमप्यन्यथानुपपत्त्या मायां तत्र कल्पयति कादाचित्कप्रवृत्तिनिमित्ततया च मायाद्वारतः प्राप्तोपादानकर्तृभावस्य चिदात्मनो लोकशास्त्राभ्यामवगतं कालादृष्टादिकारणं सिद्धमेवाङ्गीकृतं शास्त्रकारैरिति चिदात्मैव कारणमित्यङ्गीकार्यमन्यथा कारणत्वस्योपलक्षणत्वाङ्गीकारविरोधादित्याह—कारणत्वमिति । जगत्कारणत्वस्य चिदात्मनिष्ठत्वाभावे कारणत्वस्य तदुपलक्षणता न सिध्येत्तच्च तस्य साभासाज्ञानद्वारकत्वे समञ्जसमन्यथा विशिष्टस्य कारणत्वे विशिष्टमेव लक्ष्यं स्यात्तथा च तस्य सत्यज्ञानाद्यखण्डस्वरूपपरवाक्यविरोध इति भावः । अक्षरार्थस्त्वतिरोहितः ॥ ३३३ ॥

सु० टी०—ननु शबलगतेनैव कारणत्वेन ब्रह्मण उपलक्षणसंभवान्न शुद्धस्य कारणत्वमिति चेत्तत्राऽऽह—

अन्यदेव यदि कारणं भवे-
त्कारणत्वमुपलक्षणं कथम् ।
चेतनस्य घटतेऽन्यगामिना
वस्तु नान्यदुपलक्ष्यते यतः ॥ ३३४ ॥

अन्यदेवेति । विशिष्टात्केवलस्यान्यत्वात्तद्गतेन कारणत्वेन न ब्रह्मण उपलक्षणं संभवति घोषगतकाकवत्त्वेन चैत्रगृहस्यानुपलक्षणादित्यर्थः ॥ ३३४ ॥

अ० टी०—उक्तमेवार्थमुपपादयति—अन्यदेवेति । साभासाज्ञानमेवेत्यर्थः । चेतनस्य केवलचिदात्मन इति यावत् । कथं न घटत इति तत्राऽऽह—अन्यगामिनेति । न हि विशिष्टगतेन कारणत्वेन केवलो लक्ष्यते विशिष्टात्केवलस्य भिन्नत्वाल्लक्षणस्य लक्ष्यास्पृष्टत्वादसंबद्धलक्षणे चातिप्रसङ्गादित्यर्थः । तस्मात्साभासाज्ञानं चिदात्मन एव कूटस्थस्य सर्वाधिष्ठानतया सर्वसत्तास्फुरणप्रदत्वेन सर्वानुगमरूपस्योपादानत्वस्य सर्वप्रकारविकारकारिमायाप्रतिबिम्बितत्वेन तस्मिन्नाभासविक्षेपकत्वरूपकर्तृत्वस्य च द्वारमेव न स्वयं कारणमिति सिद्धम् ॥ ३३४ ॥

सु० टी०—एवं चाज्ञानसिद्धावज्ञातमर्थमवबोधयेत इति चोद्यं निरस्तमित्याह—

अनवबुद्धमतः श्रुतिमस्तके-
र्विषयतामुपपादयितुं क्षमम् ।

१ क. ख. °वज्ञातज्ञा°। २ क. 'यति इति वा नि°।

अनुभवात्मपदं तमसा यतः
पिहितमेतदिह प्रतिभासते ॥ ३३५ ॥

अनवबुद्धमिति । अतः श्रुतियुक्तिभ्यामज्ञानसिद्धेरनवबुद्धमात्मस्वरूपमनुभवात्मकमपि वेदान्तैर्विषयाभावं नेतुं शक्यमित्यर्थः । (*अत्र च प्रत्यक्षमुपोद्बलयति—तमसेति । इह साक्षिण्येतदात्मपदं तमसा पिहितं भासते मामहं न जानामीत्यर्थः) ॥ ३३५ ॥

अ० टी०—तदेवं श्रुतिस्मृतिशास्त्रयुक्तिभिरुपपादितमज्ञानमात्मनि ब्रह्मण्युपगन्तव्यमिति स्थिते तस्यैव ब्रह्मणोऽज्ञातत्वात्परमानन्दरूपतया फलरूपत्वाच्च तत्र वेदान्तानां निरपेक्षं प्रामाण्यं सिद्धमित्युपसंहरति—अनवबुद्धमिति । यत एवमज्ञानं ब्रह्मात्मनि सर्वव्यवहारप्रवृत्तिद्वारमतो हेतोः श्रुतिमस्तकैर्वेदान्तैरनवबुद्धमज्ञातमात्मतत्त्वं विषयतां स्वप्रतिपाद्यतामुपपादयितुं क्षमं समर्थमेव । अत इत्युक्तमेव हेतुं परामृशति—अनुभवात्मपदमिति । एतदनुभवात्मपदमिति संबन्धः । नित्यानुभवरूपमात्मस्वरूपमिह संसारदशायां यतस्तमसा पिहितं प्रतिभासतेऽतोऽनवबुद्धमिति योजना ॥ ३३९ ॥

सु० टी०—एवमप्रमेयेऽप्यात्मन्यज्ञानविषयत्वादनिर्वचनीयश्रुत्याचार्यादेः प्रामाण्यमुपपाद्य किं चाप्रसिद्धमित्यादि चोद्यमुद्धरति—

अज्ञानकल्पितमनिर्वचनीयमस्मि-
न्नाबालवृद्धमविवादपदं प्रसिद्धम् ।
स्वप्ने तथा च भगवानपि वक्ष्यतीदं
संध्येऽस्ति सृष्टिरिति पक्षनिराससिद्ध्यै ॥ ३३६ ॥

अज्ञानेति । इह दर्शने यदज्ञानकल्पितरूपमनिर्वचनीयं साधितं न तद्विवादपदं यतः स्वप्न एव तदाबालवृद्धं प्रसिद्धमित्यर्थः । तथा हि न तावत्स्वप्नः स्मृतिस्तत्तद्देशवैशिष्ट्यस्य प्रागननुभूतत्वात्प्रत्येकसंस्कारस्य च विशिष्टस्मृतिजनकत्वे मानाभावात् । नापि चक्षुरादिनाऽनुभूयते तस्योपरतत्वात् । नापि मनसा तस्य बहिरप्रवृत्तेः । नाप्यसदेव भासतेऽपरोक्षत्वात् । न च साक्षात्करोमीत्यनुभूयमानमुपनीतमानमात्रं कल्प्यमित्यपरोक्षात्मन्यध्यस्त एव स्वप्नप्रपञ्च इति प्रपञ्चितप्रायम् । 'अविद्यया मन्यते' [ बृह० ४ । ३ । २० ] इति श्रुतेश्च । सूत्रकृदपि 'संध्ये सृष्टिराह हि' [ ब्र० सू० ३ । २ । १ ] इत्यत्रास्ति स्वप्नेऽवा-

---

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तकस्थः ।

स्तवी सृष्टिराह हि श्रुतिः ‘ अथ रथान्रथयोगान्पथः सृजते ’ [ बृ० ४ । ३ । ९ ] इत्याशङ्क्य ‘ मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् ’ [ ब्र० सू० ३ । २ । ३ ] इत्युचितसामग्रीविरहादनिर्वचनीयत्वं वक्ष्यतीत्याह—तथा चेति ॥ ३३६ ॥

अ० टी०—यत्पुनरुक्तमज्ञानकल्पितमनिर्वचनीयमिष्टं मात्रादीत्यादिनाऽज्ञानकल्पितप्रमात्रादि द्वैतसाधकमित्यभ्युपगमे ब्रह्मणोऽपि मात्रादिवन्मेयत्वादज्ञानकल्पितत्वप्रसङ्गस्तस्यामेयत्वे चासिद्धिप्रसङ्गः प्रमात्रादेश्चाज्ञानकल्पितत्वमप्रसिद्धमिति तत्राप्रसिद्धतां तावत्परिहरति—अज्ञानकल्पितमिति । यदज्ञानकल्पितं तदनिर्वचनीयं प्रमात्राद्यनिर्वचनीयमज्ञानकल्पितत्वादित्यनुमाने व्याप्तिग्रहणाय शुक्तिरजतादावस्मिन्निदमनिर्वचनीयत्वमाबालवृद्धमविवादपदं निदर्शनं प्रसिद्धं भ्रान्तेः सविषयाया अनिर्वचनीयत्वं लोकेऽविवादमित्यर्थः । न केवलमस्या अनिर्वचनीयत्वं लोकसिद्धमपि तु न्यायतोऽपि निर्णीतमित्यभिप्रेत्य सूत्रकारप्रवृत्तिमत्रोदाहरति—स्वप्ने तथा चेति । तथा च वक्ष्यतीदमित्यन्वयः । तत्र हि ‘ संध्ये सृष्टिराह हि ’ [ ब्र० सू० ३ । २ । १ ] इत्यादिना पूर्वपक्षसूत्रसंदर्भेण स्वप्नस्य सत्यत्वमुपक्षिप्य ‘ मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् ’ [ ब्र० सू० ३ । २ । ३ ] इतिसिद्धान्तसूत्रेणानिर्वचनीयत्वं स्वप्नस्येति स्थितमिति तात्पर्यार्थः । संध्येऽस्ति सृष्टिरिति शङ्कितपूर्वपक्षनिराससिद्ध्यै मायामात्रमिति सिद्धान्तसूत्रेण स्वप्न इदमनिर्वचनीयत्वं भगवान्वक्ष्यतीति योजना ॥ ३३६ ॥

सु० टी०—कथं पुनः स्वप्नकल्पस्य वेदाचार्यादेः सत्यब्रह्मबोधकत्वं न हि बाष्पधूमः सत्यवह्निं बोधयतीति चेत्तत्राऽऽह—

मिथ्यासुपिः सवितृमण्डलमध्यवर्ती
प्रत्यक्षदृष्टिपथमापतितोऽचिरेण ।
द्रष्टुः शरीरकरणप्रविभागरूपं
मृत्युं निवेदयति सत्यमिदं प्रसिद्धम् ॥ ३३७ ॥

मिथ्येति । निश्छिद्रे रविमण्डले दोषान्मिथ्यैव दृश्यमानः सुपिर्द्रष्टुरचिरेणैव शरीरस्य स्थूलस्य कारणस्य च लिङ्गदेहस्य मिथोविभागात्मकं तात्त्विकमेव मृत्युं निवेदयतीति प्रसिद्धमैतरेयकब्राह्मणे ‘ न चिरमिव जीविष्यतीति विद्यात् ’ इत्युपक्रम्य ‘ छिद्र इवाऽऽदित्यो दृश्यते ’ इति श्रुतेरित्यर्थः । बाष्पधूमादपि सत्यवह्निबोधः क्वचिद्दर्शनादविरुद्ध इति भावः ॥ ३३७ ॥

अ० टी०—तदेवमज्ञानान्वयव्यतिरेकानुविधायितया प्रमातृप्रमेयप्रमाणादिविभागस्य प्रपञ्चस्य शुक्तिरजतस्वप्नादिवदनिर्वचनीयत्वमुपपाद्य ब्रह्मणः प्रमेयत्वाप्रमेयत्वपक्षयोरुक्तदोषद्वयस्यापि प्रागेवाप्रमेयस्यापि वेदान्तप्रमेयत्वोपपादनेन परिहृतत्वान्न तत्र पुनर्वक्तव्यमिस्यभिप्रेत्येदानीमनृतेन प्रमात्रादिना कथमविषयत्वेनापि सत्यवस्तुप्रतिपादनं संभाव्यत इति शङ्कां लोकप्रसिद्धदृष्टान्तेनापाकरोति—मिथ्यासुपिरेति । सवितृमण्डलस्थस्य सुपेर्मिथ्यात्वमदृष्टदोषवत्पुरुषैकदृष्टिविषयत्वाद्दुष्टपुरुषदृष्टयपोह्यत्वाच्चेति द्रष्टव्यम् । कस्यचिद्द्रष्टुः कदाचित्प्रत्यक्षदृष्टिपथमापतितः सवितृमण्डलमध्यवर्ती मिथ्यासुपिरचिरेण द्रष्टुः सत्यं मृत्युं निवेदयतीति प्रसिद्धमनिष्टदर्शनानुवादिग्रन्थादाविति योजना । शरीरकरणेति मृत्युस्वरूपकथनं जीवस्य स्वरूपतो मरणाभावद्योतनपरं प्रासङ्गिकं ज्ञेयम् ॥ २३७ ॥

सु० टी०—न चास्मत्कल्पित एवायं परिहार इत्याह—

स्वप्नः शुभाशुभफलागमसूचकः स्या-
न्मिथ्याऽपि सन्निति च सूत्रकृदाह यत्नात् ।
गुर्वादि सर्वमिदमद्वयबुद्धिहेतु-
र्मायानिबन्धनमिति प्रतिपादनाय ॥ २३८ ॥

स्वप्न इति । स्वप्नस्तावन्मिथ्याऽपि सन्वास्तवशुभाशुभफलावेदको भवतीति 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' [ ब्रह्म० ३ । २ । ४ ] इति सूत्रे 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्' इति श्रुत्याद्यवष्टम्भेन सूत्रे तदपि यत्नतो वक्ष्यतीत्यर्थः । यत्ने निमित्तमाह—गुर्वादीति । मायिकमपि गुरुवेदादि सत्यब्रह्मधीहेतुरिति प्रतिपादयितुमित्यर्थः ॥ २३८ ॥

अ० टी०—सूत्रकारेणाप्यनृतस्य सत्यसूचकत्वं 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' [ ब्र० सू० ३ । २ । ४ ] इत्यत्रोक्तमित्याह—स्वप्नः शुभाशुभफलेति । उक्तदृष्टान्तयोर्दार्ष्टान्तिकमाह—गुर्वादीति । इति दार्ष्टान्तिकार्थप्रतिपादनायेत्यर्थः ॥ १३८ ॥

सु० टी०—ननु शुक्तिरजतादेः सत्यत्वेऽपि तज्ज्ञानस्य व्यधिकरणप्रकारकत्वेन विसंवादोपपत्तेः किमनिर्वचनीयकल्पनयेति चेत्तत्राऽऽह—

भ्रान्तिप्रतीतिविषयो न च सन्न चास-
न्नाकाशतत्कुसुमयोर्न हि साऽस्ति नापि ।

---

१ क. ग. फलोत्पाद° ।

तस्या भवेत्सदसदात्मकगोचरत्वं
न ह्यस्ति तत्किमपि यत्सदसत्स्वरूपम् ॥ ३३९ ॥

भ्रान्तीति। भ्रान्तिर्नाम रजताद्याकाराऽविद्यावृत्तिस्तदवच्छिन्नं साक्षिचैतन्यं भ्रान्तिप्रतीतिस्तस्याश्च विषयो रजतादिः स च न सन्। बाध्यत्वाद्व्यतिरेके नभोवत्। अन्यत्र सतश्चान्यत्राभानमित्युक्तमसत्त्वसत्ख्यातिर्नेत्याह—न चासन्निति। दृश्यत्वाद्व्यतिरेके खपुष्पवदित्यर्थः। नोभयात्मकश्च विरोधादित्याह—नापीति ॥ ३३९ ॥

अ० टी०—ननु भ्रान्तिविषयस्यानिर्वचनीयत्वं न लौकिकपरीक्षकसंमतमतो दृष्टान्तासिद्धेः कथं प्रमात्रादेरनिर्वचनीयत्वानुमानमिति तत्राऽऽह——भ्रान्तिप्रतीतिविषय इति। सत्याकाशे भ्रान्तिविषयत्वादर्शनान्न सन्भ्रान्तिविषयः। असत्याकाशकुसुमे चाभावान्नाप्यसन्निति विभागेनार्थयोजना संश्चेदाकाशवन्न बाध्येत। असंश्चेत्खपुष्पवन्नापरोक्षी भवेदित्यर्थः। यतः सा भ्रान्तिराकाशतत्कुसुमयोर्नास्ति। अतो भ्रान्तिप्रतीतिविषयो न च सन्न चासन्निति पदयोजना। प्रत्येकं सदसत्पक्षासंभवेऽपि समुच्चितं पक्षान्तरं संभवेदित्याशङ्क्याऽऽह—नापि तस्या भवेदिति। विरुद्धसमुच्चयस्य क्वाप्यसंभवादित्यर्थः ॥ १३९ ॥

सु० टी०—अस्तु निरालम्बनैव भ्रान्तिर्विषयानिरूपणादिति चेन्नेत्याह—

आलम्बनं च विरहय्य न विभ्रमस्य
ज्ञानात्मनो भवति जन्म कदाचिदत्र।
सिद्धं ततः सदसती व्यतिरिच्य किंचि-
दालम्बनं भ्रमधियः सकलप्रवादे ॥ ३४० ॥

आलम्बनमिति। न हि कदाचिन्निर्विषयं ज्ञानमुत्पद्यते निराकारत्वापत्तेः। अनुभवविरोधाद्विशेषतश्चापरोक्षमन्यथा जानातेरकर्मकत्वप्रसङ्गो भ्रान्तस्य क्वाप्यप्रवृत्तिप्रसङ्ग इति विषयः सिध्यन्परिशेषात्सदसद्विलक्षणः सिध्यतीत्याह—सिद्धमिति ॥ ३४० ॥

अ०टी०—गतेन पद्येन सद्वादिनोऽन्यथाख्यात्यख्यातिवादिन आत्मख्यातिवादिनश्च निराकृताः सदसद्वादी जैनोऽपि दिगम्बरो निर्धूतस्तर्हि निरालम्बास्तु भ्रान्तिरिति स्वभाववादिमतमाशङ्कयति—आलम्बनं च विरहय्येति। निरालम्बनज्ञानोदयविभ्रमज्ञानोदयादर्शनात्सालम्बनता तावद्भ्रान्तेः सिद्धैवान्यथा भ्रमोदयसमनन्तरं पुरःस्थितविषयं प्रति धावनं ततः

पलायनं वा नोपपद्येतेत्यभिप्रायस्तस्मानिर्वचनीयसदसदुभयात्मकप्रकारत्रयविलक्षणमनिर्वचनीयं भ्रान्तिप्रतिभास्यमिति सर्वैराद्दतमेवेति नाप्रसिद्धिरनिर्वचनीयताया इत्युपसंहरति— सिद्धं तत इति । अर्थस्यानिर्वचनीयत्वे तद्धियोऽप्यनिर्वचनीयताऽर्थसिद्धाऽन्यथा तद्धीत्वायोगादिति भावः ॥ ३४० ॥

सु० टी०—यच्च वाक्यप्रसूतमतिरित्यत्र वाक्यं नापरोक्षधीहेतुरिन्द्रियान्यमानत्वाद्वाक्यत्वाद्वाऽतश्चापरोक्षे परोक्षधीहेतुत्वादप्रमाणं वेदान्ता इत्युक्तं तत्रोक्तहेतौ दशमस्त्वमसीति वाक्ये व्यभिचारं परोक्षविषयत्वं चोपाधिमभिप्रेत्याऽऽह—

ब्रह्मात्मवस्तु निरवद्यचिदेकरूपं
वह्न्युष्णतावदपरोक्षवपुः स्वभावात् ।
निर्दोषवेदशिरसो वचनादतोऽस्मिन्
ब्रह्मात्मवस्तुनि भवेदपरोक्षबुद्धिः ॥ ३४१ ॥

ब्रह्मात्मेति । यतो ब्रह्मात्मवस्तु शुद्धचैतन्यरूपमत एवापरोक्षवपुर्यथा वह्निः स्वभावादुष्ण एव तद्वत् । अतोऽस्मिन्विषये निर्दोषवेदवाक्याज्जायमाना बुद्धिवृत्तिरपरोक्षैव भवेदिति न सा भ्रान्तिः । न हीन्द्रियजत्वमपारोक्ष्यं सुखादिप्रत्यक्षे तदभावात्तस्य विषयप्रयुक्तत्वेन प्रपञ्चितत्वाच्चेत्यर्थः ॥ ३४१ ॥

अ० टी०—भावरूपमज्ञानं न ज्ञानाभाव एवेत्येतद्ब्रह्मात्मनो वाक्यविषयत्वसमर्थनावसरे प्रसङ्गतः प्रतिपादितमिति पूर्वपक्षक्रममुल्लङ्घ्य 'वाक्यप्रसूतमतिरिन्द्रियजन्यधीवत्' इत्यादिना शब्दस्य परोक्षार्थधीजननस्वभावत्वान्नापरोक्षं ब्रह्म बोधयितुं शक्नोति शब्द इति यदुक्तं तत्परिहरति—ब्रह्मात्मवस्त्विति । ब्रह्मात्मवस्तु वह्न्युष्णवत् स्वभावादपरोक्षवपुरित्यन्वयः । तत्र हेतुगर्भं विशेषणं—निरवद्यचिदेकरूपमिति । चिद्रूपमपि द्रव्यांशसंवलितं चेत्स्यादपि कदाचित्परोक्षमित्यत एकेतिविशेषणम् । तथाऽप्युत्पत्त्यादिविकारयोगे स्यादन्यापेक्षेति परोक्षताऽपीत्यत उक्तं निरवद्येति । एवंभूतवस्तुनि वेदान्तवाक्यं न परोक्षां धियमुपजनयेदित्याह—निर्दोषेति । वेद [ शिरसो ] वचनादिति वेदान्तवचनादित्यर्थः । तस्य निर्दोषेतिविशेषणात्प्राक्प्रतिपादितं प्रामाण्यं सूचितम् । यदि नित्यापरोक्षचैतन्यस्वरूपे ब्रह्मात्मनि वेदान्तवाक्यं परोक्षामेव धियं जनयेत्तदाऽन्यथाभूतेऽर्थेऽन्यथाधीत्वात्तद्धियो भ्रान्तितेति तज्जनकं वाक्यमप्रमाणमेव स्यात्तच्चायुक्तं वेदस्य निर्दोषत्वेन प्रामाण्यस्य संमतत्वादिति नात्र परोक्षधीजनकत्वशङ्का कार्या । यद्यपि सामान्यद्वारा

प्रवर्तमानः शब्दो लोके परोक्षबुद्धिजनको दृष्टस्तथाऽपीह नित्यप्रत्यक्त्वपरत्वाद्दशमस्त्वमसीति-वदपरोक्षामेव धियं लक्षणया वृत्त्या जनयेदिति भावः ॥ ३४१ ॥

सु० टी०—अस्याश्च वृत्तेः फलं वर्णयन्नेतत्प्रमाणमपनेतुं सत इत्यादि चोद्यमुद्धरति—

सा चोपनेयरहिते विषयिण्यनन्तेऽ-
निर्वाच्यमग्रहणमात्रमपाकरोति ।
स्वोत्पत्तिलब्धनिजवस्तुबलेन तत्र
तापत्रयं समुपशाम्यति निर्निमित्तम् ॥ ३४२ ॥

सा चेति । सा वाक्यजाऽपरोक्षबुद्धिः प्रमाणत्वात्स्वाभिव्यक्तब्रह्माकारताबलेनानन्ते मात्रादिविभागविलयात्पूर्णतयाऽवशिष्यमाणे वृत्त्यभिव्यक्ततामात्रेण प्रमेयवदुपचरिते वस्तुतो विषयत्वाभावादुपनेयस्फुरणरहितेऽनर्थबीजमज्ञानमात्रमपनयतीत्यर्थः । प्रागुक्तचोद्यनिरासाय विशिनष्टि—अनिर्वाच्यमिति । अपाकरणं च बाधस्तस्य चाधिष्ठानतापत्तिमात्रत्वान्न मानस्य कारकत्वचोद्यमपीति भावः । तत्रेति । तत्राज्ञानेऽपनीते निमित्तनाशात्तापत्रयमाध्यात्मिकादिभेदभिन्नं सम्यगुपशाम्यतीत्यर्थः ॥३४२॥

अ० टी०—यत्पुनरुक्तमविषयत्वाद्ब्रह्मणस्तस्मिन्नोपनेयोऽपनेयो वाऽतिशय उपपद्यत इति तत्रोपनेयाभावेऽप्यपनेयं किमपि भवेदिति प्रमाणकृत्याभावचोद्यं पराकरोति—सा चेति । सा वेदान्तजन्या धीरनन्ते ब्रह्मण्यग्रहणमात्रमपाकरोतीति संबन्धः । मात्रपदेन तत्र प्रकाशजननं व्यावर्त्यते । अनिर्वाच्यमित्यग्रहणविशेषणेन सदसदादिरूपस्य न ज्ञाननिवर्त्यत्वसंभव इति विकल्प्य दूषणमुद्धृतम् । अनिर्वचनीयता तस्य साधितैवेति द्रष्टव्यम् । असहायमकारकं च ज्ञानं कथमनिर्वचनीयमपि पराकुर्यादिति चेत्तत्राऽऽह—स्वोत्पत्तिलब्धेति । स्वोत्पत्तित एव लब्धमालिङ्गितं यन्निजमसाधारणं वस्तु स्वार्थलक्षणं तदेव बलं तन्मात्राकारतालक्षणं तेन तावन्मात्रेणाग्रहणमात्रमपाकरोतीति संबध्यते । तथा चोत्पद्यमानैव स्वविषयमवभासयन्ती सा धीर्न स्वोत्पत्तिव्यतिरिक्तं सहायं स्वविषयाकारापत्तावपेक्षते नापि स्वविषयाज्ञानापनये सहायापेक्षा तस्य विषयावभासनान्तरीयकत्वादन्यथा विषययाथात्म्यावभासासंभवादतो न कारकत्वाभावोऽपि दोषः कारककृत्यस्येहाभावात् । तस्मादभ्यासं वा सहायान्तरं वा स्वोदयमात्रातिरिक्तं व्यापारं वाऽनपेक्ष्यैवाऽऽत्मन्यज्ञानं विहन्ति वाक्यजन्या धीरिति भावः । तथाऽपि प्रमातृत्वादिबन्धनिवृत्तये साधनान्तरमपेक्षणीयमिति चेन्नेत्याह—तत्रेति । अज्ञाननिमित्तत्वात्तापत्रयाख्यबन्धस्य स्वकारणे तस्मिन्नज्ञाने निवृत्ते सति निर्निमित्तं सत्तापत्रयं समुपशाम्यतीत्यर्थः ॥ ३४२ ॥

सु० टी०—पूर्वं मुक्तेः साध्यत्वासंभवान्न कार्यपरा वेदान्ता इत्युक्तमिदानीं न कस्यापि वाक्यस्य कार्यार्थत्वमिति विवक्षुः कार्यव्युत्पत्तिं दूषयितुमनुमापते—

वाक्यात्प्रवर्तकनिवर्तकरूपभाजः
पुंसः प्रवृत्तिमुपलभ्य धियोऽनुमानात् ।
कार्यान्विते शिशुरवैति पदस्य शक्ति-
मित्युच्यते यदि तु तत्र वयं वदामः ॥ ३४३ ॥

वाक्यादिति । गामानय परिहर सर्पमित्यादिवाक्यात्प्रयोज्यस्य पुंसः प्रवृत्तिं निवृत्तिं चोपलभ्य कार्यान्वितज्ञान एव तद्धेतुत्वेनानुमिते शब्दस्य शक्तिं शिशुरवगच्छतीति चेद्गुरुणोच्यते तत्र ब्रूम इत्यर्थः ॥ ३४३ ॥

अ० टी०—यत्पुनः 'कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिम्' इत्यारभ्य विस्तरेणोक्तं कार्यविषयैव शक्तिर्वृद्धव्यवहारे गृह्यते न सिद्धवस्तुविषयाऽतो वेदान्तानां न सिद्धे ब्रह्मणि प्रामाण्यमिति तदपाकर्तुमनुवदति—वाक्यादिति । यदि त्वित्यन्तोऽनुवादपरः । धियः कार्यधियः । दूषणमस्य प्रतिजानीते—तत्र वयं वदाम इति ॥ ३४३ ॥

सु० टी०–वक्तव्यमाह—

योग्येतरान्वितपदार्थनिवेदने तु
शब्दस्य शक्तिरिह वृद्धजनप्रयोगे ।
विज्ञायते न खलु कार्यसमन्वितेऽर्थे
कार्याभिधायिषु पदेष्वपि तत्प्रसङ्गात् ॥ ३४४ ॥

योग्येति । यद्यपि प्रवर्तकादिवाक्यात्कार्यान्वितविषयैव बुद्धिरनुमिता तथाऽपि व्यभिचारादन्यलभ्यत्वाच्च न तत्र शक्तिः कल्प्यते किं तु योग्येतरान्वित एव । अन्यथा कार्यवाचिलिङादिपदेष्वपि कार्यान्तरान्वितार्थत्वप्रसङ्गादित्यर्थः ॥ ३४४ ॥

अ० टी०—तत्र कार्ये शब्दशक्तिरित्ययुक्तमतिप्रसङ्गात् । किं त्वितरान्वित इत्येव युक्तं तच्चान्वीयमानं योग्यमेवायोग्यस्य वाक्यार्थप्रतीत्युपयोगितयाऽन्वयायोगात्तस्माद्योग्येतरान्विते शब्दशक्तिरित्यभ्युपेयमित्याह—योग्येतरेति । तुशब्दोऽस्मिन्पक्षे प्रयोजक*

---

* कार्यान्वये शक्तिरित्यभ्युपगमे प्रयोजकद्वैविध्यं तथा हि कार्यान्वितानां कार्यान्विते शब्दशक्तिः कार्याभिधायिनां त्वन्यान्विते स्वस्वरूपे वेति तदेवाऽऽह कार्यसमन्वित इति ।

द्वैविध्यकल्पनागौरवप्रसङ्गव्यावृत्त्यर्थः । कार्यसमन्वितेऽर्थे कस्माच्छब्दशक्तिर्न विज्ञायते तत्राऽऽह—**कार्याभिधायिष्विति** । कार्याभिधायिषु लिङादिपदेष्वपि कार्यान्वितार्थत्वप्रसङ्गादेतस्मिन्वाक्ये कार्यान्तराभावादन्यान्विते स्वरूपे कार्यपदशक्त्यभ्युपगमे च प्रयोजकगौरवं प्रसज्येतेत्यर्थः ॥ ३४४ ॥

**सु० टी०—किं च लिङादीनां कार्यान्विते शक्तिः सिद्धान्विते वा नाऽऽद्य इत्याह—**

कार्यान्वितार्थविषया यदि शब्दशक्तिः<br>
कार्यार्थवाचिषु लिङादिषु कार्यमन्यत् ।<br>
वक्तव्यमापतति तत्र च कार्यमन्य-<br>
द्वक्तव्यमेव भवतीत्यनवस्थितिः स्यात् ॥ ३४५ ॥

कार्येति । **लिङादिष्वपि कार्यान्वितार्थशक्तौ तद्वाच्यान्वयप्रतियोगितयाऽन्यत्कार्यं वक्तव्यमेवं तस्य तस्यापीत्यनवस्था । द्वितीयकार्यस्य प्रथमकार्यान्विततया वाच्यत्वेऽन्योन्याश्रयः कार्यान्वयान्वयिस्वार्थवाचित्वे चाऽऽत्माश्रय इत्यर्थः ॥ ३४५ ॥**

अ० टी०—प्रसङ्गस्येष्टत्वं परिहर्तुं कार्यान्तराभ्युपगमपक्षेऽनवस्थामापादयति—**कार्यान्वितार्थविषया यदीति** । लिङादिशब्दवाच्यकार्यस्य प्रत्यन्वयितया कार्यान्तरस्याभ्युपगमे तस्यापि कार्यान्तरान्वितस्यैव पदगोचरतेत्यनवस्था प्रसज्येत ततो दूरमपि गत्वाऽन्यान्विते शक्तिरभ्युपेयैवेत्यर्थः ॥ ३४५ ॥

**सु० टी०—नापि द्वितीय इत्याह—**

सिद्धान्वितं यदि लिङादिपदानि कार्यं<br>
ब्रूयुर्विनश्यति तदा नियमस्त्वदीयः ।<br>
यो वर्णितः सकलमेव पदं स्वमर्थं<br>
कार्यान्वितं वदति नान्यमिति स्वशास्त्रे ॥ ३४६ ॥

सिद्धान्वितमिति । **कार्यान्वितस्वार्थवाचकमेव सर्वं पदमिति स्वशास्त्रीयसमयभङ्गापत्तेरित्यर्थः ॥ ३४६ ॥**

अ० टी०—तर्हि भवतु सिद्धान्वितं यदि लिङादिवाच्यमिति चेत्तदा तव सिद्धान्तविरोध इत्याह—**सिद्धान्वितं यदीति** । नियमः सिद्धान्तः । कोऽयं सिद्धान्तस्तत्राह—**यो वर्णित इति** ॥ ३४६ ॥

सु० टी०—किं च लघुनि निमित्ते संभवति न गुरुनिमित्तकल्पनेत्याह—

योग्येतरान्वितनिमित्तकशब्दशक्ति-
व्युत्पत्तिरेव यदि संभवभागिनी स्यात् ।
आश्रीयते किमिति कार्यसमन्वितेऽर्थे
शब्दस्य शक्तिरसदर्थविशेषणेन ॥ ३४७ ॥

योग्येतरेति । योग्येतरान्वितं निमित्तं यस्या ईदृशी शब्दशक्तिव्युत्पत्तिरेव लिङादिसाधारणी संभवति चेत्किमिति व्यर्थकार्यविशेषणनिरूपितैव साऽऽश्रीयत इत्यर्थः ॥ ३४७ ॥

अ० टी०—अथोच्येत योग्येतरान्वित एवार्थेऽस्तु शक्तिरेतावताऽपि न मन्मतहानिर्यतो योग्यतासिद्धस्य कार्येण कार्यस्य च सिद्धेन न त्वकार्येणैव सिद्धस्य योग्यतेतीतरान्वितत्वपक्षेऽपि कार्यान्वयस्यानपोदितत्वमिति कार्यान्विते शक्तिर्मम विवक्षितेति चेत्तत्राऽऽह—योग्येतरान्वितनिमित्तकेति । संभवभागिनी संभविता स्यादित्यर्थः । एवकारव्यावर्तितमंशं स्पष्टयति—आश्रीयत इति । सिद्धार्थे शब्दशक्त्यभावस्याद्याप्यनिश्चितत्वादन्वयिनः कार्यत्वविशेषणमसदर्थस्तेन विशेषणेन विशिष्टेन कार्येण समन्वित इत्येवंविधेऽर्थे शब्दस्य शक्तिः किमित्याश्रीयत इति योजना । एतदुक्तं भवति यदि योग्येतरान्विते शब्दशक्तिराश्रीयते त्वयाऽपि तदा कार्यान्वितत्वविशेषणमनर्थकं योग्येतरत्वमात्रस्यान्वयप्रतियोगित्वे संभवति कार्यत्वस्यापि तत्कल्पनायां योग्येतरकार्यान्वितेऽर्थे शक्तिरिति स्यात्तथा च गौरवमापद्यते । योग्येतरत्वांशं विहाय कार्यान्वितमात्रस्य प्रतियोग्यत्वाङ्गीकारे तु कार्यपदस्य स्वरूपनिष्ठता प्रसज्येत कार्यान्तराभावाद्यत्किंचित्कार्यान्तरान्वयस्य चासंनिधानादेवात्राप्रसङ्गादयोग्यत्वाच्च शब्दस्य तदन्वितस्वार्थत्वायोगाद्योग्यकार्यान्वित इति कल्पनायामपि तस्येतरत्वानपायाद्योग्येतरत्वमात्रमेवास्तु सर्वत्रान्वयप्रतियोगीति ॥ ३४७ ॥

सु० टी०—तर्ह्यन्वितेऽपि शक्तिर्न स्यादिति चेत्तत्राऽऽह—

यत्राविशेषितनिमित्तकताविरोधे
किंचिन्निवारकमुदीक्षितमस्तु तत्र ।
किंचिद्विशेषणविशिष्टमभीष्टशक्ते-
र्वस्तु प्रयोजकमिदं पुनरत्र नास्ति ॥ ३४८ ॥

यत्रेति । यत्रेष्टशक्तेरविशेषितनिमित्तकत्वे बाधकं यथा शुद्धपदार्थ-

शक्तावन्वयस्याशाब्दत्वप्रसङ्गादि तत्रान्वितत्वमात्रमस्तु विशेषणं न तु कार्यविशेषणं विना काऽपि क्षतिरित्यर्थः ॥ ३४८ ॥

अ० टी०—ननु कार्यत्वस्य व्यावर्त्याभावेऽप्यन्वयदर्शनादेव विशेषणताऽऽश्रीयतां मध्यमवृद्धप्रवृत्त्यनुमितज्ञानगोचरेऽर्थे प्रथमश्रुतोत्तमवृद्धवाक्यस्यान्वयमात्रेण शक्तिकल्पनावदिति चेन्नेत्याह—यत्राविशेषितेति। यत्र वाक्यादावविशेषितस्य कार्याकार्यादिविशेषणरहितस्यार्थमात्रस्य शब्दशक्तिनिमित्तकता नियामकतेति यावत्। तथाविधनिमित्तकताव(वि)रोधे प्रथमं संमुग्धाकारेणार्थमात्रस्य शक्तिनिमित्तस्वीकार इति यावत्। किंचिन्निवारकं बाधकमन्वयांशादेः प्रत्ययासंभवलक्षणमुदीक्षितं दृष्टं स्यात्तत्र किंचिद्विशेषणविशिष्टं तत्तदर्थान्वयादिविशेषणविशिष्टं वस्त्वभीष्टशक्तेः प्रयोजकमस्त्विति योजना। यत्र कार्यं विनाऽन्वयाद्यप्रतिपत्तिस्तत्र कार्यान्विततार्थस्य शब्दशक्तिविषयो यत्र विनाऽपि कार्यान्वयं शक्तिगोचरता निर्वहति तत्र योग्येतरान्वितमात्रेण तत्सिद्धेः कृतं कार्यविशेषणेनेत्यभिप्रेत्याऽऽह—इदं पुनरत्र नास्तीति। अत्र कार्यत्वेनाकार्यत्वेन वा विशेषितस्यार्थस्य शब्दशक्तिप्रयोजकत्वाङ्गीकारे पुनरिदं पूर्वोक्तं बाधकं नास्त्यन्वयप्रतियोगितायाः सर्वपदार्थसाधारण्यात्कार्यत्वमेव तन्निरूपकमिति विशेषपरिग्रहे हेत्वभावादित्यर्थः। न चैवंसति सर्वत्रार्थमात्रमेव शब्दशक्तिप्रयोजकं नान्वयोऽपीत्यन्विताभिधानवादस्वीकारहानिरिति वाच्यं केवलेऽर्थे शब्दप्रयोगादर्शनेन तत्र शक्तेरग्रहणात्। प्रतीयमानान्वयस्य च वाचकान्तराभावात्कार्याकार्यसाधारण्यात्सर्वेषां पदानामन्वयांशेऽपि शक्तेरवश्याभ्युपेयत्वमस्तीति तत्स्वीकारो न तथा कार्यस्य वाचकान्तराभावो लिङादिपदस्यैव तद्वाचकत्वादिति न कार्यत्वमन्वयप्रतियोगितया शक्तिनियामकमिति भावः ॥ ३४८ ॥

सु० टी०—अत एव न कार्यान्वयान्वयिनि शक्तिरित्याह—

कार्यान्वयान्वयिनि वस्तुनि शब्दशक्ति-
रित्युच्यते यदि तदाऽपि समानमेतत्।
अन्वीयमानवचनत्वमतोपपत्तौ
कार्यान्वयान्वयिविशेषणशीर्णतेति ॥ ३४९ ॥

कार्यान्वयेति। अन्वीयमानवस्तुमात्राभिधानपक्षस्यैवोपपत्तावित्यर्थः। स्वस्य स्वान्वयान्वयित्वे स्वस्य विशेषणविशेष्यत्वापत्तेश्च ॥ ३४९ ॥

अ० टी०—शक्तिग्रहनियामकत्वेनाभिमते पदार्थान्वये कार्यमवच्छेदकं न भवति सर्वेषामेव पदार्थानामितरान्वितत्वेन शब्दगोचरतायास्तुल्यत्वादन्यथा प्रयोजकद्वैविध्यकल्प-

१ क. °अतः स्वक°।

नागौरवादिदोषप्रसङ्ग इत्युक्तं तत्र यदुक्तं शक्तिः कार्यान्वयान्वयिनीत्यङ्गीकारे न प्रयोजक-भेदादिदोष इति तदनूद्य दूषयति—कार्यान्वयान्वियिनीति। अस्मिन्नपि पक्षे विशेषणवैयर्थ्यदोषस्तदवस्थ इति दूषणमुक्तमेव स्पष्टयत्यन्वीयमानेत्यर्थेन । अन्वीयमानार्थमात्र-वाचकः शब्द इति मतस्योक्तविधयोपपत्तौ सत्यां कार्यत्वादिविशेषणमनर्थकं क्वचित्ततोऽपि तस्य व्यावर्त्याभावेनाग्निपैङ्गल्यादिवदप्रयोजकत्वादित्यर्थः। कार्याकार्यार्थसमुदाये यदि कार्यान्वयान्वयित्वं सत्तामात्रेण शब्दशक्तिप्रयोजकं तदा सिद्धान्वयान्वयित्वस्यापि सर्वत्र सत्ताविशेषात्तदपि कस्मात्प्रयोजकं न स्यादतो विशेषणमनर्थकमिति भावः ॥ ३४९ ॥

सु० टी०—ननु तदागमे हि तद्दृश्यत इति न्यायेन प्रयोजकशब्दजप्रतीतिविषयत्वादेव कार्यान्वये शक्तिरिति चेन्नैवमतिप्रसङ्गादित्याह—

वक्तृज्ञानविवक्षयोरपि भवेच्छब्दार्थता तावके
पक्षे शब्दमनु प्रतीतिरुभयोरस्त्येव यस्मात्तयोः।
यद्यच्छब्दमनु प्रतीतिपदवीमारोहदुत्प्रेक्ष्यते
तत्तद्वाच्यमिति स्थितौ न हि तयोः शब्दार्थतावर्जनम् ॥ ३५० ॥

वक्तृज्ञानेति । त्वन्मते वक्तृज्ञानविवक्षयोरपि प्रयोजकवाक्यान्वियतोपस्थितत्वेन तद्विशिष्टकार्यान्विते शक्तिः स्यादित्यर्थः। तयोर्वाक्यरचनोपक्षीणत्वादशब्दार्थत्वं चेत्तुल्यं कार्यान्वयबुद्धेरपि प्रवृत्तिजन्मोपक्षयादिति भावः ॥ ३५० ॥

अ० टी०—कार्यत्वस्यान्वयमात्रेण शक्तिनियामकत्वेऽतिप्रसङ्गं दोषान्तरमाह—वक्तृज्ञानविवक्षयोरपीति । लोके वाक्यप्रयोक्तुर्वाक्यार्थज्ञानविवक्षयोरपि शब्दात्प्रतीयमानत्वात्तयोरपि तव मते शब्दार्थता भवेत् । हेतुसिद्धिशङ्कामनुभवालम्बनेन निराकरोति—शब्दमनु प्रतीतिरिति। तावके पक्ष इत्येतत्स्फुटयति—यद्यदिति । न हि तयोरित्यादि निगमनं विमते वक्तृज्ञानविवक्षे अपि शब्दशक्तिगोचरे शब्दात्प्रतीयमानत्वाद्यद्यदेवं तदेवं यथा कार्यं तथा चेमे तस्मात्तथेति प्रयोगः ॥ ३५० ॥

सु० टी०—अस्तु तयोरपि शब्दार्थत्वं को दोष इति चेत्तत्राऽऽह—

वेदे वक्तुरभावतस्तदुभयं नास्तीह यस्मादतः
शब्दो वाचकशक्तिमुज्झति निजां तत्र स्ववाच्यं विना।
वाच्ये वाचकशक्तिमिच्छति भवान्नान्यत्र तत्र श्रुते-
रप्रामाण्यमिति स्फुटं तव भवेद्बुद्धेरनुत्पत्तितः ॥ ३५१ ॥

वेद इति। वेदे वक्तुरभावेन तज्ज्ञानविवक्षयोः

१ क. °ण्यमति।

द्वयान्तर्गतं तदुभयं विना वाचकशक्तिं जह्यादित्यर्थः । ननु यथा तवावाच्येऽपि ब्रह्मणि शब्दप्रवृत्तिरेवं वाच्यांशरहिते ममापीति चेन्नान्यत्रानभ्युपगमादित्याह—वाच्य इति । अन्यत्र लोक इत्यर्थः । नान्यत्रेति पाठे न वाच्यैकदेश इत्यर्थः । बुद्धेर्वक्तृज्ञातविवक्षितकार्यान्वयिबुद्धेः ॥ ३५१ ॥

अ० टी०—तयोरपि शब्दार्थत्वमङ्गीकुर्वाणं प्रत्याह—वेद इति । यस्मादिह वेदे वक्तुरभावतस्ततस्तदुभयं वक्तुर्ज्ञानविवक्षारूपं नास्त्यतस्तस्माद्वेदरूपः शब्दस्तत्र वेदे निजां वाचकशक्तिमुज्झति परित्यजति । कुतः स्ववाच्यं विना वक्तृज्ञानविवक्षारूपस्ववाच्याभावादित्यर्थः । ननु तयोर्वाच्यत्वाभावेऽपि शब्दगोचरता भविष्यति यथा तवावाच्येऽपि ब्रह्मणि लक्षणया शब्दगोचरतेति चेन्मैवं तत्र प्रतिज्ञाभङ्गप्रसङ्गादित्याह—वाच्ये वाचकशक्तिमिच्छति भवान्नान्यत्रेति । किं ततोऽनिष्टमिति तदाह—तत्र श्रुतेरिति ॥३५१॥

सु० टी०—किं च कार्यान्वितशक्तिवादिनः सोमेन यजेतेति विशिष्टविधिर्न स्यादित्याह—

न च सोमयागपदयोरुभयोरपरस्परेण घटतेऽत्र युजा ।
पदजातमेतदखिलं हि निजं विषयं समर्पयति कार्ययुतम् ॥ ३५२ ॥

न चेति । त्वन्मते हि सोमयागपदयोर्लिङर्थेनैवान्वयः स्यात्तस्यैव कार्यत्वान्न तु परस्परं तयोरकार्यार्थत्वादित्यर्थः ॥ ३५२ ॥

अ० टी०—तदेवं कार्यस्यान्वयमात्रदर्शनं न शब्दशक्तिनिरूपणक्षममतिप्रसङ्गादित्युक्तमिदानीं कार्यत्वोपाधिकेऽन्यान्विते शब्दशक्तिरिति वदतः क्रियाकारकान्वयासिद्धिश्च स्यादित्याह—न च सोमयागपदयोरिति । अत्र त्वत्पक्षे 'सोमेन यजेत' इत्यत्र सोमेनेतिपदस्य यजेतेतिपदस्य च करणकार्यभावरूपा युजा योगोऽपरस्परेण मिथो न च घटते । हि यस्मादेतदखिलं पदजातं निजं विषयं कार्ययुतं समर्पयति । तथा च वाक्यनिविष्टानां सर्वेषामेव पदानां प्रत्येकं कार्यान्वितस्वार्थमात्रे पर्यवसितत्वात्कारकवाचिनां पदानां परस्परान्वयासिद्धावेकक्रियार्थतया तेषां संभूयकारित्वासंभवादेकवाक्यार्थत्वासिद्धिस्तात्पर्यार्थः ॥ ३५२ ॥

पक्षान्तरेऽपीदं दूषणमतिदिशति—

कार्यान्वयान्वयिनि शक्तिरिति स्थितौ च
कार्यान्वयान्वितमतिर्न परस्परेण ।
संवन्धितामतिरतश्च न सिद्धिमेति
सर्वो विशिष्टविधिरित्यपि दूषणं वः ॥ ३५३ ॥

कार्यान्वयेति । तत्रापि पक्षे कार्यान्वयान्वितमतिरेव स्यान्न परस्परान्वि-

तधीरित्यर्थः । ननु कार्यान्वयधीनिर्वाहाय परस्परसंबन्धिताऽपि स्यादिति चेत्तत्राऽऽह—अतश्चेति । अयं भावः—अत्र हि सोमशब्दो नोद्भिच्चित्राग्निहोत्रश्येनपदवद्यागनामधेयं यौगिकत्ववाक्यभेदतत्प्रख्यतद्व्यपदेशानाममावात् । नापि यागे गुणविधिर्यागस्यान्यतोऽप्राप्तेरस्यैवोत्पत्तिवाक्यत्वात् । अतः सोमविशिष्ट एव यागोऽत्र विधीयत इति तस्यैव कार्यान्वयो वाच्यः । न च त्वन्मते ततः प्राग्विशिष्टविषयसिद्धिः । न च समभिव्याहारादेव तत्सिद्धिरिति वाच्यं प्रयुक्ताद्धिप्रतिपत्तिर्न (* प्रयुक्तैकदेशादिति वदतस्तव वाक्यैकदेशक्रियाकारकाभ्यां तदभिधेयकार्यादन्यत्र ) प्रतीत्ययोगाद्विधेयनिश्चयमन्तरेण वाक्यार्थानिश्चयात् । न च लोकत एव क्रियाकारकविशिष्टधीरलौकिकाग्नेयादेस्तदसंभवादिति संक्षेपः ॥ ३५३ ॥

अ० टी०—कार्यान्वयान्वयिनीतिपक्षेऽप्ययं दोषः समान इत्याह—कार्यान्वयान्वयिनि शक्तिरितीति । कार्यान्वयान्वितमतिः केवलं पदेभ्यः स्यादिति शेषः । न परस्परेण संबन्धितामतिः स्यात्पदार्थविषयेति शेषः । तथा च किं स्यादिति यत्स्यात्तच्छृण्वित्याह—अतश्चेति । ' सोमेन यजेत ' ' पशुना यजेत ' इत्यादिः सर्वो विशिष्टविधिः सिद्धिं नैतीत्यपि वो दूषणमिति योजना । यद्यपि कार्यान्वयपूर्वकोऽपि पदार्थानामरुणादिन्यायेन संबन्धः संभवेत्तथाऽपि विशिष्टविधिर्न तावता सिध्येत् । विशिष्टविधिर्हि सोमविशिष्टं यागं प्रतिपद्य तद्विषयो नियोगः प्रतिपत्तव्य इत्येवं प्रतीयमानाकारोऽभिप्रेयते स कार्यान्वयात्प्राक्सोमयागयोरन्वयासिद्धौ कुतस्त्योऽन्यतस्तत्सिद्धौ कार्यान्वयपुरःसरत्वकल्पनानर्थक्यमित एव तत्सिद्धौ वाक्यावृत्तिलक्षणवाक्यभेदप्रसङ्ग इति भावः ॥ ३५३ ॥

सु० टी०—ननु योग्यान्विताभिधानेऽपि कथं विशिष्टविधिवाक्यार्थसिद्धिर्विशेषान्वयस्य पश्चाद्वाक्यत एव सिद्धेरिति चेत्सत्यं मम योग्यतावशाद्युगपदेव सोमकरणको याग इष्टसाधनमित्यन्वयसंभवादित्याह—

योग्येतरान्वितपदार्थगतैव शब्द-
शक्तिः स्थिता यदि पुनर्घटते तदाऽयम् ।
सर्वो विशिष्टविधिरस्तु तथैव तस्मा-
द्युक्तं तथेतरदितीदमपीह भाष्यम् ॥ ३५४ ॥

योग्येति । न च ममापि परम्परया कार्यान्वयात्सोमकरणकयागे कार्य-

---

* चिह्नितग्रन्थोऽयं रुपुस्तकस्थः ।

---

१ ख. तद्वत° ।

मिति धीः स्यादिति वाच्यं यागकार्यसंबन्धात्पूर्वं सोमस्य कथंचिदपि यागसंबन्धानुपपत्तेः। योग्यताबलादकार्येणाप्यन्वय इत्युक्तावन्विताभिधानमतप्रवेशापत्तेः। अत्र च पक्षे किं विधिवाक्यस्थपदानामेकस्यैवार्थः फलभावनायां करणमुत सर्वेषामिति संशयेऽवैरूप्याय सर्वेषामिति प्राप्तेऽप्यपूर्वकल्पनालाघवादेकस्यैव फलपदसंबन्धात्प्राधान्ये सतीतरत्पदजातं तदर्थं भवतीत्यपूर्वाक्षेपकयजिपदेनैव तदितरपदान्वयं दर्शयद्यदेकस्मादपूर्वं तदेतरत्तदर्थमिति भाष्यमपि संगच्छत इत्याह—युक्तमिति । त्वत्पक्षे त्वपूर्वेणान्वयस्वीकारात्तद्भाष्यमसंगतं स्यादित्यर्थः ॥ ३५४ ॥

अ० टी०—त्वत्पक्षेऽपि कथं विशिष्टविधिसिद्धिर्यतोऽन्यान्विते पदशक्तिरिति वादिनोऽपि तव प्रधानभूतार्थे न ह्यन्वयः प्रष्टव्यः प्रधानं च यागादिविधौ कार्यमेवेति त्वदुक्तरीत्याऽत्रापीतरेषां मिथोऽन्वयाभावः समान इति चेत्तत्राऽऽह—योग्येतरान्वितेति। यदि शक्तिर्यथा वर्णिता स्थिता तदा पुनः सर्वोऽयं विशिष्टविधिर्घटते योग्येतरान्विते शब्दशक्तिरिति पक्षे परस्परान्वयस्यापि शब्दसामर्थ्यसिद्धत्वात्कार्यान्वयव्यवधानाभावात्तस्मात्तथैवास्तु योग्येतरान्वितस्वार्थे शब्दशक्तिरित्येवमेवास्तु किं कार्यान्वयकल्पनेनेत्यर्थः । अत्र कार्यस्य न शब्दशक्तिनियामकत्वेन प्राधान्यमस्ति किंत्वन्यपदार्थापेक्षयेति प्रधानान्वयो न हीयत इति भावः । अस्मिन्पक्षेऽस्मदीये यदेकस्मादपूर्वं तदेतरत्तदर्थमिति शबरभाष्यवचनमप्यनुकूलमित्याह—युक्तं तथेतरदितीवमिति । इतरत्तदर्थमिति भाष्यखण्डस्यायमर्थः-किं भावार्थादपूर्वनिष्पत्तिः किं वा नामार्थादिति संदेहावसर एकस्यापूर्वनिष्पादकत्वेऽन्यस्य तच्छेषत्ववद्यदेकस्मादपूर्वं तदेतरत्तदर्थमिति भाष्यकार आह स्मेति । तथा च भावार्थानां नामार्थानां च कार्यं विनाऽपि मिथः प्रथमं संबन्धोपपत्तेः पुनः शेषिभूतकार्यं प्रति सर्वस्यार्थकदम्बस्य शेषत्वोपपत्तिरिति न कार्यप्राधान्यस्यानुपपत्तिरिति सर्वं समञ्जसम् ॥ ३५४ ॥

सु० टी०—ननु प्रवर्तकत्वं शब्दस्यानुभूयते तच्च प्रवर्तनाकारकार्याभिधायित्वे स्यान्नेष्टाभ्युपायबोधकत्व इति शङ्कते—

शब्दः प्रवृत्तिजनको न तु बोधकश्चे-
न्नैतत्प्रवर्तकधियो जनकत्वहेतोः ।
इष्टाभ्युपायमतिजन्मनिमित्तभूतः
शब्दः प्रवर्तयति नैष पुनः पुमांसम् ॥ ३५५ ॥

शब्द इति । परिहरति—नैतदिति । न हि कार्याभिधानेन वाय्वादिवः

ऽप्रवर्तकः शब्दोऽमानत्वप्रसङ्गाद्व्युत्पन्नवीतरागयोरपि प्रवर्तनापत्तेश्च किं तु प्रवर्तकज्ञानजननेनेत्यवश्यं वाच्यमेवं चेदिष्टहेतुत्वबोधनमात्रोपक्षीणः शब्दो न पुंस्प्रवृत्तेरपि हेतुस्तस्या रागादित एव संभवादित्यर्थः ॥३५५॥

अ० टी०—योग्येतरान्वितस्वार्थं बोधयति शब्द इत्युपपादितं तत्रेदमाशङ्क्यते. शब्दस्य हि प्रवर्तकत्वमेव प्रथममवसीयते शब्दश्रवणसमनन्तरं मध्यमवृद्धस्य प्रवृत्तेरुपलम्भादतः प्रथमं शब्दः प्रवर्तक इति कल्पना भवति प्रवृत्तेश्च ज्ञानपूर्वकत्वात्तया तद्धेतुज्ञानमनुमीयते तच्च प्रवर्तकार्यविषयमिति शब्दानन्तर्याच्छब्दस्य प्रवर्तकार्थज्ञापकत्वं पश्चात्कल्प्यते प्रवर्तकं च कार्यज्ञानमिति स्वात्मदृष्टान्तेनाध्यवसितं तथा च यदि शब्दस्य प्रवर्तककार्यैककार्यनियमं परित्यज्य कार्याकार्यसाधारणत्वं कल्प्यते तदा शब्दस्य प्रथमावगतं प्रवर्तकत्वं बाध्यं स्यात्तस्मात्प्रवृत्तिजनक एव शब्द इति प्रवर्तककार्यैकगोचरो न सामान्येनार्थबोधक इतीमां शङ्कामनूद्य दूषयति—शब्दः प्रवृत्तिजनको न तु बोधकश्चेदिति । एतावान्पूर्वपक्षानुवादो व्यक्तीकृतार्थकः । दूषयति—नैतदिति । कुत इत्यत आह—प्रवर्तकाधियो जनकत्वहेतोरिति । शब्दः साक्षान्न प्रवर्तकस्तथा सति तं शृण्वतां सर्वेषामपि प्रवृत्तिप्रसङ्गात् किं तु प्रवर्तकज्ञानमात्रजनकः स्वसामर्थ्याद्भवति प्रयत्नसाध्येऽर्थे तत्र यः स्वानुकूलतया प्रवर्तकज्ञानवान्भवति स प्रवर्तते न सर्व इति युज्यत इत्यर्थः । तर्हि कार्यज्ञानस्यैव प्रवर्तकत्वात्कार्यबोधकत्वमेव शब्दस्याभ्युपेयमिति चेन्नेत्याह—इष्टाभ्युपायेति । एष शब्द इष्टाभ्युपायमतिजन्मनिमित्तभूतः कृतिसाध्येष्टसाधनत्वज्ञानोत्पादकमात्रो न पुनः पुमांसं प्रवर्तयति तस्याकारकत्वादित्यक्षरार्थः । तथा च शब्देन पुंसामिष्टाभ्युपाये बोधिते प्रवृत्तिसाध्यं चेत्तदिष्टमवगच्छति पुरुषस्तदेष्टरागाकृष्टः स्वयमेव प्रवर्तते न चेद्रागवांस्तदा फलसाधनत्वं शब्दादवगच्छन्नप्युदास्त इति युक्ततरोऽयं पक्ष इति भावः ॥ ३५५ ॥

सु० टी०—शब्दमात्रस्य कार्यार्थत्वं दूषितमुपसंहरति—

> तस्मादसंगतमिदं यदुशन्ति केचित्
> कार्यान्वितार्थविषयैव तु शब्दशक्तिः ।
> तत्र प्रयोगमभिवीक्ष्य तथा प्रतीतिः
> कल्प्येति वर्णितनिजेष्टविघातहेतोः ॥ ३५६ ॥

तस्मादिति । तत्र कार्यान्विते वक्तुः प्रयोगं श्रोतुश्च तथा प्रतीतिं वीक्ष्य तद्विषयैव शक्तिः कल्प्येति यत्केचिदिच्छन्ति तदसंगतं वर्णितस्वाभिमतविशिष्टविधिविघातादित्यर्थः ॥ ३५६ ॥

अ० टी०—कार्यान्वितेऽर्थे कार्यान्वयान्वयिनि वा शब्दशक्तिरितिपक्षनिराकरणमुपसंहरति—तस्मादसंगतमिदमिति । तस्मादित्युक्तमेव स्पष्टयति—वर्णितेति । तस्माद्वर्णितनिजेष्टविघातहेतोरिदमसंगतमिति संबन्धः । किमसंगतमित्यपेक्षायामिदमा परामृष्टमर्थमाह—यदुशन्तीति । शक्तिशब्दाग्र इतिशब्दोऽध्याहार्यः । तत्रेत्यादि कल्प्येत्यन्तं कार्यान्वितार्थे शक्तिरिति प्राप्त्युपायकथनपरम् । तत्रापि कल्प्येति यदुशन्ति तदिदमप्यसंगतमिति योज्यम् । यद्वा कार्यान्वितार्थविषयैव तु शब्दशक्ति[ रिति ]यत्केचिदुशन्ति तस्मात्प्रमाणाभावात्पूर्वोक्तदूषणवशाच्चेदमसंगतमिति योजना । कुतः प्रमाणाभावः कार्ये प्रयोगदर्शनस्य प्रमाणत्वादित्याशङ्क्याऽऽह—तत्रेति । तत्र कार्ये शब्दप्रयोगमभिवीक्ष्य शब्दविषये कार्यस्यान्वयमात्रमभिवीक्ष्येति यावत् । तथा प्रतीतिः कार्यान्विते शब्दशक्तिरिति प्रत्ययोऽनुभवो यदि कल्प्येति यदिपदं योज्यम् । तदप्यसंगतमित्यध्याहारानुषङ्गौ विज्ञेयौ । कुत इति तत्राऽऽह--वर्णितेति । विशिष्टविध्यसिद्धिरिष्टविघातो वक्ष्यमाणप्रकारेण तत्पक्षे वैदिकनियोगासिद्धिश्च तस्माद्धेतोरित्यर्थः॥३५६॥

सु० टी०—किं च कार्ये व्युत्पत्त्यसंभवादपि न तदन्विते शक्तिरित्याह—

> वेदैकगम्यमिति कार्यमभीष्टमस्मिञ्-
> छक्तिग्रहोऽपि न पदस्य समञ्जसोऽयम् ।
> शक्तिग्रहं च परिहृत्य न बोधकत्वं
> शब्दस्य शक्यमिह वक्तुमशङ्कितेन ॥ ३५७ ॥

वेदेति । लिङादिवाच्यं कार्यं वेदैकगम्यमित्यभ्युपगमादस्मिन्मानान्तरानुपस्थिते न शक्तिग्रहः शक्य इत्यर्थः । न च वेदानुपस्थिते शक्तिग्रहोऽन्योन्याश्रयात्तत्रापि स्वर्गकामनियोज्यान्वयानुपपत्तिकल्पिते मानान्तरविषयत्वापत्तेरपूर्वत्वव्याघातादवाच्यत्वापाताच्च । न च कार्ये धर्मिणि कार्यत्वेन शक्तिग्रहेऽन्विताभिधानकाले च स्वर्गकामान्वयायोग्यत्वाद्घटादिकं निरस्य यागविषयकं कार्यमित्यपूर्वे पर्यवस्यतीति वाच्यम् । प्रकृत्यर्थयागान्वयस्य प्राथमिकत्वेन तदन्वयानुपपत्त्या व्युत्पत्तिकाल एव घटादिप्रचुरद्रव्यगुणादिनिरासे कार्ये धर्मिणि व्युत्पत्त्यनुपपत्तेः । वेदैकवेद्यावन्यत्रैव शक्तिग्रहोऽङ्गमिति चेन्नेत्याह—शक्तिग्रहं चेति । व्युत्पन्नाव्युत्पन्नयोरविशेषापत्तेरित्यर्थः ॥ ३५७ ॥

अ० टी०—किं च कार्यान्विते स्वार्थे पदशक्तिरिति कार्यत्वं शक्तिनियामकमित्यु-

भ्युपगच्छतो वैदिकनियोगासिद्धिरितीष्टविघातं स्पष्टयति—वेदैकगम्यमिति । अभीष्टं प्राभाकराणामिति शेषः । किं तत इत्यत आह—अस्मिन्निति । अयं शक्तिग्रहोऽस्मिन्नपि नियोगे पदस्य न समञ्जस इत्यन्वयः । अयमपि लौकिको भावार्थकार्यविषय उक्तः । पदपदेन लिङादिरुच्यते । एतदुक्तं भवति—न तावद्वैदिको नियोगो वैदिकलिङादेः प्रत्येतुं शक्यते तस्य मानान्तरागोचरतया संगतिग्रहयोग्यत्वाभावात्तद्गोचरत्वे वाऽपूर्वत्वहानाद्वैदिकादेव पदात्तत्संगतिग्रहेऽन्योन्याश्रयत्वप्रसङ्गात् । तस्मान्न नियोगसिद्धिरिति । माऽस्तु तत्र संगतिग्रहो विनाऽपि तेन शब्दस्य तत्र पर्यवसानादिति चेन्नेत्याह—शक्तिग्रहं चेति । अशङ्कितेन प्रामाणिकेन पुंसेत्यर्थः ॥ ३५७ ॥

सु० टी०—तर्हि नियोगवन्मानान्तरापूर्वे ब्रह्मण्यपि व्युत्पत्त्यसंभव इति चेन्नेत्याह—

शश्वत्स्वयंप्रभमलुप्तचिदात्मभूतं
विष्णोः परं पदममुत्र तु शब्दशक्तिः ।
शक्या ग्रहीतुमतिबुद्धिमनस्यपीति
शास्त्रप्रमाणकमदः प्रवदन्ति सन्तः ॥ ३५८ ॥

शश्वदिति । यतः परं पदं नित्यस्वप्रकाशत्वादात्मत्वेनाव्यवहितत्वाच्च प्रसिद्धमतोऽमुष्मिन्बुद्धिमनोतिवर्तिन्यपि शबलार्थब्रह्मादिपदशक्तिरुक्तरीत्या सुग्रहा न तु कार्यं तस्य जडत्वेनाप्रसिद्धत्वादित्यर्थः ॥ ३५८ ॥

अ० टी०—मानान्तरागोचरेऽपि नियोगे स्याद्व्युत्पत्तिर्यथा तथाविधे ब्रह्मणि तवेति चेन्न वैषम्यादित्याह—शश्वत्स्वयंप्रभमिति । शश्वत्सदा वेदान्तवेद्यस्य पदस्य कथं सदा स्वयंप्रभत्वमित्यत आह—अलुप्तचिदात्मभूतमिति । एवंविधं यद्विष्णोः परं पदं ब्रह्माख्यममुत्रामुष्मिन्पदे किंलक्षणेऽतिबुद्धिमनसि । अतिक्रान्ते बुद्धिमनसी येन तत्तथा तस्मिन्संकल्पाध्यवसायागोचरेऽपि विष्णोः परमे पदे शब्दशक्तिर्ग्रहीतुं शक्येति योजना । इति हेतोरदःपदं शास्त्रप्रमाणकं घटत इति सन्तः प्रवदन्तीति नास्मत्पक्षे काऽप्यनुपपत्तिरित्यर्थः । ब्रह्मणः सर्वव्यवहारातीतत्वेऽपि स्वयंप्रकाशमानप्रत्यक्चैतन्यात्मतया नित्यस्फुरणात्तस्मिन्ब्रह्मात्मादिशब्दसंकेतः सुग्रहो नियोगस्य तु जडत्वात्सदैव मानाधीनप्रकाशत्वान्मानान्तरेण तदसिद्धौ तत्र शब्दशक्तिग्रहः स्वप्नेऽपि दुर्लभ इति भावः ॥ ३५८ ॥

सु० टी०—किं च सिद्धार्थवाक्यादप्याद्यव्युत्पत्तिसिद्धेर्न कार्यान्विते शक्तिरित्याह जात इत्यादिश्लोकाभ्यां—

जातः सुतः सकलवंशविवर्धनस्ते
विप्रेतिवाक्यसमनन्तरमस्य बुद्धिः ।

श्रोतुर्मुखाकृतिवशेन तु पुत्रजन्म-
वस्तुन्यवश्यमनुमीयत एव बालैः ॥ ३५९ ॥

भूतार्थनिष्ठवचनादपि शब्दशक्तिः
शक्या ग्रहीतुमुदितेन पथाऽनभिज्ञैः ।
तत्र प्रवर्तकनिवर्तकवाक्यमूल-
शक्तिग्रहैकनियमस्य न हेतुरस्ति ॥ ३६० ॥

जातः सुत इत्यादिदूतवाक्यश्रवणानन्तरमस्य पितुर्हर्षप्रसन्नमुखाकारादिलिङ्गेनानभिज्ञैर्बालैरयमिदानीमिष्टज्ञानवान्प्रसन्नमुखत्वान्मद्वत्। तच्चेष्टज्ञानं जातः सुत इत्यादिवाक्यजन्यं तदन्वयाद्यनुविधायित्वात्संप्रतिपन्नवदिति। तस्य हर्षहेतुज्ञानस्य पुत्रपदाङ्कितवस्त्रप्रदर्शनादिलिङ्गैरनुपस्थितप्रेयसीसुखप्रसवादिपरिहारेणाऽऽवश्यकपुत्रजन्मविषयत्वं निश्चेतुं शक्यमिति नाऽऽद्यव्युत्पत्तिवशात्कार्यार्थत्वनियम इत्यर्थः ॥ ३५९ ॥ ३६० ॥

अ० टी०—एवं प्रवर्तकवाक्यमूलव्युत्पत्तिरित्यङ्गीकृत्यापि सा सिद्धसाध्यसाधारणी व्युत्पत्तिर्न कार्यैकनिष्ठेति साधितमिदानीं सिद्धार्थमात्रनिष्ठवाक्येऽपि व्युत्पत्तिः संभवतीति सोदाहरणमाह—जातः सुत इति। अत्रेयमाख्यायिका—कश्चित्किल कचित्कुतश्चिद्देशान्तरादागतो देशभाषानभिज्ञस्तद्भाषाव्युत्पित्सुरवगतस्वभाषार्थश्च पुरुषः। स कदाचित्कस्यचिद्गृहवेदिकायामुषितस्तत्र पुत्रजन्मवृत्तमन्वभूत्। स पुनस्तत्पितरं प्रति गच्छता वार्ताहारेण सह पुत्रपितृसमीपे गतो वार्ताहारनिगदितवाक्यमुपाशृणोदिति तामत्र सूचयति स्म निबन्धकारः। अत्रैषाऽक्षरयोजना बालैर्यथोक्तव्युत्पित्सुभिर्हे विप्र ते सकलवंशविवर्धनः सुतो जात इतिवाक्यसमनन्तरं वार्ताहारवाक्यश्रवणसमनन्तरमस्मदुपलब्धपुत्रजन्मवस्तुनि बुद्धिरस्य श्रोतुः पितुर्मुखाकृतिवशेन स्मितविकसत्कपोलनयनचेष्टारोमोद्भेदादिलक्षणेन प्रहर्षचिह्नेनावश्यमनुमीयत एवेति। तुशब्दः शोकमोहलिङ्गाद्विशेषणार्थो वाक्यश्रवणसमनन्तरं हर्षमात्रलिङ्गदर्शनेऽपि न पुत्रजन्मैव तद्धेतुत्वेनानेनोक्त इति कल्पनायां न प्रमाणमस्तीति न शङ्कनीयं मानान्तरेण पुत्रजन्मनो हर्षहेतुत्वं निश्चितवतोऽत्र च तद्दृष्टवतो देशिकस्य स्वदृष्टहेतुपरित्यागेन हेत्वन्तरशङ्कानुत्थानात्तेन तदेव हर्षहेतुत्वेनानुमीयते नान्यत्प्रियासुखप्रसवादीतिनिश्चयोपपत्तेः। न हि पुत्रपदाङ्कितकुङ्कुमाङ्कितवासःप्रदर्शकेन वार्ताहारेण प्रियावृत्तान्तो निवेद्यत इति कल्पना युक्तिमती। तस्मात्तनयजन्मैवानेन वाक्येन निवेदितमित्यवगच्छत्येवायं व्युत्पित्सुरित्ययमर्थोऽवश्यपदेन सूचितः ॥ ३५९ ॥

१ ख. घ. 'र्थदस्तुष'।

अ० टी०—तथा च तत्र विनाऽपि कार्यानुसरणं शक्तिग्रहोऽपि सेत्स्यतीत्याह—भूतार्थनिष्ठवचनादपीति । उदितेन पथेति । पुत्रस्ते जात इत्याद्युक्तप्रकारेणेत्यर्थः । एवं च सति कार्यवाक्यमूलैव व्युत्पत्तिरिति नियमस्ते भग्न इत्याह—तत्र प्रवर्तक इति ३६० ॥

सु० टी०—तथाऽपि विशेषव्युत्पत्तिः प्रवर्तकादिवाक्यादेवाऽऽवापोद्धारापेक्षणादिति चेन्नेत्याह—

सामान्यतः प्रथममेष पदार्थपिण्डो
वाच्योऽस्य वाचकमिदं पदपिण्डरूपम् ।
इत्याकलय्य पुनरेष विशेषतोऽपि
शब्दार्थसंगतिमवैति जनस्तटस्थः ॥ ३६१ ॥

सामान्यत इति । पिण्डः समूहः । बालो हि प्रथममेष पदार्थगणो वाच्य इदमाकाङ्क्षादिमत्पदकदम्बकमस्य वाचकमित्याकलय्य विशेषाज्ञानात्पुनरपि तटस्थ इतरस्य कोऽर्थो वक्तारमपृच्छन्नेव पुत्रो जात इति वाक्ये वाक्यान्तराद्वत्सागतपदावापेन पुत्रजातपदोद्धारेण च वत्सागतादिपदानां वाच्यविशेषमवगच्छतीति न तदर्थमपि प्रवर्तकवाक्यापेक्षेत्यर्थः ॥ ३६१ ॥

अ० टी०—तदेवं सामान्यतः प्रवर्तकवाक्यानपेक्षमेव सिद्धार्थनिष्ठवाक्ये स्यादाद्या व्युत्पत्तिरित्युक्तं तस्या विशेषपर्यवसानार्थमपि न प्रवर्तकवाक्यापेक्षा सिद्धनिष्ठवाक्येष्वेवाऽऽवापोद्वापाभ्यां तदुत्पत्तेरितीदानीं व्युत्पत्तिप्रकारमाविष्करोति—सामान्यत इति । प्रथमं पूर्वशब्दश्रवणसमय एव स्वयमनुभूयमानः पदार्थपिण्डोऽर्थकदम्बो वाच्यः । अस्यार्थपिण्डस्येदं पदपिण्डरूपं पदसमुदायो वाचकं बोधकमिति सामान्यतः संमुग्धाकारेणाऽऽकलय्य पुनः प्रयोगभेदश्रवणकाल एव तटस्थो जनो व्युत्पित्सुरावापोद्वापाभ्यां विशेषतोऽपि शब्दार्थसंगतिं पदविशेषस्य पदार्थविशेषसंबन्धमवैति जानातीति योजना । प्रियवाक्याख्यानवदप्रियवाक्यान्वाख्यानेऽप्युक्तप्रकारेण व्युत्पत्तिसिद्धिर्ज्ञेया क्वचिदभिनयमार्गेणापि जायत एव व्युत्पत्तिरिति मुधा कार्यस्य तद्धेतुत्वनियमकल्पनेत्येतदप्यत्रोक्तं वेदितव्यम् ॥ ३६१ ॥

सु० टी०—किं च कार्यान्वयमतिं विनाऽपि प्रसिद्धपदसमभिव्याहारादपि शक्तिग्रहो दृष्ट इत्याह—

काष्ठैः स्थाल्यां पचति विविधैरोदनं पूर्णिकेति
श्रुत्वा बालः सपदि मनुते काष्ठशब्दस्य शक्तिम् ।

दृष्ट्वा तस्मिन्पचनकरणं प्रज्वलत्काष्ठजातं
न्यायोपायादितरवचसां शक्तिषु प्राक्प्रवीणः ॥ ३६२ ॥

काष्ठैरिति । पूर्णिका दासी । तथा च काष्ठप्रातिपदिकमात्रार्थानभिज्ञः शिशुरेतद्वाक्यं श्रुत्वा पदान्तराणां प्रागेव गृहीतशक्तित्वादत्र वाक्ये यत्पाककरणं तदेव काष्ठपदशक्यमिति जानातीत्यर्थः ॥ ३६२ ॥

अ० टी०—इदानीं विनाऽपि कार्यानुप्रवेशं प्रसिद्धपदसमभिव्याहारादपि पदव्युत्पत्तिराद्या भवतीति प्रतिपादयति—काष्ठैः स्थाल्यामिति । पूर्णिका नाम काचित्पक्त्री काष्ठैः पचतीति वाक्यं श्रुत्वा बालः पचनकारणप्रज्वलत्काष्ठजातं च दृष्ट्वा तस्मिन्वाक्ये काष्ठप्रातिपदिकस्य शक्तिं सपदि मनुते जानातीति योजना । कथं पाकसाधनेष्वनेकेषु तत्र दृश्यमानेषु सत्सु दारुषु काष्ठपदशक्तिं गृह्णातीत्यत आह—न्यायोपायादिति । पारिशेष्यन्यायरूपादुपायादित्यर्थः । एतदपि कुत इत्यत आह—इतरेति । काष्ठैरित्यत्र वचनविभक्त्योः स्थाल्यादिपदानां च शक्तिषु प्रागेव प्रवीणो व्युत्पन्न इत्यर्थः । एवं प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्याद्यन्यत्रोदाहरणं द्रष्टव्यम् ॥ ३६२ ॥

सु० टी०—किं च कार्य एव नियोगाख्ये न प्रमाणमस्ति दूरे तस्य लिङ्वाच्यतेत्याह—

न च किमपि नः कार्यं नाम प्रमाणपथानुगं
यदिह तु पुनर्लिङ्लोडादेरुपैष्यति वाच्यताम् ।
न खलु तदितो धात्वर्थादेः पृथग्व्यवसीयते
व्रजतु तदिह श्रेयोहेतुर्लिङादिपदार्थताम् ॥ ३६३ ॥

न चेति । ननु यजेतेत्युक्ते किंचित्कुर्यादिति कर्तव्यांशः प्रतीयते तदेव कार्यमिति चेन्नेत्याह—न खल्विति । दधिगोदोहनाद्यादिशब्दार्थो धात्वर्थादिरेव तत्र साध्यतया कर्तव्याकारेण प्रतीयते न तु तद्व्यतिरिक्तं किंचिदित्यर्थः । ननु पचतीत्यादौ धात्वर्थे सत्यपि न कर्तव्यता प्रतीयत इति तद्व्यतिरिक्तं कार्यमिति चेन्न श्रेयोहेतुत्वावच्छिन्न एव धात्वर्थः कर्तव्याकारेण लिङादिवाच्यः स्यादित्याह—व्रजत्विति ॥ ३६३ ॥

अ० टी०—इयता संदर्भेण कार्यपदार्थमङ्गीकृत्य तस्य न व्युत्पत्तिप्रयोजकतेत्युपपादितमिदानीं कार्यमेव त्वदभिमतं न प्रामाणिकं कुतस्तस्य शक्तिग्रहप्रयोजकतेत्याह—न च किमपीति । इह लोके वेदे वा । चशब्दः किंचेत्यर्थे । तुशब्दः कार्याभ्यु-

---

१ क. °हनत्वादि° ।

पगमव्यावृत्त्यर्थः । पुनःशब्दः पादपूरणार्थः । नन्वानयेत्युक्ते सत्यानयनं कर्तव्यमिति कर्तव्याकारकार्यस्यावगमात्कथमस्य प्रमाणपथाननुगम इति चेन्नेत्याह—**न खलु तादृत इति** । धात्वर्थः क्रिया । आदिपदात्कारकादिग्रहः । कटः कर्तव्यस्तृप्तिः कार्येति कारकफलयोरपि कर्तव्यत्वप्रतीतेः । इतः प्रसिद्धाद्धात्वर्थादेः सकाशात्पृथक्न खलु तत्कार्यं व्यवसीयत इत्यन्वयः । ननु न साध्यस्वभावमात्रत्वं कर्तव्यत्वं येन लिङादेः क्रियाद्यतिरिक्तार्थता न स्यात्किं तु मयेदानीमिदं कार्यमित्येवमाकारं न तथा क्रियादिर्वर्तमानादिप्रयोगेऽपि । यतः क्रियादि साध्यस्वभावं प्रतीयमानमपि न यथोक्तकर्तव्याकारं प्रतीयतेऽतः कर्तव्याकारं कार्यमन्यत्तदेव लिङादिपदवाच्यमिति चेन्नेत्याह—**व्रजतु तदिहेति** । इह विधिवाक्येषु तत्क्रियादिवस्तु श्रेयोहेतुरिष्टसाधनं भूत्वा लिङादिपदवाच्यार्थतां व्रजत्वित्यक्षरार्थः । श्रेयःसाधनत्वावच्छिन्नः क्रियादिरेव कर्तव्याकारेण प्रतीयमानो लिङादिपदवाच्यो वर्तमानत्वाद्याकारेण प्रतीयमानस्तु लकारान्तरवाच्य इति नानुपपन्नं किंचिदिति न क्रियादिभिन्नकार्यसिद्धिरिति भावः ॥ ३६३ ॥

**सु० टी०—ननु लिङादिवाच्या कर्तव्यता श्रेयोहेतुत्वमेवेति कुतो निर्णीतमिति चेत्तदन्यस्य लोके प्रवृत्तिहेतुत्वाप्रसिद्धेरित्याह—**

**न खलु जगति श्रेयोहेतुप्रतीत्युदयादृते**
**पुरुषवचनात्क्वापि प्राज्ञः प्रवर्तितुमर्हति ।**
**पुरुषवचनाच्छ्रेयोहेतुप्रतीत्युदये पुन-**
**स्तदनुवशगो रागोत्पत्तौ ततः स हि चेष्टते॥३६४॥**

न खल्विति । अन्यत्र तथात्वेऽपि प्रैषादिजन्यायां शाब्दप्रवृत्तौ कार्यताज्ञानहेतुः स्यादितिचेन्न विषं भुङ्क्ष्वेत्यादावप्रवृत्तेः । तत्रापि श्रेयोहेतुत्वज्ञानस्यैव प्रवर्तकत्वादित्याह—पुरुषेति । व्यतिरेकमुक्त्वाऽन्वयं दर्शयति—पुरुषेति । ओदनं भुङ्क्ष्वेत्यादौ तेन रागमूलत्वात्प्रवृत्तेरप्रयोजकः प्रैषादिरित्यर्थः ॥ ३६४ ॥

अ० टी०—ननु लिङादिपदवाच्यः कर्तव्याकारः श्रेयोहेतुत्वमेवेति कुतोऽवसीयत इति चेल्लोके श्रेयोहेतुत्वप्रतीतेः प्रवर्तकत्वेन प्रसिद्धत्वात्तदन्यस्याप्रसिद्धत्वाच्चेत्याह—**न खलु जगतीति** । पूर्वार्धयोजना स्पष्टा । व्यतिरेकमुक्त्वाऽन्वयं वदञ्छाब्देऽपि व्यवहारे न कल्पतादन्यत्प्रवर्तकमाशङ्कनीयमित्याह—**पुरुषवचनाच्छ्रेय इति** । प्रती-

---

१ क. ᳚दयात्पु᳚ ।

त्युदये पुना रागोत्पत्तौ सत्यां तदनुवशगो रागानुवर्ती सन्स हि यस्माच्चेष्टते ततस्तस्मात्सर्वत्र कृतिसाध्यश्रेयोहेतुत्वज्ञानोद्बुद्धराग एव प्रवर्तको नार्थान्तरमित्यर्थः ॥ ३६४ ॥

सु० टी०—अस्तु तर्हि राग एव लिङर्थः साक्षात्प्रवर्तकत्वादिति चेन्न तस्य साक्षाच्छब्दाजन्यत्वेन तद्धेतावेव श्रेयोहेतुत्वज्ञाने शक्तिकल्पनादित्याह नयनिपुणेत्यादिश्लोकाभ्यां—

नयनिपुणधीर्बालश्चेष्टां समीक्ष्य समीहितुः
कृततदुचितव्याप्तिज्ञानः पुरा निज आत्मनि ।
परतनुगतं श्रेयोहेतुप्रतीत्युदयोत्थितं
चरितविषये रागं तस्य प्रवर्तकमिङ्गति ॥ ३६५ ॥

प्रवर्तकोत्थाननिबन्धने ततः
समीहितोपायविशेषवस्तुनि ।
गिरोऽनुमाय प्रतिपत्तिहेतुतां
विशेषसिद्धौ तु समीहते पुनः ॥ ३६६ ॥

बालो हि प्रयोज्यवृद्धस्य चेष्टां समीक्ष्य स्वात्मन्येव प्रवृत्तेः श्रेयोहेतुताधीजन्यरागपूर्वकत्वेन गृहीतव्याप्तिस्वात्तस्य वृद्धस्य प्रवृत्तिविषये गवानयनादौ रागं परात्मगतमपि प्रवृत्तिहेतुत्वेनानुमिनोति । ततश्च प्रवर्तकस्य रागस्योत्थाननिबन्धन उत्पत्तिहेतौ समीहितोपायवस्तुनि लिङादियुक्तवाक्यस्य सामान्यतो बोधकत्वशक्तिमनुमापकस्य पदांशस्य कोऽर्थांशो वाच्य इति पुनः शक्तिविशेषसिद्धौ यतत इत्यर्थः ॥ ३६५ ॥ ३६६ ॥

अ० टी०—तथाऽपि व्युत्पित्सोर्बालस्य कथमित्थं व्युत्पत्तिस्तस्य बालत्वादिति चेन्न तस्य स्वव्यवहारे व्युत्पन्नतया परत्रापि न्यायसंचारसमर्थत्वादित्याह—नयनिपुणधीरिति । नयनिपुणधीत्वे हेत्वर्थं विशेषणं कृततदुचितेत्यादि । स्वात्मनि पूर्वमेव कृतं प्रवृत्तेरिष्टसाधनत्वज्ञानपूर्वकत्वसाधनोचितव्याप्तिज्ञानं येन स बालः समीहितुः प्रवर्तमानस्य वृद्धस्य चेष्टां समीक्ष्य परतनुगतं रागं तस्य प्रवर्तकमितीङ्गति कल्पयतीति योजना । प्रवर्तकरागोत्पत्तौ निमित्तमाह—श्रेयोहेतुप्रतीत्युदयोत्थितमिति । इष्टसाधनत्वज्ञानादुत्पन्नमित्यर्थः । चरितविषय इति । अनुभूते प्राग्व्युत्पन्ने विषय इत्यर्थः । एतदुक्तं भवति—बालः स्वयं प्रवर्तमानो निवर्तमानो वा बुद्धिपूर्वकारित्वादिष्टं म इदमिति बुद्ध्वा

प्रवर्ततेऽनिष्टं म इदमिति बुद्ध्वा च निवर्तते तत्रापि न बोधमात्रात्तदुभयं तस्य भवति किं तु प्रवृत्तिनिवृत्तिविषयरागद्वेषाभ्यां कदाचिद्बुद्ध्वाऽप्यौदासीन्यदर्शनात् । अत एवं स्वव्यवहारे प्रवृत्तिनिवृत्तिकारणमन्वयव्यतिरेकाभ्यां निश्चित्य तद्दृष्टान्तावष्टम्भेन परस्मिन्नपि व्यवहर्तरीष्टानिष्टज्ञानजनितरागद्वेषौ प्रवृत्तिनिवृत्त्योः कारणे इति कल्पयति । तथा च शाब्देऽपि व्यवहारे शब्दतः प्रवृत्तिहेतुरागोत्पादकश्रेयःसाधनतावबोधमुत्पन्नमनुमाय बहुषु तथाविधप्रयोगेष्वावापोद्वापाभ्यां लिङादिपदवाच्यतां श्रेयःसाधनतायाः कल्पयतीति ॥ ३६५ ॥

एतमेव संगृहीतमर्थं क्रमेण त्रिभिः पद्यैर्व्युत्पादयति—प्रवर्तकोत्थाने-त्यादिना । ततः परतनुगतरागानुमानानन्तरं प्रवर्तकस्य रागस्योत्थाने समुदये यन्निबन्धनं कारणं तस्मिन्समीहितोपायविशेषवस्तुनि गिरो वाक्यस्य प्रतिपत्तिहेतुतां प्रथमं सामान्यतोऽनुमाय पुनर्विशेषसिद्धौ समीहते यतत इत्यर्थः ॥ ३६६ ॥

सु० टी०—कथं यतत इत्यावापोद्धाराभ्यामित्याह–पदान्तरस्येति द्वाभ्यां—

पदान्तरस्याऽऽगमनादिहान्यत-
स्तथा परस्योद्धरणादितो गिरः ।
विशेषसिद्धिं लभते प्रयत्नवा-
न्पदार्थसंबन्धगतां विचक्षणः ॥ ३६७ ॥
लडादिशब्देऽपगते लिङादौ
प्रत्यागतेऽभीप्सितसाधनत्वम् ।
प्रतीयते तेन लिङादिशब्द-
स्तदर्थवाचीति स वेत्ति बालः ॥ ३६८ ॥

यथा हि गामानयेतिवाक्याद्गामितिपदमुद्धृत्याश्वं बधानेत्यतोऽ(*श्वमितिपदस्याऽऽवापादस्य मागस्यायं मागो वाचक इति विशेषसिद्धिं लभते तथा पचतीत्यतो) लडुद्धारेण तस्य स्थाने लिङादौ[1] प्रक्षिप्ते पचेतेत्येवमिष्टसाधनत्वं ज्ञायत इत्यन्वयव्यतिरेकाभ्यामिष्टसाधनत्वशक्तो लिङिति व्युत्पद्यत इत्यर्थः ॥ ३६७ ॥ ३६८ ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

---

१ क. लिङादि ।

अ० टी०—अस्य वाक्यांशस्य पदस्यास्मिन्वाक्यार्थांशे पदार्थे वृत्तिरिति विशेषनिर्णयार्थं कथमयं प्रवर्तत इत्यपेक्षायामावापोद्वापाभ्यामित्याह—**पदान्तरस्येति**। इहाश्वमानयेतिवाक्ये पूर्वश्रुतगामानयवाक्यगतगोपदात्पदान्तरस्याश्वपदस्यान्यतः प्रयोगान्तरादानयनात्तथेतो गिरो गामानयेति वाक्याद्गोपदस्योद्धरणात्पदार्थसंबन्धगतां विशेषसिद्धिं प्रयत्नवान्विचक्षणो व्युत्पित्सुर्लभत इति योजना। विचक्षणो मेधावी प्रयत्नवानावापोद्धारविचारनिरतः। विशेषसिद्धिरुद्ध्रियमाणं पदं यदर्थसंबद्धं प्रतीयते तस्य पदस्य स एवार्थः। तथोदुप्यमानं च पदं यदर्थसंबद्धं स एव तस्यार्थ इति निश्चयः॥ ३६७॥

तत्रापि विशेषतो लिङादेरिष्टसाधनत्वांशवाचकत्वसिद्ध्यनुगुणावापोद्धारौ दर्शयति—**लिङादिशब्देऽपगत इति**। लिङ्लोट्तव्यादिशब्दे पूर्ववद्वाक्यप्रयोगभेदेष्वपगते प्रत्यागते च सर्वत्राभीप्सितसाधनत्वं प्रतीयते न गवादिपदवत्प्रतिप्रयोगमर्थान्तरनिष्ठत्वमित्यर्थः। तेन सर्वत्रैक्यार्थप्रत्यायकत्वेन तदर्थवाची लिङ्लोट्तव्यपञ्चमलकाररूपः शब्द इष्टसाधनत्ववाचीति स बालो वेत्तीति योजना॥ ३६८॥

**सु० टी० विशेषसिद्धिरपि न कार्यान्वितत्वादिरूपेणेत्याह—**

> **योग्येतरान्विततया न च वाच्यताऽस्य**
> **कार्यान्वितत्ववपुषा सुतरां न चेष्टा।**
> **किं त्वन्वितत्ववपुषा न विशेषणस्य**
> **किंचित्प्रयोजकमिहास्ति निरूपणायाम्॥ ३६९॥**

योग्येति। **अयोग्येनानितरेणानन्वयात्कार्यान्वयस्य च दूषितत्वात्केवलंगोत्वादिरूपेणान्वये चान्वयस्याशाब्दत्वापत्तेरन्वितत्वमात्रेण विशेषणीयमित्याह—किं** त्विति। **साकाङ्क्षयोग्यासन्नतत्तत्पदोद्बोधितसंस्कारविषयपदार्थविशेषान्वयस्यान्वयमात्रशक्तैरपि पदैरभिधानाच्च न वाक्यार्थसिद्धिरिति भावः॥ ३६९॥**

अ० टी०—तर्हि तत्तत्पदार्थस्य केन रूपेण वाच्यत्वं किं योग्येतरान्वितत्वेन किं वाऽनन्वितत्वेनाथ वा साधारणत्वेन नाऽऽद्यः कल्पनागौरवान्न द्वितीयोऽन्वयस्याशाब्दत्वापत्तेर्न तृतीयः साधारणस्यान्यस्य प्रकारस्यासंभवात्कार्यान्वितत्वस्यैव परिशेषादित्याशङ्क्य मैवमनवधीरितविशेषणेनान्वितत्वेन वाच्यतेत्यङ्गीकारे सर्वदोषपरिहारादित्याह—**योग्येतरेति**। अस्य पदार्थस्य न चेष्टा वाच्यतेत्यनुषङ्गः। विशेषणस्य कार्यत्वयोग्यत्वादिरूपस्येत्यर्थः॥ ३६९॥

सु० टी०—ननु किमन्विताभिधानेन पदोपस्थितैः पदार्थैरेवान्वयबोधोपपत्तेरिति केचित्तान्निरस्यति—

यत्केचिदाहुरभिधाय निजान्पदार्था-
नेतावतोपरतवन्ति पदानि तेभ्यः ।
पश्चाद्विशेषणविशेष्यतया तु तेषां
संसर्गबुद्धिरपराऽवतरिष्यतीति ॥ ३७० ॥

यत्केचिदिति । यत्तावद्भाट्टा आहुर्न पदैर्वाक्यार्थो बोध्यते तेषां पदार्थबोधोपक्षीणत्वात् । अन्यथा हि विस्मृतपूर्ववर्णानां पदानामन्त्यवर्णमात्राद्यथा न पदार्थावगतिस्तथा विस्मृतपूर्वपदानामपि वाक्यार्थधीर्न स्यात् । दृश्यते तु सा दीर्घतरेषु वाक्येषु । तस्मात्पदार्थेभ्य एवोपस्थितेभ्यो विशेषणविशेष्यभावेन संसर्गबोध इत्यभिहितान्वय इति ॥३७०॥

अ० टी०—अन्वितत्वरूपेण वाच्यत्वमित्ययुक्तं स्वेन रूपेणार्थानामेव वाच्यत्वादन्वयप्रतिपत्तेरभिहितार्थनिबन्धनत्वेन साक्षाच्छाब्दत्वानङ्गीकारादिति तार्किकमतमुत्थापयति—यत्केचिदिति । इति यत्केचिदाहुस्तद्दुर्घटमिति परेणान्वयः । किमाहुस्ते तदाह—अभिधायेति । पदानि वाक्यगतानि निजानसाधारणान्पदार्थानभिधायैतावताऽभिधानमात्रेणोपरतवन्त्युपरतानि भवन्तीत्यर्थः । अयं भावः—यद्यपि संगतिग्रहणसमये प्रथमं पदार्थानां मिथोऽन्वितताऽप्यनुभूता तथाऽप्यावापोद्धाराभ्यां विभज्यमानदशायां केवल एव पदार्थे पदपर्यवसानमवधारितम् । अन्यथा योऽर्थो येनार्थेनान्वितस्तदा प्रतीतः सोऽप्यर्थस्तदेकपदवाच्यः स्यादिति क्रियामात्रोच्चारणेऽपि सकलपदार्थप्रतीतिः स्यादिति पदान्तरोच्चारणवैयर्थ्यापातः । तस्मात्केवलानेवार्थानभिदधति पदानीति । तर्हि कथं वाक्यार्थप्रत्यय इत्यपेक्षायामाह—तेभ्यः पश्चादिति । पश्चात्सर्वपदार्थबोधानन्तरं तेभ्योऽभिहितेभ्यः पदार्थेभ्यस्तेषां विशेषणविशेष्यतया संसर्गबुद्धिस्त्वपरा पदार्थबुद्धिभ्योऽवतरिष्यति जनिष्यत इत्यर्थः । एवंसति वाक्यार्थस्य संसर्गस्य साक्षादशाब्दत्वेऽपि नाशाब्दत्वप्रसङ्गः पदानां पदार्थेषु स्वसामर्थ्यपर्यवसानेऽपि स्वोच्चारणप्रयोजनस्यापर्यवसानाद्वाक्यार्थप्रतीतेरेवेह प्रयोजनत्वात् । तदुक्तं भट्टपादैः—

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथाऽपि नैकस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमिति ये तेषां प्रवृत्तौ नान्तरीयकम् ॥
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ इति ।

तस्मात्संसर्गप्रत्ययस्य न मानान्तराधीनत्वशङ्केति भावः ॥ ३७० ॥

सु० टी०—तद्दूषयति—

तद्दुर्घटं न खलु किंचिदपि प्रमाण-
मस्याः प्रसाधकमुदीरितकल्पनायाः ।
येनोपलब्धिविषयत्वमुपागतानि
संसृष्टमेव तु पदानि पदार्थमाहुः ॥ ३७१ ॥

तद्दुर्घटमिति । न खल्वस्यामक्लृप्तकल्पनायां किंचिन्मानमस्ति गौरवात्प्रसिद्धिविरोधादुपायान्तरोपस्थितपदार्थेभ्यो वाक्यार्थबुद्ध्यदर्शनाद्दीर्घवाक्येऽपि स्मर्यमाणपदार्थबोधिपदवत्तां वाक्यस्यानुमाय वाक्यार्थबोधाच्चेत्यर्थः । कुत इत्याह—येनेति । वृद्धव्यवहाराद्धि पदान्येव प्रथमोपस्थितत्वात्संसृष्टपदार्थधीहेतुतया बालेन कल्प्यन्ते न पदार्थास्तेषां केवलानामनुपस्थितेरनागतादिरूपत्वेनाहेतुत्वाच्चेत्यर्थः ॥ ३७१ ॥

अ० टी०—उत्थापितं दूषयति—तद्दुर्घटमिति । कुत इत्यपेक्षायामत्र प्रमाणासंभवादित्याह—न खल्विति । पदार्थबोधव्यवधानेन पश्चात्संसर्गबुद्धिर्भवतीत्यस्या उदीरितकल्पनायाः प्रसाधकं प्रमाणं न खल्वस्तीति योजना । कुतो नास्तीत्यत आह—येनेति । येन हेतुना श्रोत्रेन्द्रियेणोपलब्धिविषयत्वमुपागतानि पदानि श्रूयमाणानि पदानीति यावत् । संसृष्टमेव पदार्थमाहुरन्यथा तत्राऽऽकाङ्क्षानुदयप्रसङ्ग इत्यर्थः । प्रवृत्त्या हि विशिष्टार्थज्ञानमनुमीयते तस्य च शब्दः कारणत्वेन कल्प्यतेऽतः संसृष्टबोधकत्वमेव पदानामिति व्यवधानकल्पनं प्रामाणिकमिति भावः ॥ ३७१ ॥

सु० टी०—अत एव न शुद्धपदार्थमात्रे शक्तिस्तस्य व्युत्पत्तिदशायामनुपस्थितेरित्याह—

नासंसृष्टपदार्थबुद्धिपदयोः पूर्वापरत्वप्रमां
मुक्त्वा कारणकार्यतावगतये कश्चित्समर्थस्तयोः ।
पौर्वापर्यमुदीक्ष्य हेतुफलतां सर्वत्र संगृह्णते
नो चेत्सर्वमसंगतं भवति वः सर्वव्यवस्थाहतेः ॥ ३७२ ॥

नासंसृष्टेति । न वृद्धवाक्यश्रुतपदादसंसृष्टपदार्थबुद्धिर्भवतीत्यतस्तद्धेतुत्वाग्रहान्न तत्र पदस्य शक्तिं गृह्णाति पौर्वापर्यं विना हेतुफलत्वग्रहेऽतिप्रसङ्गादित्यर्थः । तथाऽपि लाघवादावश्यकपदार्थमात्र एव शक्तिर्गृह्यतामिति चेन्नान्वयाशक्यत्वे गौरित्युक्ते किं चरति तिष्ठति वेत्यन्वयविशे-

पाजिज्ञासानुत्पत्त्यापत्तेः। न च कारकेण क्रियया च क्रियाकारकसामान्या-क्षेपात्तदुपपत्तिरिति वाच्यमकारकक्रिययोरपि तद्दर्शनाद्व्याप्तिस्मृत्यादि-विलम्बाननुभवाच्चावृत्तिलभ्यत्वेऽन्वयस्याशाब्दत्वापत्तेश्च। शब्दलभ्यत्वा-देव शाब्दत्वे धूमोऽस्तीत्यतो वह्निबोधस्यापि शाब्दत्वापत्तेरपदार्थ-स्यापि वाक्यार्थत्वेऽतिप्रसङ्गाच्च। न चान्वयस्य शक्यत्वे तस्य पदार्थव-द्विशेषणत्वात्संसर्गभानापत्तिः। यतोऽस्मन्मते शक्तिग्रहविषयीभूतसंस-र्गसामान्यमेव पदैः स्वज्ञानोद्बोधितसंस्काराकाङ्क्षादिसहकारेण घटी-यत्वादिविशेषात्मना बोध्यमानं वाक्यार्थोऽभ्युपेयते। न त्वेवमपि संसृष्टः पदार्थः स च संसृष्टेनान्वेति न शुद्धेनेत्यवर्जनीयं संसर्गान्तर-ज्ञानमिति चेत्कथमवर्जनीयम्। यदा यत्संसर्गघटितः पदार्थः स एव रूपान्तरेण वाक्यार्थ इष्यते। यथा समवायिना समवे(*तस्य संबन्धः संयो) गिना संयुक्तस्येत्यादौ। न (+चैवमन्वितमन्वितेनान्वेतीत्यन्वयस्वीकारे तु तव विरो)धस्त्वयाऽपि विशेषजिज्ञासानुरोधेनान्वयसामान्योपस्थिति-स्वीकारात्सा चाऽऽक्षेपिकी शाब्दी वेत्येतावान्भेदः समवायवानित्यादौ च पदार्थस्यापि संसर्गत्वदर्शनाच्च तदविरोध इति दिक् ॥ ३७२ ॥

अ० टी०——नन्वावापोद्वापाभ्यां स्वयं प्रतिपत्तिसमये पदार्थमात्रबोधस्य दर्शनात्तत्रैव शक्तिरिति गम्यत इति चेन्नैवमित्याह—**नासंसृष्टेति**। असंसृष्टपदार्थबुद्धेः पदस्य च पूर्वापरत्वप्रमां मुक्त्वा पौर्वापर्यप्रतीतिं विना तयोः कारणकार्यतावगतये न कश्चित्समर्थोऽस्ति। यतो व्यवहर्तारो विपश्चितः पदार्थयोः पौर्वापर्यमुदीक्ष्य सर्वत्र प्रत्यक्षादिस्थलेऽपि हेतुफ-लयोः कार्यकारणत्वं संगृह्णते नो चेत्पूर्वापरत्वज्ञानं विना चेत्कार्यकारणभावग्रहस्तदा सर्वम-संगतं भवति युष्माकं सर्वत्र कार्यकारणव्यवस्थाभङ्गादिति योजना। एतदुक्तं भवति—पौर्वापर्यप्रत्ययो हि सर्वत्र कार्यकारणभावे प्रमाणमित्यविवादम्। न च केवलपदार्थप्रत्यय-पदयोः पौर्वापर्ये मानमस्ति व्युत्पत्तिसमये तयोः पौर्वापर्याग्रहात्परप्रवृत्तिहेतुविशिष्टप्रत्ययाधी-नत्वाद्व्युत्पत्तेः स्वयं पदार्थविवेकसमयेऽप्यवगतपदार्थगोचरत्वाद्विवेकस्य न तत्र तयोः पौर्वापर्यग्रहः। यः पुनर्व्युत्पन्नस्य वाक्यार्थप्रतिपत्तिसमये शब्दश्रवणानन्तरं पदार्थबोधः स व्युत्पत्तिवैपरीत्यान्न शाब्दः किं तु संबन्धिदर्शननिमित्ता स्मृतिरेवेति नानयोः पौर्वापर्यं प्रमाणतोऽवधृतं तदभावेऽपि कार्यकारणत्वकल्पनायां सर्वव्यवस्थाबाध इति ॥ ३७२ ॥

---

* क. अयं ग्रन्थः पुस्तके नास्ति। + क. अयं ग्रन्थः पुस्तके नास्ति।

---

१ क. ग. °र्थः सं°। २ क. ग. °न्तरमि°।

सु० टी०—कथं तर्हि पौर्वापर्याग्रहे यागस्वर्गयोर्हेतुफलत्वग्रह इति चेत्तत्राऽऽह—

पूर्वापरान्वयबलेन हि कारणत्व-
कार्यत्वसंगतिमिह प्रतियन्ति लोके ।
नो चेद्भवेदनियमो न च तत्र कर्तुं
कार्याणि कारणविशेषमुपाददीरन् ॥ ३७३ ॥

पूर्वापरेति । प्रत्यक्षादिना यत्कारणकार्यत्वं प्रतियन्ति तत्रैव तन्नियमो न तु वेदेऽपीत्यर्थः । अन्यथा कार्यविशेषार्थिनां नियमतः कारणविशेषोपादानं न स्यादित्याह—नो चेदिति ॥ ३७३ ॥

अ० टी०—ननु यागादेः स्वर्गादेश्च पौर्वापर्यप्रत्ययाभावेऽपि कार्यकारणभाव इष्टस्तत्कथमयं नियम इति चेदागमैकगम्यव्यतिरिक्तविषयेऽस्य नियमस्याबाधान्मैत्रमित्याह—पूर्वापरेति । इह लोके । न वेदेऽयं नियम इत्यर्थः । विपक्षे दोषमाह—नो चेदिति । इदमस्य कार्यमस्येदं कारणमिति नियमो न स्यादित्यर्थः । अनियमाभ्युपगमे दण्डं पातयति—न च तत्रेति । नियमाभावे कार्यविशेषार्थी कारणविशेषं नाऽऽददीत । आदत्ते तु तं लोक इत्यतो नियमोऽभ्युपेयः । स च पूर्वापरत्वग्रहाधीन इति यत्र पूर्वापरत्वानिश्चयस्तत्र कार्यकारणभावाग्रह इति लोके सोऽङ्गीकृतः सर्वत्रेत्यर्थः ॥ ३७३ ॥

सु० टी०—पदान्येव शुद्धपदार्थस्मृतिद्वाराऽन्वयं बोधयन्तीति मतं निरस्यति—

पदजातबुद्धिजनिता भवति व्यतिषक्तबुद्धिरिति तावदिह ।
न विगानमस्ति भवतामपि चेद्व्यवधानकल्पनमकारणकम् ॥३७४॥

पदजातेति । पदजातबोधेनैव परस्परान्वितस्वार्थबुद्धिर्जन्यत इत्यभ्युपगतं चेच्छक्त्या साक्षादेव सा जन्यतां किं शुद्धपदार्थस्मृतिव्यवधिकल्पनयेत्यर्थः । पदार्थमात्रशक्तादन्वयस्याशक्यस्यानुभवाभ्युपगमेऽतिप्रसङ्गाच्च । न चाशक्यमपि शक्यान्वयमेव बोधयतीति नातिप्रसङ्ग इति वाच्यम् । गङ्गायां घोष इत्यादौ घोषादिपदैरशक्यतीरान्वयानुभवस्वीकारात्स्वशक्यान्वयोऽपीति चेत्तर्हि घोषान्वितकाकान्वयस्यापि ततोऽनुभवप्रसङ्गात्तदुपस्थापकपदाभावान्न तथेति चेत्तुल्यमन्वयेऽपीति संक्षेपः ॥ ३७४ ॥

---

१ क. °तिषक्ति° ।

अ०टी०—ननु पौर्वापर्यप्रत्ययाद्यो वाक्यवाक्यार्थप्रत्यययोः कार्यकारण(ण)भावोऽवगतः स पदार्थबोधलक्षणावान्तरव्यापारव्यवधानेनेत्येतावदस्माभिरुच्यते न तु पौर्वापर्यप्रत्ययसिद्धं कार्यकारणभावमपहाय प्रकारान्तरेण पौर्वापर्यभावं केवले पदार्थज्ञानपदयोर्ब्रूयं ब्रूमो येनाव्यवस्थापातादिदोषं प्रसञ्जयेमेति चेन्मैवं वाक्यवाक्यार्थबुद्ध्योर्मध्ये शब्दजन्यतया पदार्थबोधस्य सद्भावे प्रमाणाभावाद्व्यापारकल्पनस्याप्ययोगादित्याह—पदजातेति । व्यतिषक्तबुद्धिर्वाक्यार्थरूपसंसर्गबुद्धिः । सा भवतामपि चेत्पदजातबुद्धिजनितेति संमतं भवति तदा न तावदिहाऽऽवयोर्विगानं विप्रतिपत्तिरस्तीति योजना। एवं सति व्यवधानकल्पन पदार्थबोधव्यवधानेन वाक्याद्वाक्यार्थबोधकल्पनमकारणकमप्रामाणिकमित्यर्थः । यद्वा पदजातबुद्धिजनिता भवति व्यतिषक्तबुद्धिरिति तावदिह लोके प्रसिद्धमित्यध्याहारः । भवतामपि चेदिह न विगानमस्ति तदा व्यवधानकल्पनमकारणकमिति योजना । पदजाततात्पर्यजन्या तावद्वाक्यार्थबुद्धिर्व्यवधानपक्षेऽप्यभ्युपेयाऽन्यथा वाक्यस्य निस्तात्पर्यत्वप्रसङ्गादप्रमाणत्वापत्तेरतो नात्र विवदितुमुचितं मानान्तरनिबन्धनपदार्थबोधानां विशिष्टार्थबोधकत्वादर्शनादिति भावः ॥ ३७४ ॥

सु० टी०—ननु काष्ठादेर्ज्वालादिव्यवधिनाऽपि हेतुत्वदर्शनादत्रापि तथेति चेन्नेत्याह—

व्यतिषक्तबुद्धिजनकं सकलं पदजातमित्यनुमतं यदि वः ।
व्यवधानकल्पनविडम्बनया किमिहाञ्जसैव जनकं भवतु ॥ ३७५॥

व्यतिषक्तेति । तत्र दर्शनादस्तु तथाऽत्र तु पदजातमेवोक्तरीत्या व्यतिषक्तधीजनकं संभवति चेत्किं प्रणाड्येत्यर्थः । न च पदार्थस्मृतिर्व्यापारः करणस्य व्यापारानियमान्नियमे वा शक्तिधीजन्यसंस्कारोद्बोधस्यैव पदज्ञानजन्यस्य व्यापारत्वात् । न च पदार्थस्मृतिर्विशेषणधीत्वेनोपेया तस्याः क्वापि विशिष्टबोधाहेतुत्वात् । न चैवं वाक्यार्थबोधस्य स्मृतित्वापत्तिः समानविषयसंस्काराजन्यत्वादिति दिक् ॥३७५ ॥

अ० टी०—ननु व्यवधानेनापि कारणत्वं लोके दृश्यते पाकादौ काष्ठादीनां ज्वालादिव्यवधानेन कारणत्वदर्शनात्तद्वत्पदजातस्यापि व्यवधानेन हेतुत्वे को दोष इति चेन्न दृष्टान्तवैषम्यादित्याह—व्यतिषक्तबुद्धीति । विस्पष्टाऽक्षरयोजना । दृष्टान्ते हि काष्ठादीनां ज्वालादिव्यवधानेन पाकादिहेतुत्वं प्रत्यक्षेणावधृतमिह न तथा कल्पकं प्रमाणमिति वैषम्यं द्रष्टव्यम् ॥ ३७५ ॥

सु० टी०—ननु क्वचित्प्रणाड्याश्रयणमपि दृष्टमरुणयेत्यादाविति

१ क. °ति पिक° ।

भवतु पदार्थस्मृतावेव पदव्यापार इति चेन्न तस्य गत्यभावप्रयुक्तत्वादित्याह—

पारम्पर्यं ह्यगतिकगतिं कारणादाश्रयन्ते
नोत्सर्गेण स्फुरति विदुषां यत्र तत्र प्रणाडी ।
श्रुत्या सोमक्रयमनुगतः साधनत्वेन हित्वा
साक्षाद्भावं ह्यरुणिमगुणः प्रापदेनामशक्तेः ॥ ३७६ ॥

पारम्पर्यमिति । कारणस्य हि साक्षाद्भाव [उ] त्सर्गः स यत्र न स्फुरति तत्र पारम्पर्याश्रयणमगत्याऽनुभवस्येव स्मृतौ न तु तत्संभवेऽपीत्यर्थः । अस्ति चेदमरुणादावित्याह—श्रुत्येति । तृतीयाश्रुत्या क्रयं प्रति साधनत्वेनानुगतोऽरुणिमाऽमूर्तत्वेन साक्षात्तदसामर्थ्यादेनां प्रणाडीं क्रयसाधनीभूतैकहायन्यवच्छेदद्वारा तद्धेतुत्वं प्रापदित्यर्थः ॥ ३७३ ॥

अ० टी०—ननु प्रथमावगतोऽपि साक्षाद्भावः परित्यज्यते यथा 'अरुणयैकहायन्या सोमं क्रीणाति' इत्यत्रारुण्यादेस्तृतीयया साक्षाच्छ्रुतं साधनत्वं परित्यज्य गोद्रव्यव्यवधानेन साधनत्वं कल्पितं तथेहापि किं न स्यादिति चेन्नेत्याह—**पारम्पर्यं हीति** । अगतिकानां मुख्यगतिशून्यानां गतिरगतिकगतिः । यत्पारम्पर्यमाश्रयन्ते विद्वांसस्तामगतिकगतिमेवाऽऽश्रयन्त इति योजना । तद्व्याश्रयणं कारणाद्यथाश्रुतसाक्षाद्भावासंभवात् । यतो विदुषां न्यायोऽत्र यत्प्रकारविदां यत्रोत्सर्गेण प्राप्तः संबन्धसाक्षाद्भावो न स्फुरति घटमानतया नावभासते तत्र हि प्रणाडीपारम्पर्यमिति योजना । तत्रोदाहरणमाह—**श्रुत्येति** । अरुणयेतिवाक्ये श्रुतोऽरुणिमगुणस्तृतीयाश्रुत्या निरपेक्षरवलक्षणया मुख्यया वृत्त्या साधनत्वेन सोमक्रयमुपगतः साक्षात्सोमक्रयसाधनत्वेनारुणयेतितृतीयया करणार्थया संबद्धः श्रुतं साक्षाद्भावं मुख्यसंबन्धं हित्वाऽशक्तेः शक्त्यभावादेनां प्रणाडीं प्रापदिति योजना । तत्र हि गुणादेः साधनत्वं साक्षाच्छ्रुतं न हि तेन सोमक्रयः कर्तुं शक्यते पराश्रयत्वाद्गुणादेः स्वतो निर्व्यापारत्वात् । अतस्तत्र श्रुतमपि मुख्यसंबन्धं परित्यज्य द्रव्यव्यवधानेन प्रणाड्या साधनत्वमास्थीयते । अत्र तु न तथा साक्षाद्भावे काचनानुपपत्तिरतो वाक्यार्थप्रतिपत्तिसमये पदार्थबोधो भवन्नपि न पदशक्तिनिबन्धनः किं तु स्मृतिरेवेति नात्र व्यवधानकल्पनावकाश इति भावः । तथा च 'साक्षाद्यद्यपि कुर्वन्ति' इत्यादि भट्टवचनं न व्युत्पत्तिविषयं किं तु प्रतिपत्तिसमयपदार्थबोधविषयमिति द्रष्टव्यम् ॥ ३७६ ॥

सु० टी०—पदैर्विनाऽप्युपस्थितानां पदार्थानां योग्यतादिज्ञानेऽन्व-

१ क. ग. °दिना ज्ञा° ।

यधीदर्शनादन्यत्रापि पदार्थस्मृतावुपक्षीणानि पदानीति शङ्कते श्वेतिमा-मानमिति द्वाभ्यां—

श्वेतिमानमभिपश्यतः पुरः शृण्वतस्तदनु हेषितध्वनिम् ।
तद्वदत्र खुरमुद्गरस्वनं श्वेतरूपतुरगोऽटतीति धीः ॥ ३७७ ॥
तद्वदत्र पदजातबुद्धिभिर्बोधिताखिलपदार्थहेतुकः ।
सर्वशब्दविषयार्थसंगतेः प्रत्ययो भवति योग्यतादिभिः ॥ ३७८ ॥

यथा ह्येवंविधस्य पुंसः श्वेताश्वकर्तृकधावनान्वयधीश्चाक्षुपादिपदार्थ-करणिकैव न प्रत्यक्षादिजन्या दूरस्थत्वाल्लिङ्गाभावाच्चेत्येवमत्रापि पद-जातबुद्धिबोधितसर्वपदार्थकरणकः संसर्गबोधो भवतीत्यर्थः । न चास्य बोधस्याशाब्दत्वं शब्दमूलकत्वादिति भावः ॥ ३७७ ॥ ३७८ ॥

अ० टी०—ननु मानान्तराधिगतानामपि पदार्थानां संसर्गबोधकत्वं प्रसिद्धं तथा चेहापि पदार्थबोधानन्तरं भवत्संसर्गबोधः पदार्थबोधजन्य इति निश्चीयतेऽतस्तदविरोधेन पदजातस्य संसृष्टार्थबोधकत्वं पदार्थबोधव्यवधाने[नै]ति कल्प्यमिति वक्तुमर्थानां संसर्गबो-धकत्वप्रकारं पूर्वपक्षी कथयति—श्वेतिमानमिति । द्रव्यविशेषानिश्चयाच्छ्वैतिमानम-भिपश्यत इत्युक्तं श्वैत्यमात्रं चक्षुषा पश्यतस्तदनन्तरमेव हेषितध्वनिमश्वजात्यसाधारणशब्दं शृण्वतस्तद्वदत्र हेषितध्वन्युदयस्थले खुरमुद्गराभिघातस्वनवत्काठिनं खुराभिघातशब्दं च शृण्वतः पुंसो विभिन्नेन्द्रियावगतरूपशब्दाभ्यां श्वेतरूपतुरगोऽटतीति धीर्भवतीत्यर्थः ॥ ३७७ ॥

तथा च पदार्थधियां वाऽवगतपदार्थानां वा संसर्गधीहेतुत्वमिहापि कल्पनीयं पदानां तु पदार्थधीष्वेवोपक्षय इति स एवाऽऽह—तद्वदत्र पदजातेति । उक्तदृष्टा-न्तवदत्र वाक्ये पदजातबुद्धिभिः प्रतिपदं क्रमेणोत्पन्नमतिभिर्बोधिता येऽखिलपदार्थास्तद्धे-तुकः सर्वशब्दविषयाणामर्थानां संगतेः संसर्गस्य योग्यतादिभिराकाङ्क्षायोग्यतासंनिधानैः सहकारिभिः प्रत्ययो भवतीति योजना । संसर्गविषयः प्रत्यय उक्तविधया भवती-त्यर्थः ॥ ३७८ ॥

सु० टी०—दूषयति—

नैतत्क्लृप्तनिमित्ततोऽपि घटते संसर्गधीरीदृशी
श्वेताश्वस्त्वरितोऽभिधावतितरामित्यादिका योत्थिता ।
कार्यं क्लृप्तनिबन्धनं यदि भवेन्नास्यापरं कारणं
कल्प्यं तेन पदार्थजातजनिता नैषा मतिर्लिङ्गजा ॥ ३७९ ॥

नैतदिति । न तावत्संसर्गज्ञानं पदार्थप्रमाणकं कल्प्यं गौरवात् । क्लृप्तप्र-

माणादेवोपपत्तेः पदार्थजन्यत्वे चाशाब्दतापत्तेः शब्दमूलकत्वेनैव शाब्द-त्वेऽतिप्रसङ्गाद्रूपलिङ्गकानुमितेरपि चाक्षुषत्वापाताच्च । तस्माल्लिङ्ग-जैवैषा मतिर्न पदार्थजन्येत्यर्थः ॥ ३७९ ॥

अ० टी०—परिहरति सिद्धान्ती—नैतदिति । कुत इत्यत आह—क्लृप्तनिमि-त्तत इति । श्वेतोऽश्वस्त्वरितोऽभिधावतितरामित्यादिकया प्रतीतिरुत्थितेदृशी संसर्गधीः क्लृप्तनिमित्ततोऽपि घटत इति योजना । तथा हि—अत्रत्यपदार्थबोधे क्लृप्तं हि निमित्तम-नुमानं गम्यते खुरशब्दलिङ्गेन चतुष्पदोऽनुमानाद्धेषितशब्देनाश्वानुमानाच्छ्वेतद्रव्यसामान्यस्य च दृष्टस्य विशेषापेक्षत्वाद्द्रव्यान्तरस्यात्रासंभवमन्यतो निश्चित्य परिशेषादश्व एवेति निश्चय-सिद्धेरित्यर्थः । अत्रानुमानातिरिक्तमेव कारणं कल्प्यतामित्याशङ्क्याप्रसिद्धकल्पनातः प्रसि-द्धोपादानं न्याय्यमित्यभिप्रेत्य परिहरति—कार्यमिति । क्लृप्तनिबन्धनमेव कार्यं यदि भवेत्संपद्येत तदाऽस्य कार्यस्यापरं कारणं न कल्प्यं सर्वलोकप्रसिद्धेनानुमानेनैवात्र पदार्थ-संसर्गबोधसिद्धौ मानान्तरजन्यत्वं तस्य न कल्पयितुं शक्यते विरोधादित्यर्थः । येनैवं हेतुनाऽनुमानगृहीतपदार्थसंसर्ग एवायमत्रभासत इति स्थितं तेनैषा मतिः पदार्थजातजनिता न किं तु लिङ्गजेति सिद्धमित्यर्थः ॥ ३७९ ॥

सु० टी०—ननु यथाऽऽनुमानिकोऽप्यर्थः प्रत्यक्षेणापि गृह्यत एवं पदार्थप्रमाणेनापि गृह्यतामिति चेन्न प्रत्यक्षवत्पदार्थानां प्रामाण्यस्य क्वाप्यक्लृप्तत्वादित्याह—

पादार्थं न पृथक्प्रमाणमपरं नानाप्रमाणोद्भवं
नाप्येतत्फलमत्र पक्षयुगले कल्प्यं निमित्तान्तरम् ।
क्लृप्तं लिङ्गमतोऽपि निर्वहति चेत्संसर्गधीरीदृशी
पादार्थी न पृथक्प्रमा न च फलं नानाप्रमाणोद्भवम् ॥ ३८० ॥

पादार्थमिति । पदार्थात्मकमित्यर्थः । तथा हि न तावत्पदार्थात्मकं मानान्तरं तत्फलं च श्वैत्याश्वत्वादिबोधकप्रत्यक्षलिङ्गात्मकनानाप्रमा-णोद्भवं विशिष्टज्ञानमङ्गीकर्तुमुचितं यतः पक्षद्वयेऽपि निमित्तान्तरक-ल्पनापत्तिरित्यर्थः । अत्र फले पदार्थानां निमित्तत्वं प्रत्यक्षलिङ्गयोः संभूयैकार्थबोधकत्वमिहैव कल्प्यमिति गौरवम् । लिङ्गादिकं तु क्लृप्त-मित्याह—क्लृप्तमिति । लिङ्गमिति प्रत्यक्षस्याप्युपलक्षणम् । ननु लिङ्ग-मपि श्वैत्याश्वत्वधावनवैशिष्ट्यव्याप्तं नैकमस्तीत्यत्राऽऽह—अतोऽपीति ।

श्वैत्यप्रत्यक्षानन्तरमयं श्वेतोऽश्वात्मको हेषाकर्तृत्वान्मतवदित्यश्वे सिद्धेऽयं च धावति खुरध्वनिविशेषकर्तृत्वादिति लिङ्गादेव तदर्थसिद्धेर्न तद्व-(द्व)यं कल्प्यमित्यर्थः ॥ ३८० ॥

अ० टी०—एवं तर्हि यैर्मानैः श्वैत्याद्यर्थाः प्रसिध्यन्ति तैरेव तेषां संसर्गांशोऽपि प्रतीयतां यथा पदैरेवं पदार्थविषयैस्तैषां संसर्गबोधो भवतामिति चेन्नेत्याह—पादार्थमिति । पादार्थं पदार्थजनितमपरं प्रत्यक्षादिभ्यो भिन्नं पृथक्स्वतन्त्रं प्रमाणं न भवति पदार्थविषयकज्ञानाद्वाक्यार्थज्ञानं पदार्थनिबन्धनं प्रमाणान्तरं न भवतीत्यर्थः । एवं तत्संसर्गज्ञानं नानाप्रमाणोद्भवं चक्षुराद्यनेकप्रमाणोद्भवं नानापदोद्भवं वा फलं नाप्यनेकेषां प्रमाणानामिदमेकं फलं भवतीत्यर्थः । कुत इत्यत आह—अत्र पक्षेति । पृथक्प्रमाणत्वपक्षे नानाप्रमाणफलत्वे च निमित्तान्तरं कल्प्यं यत इत्यर्थः । नानाप्रमाणानां संभूयैकार्थबोधकत्वस्यान्यत्राप्रसिद्धेरिति भावः । अगत्येह तत्कल्प्यतामिति चेन्नेत्याह—क्लृप्तं लिङ्गमिति । लिङ्गविधया बोधकत्वं प्रसिद्धमित्यर्थः । फलितमाह—अतोऽपीति । क्लृप्तादेवास्मादीदृशी श्वेतोऽश्वो धावतीत्येतादृशी संसर्गधीर्निर्वहति चेत्पादार्थी न पृथक्प्रमा न नानाप्रमाणोद्भवं फलमपीति सिद्धमित्यर्थः । तस्मात्काप्यर्थानां संसर्गबोधकत्वस्यासंभवाच्छब्दश्रवणानन्तरं भवन्त्योऽप्यर्थधियो न वाक्यार्थधीहेतवो नापि शब्दजनिताः प्रमितयः प्रागुक्तन्यायेन पदार्थविषये तासां स्मृतित्वादतः परिशेषात्पदजातवशादेव पूर्वोक्तविशिष्टार्थप्रत्ययसिद्धिरिति तात्पर्यार्थः ॥ ३८० ॥

सु० टी०—मतद्वयं निरस्तमुपसंहरति—

> नासंसृष्टमतो वदन्ति वचनान्याहुः क्रियासंगतं
> योग्येनान्वितमेव केवलममून्याहुः स्वमर्थं यतः ।
> एवं सत्यपवर्जितक्रियमलं निष्पन्नरूपं सदौ
> संसर्गादिविवर्जितं च वदितुं वस्तुस्वरूपं श्रुतिः ॥ ३८१ ॥

नासंसृष्टमिति । अतः किमित्यत आह—एवमिति । अन्वितशक्तत्वे सत्यपि विरोधाद्भागलक्षणया श्रुतिः स्वस्य जीवस्य रूपमज्ञातब्रह्मैक्यं बोधयितुमलं पर्याप्तेत्यर्थः । कार्यान्वयनिरासफलमपवर्जितक्रियमित्यभिहितान्वयनिरासफलं संसर्गादिविवर्जितमिति ॥ ३८१ ॥

---

१ क. ग. °त्वासंमत° । २ ग. °न्ति-नच तान्या° ।

अ० टी०—तस्मादन्यान्विते पदशक्तिरित्यस्मदुक्तं स्थितमित्युपसंहरति—**नासंसृष्टमत इति**। आहुः क्रियासंगतमित्यत्र नकारोऽनुषञ्जनीयः। तथा चायमर्थः—वचनानि पदान्यसंसृष्टमर्थं न वदन्ति नापि कार्यान्वितमिति। कुत इत्यत आह—**योग्येनेति**। केवलं कार्याकार्यत्वविशेषणरहितं सामान्यतो योग्येनान्वितमेतमेव स्वं स्वमर्थममूनि पदानि यत आहुरिति योजना। न चैवंसति पदान्तरवैयर्थ्यप्रसङ्ग इति वाच्यं तस्यार्थविशेषाभिव्यक्त्यर्थत्वादिति भावः। तदेवं प्रवर्तकादिवाक्येष्वपि वस्तुस्वरूपे शब्दशक्तिर्न कार्यान्वित इति स्थिते वेदान्तानामपि कार्यानपेक्षणात्पूर्वोक्तप्रकारेणाखण्डे ब्रह्मणि प्रामाण्यमविरुद्धमित्याह—**एवं सतीति**। एवं सति श्रुतिनिष्पन्नरूपं वस्तु वदितुमलमित्यन्वयः। वस्तुविशेषणद्वयं स्पष्टार्थम्। संसर्गादीत्यादिपदेन भेदवैशिष्ट्ये गृह्येते॥ ३८१॥

सु० टी०—नन्वस्तु नियोगवादिनामन्विताभिधानाग्रहस्तद्बललभ्यत्वान्नियोगवाक्यार्थस्याखण्डवादिना तूभयथाऽप्यविशेषादयुक्त इति चेत्तत्राऽऽह—

> अभिहितघटनाऽथ वाऽन्विताना-
> मभिहितिरस्त्वथ वा न पक्षपातः।
> क्वचिदपि समयेऽस्ति नः कदाचि-
> द्बहुघटनात्मकवस्तुनिष्ठवाक्ये॥ ३८२॥

अभिहितेति। 'तमेतं वेदानुवचनेन' [बृह० ४।४।२२] इत्यादावन्विताभिधानोपयोगादत्र तन्निरूपितं वस्तुतस्त्वभिहितान्वयोऽन्विताभिधानं वास्तु नास्माकं कोऽपि पक्षपातः। यतो बहुसंसर्गनिष्ठवाक्य एव तयोरुपयोगो न च तादृशं वाक्यमस्माभिर्विचारयिषितमित्यर्थः॥ ३८२॥

अ० टी०—नन्वखण्डार्थवादिनां कथमेवमन्विताभिधानवादे कार्यवादिनामिव कार्यान्वितत्ववादे निर्बन्ध इति चेत्सत्यं वस्तुतस्तथैव नास्ति निर्बन्ध इत्याह—**अभिहितघटनाऽथवेति**। बहुघटनात्मकवस्तुनिष्ठवाक्ये संसर्गात्मकवस्तुनिष्ठवाक्येऽभिहितानामन्वयो वाऽस्त्वन्वितानां वाऽभिहितिर्न तत्रास्माकमतीव पक्षपातोऽस्यास्माभिर्विचारयिषितत्वाभावादिति समुदितोऽर्थः। स्पष्टाऽत्र पदयोजना॥ ३८२॥

सु० टी०—आस्माकीने तु महावाक्ये न तयोः संभव इत्याह—

अभिहितघटना न चोपपन्ना
परदृशि नाभिहितिस्तथाऽन्वितानाम् ।
अनधिकविकलार्थगोचरत्वा-
न्न तदुभयं श्रुतिमस्तके पदानाम् ॥ ३८३ ॥

अभिहितघटनेति । परदृशि केवलचिदात्मन्युभयमप्यनुपपन्नं वेदान्तस्थ-तत्त्वमस्यादिपदानामेकधैवानुद्रष्टव्यमित्यादिश्रुतिबलेनाखण्डमात्रविष-त्वादित्यर्थः ॥ ३८३ ॥

अ० टी०—अस्माभिर्विचारयितुमिष्टे तु वेदान्तवाक्ये नोभयोरपि संभवस्तस्यैकरसार्थनिष्ठ-त्वादित्यनादरे कारणमाह—अभिहितघटना न चेति । अभिहितानामर्थानां घटना परदृशि न चोपपन्ना तथाऽन्वितानामर्थानामभिहितिरपि नोपपन्नेति योजना । परदृशीति । असङ्गस्व-प्रकाशचिदात्मनोऽनिर्देश्यात्तस्यान्वितत्वेनानन्वितत्वेन वाऽभिधानायोग्यता ध्वनिता । अतस्ताद्द-ग्वस्तुविषयस्य शब्दस्य न संसर्गादिगोचरत्वमित्याह—अनधिकेति । अधिकेत्यन्वितत्वमु-च्यते । विकलेति केवलमुक्तम् । यद्यात्मवस्तु केवलं तथाऽप्यन्वयप्रतियोगितया स्वरूपेण वा नाभिधानयोग्यं स्वप्रकाशत्वादिति विकलोक्त्यभिप्रायो द्रष्टव्यः । अधिकश्चासौ विकलश्च स चासावर्थश्चेत्यधिकविकलार्थः । नाधिकविकलार्थोऽनधिकविकलार्थस्तद्गोचराणामिति विग्रहः। उक्तार्थमन्यत् ॥ ३८३ ॥

सु० टी०—तत्र पक्षद्वयेऽपि पदार्थज्ञाने विशेषमाह—

अभिहितघटना यदा तदानीं
स्मृतिसमबुद्धियुगं पदे विधत्तः ।
परदृशि पुनरन्विताभिधाने
पदयुगलात्स्मृतियुग्ममेव पूर्वम् ॥ ३८४ ॥

अभीति । भट्टमते हि पदानां पदार्थधीमात्रपर्यवसानात्स्वभावशक्त्या साक्षाद्वाचकमेव पदं न स्मारकम् । न च शक्तपदमात्रकरणकमपि ज्ञानं व्युत्पत्तिकालाधिगत(*विषयत्वात्स्मृतिः । न हि गृहीतग्राहित्वमात्रं स्मृतित्वं किं तु संस्कारमात्रजन्यत्वम् । अधिगत )गोचरं तु ज्ञानमनु-

---

* सं. पुस्तकस्थोऽयं ग्रन्थः ।

वादः । स्मृतिसमत्वाच्च तत्र स्मृतिव्यवहारोऽत एव ' स्मारकान्न विशिष्यते ' इत्युक्तं तेनास्मिन्पक्षे तत्त्वंपदे पदशक्तिजन्यत्वात्स्मृतिसमं शबलपदार्थज्ञानद्वयं परमात्मनि जनयतः । अन्विताभिधाने तु पदशक्तेरन्वितविषयत्वात्केवलपदार्थविषयं ज्ञानद्वयं न पदकरणकं किं तु संबन्धिदर्शनोद्बुद्धसंस्कारमात्रजन्मत्वात्स्मृत्यात्मकमेव विधत्तः । इदमभ्युपेत्योक्तम् । व्यतिपक्तेत्यत्र स्मृतेर्व्यापारत्वनिरासात् । पूर्वमिति भागलक्षणातः पूर्वमित्यर्थः ॥ ३८४ ॥

अ० टी०—तर्हि किमित्यन्विताभिधानसमर्थने यत्न आस्थित इत्याशङ्कयास्त्यत्र प्रकृतोपयोगोंऽशत इत्यभिप्रेत्य प्रथमं पदद्वयगतमुपजीव्यं दर्शयति—अभिहितघटनायदेति । पदे तत्त्वंपदे स्मृतिसमबुद्धियुगमित्यभिहितान्वयपक्षे पदजत्वात्पदार्थधीर्न स्मृतिः परं त्ववगतविषयत्वात्स्मृतिसमेत्यर्थः । पदयुगं परदृशि स्मृतिसमबुद्धिं विधत्त इत्यन्वयः । अन्विताभिधाने पुनः पूर्वं पदार्थप्रतीतिसमये पदयुगलात्परदृशि स्मृतियुग्ममेवेति योजना । अस्मिन्पक्षे त्वन्वितविषयत्वात्पदशक्तेः केवलार्थधीः स्मृतिरेवेत्यर्थः । अत उभयमतानुरोधेन तत्त्वंपदार्थविषया धीः स्मृतिसमा स्मृतिरेवेति यथा तथाऽस्तु । एतावताऽप्यखण्डार्थनिष्ठता वाक्यस्य न विहन्यत इति भावः ॥ ३८४ ॥

सु० टी०—वाक्यार्थबुद्धौ विशेषमाह—

स्मृतिसमपदजन्यबुद्धियुग्मा-<br>त्परदृशि मोहनिवर्तनं परेषाम् ।<br>परदृशि पदजस्मृतिद्वये स्या-<br>त्पदयुगलात्प्रमितेः समुद्भवो नः ॥ ३८५ ॥

स्मृतीति । परेषामभिहितान्वयवादिनां मोहनिवर्तनमखण्डवाक्यार्थज्ञानं स्मृतिसमात्पदार्थज्ञानद्वयान्न तु शब्दात् । अस्मन्मते तु पदद्वयादेवान्वितशक्तात्पदार्थस्मृतिद्वये सत्यखण्डधीरित्यभिमतसिद्धिसाम्येऽपि न्यायत्वादेवान्विताभिधानमिष्यते ॥ ३८५ ॥

अ० टी०—उक्तं मतद्वयं विभज्योभयत्र फलं वदन्नन्विताभिधानवादे विशेषमभिदधानस्तत्र यत्नाधिक्ये कारणं सूचयति—स्मृतिसमपदेति । परेषामभिहितान्वयवादिनां परदृशि परमात्मनि प्रत्यग्रूपे स्मृतिसमं यत्पदद्वयजन्यबुद्धियुग्मं तस्मान्मोहनिवर्तनमज्ञानादिबन्धनिवर्तकं साक्षाद्ब्रह्मज्ञानमिति सिध्यति । नोऽस्माकमन्विताभिधानवादिनां परदृशि पदजस्मृतिद्वये सति पदयुगलात्प्रमितेः संसर्गबोधस्य समुद्भवः स्यादिति योजना ।

यद्यप्येवं विवक्षितार्थसिद्धिः पक्षद्वयेऽपि समाना तथाऽप्यभिहितान्वयवादे पदयोः पदार्थयोरेवोपेक्षयाऽऽत्तयोश्च प्रागवगतत्वात्तज्ज्ञानस्मृतिप्रायत्वाद्वाक्यार्थज्ञानं न शाब्दी प्रमा स्यात् अन्विताभिधानवादे तु पदार्थस्वरूपस्मारकत्वेऽपि पदयोस्तत्रापर्यवसानादन्वयस्य शब्दत्वात्पदजन्यज्ञानान्तरस्य प्रमाणरूपस्य चाभावाद्वाक्यार्थज्ञानं भवति साक्षाच्छाब्दी प्रमेति विशेषदर्शनादन्विताभिधानवादाग्रहोऽस्माकमिति भावः ॥ ३८५ ॥

सु० टी०—इदानीं भूतस्य भव्यार्थत्वाद्भव्यभावनाशेषत्वेन भूतब्रह्मोपदेश इति भाट्टः प्रत्यवतिष्ठते—

औदासीन्यप्रच्युतिप्रापकेऽर्थे
लिङ्लोडादेर्लोकतो ज्ञातशक्तेः ।
पुंसो वेदे प्रेरकत्वेन कल्प्या
लिङ्लोडादेर्भावनैवानृतन्त्रे ॥ ३८६ ॥

औदासीन्येति । औदासीन्यप्रच्युतेः प्रवृत्त्यात्मिकायाः प्रापके प्रवर्तनासामान्य आज्ञादिसर्वप्रवर्तकधर्मानुगते लोकव्यवहारादवगतशक्तेर्लिङादेरपुरुषतन्त्रे वेदे पुंसे यागादौ प्रेरकत्वेनाऽऽज्ञाद्यसंभवात्प्रवर्तकशब्दव्यापारात्मिकाऽभिधा भावनैव प्रवर्तनात्वेन वाच्येति कल्प्यत इत्यर्थः ॥ ३८६ ॥

अ० टी०—तदेवं कार्यान्विते पदशक्तिग्रहात्कार्यविषयमेव वेदप्रामाण्यमिति प्रत्यवस्थानस्योत्तरं दत्तं तत्प्रसङ्गेन चान्विताभिधानं निरूपितमिदानीं भावनावादनिरासेन वेदान्तानां ब्रह्मणि प्रामाण्यं दृढीकर्तुं तमुत्थापयति—औदासीन्येति । पुंप्रवृत्तिरौदासीन्यप्रच्युतिस्तत्प्रापकोऽर्थ आज्ञादिः पुंस इति पदं प्रथमं योज्यम् । पुंस औदासीन्येति । औदासीन्यप्रच्युतिप्रापक आज्ञादावनुगते प्रवर्तकात्मनि लिङ्लोडादेर्लोकतो वृद्धव्यवहाराज्ज्ञातशक्तेर्विज्ञातशक्तित्वादनृतन्त्रे वेद आज्ञादिपुरुषाभिप्रायाभावात्तत्र लिङ्लोडादेर्वाच्या भावनैव प्रेरकत्वेन कल्प्येति योजना । यद्वा लोकतो लोके लिङ्लोडादेरौदासीन्यप्रच्युतिप्रापकेऽर्थे ज्ञातशक्तेस्तस्य चानृतन्त्रे वेदे श्रूयमाणलिङ्लोडादेः पुंसः प्रेरकत्वेन भावनैव वाच्या कल्प्या तत्राऽऽज्ञाद्यभावादिति योजना । एवमपि प्रवर्तनात्मनि लिङादिशक्तेर्लोकवेदयोः समत्वान्न कार्यवादिन इव भावनावादिनो वैयधिकरण्यमिति भावः ॥ ३८६ ॥

सु० टी०—तर्हि लौकिकेऽपि सैवास्तु प्रवर्तिकेति चेन्न दृष्टेनैवाऽऽज्ञाद्यन्यादिनोपपत्तेरित्याह—

आज्ञाद्यर्थः प्रेरकः पौरुषेये
लिङ्लोडादेर्भावना वेदवाक्ये ।

पुंसोऽभावात्तद्गताज्ञाद्यभावा-

त्पुंसंबद्धे प्रेरकस्ते हि वाक्ये ॥ ३८७ ॥

आज्ञादीति । लोके हि पौरुषेयत्वाद्वाक्यानामाज्ञादिः संभवति वेदे तु वक्तुरभावेन तदभावादभिधा भावनैवेत्युभयानुगतं प्रवर्तनात्वमेव लिङर्थ इत्यर्थः ॥ ३८७ ॥

अ० टी०—आज्ञादिसापेक्षत्वेन तन्निरपेक्षत्वेनोपाधिनोक्ते लोकवेदयोर्लिङादिवाच[क]भेदं स्पष्टयति—आज्ञाद्यर्थः प्रेरक इति । एवं व्यवस्थायां हेतुमुत्तरार्धेनाऽऽह—पुंसोऽभावादिति । अभावादिति च्छेदः । तद्गतेति वेदगतेत्यर्थः । ते ह्याज्ञादय इत्यर्थः ॥ ३८७ ॥

सु० टी०—ननु यदि वेदे पुंसोऽभावः कस्तर्हि तत्र भावकः को वा भाव्यः कुतो वा तद्व्यापारो भावनेत्याशङ्क्याऽऽह—

लिङ्लोडादिर्भावकस्तत्र भाव्या-

नुष्ठेयेऽर्थे पुंप्रवृत्तिः प्रसिद्धा ।

लिङ्लोडादेः पुंप्रवृत्त्यंशनिष्ठो

व्यापारो यस्तं विदुर्भावनेति ॥ ३८८ ॥

लिङ्लोडादीरिति । चेतनस्थानीयो लिङादिरेव तत्र प्रवर्तकतया भावको यागादावनुष्ठेये पुंप्रवृत्तिर्भाव्या प्रवर्तनात्मकव्यापारे प्रवृत्तेरेव भाव्यत्वौचित्याद्भाव्यनिष्ठत्वाच्च तद्व्यापारस्य पुमभिप्रायस्थानीयस्य भावनात्वमित्यर्थः । भाव्यनिष्ठो हि भावकव्यापारो भावनाऽधिश्रयणादिर्धात्वर्थो न भाव्यनिष्ठो विक्लित्त्यादिश्च न भावकव्यापार इति तद्व्यवच्छेदः ॥ ३८८ ॥

अ० टी०—यदि वेदे भावना लिङर्थः कस्तर्हि तस्या भावको भाव्यः करणमितिकर्तव्यतारूपं चेति शीक्षायामाह—लिङ्लोडादिर्भावक इति । भावको भावनाभिव्यञ्जकः । अनुष्ठेयोऽर्थो यागादिर्धात्वर्थः । पुंप्रवृत्तिः प्रयत्न औदासीन्यप्रच्युतिरिति यावत् । शब्दभावनास्वरूपमाह—लिङ्लोडादेः पुंप्रवृत्त्यंशनिष्ठ इति । अंशनिष्ठस्तद्विषयक इत्यर्थः । पुरुषप्रवृत्तिरूपभाव्यांशविषयको यो लिङादिव्यापारस्तं भावनेति विदुर्भावनावादिन इत्यर्थः ॥ ३८८ ॥

सु० टी०—किं पुनरस्याः करणमितिकर्तव्यता चेत्यत्राऽऽह—

करणमिह लिङादेर्ज्ञानमेवाङ्गभागः
पुनरभिरुचिहेतुर्दृश्यते च प्रशंसा ।
विधिरयमिह तन्त्रे जैमिनीये न कार्यं
न च भवति विधिर्नः श्रेयसो हेतुरर्थः ॥ ३८९ ॥

करणमिति । गृहीतसंगतिकलिङादिज्ञानमेवास्याः करणं तत एव पुंस्प्रवृत्तेः । इतिकर्तव्यता तु वाक्यशेषस्था प्रशंसा 'वायुर्वै क्षेपिष्ठा' इत्यादिरभिरुचिहेतुत्वेन प्रवृत्त्युपकारित्वादित्यर्थः । एवं हि लिङादिवाच्या भावनाः स्वाध्यायविधिना विधीयन्ते लिङादिर्भावयेत् । किं पुरुषप्रवर्तनं केन गृहीतसंगतिकस्वज्ञानेन कथमार्थवादिकप्राशस्त्यज्ञानानुगृहीतेनेति । तथा ह्यध्ययनसंस्कृतैरक्षरैर्यथा शक्यते तथा पुंस उपकर्तव्यमिति हि तस्यार्थे दृष्टे संभवत्यदृष्टाकल्पनात् । शक्यते च लिङादिभिर्गृहीतशक्तिकैरेव पुंस्प्रेरणं कर्तुमिति तत्रैव लिङादीन्नियुञ्जानस्य स्वाध्यायविधेरेव श्रुतसामर्थ्यानुमितैकदेशवतोऽयं सर्वो व्यापार इति । ननु नियोग इष्टसाधनता वा लिङर्थोऽस्तु किमलौकिकया शब्दभावनयेति चेत्तत्राऽऽह—विधिरिति । अपूर्वे शक्तिग्रहासंभव उक्त इष्टसाधनताधीश्चान्यतःसिद्धिशङ्कया नावश्यं प्रवृत्तिहेतुरित्यभिधेवास्माकं विधिरित्यर्थः ॥ ३८९ ॥

अ० टी०—एवं भावकं भाव्यं चोक्त्वा करणमितिकर्तव्यता चेत्यंशद्वयं विशदयति—करणमिति । इह शब्दभावनायां लिङादेर्ज्ञानमेव करणं लिङादिशब्देन तद्व्यापारो भावना लक्ष्यते भावनाज्ञानं करणमित्यर्थः । स्वज्ञानकरणिका शब्दभावनेति मीमांसकप्रसिद्धिः । अभिरुचिहेतुः प्रशंसा पुनरङ्गभागो दृश्यते । पुंसः कर्मसु प्ररोचकार्थवादजन्या प्रशंसा कर्मादिस्तुतिरिहेतिकर्तव्यताभागो दृश्यते । तत्र तत्र विधिसंनिधौ पुंप्रवृत्त्यात्मकभाव्यनिष्पादन उपकारकत्वेन श्रियत इत्यर्थः । जैमिनीये तन्त्रे शास्त्रे येयमुपपादितभावनाऽयं विधिर्लिङाद्यर्थो न कार्यं नियोगो विधिर्भवति । न च नापि श्रेयसो हेतुरर्थ इष्टसाधनत्वरूपोऽर्थो विधिर्भवति नोऽस्माकं मीमांसकानां जैमिनीयानामिति योजना ॥ ३८९ ॥

---

१ क. ग. °वृत्तेन इ° । २ क. ग. °भना न ह्य° ।

सु० टी०—तर्हि तस्याः प्रत्ययार्थत्वात्तत्प्राधान्येनैवार्थान्तराणामन्वयः स्याद्गुरोरिव नियोगप्राधान्येनेति चेन्न प्रत्ययार्थत्वेऽपि कर्तृसंख्यादिवद्गुणभावेनान्वयाविरोधादित्याह—

विधिरिह गुणभूतः प्रत्ययार्थोऽपि नित्यं
भवति च पुरुषोत्था भावनाऽस्य प्रधानम् ।
भवति दशलकारप्रत्ययैः साऽभिधेया
विधिविहितलकारैर्भावना शब्दहेतुः ॥ ३९० ॥

विधिरिति । क्रियापेक्षयैव सर्वेषामन्वयादर्थभावनाया एव प्राधान्यमित्याह—नित्यमिति । पुरुषोत्था पुंव्यापारात्मिकाऽर्थभावनाऽस्याभिधारूपस्य विधेः प्रधानमित्यर्थः । कथमेकस्य प्रत्ययस्यानेकभावनावाचित्वमित्याशङ्क्याऽऽख्यातत्वविधित्वरूपभेदेनेत्याह—भवतीति । शब्दहेतुः शब्दव्यापाररूपेत्यर्थः ॥ ३९० ॥

अ० टी०—तर्हि पदान्तरार्थानामनया शब्दभावनया सहान्वयप्रकारः कथमित्यपेक्षायां तमाह—विधिरिहेति । प्रत्ययार्थोऽपि विधिः शब्दभावनात्मेहार्थकदम्बे गुणभूत एव नित्यं न प्रधानभूत इत्यर्थः । तर्हि किमत्र प्रधानं तदाह—भवति चेति । एकस्मिन्वाक्ये प्रत्ययार्थत्वेऽपि द्वयोः प्राधान्यायोगात्क्रियाकाङ्क्षया चेतरेषामन्वयादर्थभावनात्मिका पुंक्रियैवात्र प्रधानमित्यर्थः । कथमेकस्य प्रत्ययस्य भावनाद्वयवाचित्वमिति चेन्नायं दोषो रूपभेदे द्वयवाचकत्वोपपत्तेरित्याह—भवति दशलकारेति । साऽर्थभावना दशलकारप्रत्ययैस्तिबादिभिः सर्वैरेव लकारैरभिधेया भवति । शब्दहेतुर्भावना शब्दभावना विधौ विहितलकारैर्लिङादिभिरेवाभिधेयेत्यनुवर्तते । तथा च लिङस्तिङ्त्वेन लिङ्त्वेन चाऽऽकारभेदादुभयविधभावनावाचकत्वोपपत्तिरित्यर्थः ॥ ३९० ॥

सु० टी०—क्रियात्वाविशेषेऽपि कथमेतस्या एव प्राधान्यं नेतरस्या इति चेदिष्टानिष्टभाव्यकत्वाभ्यामित्याह—

भवति च पुरुषार्थकर्मिकेयं
पुरुषनिमित्तकभावना न तद्वत् ।
भवति तु विधिशब्दकर्तृकाऽन्या
न हि निरवद्यपुमर्थता प्रवृत्तेः ॥ ३९१ ॥

भवति चेति । अर्थभाव ( * ना हि स्वर्गादिकार्मिका फलवत्त्वात्प्रधानं

---

* क. पुस्तकेऽयं ग्रन्थो नास्ति ।

न तु विधिव्यापाररूपाभिधा कष्टप्रवृत्तिसाध्य )कत्वादित्याह—न तद्वदिति । निरवद्येति । साक्षादिति शेषः ॥ ३९१ ॥

अ० टी०—इदानीमर्थभावनाया अपि भाव्याद्यंशानाह—भवति च पुरुषार्थेत्यादिना । इयं पुरुषनिमित्तकभावनाऽर्थात्मिका पुरुषार्थकर्मिका स्वर्गादिपुरुषार्थभाव्या भवतीत्यर्थः । उपलक्षणमेतत्करणेतिकर्तव्यत्वयोः । धात्वर्थयागादिकरणं प्रयाजाद्यङ्गजातमितिकर्तव्यतेति योज्यम् । अन्या तु या विधिशब्दकर्तृका लिङादिशब्दव्यापारात्मिका शब्दभावना सा न तद्वदर्थभावनावत्पुरुषार्थभाव्या न भवतीति योजना । कुत इत्यत आह—न हीति । पुंप्रवृत्तिर्हि तस्या भाव्या न हि तस्याः प्रवृत्तेर्निरवद्यपुमर्थत्वं क्लेशरूपत्वादित्यर्थः ॥ ३९१ ॥

सु० टी०—भावनात्वाविशेषे कुतोऽयं विशेष इति चेत्तत्राऽऽह—

अभिमतपशुपुत्रवृष्टिनाक-
प्रभृतिकभाव्यगता हि भावनेयम् ।
अनभिमतसुदुष्करातिदुःखां
नयति तु भाव्यपदं प्रवृत्तिमन्या ॥ ३९२ ॥

अभिमतेति । इयं ह्यर्थभावनाऽन्तरङ्गतया समानप्रत्ययोपात्तविधिश्रुत्याऽवरुद्धा समानपदोपात्तमपि धात्वर्थमुल्लङ्घ्याभिमतपशुपुत्रादिकमेव भाव्यमङ्गी करोत्यनिष्टभाव्यायामस्यां सत्यां चेतनस्य प्रवर्तयितुमशक्यत्वात् । अपरा पुनरन्यभाव्यकत्वे प्रवर्तनात्वव्याघातादनभिमतामपि प्रवृत्तिमेव दुःखहेतुत्वाद्दुष्करां भाव्यांशं नयति प्रापयतीत्यर्थः ॥३९२॥

अ० टी०—पुरुषार्थकर्मिकार्थभावनेत्युक्तं तदेव स्पष्टयति—अभिमतेति पूर्वार्धेन । तद्विलक्षणं शब्दभावनाभाव्यं विभजत उत्तरार्धेन—अनभिमतेति । नयति पुरुषमिति शेषः । सुगममन्यत् ॥ ३९२ ॥

सु० टी०—नन्वेवं लिङादिभिर्धात्वर्थान्वितभावनाभिधानेऽभिहितान्वयवादभङ्ग इति तत्राऽऽह—प्रत्ययेति द्वाभ्याम्—

प्रत्ययप्रकृतिशब्दतो बहि-
र्दियतेऽभिहितसंगतिश्च न ।

---

१ क. °दुःखं न° । २ ख. ग. घ. °श्च नः ।

प्रत्ययप्रकृतिशब्दयोः पुन-
र्नित्यमन्वितधियो निमित्तता ॥ ३९३ ॥
भावनाद्वयमतोऽवबोध्यते
धातुवाच्यघटितं लिङादिभिः ।
प्रत्ययार्थगुणवस्तुवाचिनो
धातवः प्रकृतयो हि धातवः ॥ ३९४ ॥

अन्यत्रैवास्माकमभिहितान्वयः प्रकृतिप्रत्ययार्थयोस्तु प्रत्ययार्थं सह भूत इत्यादिव्युत्पत्तिबलादेकप्रत्ययार्थानां च लिङ्गसंख्याकारकोपग्रहविशेषभावनाद्वयरूपाणामनन्वितानामेकशेषं विना युगपदेकशब्देनाभिधानासंभवादन्वितगोचरयैकशक्त्या नित्यमन्विताभिधानमङ्गीक्रियत इति लिङादिभिरपि धातुवाच्ययागाद्यन्वितं भावनाद्वयं गुणप्रधानभावापन्नमेव बोध्यते प्राशस्त्यज्ञानानुगृहीतेन गृहीतशक्तिकविधिज्ञानेन यागकरणिकां स्वर्गफलिकामितिकर्तव्यतोपेतामेककर्तृकां कर्त्रभिप्रायफलामर्थभावनां कुर्यादिति । तथाऽपि धात्वर्थस्यैव प्राधान्यमस्तु मुख्यत्वादिति चेन्न प्रथमप्रतीतस्य विशेषणत्वेन गुणत्वौचित्यादित्याह—प्रत्ययार्थेति । प्रकृतिसमाख्ययाऽपि गुणत्वमेवेत्याह—प्रकृतय इति । प्रतीयते येनार्थः स प्रत्ययस्तस्मात्प्रथमं क्रियत इति प्रकृतिः॥३९३॥९४॥

अ० टी०—अनयोश्च भावनयोः प्रतीत्याकारः क इत्यपेक्षायां धात्वर्थप्रतीत्याकारव्युदासेन नानयोराकारभेदो ग्रहीतुं शक्यते धात्वर्थघटितयैवानयोर्नियमेनाभिधानादित्याह—प्रत्ययप्रकृतीति । प्रत्ययो लिङादिर्लेडादिश्च प्रकृतिर्धातुर्धातुप्रत्ययात्मकैकपदरूपाच्छब्दतो बहिः पृथगभिहितसंगतिरर्थसंबन्धो न विद्यते । चकारोऽवधारणार्थः । प्रकृतिप्रत्यययोरर्थभेदो नैव विद्यत इत्यर्थः । तत्र लिङ्गं ज्ञापकमाह—प्रत्ययेत्युत्तरार्धेन । पुनःशब्दो यस्मादर्थे । प्रत्ययप्रकृतिशब्दयोर्यस्मादन्वितधियोऽपृथग्बुद्धेर्निमित्तता विशिष्टैकव्युत्पादकता सदैवानुभवसिद्धेति शेषः ॥ ३९३ ॥

अ० टी०—यस्मादेवं प्रकृतिप्रत्यययोरेकीभूय विशिष्टबुद्धिहेतुताऽध्यवसिताऽतो हेतोर्लिङादिभिर्विधिप्रत्ययैर्धातुवाच्यघटितं प्रकृत्यर्थोपरक्तं भावनाद्वयं विवक्ष्यते न प्रकृत्यर्थाकारात्पृथगित्याह—भावनाद्वयमत इति । यजेतेत्यत्र हि यजतिधात्वर्थो यागस्तस्य कर्तव्यताऽत्र प्रतीयते यागं कुर्यादिति । तत्र कुर्यादित्यत्र कृतिस्तत्प्रेरणा चावसीयते । तत्राप्याख्यातांशेन कृतिरुच्यते । तद्विशेषणालिङा कर्तव्यता । तदुभयमेकेनैव पदेनोच्चार्य-

माणं न पृथग्बुद्धिगोचरतामाचरति । तथा च प्रकृतिप्रत्ययार्थयोः स्वरूपतो भेदेऽपि गुणप्रधानभावेनैकीभूतत्वादेकपदोपात्ततयैकप्रत्ययगम्यतेति भावः । तत्र कस्य गुणभावः कस्य वा प्राधान्यमित्यपेक्षायामाह—प्रत्ययार्थेति । प्रत्ययार्थस्य गुणभूतं विशेषणीभूतं यद्वस्तु क्रियालक्षणं तद्वाचिनो धातवोऽर्थोप्रधानविशेष्यवस्तुवाचिनः प्रत्यया इत्यर्थः । धातूनां गुणार्थत्वे हेतुमाह—प्रकृतयो हि धातव इति । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्रत्ययस्तु प्राधान्येनेति हि वदन्ति । युक्तं चैतत्सर्वधातुषु विभिन्नेष्वपि प्रत्ययानां स्वरूपतो भेदाभावाच्च प्रकृतितदर्थभेदकृत एव भेद इति धातुभिः प्रत्यया विशेष्यन्त इति ॥ ३९४ ॥

सु० टी०—एवं च सर्वस्यापि वेदस्य भावनैदमर्थ्यान्न भूते ब्रह्मणि प्रामाण्यमित्याह—

भव्याय भूतमुपदिश्यत इत्यवोच-
न्पूज्यास्ततः सकलमेव च वेदशास्त्रम् ।
कार्यप्रधानमिति निश्चिनुमोऽस्मदीये
तन्त्रे च कार्यमुदितः पुरुषप्रयत्नः ॥ ३९५ ॥

भव्यायेति । पूज्या जैमिन्यादयो द्रव्याणां कर्मसंयोगे भूतं भव्यायोप दिश्यत इति न्यायमाहुस्तस्माद्ब्रह्मावेदकमपि शास्त्रं भावनापेक्षितकर्त्रादिपरमिति निश्चिनुम इत्यर्थः । ननु भट्टानां नियोगाभावात्कुतस्तत्प्राधान्यमिति तत्राऽऽह—अस्मदीय इति । प्रयत्नोऽर्थभावनैवास्मन्मते कार्यमित्यर्थः ॥ ३९५ ॥

अ० टी०—एवं भावनावाक्यार्थमुपपाद्य तस्मिन्नेव सकलस्य वेदस्य प्रामाण्यं न सिद्धे वस्तुनि भूतभव्यन्यायादित्याह—भव्याय भूतमिति । पूज्याः शबरस्वामिनः । तत्किं कार्यं यत्परं सकलं वेदशास्त्रमित्यपेक्षायामाह—अस्मदीय इति । पुरुषप्रयत्नः कार्यमुदितो न नियोगरूपमित्यर्थः ॥ ३९५ ॥

सु० टी०—दूषयति—

अभिदधाति करोति च लिङ्पदं
श्रुतिवचःसु निजामपि भावनाम् ।
न च करोति न वक्ति च तां पुन-
र्नरवचःस्विति दुःशकमुच्यते ॥ ३९६ ॥

अभिदधातीति । श्रुतिवाक्येषु लिङ्शब्दो निजामपि स्वधर्मभूतामपि

शब्दभावनामभिधत्ते करोति च स्वव्यापाररूपत्वान्नरवचःसु पुनस्तां न करोति न वक्ति च तत्राभिधाया अभावादिति यदुच्यते तद्दुःशक-मित्यर्थः। स्वव्यापारस्य स्वयमभिधाने स्ववृत्तित्वापत्तेः शब्दस्य च प्रमाणत्वेन कारकत्वासंभवात् 'य एव लौकिकाः' इत्यादिन्यायेन लोकवेदयोरर्थाभेदात्क्लृप्तकल्प्यविरोधाच्चेति भावः॥ ३९६॥

अ० टी०—एतदपि मतं दूषयति सिद्धान्ती—अभिदधातीति। श्रुतिवचःसु लिङ्पदं निजामपि स्वव्यापाररूपामपि शब्दभावनामभिदधाति करोति निष्पादयति चार्थभावनेति दुःशकमुच्यते। स्वव्यापारस्य स्वयमभिधाने स्ववृत्तिविरोधापत्तेरित्यर्थः। तथा नरवचःसु लौकिकवाक्येषु तां भावनां न करोति न वक्ति चेति व्यवस्थाङ्गीकरणं दुःशकमुच्यते मीमांसकैरिति योजना। लोकवेदयोरेकस्यैव शब्दस्य वैरूप्याङ्गीकारे लोकवेदाधिकरणविरोधः शब्दान्तराणामिव सर्वत्रैकरूपत्वसंभवे व्यर्थं च वैरूप्यकथनं वेदे पृथग्व्युत्पत्तिद्वाराभावात्प्रमाणस्य सतो वेदस्य कारकत्वेऽप्रमाणत्वापत्तेश्चेति भावः॥ ३९६॥

सु० टी०—नन्वपौरुषेये वेद आज्ञादेरसंभवादगत्या द्वैरूप्यमिति चेन्न संभवत्यैकरूप्ये तत्कल्पनानौचित्यादित्याह—

> वक्तृत्वमेव घटते यदि लिङ्पदस्य
> सर्वत्र नार्धजरतीयमिदं प्रशस्तम्।
> सामर्थ्यमेकरसमेव यदोपपन्नं
> नानारसं न खलु तत्परिकल्पनीयम्॥ ३९७॥

वक्तृत्वमिति। लिङादिपदस्य प्रमाणत्वाल्लोकवेदयोरवैरूप्येण वाचक-त्वमेव संभवति चेन्नैकत्र वक्तृत्वमेकत्र च कारकत्वमित्यर्धजरतीयत्वं प्रशस्तमित्यर्थः। युवत्यास्तस्मिंस्तस्य च जरत्यामरुचेरर्धजरतीं जाटिलः कामयत इत्यर्धजरतीयन्यायः। अन्यथा कल्पनागौरवमित्याह—सामर्थ्य-मिति॥ ३९७॥

अ० टी—ननु नेदं वैरूप्यं दोषाय भवति दैवेनैवास्योपसादितत्वाल्लोके शब्दः पौरु-षेयो वेदे त्वपौरुषेय इति स्वभाववैरूप्यस्याऽऽश्रयणात्प्रवृत्तिवैरूप्यस्याप्युपपत्तेरिति चेन्न स्वरूपवैरूप्यस्य गत्यन्तराभावादगत्या तदाश्रयणमितरत्रैकरूपत्वसंभवे वैरूप्यकल्पनागौरव-मप्रामाणिकमयुक्तं पौरुषेयत्वापौरुषेयत्वभेदादर्थे प्रवृत्तिवैरूप्यकल्पनेऽन्येषामपि पदानां तत्क-ल्पनप्रसङ्गो लोकवेदाधिकरणानारम्भप्रसङ्गश्चेत्यभिप्रेत्य परिहरति—वक्तृत्वमेवेति। बोधकत्वेनैव प्रामाण्यात्सर्वत्र लोके वेदे च लिङ्पदस्य वक्तृत्वमेव यद्येकरूपेण घटते

तदाऽर्धजरतीयमिदं वैरूप्यकल्पनं न प्रशस्तम् । कस्मान्न प्रशस्तमिति चेत्कल्पनागौरवा-दित्याह—सामर्थ्यमिति । स्पष्टार्थः ॥ ३९७ ॥

सु० टी०—मत्पक्षे त्वैकरूप्यान्नोक्तदोष इत्याह—

श्रेयोहेतुत्ववाची यदि भवति तदा संभवत्येकरूपा
शक्तिस्त्वस्याभिधाने न तु भवति तदा कारकोऽयं प्रवृत्तेः ।
श्रेयोहेतुश्च वाच्यः श्रुतिवचसि तदा पौरुषेये च तुल्यः
क्लृप्तश्चासौ न कल्प्यः श्रुतिवचसि यथा भावना लिङ्निबद्धा ॥ ३९८ ॥

श्रेय इति । लोके वेदे च श्रेयोहेतुत्वमेव (*लिङ् वदतीति न शक्तिवैचित्र्यमित्यर्थः । ननु ममाप्यभिधाज्ञाद्यनुगतं प्रवर्तनात्वसामान्यमेव) लोकवेदसाधारणं लिङर्थ इति चेत्तर्हि वक्तुः कण्ठताल्वादिव्यापारस्यापि प्रवर्तकत्वेन लिङादिवाच्यतापत्तेः । ननु यज्ज्ञातं प्रवर्तकमाज्ञादि तत्रैव प्रवर्तनात्वेन शक्तिः कण्ठताल्वादियत्नस्तु स्वरूपसन्नेव तथेति चेन्नासिद्धेः । तथा ह्याज्ञादिज्ञानं न प्रवर्तकं सत्यपि तस्मिन्ननिष्टहेतावप्रवृत्तेः । अथ तस्येष्टसाधनताक्षेपकत्वं तर्हि सैवाऽऽवश्यकत्वादुपजीव्यत्वाच्च हेतुरिति किमन्तर्गडुनाऽभिधादिज्ञानेन । किं चेष्टमाव्यकक्रियाभिधानमभिधा तच्छक्तिर्वा नान्त्यः शक्तेः शब्दाजन्यत्वेनाव्यापारत्वात् । नाऽऽद्योऽभिधानस्यानभिधेयत्वादभिधाने वा तत्प्रकारकप्रतीत्यापत्तेरिति दिक् । मन्मते तु लिङः कारकत्वविरोधोऽपि नास्तीत्याह—नत्विति । प्रवृत्तेः प्रवर्तकव्यापारस्य । न वा लोकवेदाधिकरणविरोधोऽपीत्याह—श्रेय इति । नापि क्लृप्तकल्प्यविरोध इत्याह—क्लृप्त इति । तव वेदे यथा भावना कल्प्या नैवमसावित्यर्थः । लिङ्निबद्धा लिङ्वाच्येत्यर्थः ॥ ३९८ ॥

अ० टी०—इह गौरवमप्यगत्याऽऽश्रीयते लौकिकस्य लिङादिवाच्यस्याऽऽज्ञादेर्वेदेऽसंभवादिति चेत्तर्हि भावनाविधित्वाद एव त्यज्यतां यत्र गौरवादिदोषापत्तिः साधनताविधित्वाद आश्रीयतां यत्र न वैरूप्यादिदोष इत्यभिप्रेत्याऽऽह—श्रेयोहेतुत्ववाची यदीति । तस्य श्रेयोहेतुत्वाभिधाने लिङादेरेकरूपा लोकवेदयोः शक्तिर्भवति वैरूप्यं न भवतीत्यर्थः ।

---

* क. पुस्तके नायं ग्रन्थः ।

एवं सति वेदस्य कारकत्वदोषोऽपि परिहृतः स्यादित्याह—न तु भवतीति । तदा श्रेयोहेतुवाचित्वेऽस्य लिङादिः प्रवृत्तेः कारको न तु भवति प्रवर्तको न भवतीत्यर्थः । वाच्यस्यार्थैकरूप्यमस्मिन्पक्ष इत्याह—श्रेयोहेतुश्चेति । शब्दभावनापक्ष इवास्मिन्पक्षे प्रसिद्धकल्पनाशङ्काऽपि नास्तीत्याह—क्लृप्तश्चासौ न कल्प्य इति । श्रुतिवचसि यथा लिङ्निबद्धा भावना कल्प्या तथाऽसौ श्रेयोहेतुर्लिङर्थतया न कल्प्यो लोकत एव तत्सिद्धेरतो न लोकवेदाधिकरणविरोधोऽप्यस्मिन्मत इत्यर्थः ॥ ३९८ ॥

सु० टी०—ननु माऽस्तु शब्दभावनाऽर्थभावना तु प्रमाणसिद्धा नापह्नोतुं शक्येति तदवस्थं तच्छेपकर्तृपरत्वं वेदान्तानामित्याशङ्क्य तामप्युन्मूलयति—

> धात्वर्थतोऽन्या न च भावनाऽस्ति
> यां भावनां वक्तुमलं लकारः ।
> धात्वर्थमुद्दिश्य न पुंस्प्रयत्नो
> लोके यतो भाति निरूपणायाम् ॥ ३९९ ॥

धात्वर्थ इति । आख्यातानि यां भावनां कर्तृव्यापाररूपां वक्तुमर्हन्तीति त्वयोच्यते सा धात्वर्थातिरिक्ता नास्तीत्यर्थः[1] । सा हि पचावधिश्रयणादिर्यजौ स्वत्वत्यागः संकल्पो वा गतौ स्पन्दः स च धात्वर्थ एवेति । ननु पाकं करोति गमनं करोतीति सर्वधात्वर्थानुगतकरोत्यर्थः प्रयत्न एव तदागमन्यायेन प्रत्ययार्थ इति चेन्नेत्याह—धात्वर्थमिति । सोऽपि धात्वर्थभिन्नो न निरूप्यते लोके रथो गच्छतीत्यादावचेतनेऽप्याख्यातप्रयोगादित्यर्थः । न च तत्र लक्षणा मुख्ये बाधकाभावात् । तर्हि स्पन्द एव भावनाप्रत्ययार्थ इति चेन्न यजेतेत्यादावात्मकर्तृके तदभावादौदासीन्यप्रच्युतिः स्पन्दयत्नसाधारणी सेति चेन्न तर्हि शब्दभावना शब्दे स्पन्दयत्नयोरभावात् । तस्मात्सर्वधात्वर्थानुगतक्रियासामान्यमेव करोत्यर्थः । तदुक्तं 'कृभ्वस्तयः क्रियासामान्यवचनाः' इति 'करोतिरर्थेष्विव सर्वधातून्' इति च । एतेनाऽऽख्यातेषु करोतिसामानाधिकरण्यं व्याख्यातम् । न च करोत्यर्थस्यान्योत्पादानुकूलत्वेन भाव्यनिष्ठत्वाद्भाव्यनिष्ठादधिश्रयणादेर्धात्वर्थाद्भेद इति वाच्यं तद्भिन्नस्य तस्यानुपलब्धिबाधात् । न च ज्ञानस्येव ज्ञेयेन करणीभूत-

[1] क. °त्वर्थातिरिक्तो नास्त्येवेति ।

धात्वर्थेन निरूप्यत्वान्न ततः पृथगुपलब्धिरिति वाच्यं स्वसमयपरिभाषामात्रस्य परं प्रत्युपन्यासानर्हत्वादिति संक्षेपः ॥ ३९९ ॥

अ० टी०—यत्पुनरर्थभावनात्मिका क्रिया लकारवाच्येत्युक्तं तदप्ययुक्तमित्याह— धात्वर्थतोऽन्येति । धात्वर्थः क्रिया । नन्वस्ति धात्वर्थातिरिक्ता भावना पुरुषप्रयत्नो हि प्रत्ययवाच्या भावना मनआदिचेष्टा च धात्वर्थः प्रकृतिशब्दवाच्येति तयोर्भेदादिति चेन्नेत्याह—धात्वर्थमिति । उद्दिश्यातिक्रम्य लकारवाच्यः पुंप्रयत्नो निरूपणायां क्रियमाणायां यतो लोके न भात्यतो यां भावनां वक्तुमयं लकारोऽलं समर्थः सा भावना धात्वर्थतोऽन्या न चास्तीति योजना । रथाद्यचेतनकर्तृकेष्वाख्यातप्रयोगेषु प्रत्ययवाच्यस्य प्रयत्नस्यादर्शनान्न च तत्र तत्प्रयोग उपचरित इति वाच्यं लोकस्य तत्रोपचाराभिमानाभावात्सर्वस्यापि कारकस्य स्वव्यापारकर्तृत्वस्य मुख्यत्वात्तत्र करोति गच्छतीतिमुख्यप्रयोगोपपत्तेश्चेति भावः ॥ ३९९ ॥

सु० टी०—कार्यदूषणमुक्तमुपसंहरति—

न कर्मकाण्डेऽपि ततो नियोगो<br>
न भावनाऽप्युक्तनयेन तस्मिन् ।<br>
न तद्द्वयं वेदशिरःसु तस्मा-<br>
त्ततो न कार्यार्थपराणि तानि ॥ ४०० ॥

न कर्मेति । कर्मकाण्डेऽपि नियोगभावनावादयोर्निरस्तत्वात्सुतरां वेदान्तेषु तयोरसंभव इति न कार्यार्थमपरा वेदान्ता न नियोज्यपराः कर्तृपरा वेत्यर्थः ॥ ४०० ॥

अ० टी०—तदेवं नियोगवादस्य भावनावादस्य चायुक्तत्वान्न कर्मकाण्डेऽपि तदुभयं किं पुनर्वेदान्तेष्वविधिप्रधानेष्वित्युपसंहरति—न कर्मकाण्डेऽपीति । तस्मिन्कर्मकाण्डे भावनाऽपि नेत्यन्वयः । तद्द्वयं नियोगो भावना चेत्यर्थः । तस्मादिति प्रमादपाठो यस्मादिति पठनीयम् । यस्माद्वेदशिरःसु न तद्द्वयमस्ति ततो न तानि वेदशिरांसि कार्यार्थपराणीति योजना । यद्वा तस्मादित्येतत्पद्यादौ योज्यं तस्मान्न कर्मकाण्डेऽपीति । तत इति प्रथमश्रुतो लिङादिवाची ततो लिङादेरित्यर्थः । अन्यत्समानम् ॥ ४०० ॥

सु० टी०—किं च कार्यवादिमतेऽपि न सर्वशास्त्राणि कार्यपराणि प्रतिषेधचोदनासु तदभावादिति क्व वेदान्तेषु तदाशङ्केत्याह—

अपि च प्रतिषेधचोदना<br>
विषयः स्यात्प्रतिषिद्धकर्मणः ।

फलगर्धिनिवृत्तिरेव सा
न नियोगो न च तस्य गोचरः ॥ ४०१ ॥

अपि चेति । न पिबेदित्यादिचोदना या हि प्रतिषिद्धस्य पानादेः फलस्पृहानिवृत्तिरेव विषयः । सा चौदासीन्यलक्षणा पानादिप्रागभावरूपत्वेनाकार्यत्वान्न नियोगो न वाऽननुष्ठेयत्वान्नियोगविषयोऽपीत्यर्थः । अत एव न भावनारूपोऽपीति भावः ॥ १ ॥

अ० टी०—अपि च नियोगो वा भावना वा यद्यप्यभ्युपगम्यते तथाऽपि कर्मकाण्डेऽपि न सर्वत्र तत्संभवो निषेधवाक्येषु तदनिरूपणादित्याह—अपीति । ब्राह्मणो न हन्तव्य इत्यादि नञर्थशिष्टवाक्यगम्यं ब्राह्मणहननादि प्रतिषिद्धकर्म तस्य प्रतिषिद्धकर्मणो या फलगर्धिनिवृत्तिः फलप्रार्थनौदासीन्यरूपोपरतिः सैव प्रतिषिद्धचोदना विषयः स्यान्न नियोगो नापि तस्य नियोगस्य गोचरो विषयभूतो धात्वर्थः प्रतिषेधचोदना विषयः स्यादिति योजना । नियोगग्रहणं भावनाया अप्युपलक्षणम् । नापि भावना भाव्यो वा तथेत्यर्थः । एतदुक्तं भवति—निषेधवाक्यं तावन्नञर्थनिष्ठं प्रसिद्धं नञर्थश्च निवृत्तिरौदासीन्यलक्षणा क्रियाया इष्टसाधनत्वं तत्फलस्येष्टत्वं च मोहात्प्रतीतमत्र निषिध्यत इति स्पष्टी करिष्यति । तस्मान्नियोगो वा भावना वा नात्र वाक्यार्थौ वाक्यं चेदं वैदिकं स्वार्थपरप्रमाणमेवेति न सर्वो वेदो विधिपर इति ॥ ४०१ ॥

सु० टी०—न निवृत्तिरेव नञर्थः पर्युदासादेरपि तदर्थत्वेनानुष्ठेयत्वसंभवादिति चेन्नेत्याह—

नञः स्वसंबन्धिपदार्थवस्तुनो
निवृत्तिरर्थः सहजः प्रसिद्धितः ।
अनीक्षणादौ व्रतशब्दसंगतेः
परप्रयुक्ता खलु मानसी क्रिया ॥ ४०२ ॥

नञ इति । पिबेन्नेत्युक्ते स्वरसतः पानकर्तव्यतानिवृत्तिरेव प्रतीयत इति सैव नञो मुख्योऽर्थः प्रसिद्धेरनेकार्थताया अन्याय्यत्वाच्चेत्यर्थः । कर्तर्हि नेक्षेतोद्यन्तमित्यादौ गतिरिति चेत्तत्राऽऽह—अनीक्षणादाविति । 'अथातः प्रजापतिव्रतम्' इत्यनुष्ठेयार्थव्रतशब्दोपक्रमात्तत्प्रयुक्तैव तत्रानीक्षणसंकल्पलक्षणा त्रयो वेदा इत्युपक्रमानुरोधादिवोच्चैरृक्चेत्यादावृगादिपदस्य वेदलक्षणेति । न च प्रकृते लक्षणाबीजमस्तीति भावः ॥ ४०२ ॥

अ० टी०—ननु कथं निवृत्तिरेव नञर्थ इत्याश्रीयते पर्युदासवृत्तेरपि संभवादिति चेत्सत्यमत्र सा न संभवतीत्याह—**नञः स्वसंबन्धीति** । सहज उत्पत्तिशिष्टः स्वाभाविक इति यावत् । नेत्युक्ते स्वरसतः संबन्धिनिवृत्तेरेव पुरःस्फूर्तिदर्शनान्न पर्युदासस्तथेति मुख्यार्थसंभवेऽर्थान्तरं न कल्प्यमित्यर्थः । कथं तर्हि—

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इत्यादौ पर्युदासाश्रयणमिति चेत्कारणान्तरवशादित्याह—**अनीक्षणादाविति** । अनीक्षणादौ नेक्षेतेतिवाक्यविहिते नेक्षेऽहमिति या मानसी क्रिया नञर्थपर्युदासेन स्वीकृता सा खलु परप्रयुक्ता । कुतो व्रतशब्दसंगतेः 'अथातः प्रजापतिव्रतम्' इति वाक्यस्यानुष्ठेयवाचिना व्रतशब्देनोपक्रमादनुष्ठेयपरत्वावगमात्तन्मध्यपातिनोऽनीक्षणविधेरप्यनुष्ठेयव्रतशब्दसंगतेर्हेतोरित्यर्थः । अत उपक्रमतन्त्रया नेक्षेतेत्यादौ पर्युदासाश्रयणं न तत्र नञो मुख्यवृत्तित्वमिह तु तथाविधकरणाभावान्न मुख्यार्थपरित्यागो युक्त इति भावः ॥ ४०२ ॥

**सु० टी०—अन्यथा हि विधिनिषेधविभागोऽपि तव न स्यादित्याह—**

**अपि च प्रतिषेधचोदना**
**न तु भिद्येत भवन्मते विधेः ।**
**विधिरेव तु चोदनाऽखिला**
**न हि वेदे वचनं निवर्तकम् ॥ ४०३ ॥**

अपि चेति । **निवृत्तिनियोगवादिनो हि विधिवत्प्रतिषेधस्यापि कार्यार्थत्वाविशेषात् प्रतिषेधचोदना न विधेर्भिद्येत द्वयोरपि प्रवर्तकत्वादित्यर्थः । अत एव निवृत्तिप्रयत्नविधायकत्वेन विधिभेदत्वं निषेधस्येति मतमप्यपास्तं लक्षणाप्रसङ्गात् फलादिभेदाच्च । तदुक्तम्—**

**'फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।**
**पञ्चधाऽत्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः'॥ इति॥४०३॥**

अ० टी०—किं च प्रतिषेधवाक्यस्याप्यनुष्ठेयार्थनिष्ठत्वे विधिप्रतिषेधभेदासिद्धिरतोऽपि निषेधवाक्यं नानुष्ठेयपरमित्याह—**अपि च प्रतिषेधचोदना न त्विति** । भवन्मते विधेः सकाशात्प्रतिषेधचोदना न तु भिद्येतेत्यन्वयः । यतोऽस्मिन्पक्षेऽखिलाऽपि चोदना विधिरेवातो वेदे निवर्तकं वचनं न हि किमपि सिध्यतीत्यर्थः ॥ ४०३ ॥

सु० टी०—निषेधानां निवृत्तिनिष्ठत्वेऽपि भवतः किमायातमिति चेत्तत्राऽऽह—

प्रतिषेधवाक्यवदतः सकलं
विधिशून्यमेव फलवद्भवतु ।
वचनं त्रयीशिरसि तत्त्वमसि-
प्रभृति प्रतीचि तमसोऽपहतेः ॥ ४०४ ॥

प्रतिषेधेति । कार्यरहितप्रतिषेधवाक्यवद्वेदान्तवाक्यमपि तत्त्वमादि विधिशून्यमपि तमोनिवर्तकत्वेनैव फलवत्त्वात्प्रतीचि प्रमाणं भवेदिति किं नाऽऽयातमित्यर्थः ॥ ४०४ ॥

अ० टी०—भवत्वेवं निषेधवाक्यं निवृत्तिनिष्ठमेव किमेतावता तवाऽऽयातमिति चेद्वेदान्तवाक्यानामप्यविद्यानिवृत्तिमात्रेण प्रतिषेधवाक्यवदननुष्ठेये वस्तुनि प्रामाण्यसिद्धिरितीदमायातं ममेत्याह—प्रतिषेधवाक्यवदिति । यत एवं वेदः सर्वोऽपि न विधिनिष्ठोऽतोऽविधिप्रधानप्रतिषेधवाक्यवत्त्रयीशिरसि तत्त्वमसिप्रभृति सकलवचनं विधिशून्यमेव विधिनिरपेक्षमेव फलवत्प्रमाणं भवतु तेन सद्यः प्रतीचि तमसोऽनाद्यज्ञानस्य संसारबीजस्यापहतेर्बाधनादिति योजना ॥ ४०४ ॥

सु० टी०—निवृत्तिरेव नञर्थ इति वक्तुं मतान्तरं दूषणार्थमुपन्यस्यति—

नामधातुसहितो नञिष्यते
पर्युदासविषयो मनीषिभिः ।
न प्रसक्तविनिवृत्तिवाचकोऽ-
ब्राह्मणादिषु तथोपलम्भनात् ॥ ४०५ ॥

नामेति । नञो विषयभेदेन पर्युदासो निवृत्तिश्च मुख्योऽर्थः । तत्र नामधातुभ्यामन्वितो नञ्पर्युदासार्थो न निवृत्तिवाचीति भाट्टाः । तदुक्तं—

'नामधात्वर्थयोगेन नैव नञ् प्रतिषेधकः ।
वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ' ॥

अत्र लक्षणाया अप्यनादित्वान्मुख्यत्वोक्तिः ॥ ४०५ ॥

अ० टी०—तदेवं निषेधवाक्ये नञः स्वसंबन्ध्यभाव एवार्थो मुख्यो न पर्युदास इति यदुक्तं तन्न युक्तं भाट्टैरन्यथोपपादनादिति तन्मतमुत्थापयति—नामधातुसहित इति । अयमर्थः—'ब्राह्मणो न हन्तव्यः' इत्यत्र ब्राह्मणो नामार्थो हननं धात्वर्थो नियोगादिस्तव्यार्थ इति स्थितिः । तत्र नामसहितो धातुसहितो वा यदा नञुपादीयते तदा स पर्युदासविषयो मनीषिभिरिष्यत इति योजना । नामधातुभ्यां योगे प्रसक्तविनिवृत्तिवाचको नञ् नेष्यत इति योऽयमुक्तपर्युदासवृत्तावुदाहरणमब्राह्मणादिषु तथोपलम्भनादिति ॥ ४०५ ॥

सु० टी०—नामयोगनिमित्तकमाह—

अब्राह्मणाधर्मगिरोर्नञेष
नामान्वयादाश्रितपर्युदासः ।
अन्यं विरुद्धं च सदाऽभिधत्ते
नोद्यन्तमित्यादिषु धातुयोगात् ॥ ४०६ ॥

अब्राह्मणेति । नाम्नाऽन्वयान्नामान्वयं निमित्तीकृत्येत्यर्थः । अन्यं ब्राह्मणात्क्षत्रियादिं विरुद्धं धर्मविरुद्धमधर्ममभिधत्ते निरूढलक्षणयोपस्थापयतीदमुपलक्षणम् । ब्राह्मणधर्मशब्दावपि पञ्चम्यर्थमविधित्वं सहार्थतृतीयार्थं च लक्षयत इति । धात्वन्वयनिमित्तकमाह—नोद्यन्तमिति ॥ ४०६ ॥

अ० टी०—उदाहरणं नञो नामान्वये धात्वन्वये च क्रमेण विभजते—अब्राह्मणाधर्मेति । आश्रितः पर्युदासो येन स तथा । अब्राह्मण इत्युक्ते ब्राह्मणसदृशो ब्राह्मणाभासः क्षत्रियादिरित्यन्यमभिधत्तेऽधर्म इति तु धर्मविरुद्धमर्थान्तरमभिधत्त इति योजना । तथा च नञो नामयोगे यथायथं तदन्यतद्विरुद्धार्थयोर्मुख्यत्वात्पर्युदासवृत्तिरप्यस्य मुख्यैवेति भावः । धातुयोगेऽप्याह—नोद्यन्तमिति । धातुरीक्षणम् । अनीक्षणमितीक्षणविरुद्धार्थं पर्युदासवृत्त्यैव नञभिधत्त इति योजना ॥ ४०६ ॥

सु० टी०—कथमिति चेत्तत्राऽऽह—

नोद्यन्तमित्यत्र नञीक्षणार्थ-
समीपकार्यान्तरमुच्यते हि ।
ततश्च नेक्षिष्य इतीदृशी स्या-
त्संकल्पना संनिहितत्वहेतोः ॥ ४०७ ॥

---

१ क. ग. °ते विरुद्धल° ।

नोद्यन्तमित्यत्रेति । 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र व्रतोपक्रमादीक्षणधात्वर्थसमीपस्थमीक्षितृनिष्ठं नेक्षिष्य इति संकल्परूपं कार्यमीक्षणपर्युदासेन नञा लक्ष्यतेऽनीक्षणात्मकप्रतिषेधार्थं प्रति संनिहितत्वादपेक्षितत्वाच्चेत्यर्थः ॥ ४०७ ॥

अ० टी०—एतदेवोपपादयति—नोद्यन्तमित्यत्रेति । ईक्षणार्थसमीप ईक्षणार्थसमीपस्थं कार्यान्तरं संकल्परूपमुच्यते हि नोद्यन्तमित्यत्र नञेति योजना । यस्मिन्नीक्षितरि तदीक्षणं वर्तते तत्स्थं तद्विरुद्धं कार्यान्तरं नञा पर्युदासवृत्त्या समर्थ्यत इत्यर्थः । किमाकारं तत्कार्यान्तरं तदाह—ततश्चेति । एवं संकल्पनाऽत्र कुतः स्यादित्यत आह—संनिहितत्वहेतोरिति । मानससंकल्पनायाः प्रतिषेधार्थं प्रति संनिहितत्वात्प्रतिषेधो हि संकल्पेन परिपाल्यत इत्यतो युक्तमिह तादृङ्मानसक्रियापरत्वं वाक्यस्येत्यर्थः ॥ ४०७ ॥

सु० टी०—कुत्र निवृत्तिर्नञर्थस्तदाह—

द्विजं न हन्यान्न कलञ्जमद्या-<br>
दित्यादिवाक्ये विधिनाऽस्य योगात् ।<br>
प्रसज्यमानार्थनिवृत्तिमात्रं<br>
नञर्थ इत्याश्रितमादरेण ॥ ४०८ ॥

द्विजमिति । अत्र हन्यादिति[1] हननकर्तव्यत्वं रागप्राप्तं लिङनुवदति तथा च नञोऽन्वये प्रसक्तहननव्यापारनिवृत्तिलक्षणमौदासीन्यमात्रमेव नञोऽर्थो न संकल्पादीत्यर्थः ॥ ४०८ ॥

अ० टी०—नञस्तदन्यतद्विरुद्धयोः पर्युदासार्थत्वमुदाहृत्य तस्य स्वसंबन्ध्यभावार्थत्वमिदानीमुदाहरति—द्विजं न हन्यादिति । अत्र नामधात्वर्थप्रतिषेधकतया तद्योगो नञो न युक्तः प्रत्यक्षविरोधात्परिशेषाद्विधिनैवास्य योग इति विध्यर्थाभावमात्रपरमत्र नञ्पदमित्यर्थः । अक्षरयोजना सुगमा ॥ ४०८ ॥

सु० टी०—प्राभाकरास्त्वन्यथा वर्णयन्तीत्याह—

नायां न हन्यां न पिबेयमित्यपि<br>
वाक्येषु नञ्वत्सु वदन्ति मानसीम् ।<br>
संकल्परूपां विधिवर्तिनीं क्रियां<br>
नोद्यन्तमित्यादिवचःस्विवापरे ॥ ४०९ ॥

---

१ क. °ति न ह° ।

नाद्यामिति । इत्यपीत्यस्वरसोद्गारस्तद्बीजं तु मुख्यार्थसंभवेऽपि लक्षणाश्रयणम् । ते हि नाद्यादित्यादिवाक्येषु प्रत्ययापेक्षया संनिकृष्टेन धातुना नञोऽन्वयमाश्रित्य हननप्रागभावस्याननुष्ठेयत्वेनायोग्यत्वात्तत्पालनहेतुभूतां संकल्पात्मिकां क्रियां विधिबन्धनीं विधियोग्यां विधिवाच्यां वा नियोगक्रियां नोद्यन्तमित्यादिष्विव नञर्थं वदन्तीत्यर्थः ॥ ४०९ ॥

अ० टी०—अन्ये त्वत्रापि नेक्षेतेत्यादाविव धातुनाऽन्वयं नञः परिकल्प्य नाद्यामित्याद्याकारां मानसीं संकल्पक्रियामिच्छन्तीति सर्वत्र पर्युदास एव नञोऽर्थ इति युक्तमित्याह—**नाद्यां न हन्यामिति** । अपरे विधिवर्तिनीं मानसीं क्रियां वदन्तीत्यन्वयः । सुबोधमन्यत् ॥ ४०९ ॥

सु० टी०—ननु कथं प्रधानप्रत्ययपरित्यागेन धातुना नञन्वयं कृत्वा लक्षणां कल्पयन्तीत्यगत्येत्याह—

वाक्येषु नञ्वत्सु निवृत्तिमात्रं
प्रमेयमित्यभ्युपगम्यमाने ।
प्रत्यक्षमानेन विरुध्यते हि
निवृत्तिशास्त्रं न च युज्यते तत् ॥ ४१० ॥

वाक्येष्विति । निषेधैर्निवृत्तिमात्रबोधने प्रत्यक्षविधिश्रुतिविरोधस्तस्य प्रवर्तकत्वादित्यर्थः ॥ ४१० ॥

अ० टी०—ननु प्रत्ययार्थेन प्रधानेन नञोऽन्वयं परित्यज्य धातुनाऽप्रधानेनान्वयः पर्युदासश्च कस्मादाश्रीयत इति चेत्तथात्वे प्रत्यक्षविरोधादित्याह—**वाक्येषु नञ्वत्स्विति** । प्रत्यक्षविरोधं न हि कलञ्जमित्यत्र वक्ष्यति । निवृत्तिशास्त्रं निषेधवाक्यात्मकम् । इष्टापत्तिं परिहरति—**न च युज्यते तदिति** । मानान्तरविरोधे शास्त्रस्य प्रामाण्यायोगादितिहेतुश्चकारसमुच्चितोऽत्र योज्यः ॥ ४१० ॥

सु० टी०—अन्यथा भाष्यविरोध इत्यपि वदन्तीत्याह—

प्रवर्तकं वाक्यमुवाच चोदनां
निवर्तकं नैवमुवाच भाष्यकृत् ।
ततश्च विघ्नो न हि चोदनाऽस्ति सा
प्रवर्तिका या न भवेदिति स्थितिः ॥ ४११ ॥

४३

प्रवर्तकमिति । भाष्यकृता हि चोदनेति क्रियायाः प्रवर्तकं वाक्यमित्युक्तं न निवर्तकमपीति ततस्तत्स्वरसादपि (*वक्तव्या लक्षणेत्यर्थः॥ ४११ ॥

अ० टी०—भाष्यकारवचनानुसारेणाप्यत्र धातुयोगेन नञः पर्युदासार्थतैवाङ्गीकार्येत्याह—प्रवर्तकमिति । भाष्यकृच्छबरस्वामी चोदनासूत्रे प्रवर्तकं वाक्यं चोदनामुवाच । चोदनेति क्रियायाः प्रवर्तकं वचनमिति । एवं निवर्तकं निषेधवाक्यं चोदनां नोवाच । यद्यत्रापि प्रत्ययप्राधान्यं विवक्षितत्वात्तन्निवृत्तिर्नञर्थः प्रतिषेधवाक्येषु भवेत्तदा चोदनेति-क्रियायाः प्रवर्तकं निवर्तकं च वचनमित्यवक्ष्यत्तन्नावादीत् । ततश्च हेतोरेव विघ्नः सा चोदना न ह्यस्ति या प्रवर्तिका न भवेदिति स्थितिः शास्त्रमर्यादेति । अन्त इति शब्दोऽध्याहार्यः ॥ ४११ ॥

सु० टी०—नञर्थद्वैविध्यमुक्तं दूषयति—

न नामयोगो न च धातुयोगो
लिङादियोगोऽपि न कारणं नः ।
नञः स्वसंबन्धनिवृत्तिमात्रं
स्वतोऽभिधेयं परतोऽन्यदस्य ॥ ३१२ ॥

न नामेति । नामादियोगो नञर्थवैचिञ्ये न) कारणमित्यर्थः । ननूक्तस्थलेषु तथा दृष्टमिति नेत्याह—नञ इति । नञो निवृत्तिरेव मुख्योऽर्थः । प्रसिद्धिविरोधादिना त्वन्यत्वविरुद्धत्वादिकमपि लक्ष्यमब्राह्मणादावित्यर्थः ॥ ४१२ ॥

अ० टी०—एवं मतविशेषमुत्थाप्य तत्र विषयव्यवस्थया नञोऽर्थद्वैविध्यमुक्तं दूषयति सिद्धान्ती—न नामयोग इति । न कारणं नञोऽर्थव्यवस्थायामिति शेषः । नोऽस्माकमिष्टमिति योज्यम् । तर्हि कथं निषेधपर्युदासव्यवस्थेति चेत्तत्राऽऽह—नञ इति । स्वसंबन्धिनिवृत्तिमात्रं नञः स्वरसतोऽभिधेयं निवृत्तिरेवास्य सर्वत्र नामधातुप्रत्ययानां योगेऽप्यर्थः स्वभावतोऽन्यत्त्वर्थान्तरं पर्युदासादिरूपं परतः कारणान्तरादित्यर्थः ॥ ४१२ ॥

सु० टी०—कुत एवमिति चेत्तद्व्यभिचारादित्याह—

तथा हि नाग्रे करिणीति नाम्ना
गजोऽत्र नास्तीति च धातुयोगे ।

---

* क. पुस्तकेऽयं ग्रन्थो नास्ति ।

लिङादियोगेऽपि निवृत्तिरर्थो
विषं न खादेदिति नञ्पदस्य ॥ ४१३ ॥

तथा हीति । नाम्ना योग इत्यनुषङ्गः । यथा हि नेयं पुरतः करिणी किं तु निबिडा तरुच्छाया न चेहास्ति हस्ती किं तु गिरिवरविवरस्थः प्रस्तरोऽयं न चेदमद्याद्विषमिदमित्यादौ नामादियुक्तस्यापि नञो भ्रान्तिप्रसक्तनिवृत्त्यर्थत्वमेवेत्यर्थः ॥ ४१३ ॥

अ० टी०—कुत एवमिति चेत्त्वदुक्तव्यवस्थाया व्यभिचारदर्शनादित्याह—तथा हीति । नाम्नि करिणीत्यत्र नञो नामयोगे करिण्या निषेध एव....तत्पर्युदासेनार्थान्तरं तत्कल्पनानिमित्ताभावादित्यर्थः । अत्र गजो नास्तीति धातुयोगेऽस्धातुयोगे च गजाभाव एव नञर्थः प्रतीयते । न खादेदिति लिङादियोगेऽपि नञ्पदस्य निवृत्तिरेवार्थः प्रतीयत इत्यर्थः ॥ ४१३ ॥

सु० टी०—वेदेऽपि व्यभिचारोदाहरणमाह—

तथा श्रुतौ नेतिवचःसु नाम्नि
नानेह नास्तीति च धातुयोगे ।
तथा विधानेन कलञ्जमद्या-
न्नञोऽविशेषेण निवृत्तिरर्थः ॥ ४१४ ॥

तथेति । 'अथात आदेशो नेति नेति' [ बृ० २ । ३ । ६ ] इति नामयोगे, 'नेह नानाऽस्ति' [ बृ० ४ । ४ । १९ ] इति धातुयोगे, 'न कलञ्जमद्यात्' इति विधियोगे च प्रसक्तमूर्तामूर्तद्वैतादेर्भक्षणश्रेयस्करत्वादेश्च निवृत्तिरेव नञर्थो निरूपितः । प्रकृतैतावत्त्वं हि प्रतिषेधतीत्यादौ नाब्राह्मणादिवत्पर्युदास इत्यर्थः ॥ ४१४ ॥

अ० टी०—लोकप्रयोग इव श्रुतिप्रयोगेऽपि व्यभिचारमाह—तथा श्रुताविति । 'अथात आदेशो नेति नेति' [ बृ० २ । ३ । ६ ] इत्यादिवाक्येष्वित्यर्थः । 'नेह नानाऽस्ति किंचन' [ बृह० ४ । ४ । १९ ] इत्येतच्छन्दोनुरोधेन नानेह नास्तीति व्यत्यस्य प्रयुक्तं नञः सर्वत्राविशेषेण निवृत्तिरर्थो न क्वापि स्वरसतः पर्युदासार्थत्वं सर्वत्र निवृत्तिलक्षणमुख्यार्थसंभवादित्यभिप्रायः ॥ ४१४ ॥

सु० टी०—अस्तु तत्रापि पर्युदास इति चेन्नेत्याह—

औदासीन्यं पुरुषगतमेवाविशेषान्नञर्थो
भ्रान्तिशामे सति तु विषये यत्र यत्रैव दृष्टः ।

नौदासीन्यं पृथगिह भवेदात्मचिन्मात्ररूपात्
सिद्धे वस्तुन्यवसितमतो वेदवाक्यं निषेधे ॥ ४१५ ॥

औदासीन्यमिति। प्रमाणप्राप्तस्य निषेधासंभवात्तदन्वितस्य नञः कदाचित्पर्युदासार्थताऽपि स्याद्भ्रान्तिप्रसक्तान्वितस्य तु तस्य सर्वत्र निवृत्तिरेव तद्विषयौदासीन्यरूपा मुख्योऽर्थ इत्यर्थः। ननु निवृत्तिरपि प्रयत्नविशेषरूपाऽनुष्ठेयेति नेत्याह—नौदासीन्यमिति। भ्रान्तिप्रसक्तस्य वस्तुतोऽभावात्तन्निवृत्तिरूपमौदासीन्यमधिष्ठानात्मस्वरूपमेवेति सिद्धं सिद्धनिष्ठत्वं निषेधस्येत्यर्थः ॥ ४१५ ॥

अ० टी०—एवं तर्हि कथं प्रतिनियता व्यवहारव्यवस्था सर्वत्र निवृत्त्यर्थत्व इति चेत्तत्राऽऽह—औदासीन्यमिति। विषये भ्रान्तिप्राप्ते सति यत्र यत्रैव नञ्दृष्टस्तत्र सर्वत्र पुरुषगतमौदासीन्यमेव नञोऽर्थोऽविशेषान्नामादियोगकृतविशेषाभावादिति योजना। तुशब्दः प्रमाणप्राप्तविषयव्युदासार्थः। 'न हन्यात्' इत्यादौ प्रतिषिध्यमानक्रियाफलप्रार्थनाया भ्रान्तिप्राप्तत्वान्निषेधसंभवात्तत्र प्रसज्यप्रतिषेध एव नञर्थः प्रमाणप्राप्तस्य प्रतिषेद्धुमशक्यत्वात्तत्र पर्युदास इति व्यवस्थासिद्धिरित्यर्थः। ननु निवृत्तिरपि व्यापारोपरमलक्षणाऽनुष्ठेया भविष्यत्यतो निवृत्तिनिष्ठमपि वाक्यं कार्यनिष्ठमेवेति चेन्नेत्याह—नौदासीन्यमिति। आत्मचिन्मात्ररूपादौदासीन्यं प्रसक्तक्रियाया अकरणरूपं पृथगन्यदनुष्ठेयं वस्त्विह निषेधवाक्ये प्रतीयमानं न भवेद्भ्रान्तिप्राप्तप्रार्थनायाः परमार्थतोऽभावात्तन्निवृत्तिर्न प्रत्यगात्मनोऽर्थान्तरं संभवतीत्यर्थः। फलितमाह—सिद्धे वस्तुनीति। निषेधे निषेधस्थले वेदवाक्यं सिद्धे वस्तुन्येव प्रमाणमिति निश्चितमित्यर्थः ॥ ४१५ ॥

सु० टी०—भाष्यविरोधमुक्तं निरस्यति—

प्रवर्तकं वाक्यमुवाच चोदना
निधाय बुद्धौ वचनं निवर्तकम्।
द्वितीयसूत्रे भगवान्बहुश्रुतो
न चोदनाद्वित्वनिवारणाय तत् ॥ ४१६ ॥

प्रवर्तकमिति। भाष्यकृता यत्प्रवर्तकं वाक्यं चोदनेत्युक्तं न तच्चोदनाद्वित्वं वारयितुं किं तु निवर्तनाया अप्युपलक्षणं प्रथमसूत्रे नञ्प्रश्लेष-

---

१ ख. ग. घ. °दनां वि°।

णाधर्मस्यापि जिज्ञास्यत्वेन प्रतिज्ञाततया द्वितीयसूत्रेऽप्यर्थपदेन निषेधचोदनालक्षणोऽनर्थः श्येनादिरधर्म इत्यस्यापि लक्षयितुमुचितत्वादित्यर्थः ॥ ४१६ ॥

अ० टी०—यत्पुनर्भाष्यकारेण प्रवर्तकवचनवन्निवर्तकं वचनं चोदनाशब्दार्थत्वेन न व्याख्यातमिति निवृत्तिर्न चोदनार्थ इति गम्यत इति तन्नोपलक्षणत्वाद्भाष्यवाक्यस्येत्याह—प्रवर्तकमिति । भाष्यकारो भगवान्बहुश्रुतः सर्वज्ञो यत्प्रवर्तकं वाक्यं चोदनामुवाच तन्निवर्तकं वचनमपि बुद्धौ निधायैव न चोदनाद्वित्वनिवारणाय तद्वचनमन्यथा 'चोदनालक्षणोऽर्थो धर्मः' [ जै० १ । १ । २ ] इतिसूत्रेऽर्थग्रहणं श्येनाद्यधर्मव्यावृत्त्यर्थमर्थपदमिति तद्भाष्यं चानपेक्षं स्यान्निषेधेषु चोदनाभावात् 'चोदनालक्षणो धर्मः' इत्येतावतैवानतिव्याप्तधर्मलक्षणसिद्धेरिति भावः ॥ ४१६ ॥

सु० टी०—एवमुपपादितं निवृत्तिपरत्वं प्राभाकरो दूषयति—

ननु निवृत्तिपरत्वमुदीरितं<br>विघटयामि निषेधगिरामिह ।<br>न हि कलञ्जमिति प्रतिपाद्यते<br>यदि तदानयनेन विरुध्यते ॥ ४१७ ॥

नन्विति । किं कलञ्जपदार्थस्य नञा निषेध उत तदन्वितभक्षणस्य किं वा तत्फलप्रार्थनायाः प्रत्ययार्थस्याथ वा मत्क्लृप्तस्य भक्षणविषयनियोगस्येति । तत्र नाऽऽद्य इत्याह—न हीति । भक्ष्यत्वेन प्राप्तमिदं कलञ्जं नेत्युक्ते तद्बोधकचक्षुषा विरोधोऽन्यथा निषेधोऽपि न सिध्येदिति ॥ ४१७ ॥

अ० टी०—इदानीं प्राभाकरमतमुत्थापयति—ननु निवृत्तीति । विघटनप्रकारमाह—न हीति । नञो नामान्वयेन प्रतिषेधपरत्व इदं कलञ्जमिति प्रत्यक्षेण विरोधः स्फुट इत्यर्थः ॥ ४१७ ॥

सु० टी०—द्वितीयतृतीयावाशङ्क्य निषेधति—

अथ कलञ्जपदार्थगभक्षणं<br>न हि तदाऽप्यमुनैव विरुध्यते ।

---

१ ख. ग. घ. °रामदम् ।

अथ तदीयफलस्पृहयाऽन्वयो
न हि तदप्यनुभूतिपराहतम् ॥ ४१८ ॥

अथेति । कलञ्जभक्षणस्य दृश्यमानत्वाच्चक्षुषैव विरोध इत्यर्थः । भक्षणश्रेयस्करत्वनिषेधश्चेदनुभवविरोध इत्याह—अथेति ॥ ४१८ ॥

अ० टी०—धात्वन्वयेऽपि स एव दोष इत्याह—अथ कलञ्जेति । भक्षणस्यापि प्रत्यक्षत्वादित्यर्थः । तर्हि नियोगमेव प्रत्ययार्थमादाय तन्निषेधः प्रत्ययसंगतनञर्थ इत्यपि न वाच्यमित्याह—अथ तदीयफलेति । यतस्तदप्यनुभवविरुद्धं तदा हि नियोगतः प्राप्तभक्षणस्यैव निषेधो न यदृच्छाप्राप्तभक्षणस्य निवृत्तिः सिध्यतीत्यर्थः ॥ ४१८ ॥

सु० टी०—चतुर्थमाशङ्कते—

अथ तदीयनियोगनिवर्तनं
भवतु भक्षणमस्ति तदिच्छया ।
न हि नियोगनिवृत्तिनिवेदने
सति कलञ्जमभक्ष्यमितीङ्ग्यते ॥ ४१९ ॥

अथेति । भक्षणनियोगनिषेधेऽपि रागप्राप्तभक्षणे दोषाभावान्निषेधशास्त्रवैफल्यमित्याह—भवत्विति । ननु तन्नियोगनिषेधादेव भक्षणस्यानर्थहेतुत्वं कल्प्यमिति नेत्याह—न हीति । कृष्यादौ नियोगाभावेऽप्यनर्थादर्शनादित्यर्थः ॥ ४१९ ॥

अ० टी०—ननु नियोगनिषेधादेव भक्षणस्यानर्थहेतुत्वकल्पनाद्यादृच्छिकतया प्राप्तभक्षणनिवृत्तिः सेत्स्यतीत्याशङ्क्य तदपि मनोरथमात्रमित्याह—अथ तदीयनियोगनिवर्तनमिति । भक्षणनियोगनिवर्तनं नञर्थो भवत्विति शङ्कानुवादभागः । दूषणभागो भक्षणमस्ति तदिच्छयेति । तच्चदाऽपीच्छया प्राप्तं भक्षणमस्त्येव निवर्तेत इत्यर्थः । तदेवोपपादयति—न हीति । नञ्युता वाक्येन नियोगनिवृत्तिनिवेदने सत्यपि कलञ्जमभक्ष्यमनर्थहेतुरिति नेङ्ग्यते न कल्प्यते कृष्यादिवददृष्टफलस्य तेनाप्रतिषेधादित्यर्थः । अप्राप्तप्रतिषेधश्चायं नियोगनिवृत्तिपक्षो भक्षणे नियोगाभावाद्रागत एव तत्प्राप्तेरित्यपि द्रष्टव्यम् ॥ ४१९ ॥

सु० टी०—अस्तु तर्हि कस्यचिदविगीतसुखादेर्निवृत्तिर्नञर्थ इति चेन्न तस्याशाब्दत्वेन नञन्वयायोग्यत्वादित्याह—

इह कलञ्जपदेन नञन्वयो
भवति वाऽस्य नञोऽदिसमागमः ।

---

१ ख. ग. घ. मन्तु त° ।

अदिगतेन लिङ्गादिपदेन वा
सह समेति नञत्र गतिस्त्रयी ॥ ४२० ॥

इहेति । नञः स्वसंबन्धिनिवृत्तिवाचित्वादुपपदतद्भिमक्तिधातुप्रत्यया-तिरिक्तस्य चात्र वाक्ये तत्संबन्धिनोऽभावात्कस्य निवृत्तिर्नञर्थ इत्यर्थः । त्रयीत्युपलक्षणम् ॥ ४२० ॥

अ० टी०——तर्ह्युक्तेभ्योऽन्यदेव किमपि निषेध्यमिह भविष्यतीति चेन्नेत्याह—इह कलञ्जेति । अदिसंगमो भक्षणान्वयो वा भवति अदिगतेन भक्षणधात्वर्थसंगतेनेति यावत् । अत्र नञोऽन्वये त्रयी गतिश्चतुर्थी नात्रास्ति द्वाराभावादित्यर्थः ॥ ४२० ॥

सु० टी०—तर्हि कथंचिदुक्तपक्षेष्वेव युक्तिरनुसरणीयेति चेन्नोद्भा-वितदूषणग्रस्तत्वादित्याह——

उदितपक्षपरिग्रहकारिणां
न च निषेधगिरामुपपादने ।
भवति शक्तिरतस्तु निषेधगी-
रपि नियोगपराऽभ्युपगम्यताम् ॥ ४२१ ॥

उदितेति । शक्तिः सामर्थ्यम् । तर्हि किं निषेधवाक्यमनर्थकमेव नेत्याह—अतश्चेति । भक्षणाभावविषयको नियोग एव तदर्थ इति बला-दभ्युपेयमित्यर्थः ॥ ४२१ ॥

अ० टी०—तर्ह्येष्वेव पक्षः कश्चित्कथंचिन्निर्वहणीय इति चेन्नासंभवादित्याह—उदितपक्षेति । उदितपक्षपरिग्रहकारिणां नामधातुप्रत्ययान्वयानां निषेधगिरां निवृत्ति-परत्वोपपादने शक्तिर्न च भवति तदसंभवस्योक्तत्वादित्यर्थः । तर्हि निषेधवाक्यानां का गतिरिति तामाह—अतश्चेति । निषेधगीरपीत्यपिशब्दो विधिगीर्दृष्टान्तार्थः । नियोग-परेति धात्वर्थनिषेधनियोगपरेत्यर्थः । न च भक्षणादेः कर्तव्यत्वनिवृत्तिवाक्यार्थपक्षे माना-न्तरविरोध इति भावः ॥ ४२१ ॥

सु० टी०—ननु नियोगभेदः शास्त्रभेदात्स चानुबन्धभेदादिति तद-संभवे कुतो हननादिनिषेधशास्त्रभेदः कुतश्च तन्नियोगभेद इति चेत्त-त्राऽऽह—

यथा च यागाद्यनुबन्धभेदा-
द्भिन्नेषु शास्त्रेषु नियोगभेदः ।

निवर्त्यभेदादपि तद्वदस्य
निवृत्तयोऽपि ह्यनुबन्धभूताः ॥ ४२२ ॥

यथा चेति । अनु पश्चाद्बध्यते ह्यवच्छेदकतयेति यागदानहोमादिर्धात्वर्थोऽनुबन्धस्तत्र विधौ यथा तद्भेदात्तत्तच्छास्त्रभेदे तद्विषयकमपूर्वं भिद्यत एवमत्रापि निषेध्यपानादिभेदेन निवृत्तिरूपविषयाणां भेदात्तद्विषयनियोगभेदसिद्धिः । निवृत्तीनामपि मनोव्यापारनिरोधात्मतयाऽनुष्ठेयत्वाच्छब्दान्तरादिवद्व्यावर्तकत्वेनानुबन्धरूपत्वादित्यर्थः ॥ ४२२ ॥

अ० टी०—यदि निवृत्तिनियोगो निषेधवाक्येषु वाक्यार्थस्तर्हि नाद्यान्न हन्यादित्यादिनिषेधशास्त्राणां मिथो न भेदः स्यान्निवृत्तिनियोगस्यैकत्वादिति चेन्नेत्याह—यथा च यागादीति । यथा विधिशास्त्रेऽपि यागदानहोमाद्यनुबन्धभेदादवच्छेदकभेदाद्भिन्नेषु शास्त्रेषु सत्सु तत्तद्विषयनियोगभेदोऽङ्गीकृत इति शेषः । तद्वदस्य निवर्त्यभेदान्निषेध्यभेदादपिशब्दाद्धात्वर्थनामभेदान्निषेधभेदाच्च भेद इति योजना । हि यस्मान्निवृत्तयो निषेधा उपलक्षणमेतन्निषेध्यादयोऽप्यनुबन्धभूता निवृत्तिनियोगस्येत्यर्थः । निषेध्यभेदान्निषेधभेदात्तद्विषयनियोगभेदे सति निषेधशास्त्रवाक्यस्यापि भेदः सिध्यतीत्युक्तं भवति ॥ ४२२ ॥

सु० टी०—ननु मत्पक्षे तृप्तिहेतुभक्षणस्य निवर्तनानुपपत्त्याऽनर्थहेतुत्वसिद्धिस्तव तु निषिद्धप्रवृत्तस्यैव नियोज्यत्वात्तन्निवृत्तिमात्रेण नियोगसिद्धेः कुतः प्रवृत्तेरनिष्टहेतुत्वासिद्धिरिति चेन्न कुतश्चिदित्याह—

निवृत्तिसिद्ध्याऽपि नियोगसिद्धिः
प्रवर्तमानस्य न गर्तपातः ।
निषिद्धचेष्टा निरयस्य हेतु-
र्नियोगतो नाध्यवसीयते हि ॥ ४२३ ॥

निवृत्तीति । निवृत्तिशास्त्रान्नियोग एव सिध्यति तस्यैव लिङर्थत्वान्न तु भक्षयितुर्हन्तुर्वा नरकपातो मानाभावादित्यर्थः । ननु योऽवगुरेत्तं पातयादिति वाक्यशेषात्प्रवृत्तावनर्थः कल्प्यतामिति नेत्याह—निषिद्धेति । नियोज्यस्य निवृत्त्या नियोगस्य नैराकाङ्क्ष्यान्नार्थवादैस्तदनपेक्षितफलसमर्पणं शक्यमित्यर्थः । किं च न तावन्नियोगस्य यातनाफलत्वं कार्यस्य फलानपेक्षत्वादनिष्टस्य नियोज्याविशेषणत्वाच्च । नापि तद्विषयीभूतनञर्थस्य विधेयस्यानिष्टाहेतुत्वान्नाप्यवगोरणस्य तस्य

१ ख. ग. घ. निवृत्तिभे° ।

लौकिकत्वेन विध्यसंस्पर्शात् । वाक्येनैवानिष्टहेतुत्वप्रतिपादने वा वाक्यभेदादवगोरणाभावेनापूर्वं कुर्यात् । अवगोरणं च यातनाहेतुरिति । कथं चेदं वाक्येनापि प्रतिपाद्येत (+ सिद्धे व्युत्पत्त्यभावात् । कथं च क्षणिकमवगोरणं कालान्तरीययातनां साधयेत् । अपूर्वद्वारेति चेद्या)-गादेरपि तथोपपत्तावपूर्वाभिधानवैयर्थ्यात् । न ह्यवगोरणादिविषयक-मपि कार्यान्तरं तवास्तीति दिक् ॥ ४२३ ॥

अ० टी०—नन्वस्मिन्पक्षे निषिद्धानुष्ठानस्य कथमनर्थहेतुत्वसिद्धिरिति चेन्न कथं-चिदपि तत्र प्रमाणाभावादित्याह—निवृत्तिसिद्ध्याऽपीति । निषिद्धानुष्ठानस्यानर्थहे-तुत्वं विनाऽपि निवृत्तिमात्रसिद्ध्याऽपि नियोगसिद्धिर्भवति नित्यनियोगवदस्यापि फलनि-रपेक्षत्वाद्विषयनिवृत्तिमात्रेण नियोगसिद्धेरित्यर्थः । एवं निषेधवाक्यस्यापि नियोगनिष्ठत्वा-न्निषिद्धक्रियायां प्रवर्तमानस्य न गर्तपातो निरयप्राप्तिः शास्त्रतोऽवगम्यत इति शेषः । तदेवोपपादयति—निषिद्धचेष्टेति । हि यस्मान्निषिद्धचेष्टा निरयस्य हेतुरिति नियो-गतो विधितो नाध्यवसीयते । न खलु विधिना विना वेदवाक्यादपूर्वार्थावभृतिरस्ति । विधिश्च नियोगमात्रपरो नित्यविधिवन्न तु स्वर्गकामादिविधिवत्फलवान्नियोगपरः । न हि निषेधवाक्येषु स्वर्गकाम इत्यादिवद्गर्तपातपरिहारकामो नाद्यान्न हन्यादित्यादि प्रतीयतेऽतो न नियोगतोऽनर्थहेतुत्वं कलञ्जभक्षणादेरवसीयत इत्यर्थः । निषिद्धक्रियानिवृत्त्यनुष्ठाने तद्वि-रोधिनिषिद्धानुष्ठानासिद्धौ गर्तपाताभावोऽर्थसिद्ध इति भावः ॥ ४२३ ॥

सु० टी०—ननु नियोगोऽपुरुषार्थायां निवृत्तौ नियोक्तुमशक्नुवन्नर्था-द्भक्षणादिप्रवृत्तेरनर्थहेतुत्वं कल्पयिष्यतीति चेत्स्यादेवं यदि निवृत्तौ साक्षात्प्रेरयेन्न तु तथेत्याह—

> नियोग एवैष पुमान्नियुज्यते
> नियोगसिद्ध्यै तु पुनर्नियुज्यते ।
> परत्र कर्मस्वथ वा निवृत्तिषु
> स्थितिः प्रसिद्धेति नियोगवादिनाम् ॥ ४२४ ॥

नियोग एवेति । नियोगो हि स्वतः कृत्युद्देश्यत्वा१न्मां कुर्विति स्वात्मन्येव पुरुषं नियुङ्क्ते स्वस्य चापूर्वरूपत्वेन साक्षान्निर्वाहाशक्तेर्विषयकृतिरेव

---

+ ख. पुस्तकस्थोऽयं ग्रन्थः ।

---

१ क. ग. °त्वात्पन्मां कु° ।

नियोगकृतिरिति विषये यागादौ निवृत्तौ वा स्वसिद्ध्यर्थमेव नियुङ्क्ते इति सिद्धान्तादपुरुषार्थाया अपि निवृत्तेः प्रधानभूतनियोगप्रयुक्तयाऽनुष्ठानसंभवान्न प्रत्यवायकल्पनेत्यर्थः ॥ ४२४ ॥

अ० टी०—नन्वभिमतफलकलञ्जभक्षणादिनिवृत्तौ विशिष्टफलाभावे पुरुषं प्रेरयितुमशक्नुवन्नियोगो निवृत्तेरनर्थपरिहारत्वकल्पनयाऽर्थात्प्रवृत्तेरनर्थफलत्वं कल्पयेन्न फलहीन एवेति चेन्न निवृत्तौ साक्षात्प्रेरणाभावादित्याह—नियोग एवैष इति । एष पुमानधिकृतो नियोग एव साक्षान्नियुज्यते प्रथमतः पुनर्नियोगस्य साक्षात्कृतिसाध्यत्वासंभवात् । नियोगसिद्ध्यै तु निवृत्त्यनुष्ठानेऽपि नियुज्यते न पुनः साक्षात्तेन तत्र फलकल्पनमित्यर्थः । एतच्च परत्र कर्मसु प्रवृत्तिरूपेष्वथ वा निवृत्तिरूपेषु कर्मसु च तुल्या । इतीत्थं नियोगवादिनां स्थितिः प्रसिद्धा सर्वत्र नियोगसिद्धिरेव साध्या। धात्वर्थस्तु नियोगसिद्ध्यर्थमेवानुष्ठेयो नियोगस्य साक्षात्कृतिसाध्यत्वासंभवात्फलं तु कामिनियोगेऽप्यनुद्देश्यो नियोगविशेषसामर्थ्यसिद्ध इति भावः ॥ ४२४ ॥

सु० टी०—ननु भक्षणादिप्रागभावरूपाया निवृत्तेरनादित्वात्कथमनुष्ठेयत्वमिति चेत्तत्परिपालनद्वारेणेत्याह—

प्रवृद्धरागस्य निवृत्तयोऽस्थिरा-
स्ततः स्थिरत्वाय नियुज्यते पुमान् ।
निवृत्तिदेशेषु नियोगबुद्धितो
निवृत्तिमूर्ध्वं परिपालयिष्यति ॥ ४२५ ॥

प्रवृद्धेति । भक्षणादिषु सुखलोभेन प्रवृद्धरागस्य पुंसो निवृत्तयो न स्थैर्यभाजस्तत्प्रच्यावकरागप्राबल्यात्ततश्च निवृत्तिदेशेषु प्रतिषेधेषु नियोगः स्यादिति बुद्ध्या निवृत्तिं पालयत्विति तस्याः स्थैर्याय पुमान्प्रेर्यत इत्यर्थः ॥ ४२५ ॥

अ० टी०—ननु निवृत्तिर्नाम क्रियानुत्पादस्तस्याः प्रागेव सिद्धत्वात्कथमनुष्ठानमिति चेत्तत्राऽऽह—प्रवृद्धरागस्येति । निषिध्यमानक्रियाफलेषु प्रवृद्धो रागो यस्य तस्य प्रवृद्धरागस्य निवृत्तयोऽस्थिरा निवृत्तिप्रागभावस्य प्रच्युतिर्हि तस्य जायत इत्यर्थः । ततो हेतोः स्थिरत्वाय निवृत्तिस्थैर्याय पुमान्निवृत्तिदेशेषु निवृत्तिनियोगविषयेषु नियुज्यते । कथं नियोगतस्तत्स्थैर्यमिति तदाह—नियोगबुद्धित इति । नियोगबुद्धेरूर्ध्वं निवृत्तिं परिपालयिष्यतीति नियोगबलान्निवृत्तिनिष्ठ एव भवतीत्यर्थः ॥ ४२५ ॥

सु० टी० ननु नियोगवादिभिरभावानभ्युपगमात्कुतो निवृत्तिर्नियोगविषय इति चेत्तत्राऽऽह—

अनाद्यजग्धेश्च निवृत्तिनिष्ठा-
विशिष्टदन्तौष्ठनिविष्टसंवित् ।
अनन्यसंसर्गिपदार्थसंवि-
न्निवृत्तिरित्येष हि राजमार्गः ॥ ४२६ ॥

अनाद्येति । चर्वणाद्यविशिष्टकेवलदन्तौष्ठविषयसंविद्रूपत्वादभक्ष्यभक्षणनिवृत्तिरनुष्ठानयोग्यैवेष्यत इत्यर्थः । कुतो भावात्मिका संविदभाव इति चेत्तद्व्यवहारहेतुत्वादित्याह—अनन्येति । अन्यन्निषेध्यं भक्ष्यादि तत्संसर्गशून्यस्य दन्तादेर्धर्मिणः कैवल्येन ज्ञानमेव निवृत्तिबुद्ध्यालम्बनमिति प्रसिद्धमेवेत्यर्थः । तदुक्तं—

'गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् ।
प्रसिद्धमेव लोकेऽस्मिन्बुद्धबन्धुः प्रभाकरः' इति ॥ ४२६ ॥

अ० टी०—ननु नञर्थस्याभावस्य प्राभाकरैरनङ्गीकारादभावस्यैव निवृत्तिशब्दार्थत्वात्कथं तत्र नियोगस्तदनुष्ठानं वेति चेत्तत्राऽऽह—अनाद्यजग्धेश्चेति । नाऽऽद्यमनाद्यमभक्ष्यं तस्यानाद्यस्य जग्धेर्भक्षणस्य निवृत्तिनिष्ठा नाम विशिष्टदन्तोष्ठनिविष्टसंवित् । विशिष्टेति कैवल्यमुच्यते । अविशिष्टेति वा छेदः । केवलदन्तोष्ठनिविष्टसंविदिति यावत् । निर्व्यापारतया ज्ञायमानदन्ताद्यवस्थानमजग्धिरित्यर्थः । नञर्थोऽपि नाभाव इत्याह—अनन्येति । केवलपदार्थसंविदित्यर्थः । सर्वत्र हि धर्मिणो निषेध्यसंसर्गाभावधुर्यकैवल्यमेव ह्यभावप्रतीतिरालम्बनमिति भावः ॥ ४२६ ॥

सु० टी—उक्तं नियोगवादिपक्षमाक्षिपति—

ननु समीहितसाधनता लिङो
लशुनगृञ्जनभक्षणसंश्रया ।
भवति वाच्यतयाऽभिमताऽस्य नो
नञपि तद्विनिवृत्तिनिवेदकः ॥ ४२७ ॥

नन्विति । प्रधानान्वयस्याभ्यर्हितत्वान्नञस्तावल्लिङैव संबन्धः । तद्धर्मश्च भक्षणेष्टसाधनत्वमिति तन्निवृत्तिर्नञर्थ इत्यर्थः ॥ ४२७ ॥

अ० टी०—ननु यदुक्तं नामादीनामन्यतमस्यापि निषेधोऽत्र प्रत्यक्षविरोधान्न संभवतीति नञो नाभावपरत्वमिति तदसदिष्टसाधनताभावपरत्वसंभवादिति कस्यचिच्छङ्का-मुत्थापयति—ननु समीहितेति । लशुनादिभक्षणसंश्रया समीहितसाधनता लिङो वाच्यतया नोऽस्माकमभिमता भवति । अस्य निषेधवाक्यस्य संबन्धी यो लिङ् तस्य लिङ इति योज्यम् । अस्य लिङ इति सामानाधिकरण्यं वा । अथवाऽस्य प्रकृतवाक्यस्य संबन्धी नञपीति संबध्यते । तद्विनिवृत्तिनिवेदक इष्टसाधनताभावबोधक इत्यर्थः ॥४२७॥

सु० टी०—एतच्च पूर्वपक्षी दूषयति—

तदसदिष्टफलोद्भवदर्शना-
लशुनगृञ्जनपर्युषिताशनात् ।
नहि निषिद्धपदार्थनिमित्तकः
सुखलवः पुरुषस्य न विद्यते ॥ ४२८ ॥

तदसदिति । प्रत्यक्षतो लशुनादिभक्षणतस्तृप्तिफलोद्भवदर्शनाद्बाधितमि-दमित्यर्थः ॥ ४२८ ॥

अ० टी०—एतदपि नोपपद्यते प्रत्यक्षविरोधादित्याह—तदसदिति । सुखं हि सर्वप्रवृत्तीनां फलमिष्टं तदिह प्रत्यक्षं लशुनगृञ्जनपर्युषिताशनादिष्टफलोद्भवस्य प्रत्यक्षत्वा-ल्लशुनादिभक्षणस्य समीहितसाधनत्वनिवृत्तिपरत्वं नञोऽनुपपन्नमित्यर्थः । लशुनं कन्दवि-शेषः श्वेतो दुर्गन्धिर्गृञ्जनं तु लशुनाकार आरक्तः कन्दः । पर्युषितं दिनान्तरपक्वमन्नम् । उक्तमेव व्यतिरेकमुखेण व्यनक्ति—न हीति । न विद्यत इति नहि किं तु विद्यत एवे-त्यर्थः । पूर्वं निरस्तोऽप्ययं पक्षः पुनराशङ्क्य पूर्वपक्षिणा दूषितः सिद्धान्तिनोऽत्रैवाऽऽ-दरं दृष्टेति द्रष्टव्यम् ॥ ४२८ ॥

सु० टी०—स्वाभिप्रायप्रकटनेनोद्धरति—

अदृष्टदोषं परिहृत्य शंसतः
कलञ्जमास्वाद्य सुखित्वमात्मनः ।
पुमानबोधोपहतः समीहते
तदीहिताभावपरा निषेधगीः ॥ ४२९ ॥

अदृष्टेति । प्रार्थनार्थया हि लिङा नञः संबन्धः । प्रार्थना चादृष्टदोष-(+ शून्येष्टसाधनजन्ये सुखे मुख्येति तन्निषेधार्थत्वे न किंचिद्दूषणमि-

+ ख. पुस्तकस्थोऽयं ग्रन्थः ।

त्यर्थः । कलञ्जभक्षणाद्दृष्टदोषर)हितमात्मनः सुखित्वं शंसतः सकाशा-च्छुत्वेति शेषः । अबोधोपहतो भ्रान्तः समीहते प्रार्थयते ॥४२९॥

अ० टी०—तस्मात्कस्यचिदपि निषेधासंभवान्निवृत्तिनियोगनिष्ठं निषेधवाक्यमिति प्राभाकरमतं प्राप्तमाभासयति—अदृष्टदोषमिति । अलौकिकं शास्त्रैकगम्यं दोषं दुःखफलं परिहृत्यानादृत्य कलञ्जं विषलिप्तेषु हतमृगमांसमास्वाद्याऽऽत्मनः सुखित्वं शंसतः प्रार्थयमानस्य पुंसो यदीहितं प्रार्थितं तदीहिताभावपरा निवृत्तिगीरित्यन्वयः । तस्येहितस्य योऽभावस्तत्परं निषेधवाक्यमित्यर्थः । ईहितमीहा तच्च तदीहितं च तदीहितमिति विग्रहः । ननु कलञ्जास्वादनेनाऽऽत्मनः सुखित्वप्रार्थनाया अपि प्रत्यक्षसिद्धत्वान्न निषेधमर्हतीत्याशङ्क्य तादृशोऽनुभवो न प्रमाणं किं तु भ्रम इत्याह—पुमानबोधोपहतः समीहत इति । यस्मादित्यध्याहार्यम् । यस्मात्पुमानेवं प्रार्थयमानोऽबोधोपहतः कलञ्जभक्षणजन्यभाव्यनर्थाज्ञानग्रस्तोऽरण्यप्रदेशेऽतिरमणीयदर्शनेन्द्रवारुणीफलभक्षणे प्रवृत्त इव तत्परिपाकानभिज्ञः क्षुधितः समीहते प्रार्थयते । तस्माद्भ्रान्तिसिद्धप्रार्थनाविषयत्वाल्लिङस्तन्निवृत्तिपरो नञित्यभिप्रायः । न च धर्मिणो निषेध्यसंसर्गराहित्यकैवल्यमेवाभावप्रत्ययालम्बनं निषेध्यसंसर्गराहित्यस्यैव तदालम्बनत्वादन्यथा तत्रापि विधिमुखप्रत्ययवेद्यत्वप्रसङ्गात्केवलभावस्य तथात्वाव्यभिचारादिति भावः ॥ ४२९ ॥

सु० टी०—तथा च फलप्रार्थनायाः प्रत्यक्षत्वेऽपि भ्रममूलत्वात्प्रमाणमूलकादृष्टभयरहितत्वं तस्याः प्रतिषिध्यते सविशेषणे हीतिन्यायादित्याह—

> नरकपातविवर्जनवर्त्मना
> भवतु विप्रवधात्परमार्थतः ।
> मम सुखित्वमितीच्छति यत्पुमा-
> न्न तदितीह निषेधगिरोच्यते ॥ ४३० ॥

नरकेति । यद्विप्रवधात्परमार्थतो नरकपातवर्जितं सुखित्वं ममास्त्विति प्रार्थयते तन्नेत्यर्थः ॥ ४३० ॥

अ० टी०—नन्वनुभूयमाना प्रार्थना तादृशी कथं निषेद्धुं शक्यत इति चेन्न तस्याः प्रामाणिकत्वस्य निषेधोपपत्तेरित्याह—नरकपातेति । ब्रह्मवधादौ प्रवर्तमानः पुरुषो मम विप्रवधादस्मान्मया क्रियमाणान्नरकपातविवर्जितमार्गेणानिष्टाननुबन्धित्वप्रकारेण सुखित्वं भवत्विति यत्परमार्थतः परमाग्रहबुद्ध्येच्छतीति यत्तन्नेतीह वेदेषु निषेधगिरोच्यते । वस्तु-

---

१ क. °था पैकल्यमा° ।

गत्या बलवदनिष्टानुबन्धिन्यामेव क्रियायां तद्वैपरीत्यं मोहात्कल्पयन्पुमांस्तत्र प्रवर्तमानस्त-त्क्रियायास्तत्कल्पितसमीहितसाधनत्वाभावबोधनेन श्रुत्या स ततो निवर्त्यत इति भ्रान्तिप्र-तिपन्नेष्टसाधनताभावबोधकमेव निषेधवाक्यं नानुष्ठेयबोधकमिति तात्पर्यार्थः ॥ ४३० ॥

सु० टी०—निषेधस्य विशेषणसंक्रान्तत्वमेव स्पष्टयति—प्रमाणत इति द्वाभ्यां—

प्रमाणतो नास्ति निषिद्धकर्मणः
फलस्पृहाऽदृष्टभयं विना तव ।
भ्रमादबोधप्रभवात्प्रवर्तसे
न तात मानेन फलस्पृहाऽत्र ते ॥ ४३१ ॥
इति श्रुतिः शास्ति निषिद्धकर्मणि
प्रवृत्तिमन्तं पुरुषं नञन्विता ।
न चायमर्थोऽपहतः प्रमान्तरै-
र्नहि प्रमाणैरपरैर्विरुध्यते ॥ ४३२ ॥

निषिद्धकर्मणः सकाशादिति हेतुगर्भं विशेषणम्—श्रुतिरिति । नञ्संबद्धा प्रार्थनार्थलिङ्श्रुतिः प्रवृत्तिमन्तं मोहात्प्रवृत्त्युन्मुखम् । न चैवं सति मानान्तरविरोध इत्याह—न चेति । अपहतो बाधितः ॥ ४३१–४३२ ॥

अ० टी०—पूर्वपद्योक्तमेव स्फुटयति—प्रमाणत इति । या तवादृष्टभयं विना पारलौकि-कभयानादरेण निषिद्धकर्मणो विप्रवधादेः फलप्रार्थना सा प्रमाणतो नास्ति प्रमितिमूला सा न भवतीत्यर्थः । यत एवं तस्माद्धे तात वत्साबोधप्रभवादज्ञानमूलाद्भ्रमात्तत्र प्रवर्तसे ते फलस्पृहा या जायते सा प्रमाणतः परमार्थतो नेति योजना ॥ ४३१ ॥

उपपादितां निषेधवाक्यशक्तिमुपसंहरति—इति श्रुतिः शास्तीति । निषिद्धकर्माणि प्रवृत्तिमन्तं पुरुषं नञ्पदेनान्विता श्रुतिरित्यस्मदुक्तप्रकारेण शास्ति बोधयती-त्यर्थः । प्रकृतश्रुतिवाक्यं न स्वार्थपरमिति नाऽऽशङ्का कार्येत्याह—न चायमर्थ इति । प्रमान्तरैरयमेतच्छ्रुत्युक्तोऽर्थो न चापहृतः । अपशब्दोऽत्रोपशब्दार्थोऽव्ययानामनेकार्थत्वात्प्र-युक्तो न मानान्तरेण प्रापित इत्यर्थः । अनेनास्यानुवादत्वशङ्का निरस्ता । न ह्ययमर्थः केनचित्प्रमाणेन क्वचित्सिद्धस्तथाऽपि गुणवादो भविष्यतीत्याशङ्काऽपि न कार्येत्याह— न हीति । विरोधिनः प्रमाणान्तरस्यानिरूपणादित्यर्थः । न च प्रकृतिक्रियाफल ईप्सित-

१ क. °पहृतः । ग. °पहृतः ।

त्वविरोधः शङ्कनीयस्तस्याभ्रान्तित्वोपपादनान्मानान्तरस्य तद्विरोधिनोऽदर्शनाच्छ्रुतेः प्रामाण्यस्य स्थितत्वादिति भावः ॥ ४३२ ॥

सु० टी०—भ्रान्तिप्रसक्तानिष्टानुबन्धिफलप्रार्थनानिवर्तकत्वं निषेधस्येत्येतत्सदृष्टान्तमाह—भुजङ्गभोगमिति द्वाभ्याम्—

भुजङ्गभोगं सुकुमारशीतलं
निदाघसंतापनिवृत्तये शिशुम् ।
भ्रमादुपादित्सुमुदीक्ष्य कातरा
निवर्तयेत्तज्जननी यथा तथा ॥ ४३३ ॥

भ्रमादनर्थस्य निदानमादरा-
त्कृतार्थतायै लशुनादिभक्षणम् ।
नञन्विता वैदिकचोदनाऽप्यसौ
विधित्सुमालक्ष्य निवर्तयिष्यति ॥ ४३४ ॥

यथा हि तज्जननी तद्धितकारिणी भयरहितसंतापनिवृत्त्यर्थं भुजङ्गमुपादित्सुं शिशुं निवर्तयत्येवं निषेधश्रुतिरपि सर्वहितैषिणी निषिद्धकर्माभिमुखान्भ्रान्तानित्यर्थः ॥ ४३३ ॥ ४३४ ॥

अ० टी०—भ्रान्तिनिवृत्तिमात्रोपक्षीणं निषेधवाक्यमित्यत्र दृष्टान्तमाह—भुजङ्गभोगमिति । स्पष्टार्थः ॥ ४३३ ॥

दार्ष्टान्तिकमाह—भ्रमादनर्थस्येति । पूर्वपद्यान्ते स्थितस्तथाशब्दोऽस्मिन्पद्ये योज्यः । वस्तुगत्याऽनर्थस्य निदानं लशुनादिभक्षणं भ्रमात्कृतार्थताया आदराद्विधित्सुं पुरुषमञ्जसाऽपि नञन्विता वैदिकचोदना निवर्तयिष्यतीत्यन्वयः ॥ ४३४ ॥

सु० टी०—एवं निषेधश्रुतेर्निवृत्तिनिष्ठतामुपपाद्य विषयासंभवान्नियोगपक्षं प्रतिक्षिपति—

क्रियानुप्रवेशं विना प्रागभावः
प्रसक्तक्रियाया न निर्वोढुमीशः ।
गुणद्रव्यवन्नित्यनिष्पन्नभावा-
त्पदत्वं नियोगस्य भावार्थवद्वः ॥ ४३५ ॥

---

१ क. °र्थवद्वाः ।

क्रियेति । कोऽत्र नियोगस्य विषयो न तावद्भक्षणाभावसंकल्पो लक्षणाप्रसङ्गात् । नापि भक्षणादिप्रागभावस्तस्य निष्पन्नरूपस्य क्रियानुप्रवेशमन्तरेणाननुष्ठेयत्वाद्गुणद्रव्यवत् । यथा नीचैः सदो मिनुयादित्यादौ नीचैस्त्वादिर्गुणः सदोमानादिक्रियानुप्रवेशं विना वृष्टिकामादिनियोगस्य । यथा वा द्रव्यं दधि गोदोहनादिहोमप्रणयनाद्यनुप्रवेशं विनेन्द्रियपशुकामादिनियोगस्य न विषय इत्यर्थः । प्रसक्तक्रियायाः प्रागभाव इति संबन्धः । पदत्वं विषयत्वं भावार्थवदिति व्यतिरेकदृष्टान्तो यथा भावार्थः साध्यत्वाद्विषयो न तथा नामार्थ इत्यर्थः ॥३३५॥

अ० टी०—एवं स्वाभिमतं भान्तिप्रतिपन्नक्रियाफलप्रार्थनानिवृत्तिनिष्ठत्वं निषेधवाक्यस्योपपाद्य पराभिमतं नियोगनिष्ठत्वं नैव संभवतीति प्रतिपादयति—क्रियानुप्रवेशमिति । अयमर्थः—विधेरनुष्ठेयो भावार्थो विषयस्तद्द्वारेण नामार्थोऽपि तद्विषयो न साक्षादिति हि शास्त्रस्थितिस्तथा च निषिद्धक्रियायाः प्रागभावोऽनुष्ठेय इति वदता तस्य गुणद्रव्यवदारुण्यदध्यादिवत्क्रियानुप्रवेशेन नियोगविषयत्वं वक्तव्यं तेन विना प्रसक्तक्रियायाः प्रागभावो नियोगस्य पदत्वं नियोगनिर्वर्तकतया तद्विषयत्वं निर्वोढुं नेशो न समर्थः कुतो निष्पन्नभावाद्गुणद्रव्यवन्निष्पन्नस्वरूपत्वाद्वो युष्मत्पक्ष इति योजना । भावार्थवदिति वैधर्म्यदृष्टान्तो यथा भावार्थः पुरुषकृतिसाध्यत्वात्साक्षान्नियोगविषयो न तथा प्रागभावो निष्पन्नत्वेनासाध्यत्वादित्यर्थः ॥ ४३५ ॥

सु० टी०—अस्तु तस्यापि पालनक्रियानुप्रवेशाद्विषयत्वमिति चेन्नेत्याह—

> न पाल्यत्वयोगादलंभूष्णुभावो
> यतः पालनं श्रूयते नात्र वाक्ये ।
> न खल्वश्रुतं गृह्यते न्यायहाना-
> यथा न श्रुतं त्यज्यते तद्भयेन ॥ ४३६ ॥

नेति । अलंभूष्णुभावः समर्थत्वं नियोगविषयतामिति शेषः । नन्वश्रुतमपि नियोगसिद्ध्यर्थं कल्प्यमिति नेत्याह—न खल्विति । न ह्यश्रुतं पालनं न हन्यामिति संकल्पो वा विषयत्वाय कल्प्यते न्यायहानाच्छ्रुतमुख्यार्थोपपत्तावश्रुतलक्षणाकल्पने गौरवादित्यर्थः ॥ ४३६ ॥

अ० टी०—तर्हि निवृत्तिं पालयेदिति पालनक्रियानुप्रवेशेन विधिविषयः प्रागभावो

---

१ क. 'षयीनं य' ।

भविष्यतीति चेन्नेत्याह—न पाल्यत्वयोगादिति । अत्रेदं वक्तव्यं–परिपालनेनानुष्ठेयत्वं प्रागभावस्य युक्त्या कल्प्यते श्रुत्या वा प्रतीयत इति तत्र नाऽऽद्य इत्याह—न पाल्यत्वेति । भूष्णुभावो भवनशीलत्वं प्रागभावस्येति शेषः । न हि प्रागभावस्यानादिसिद्धस्य पाल्यत्वसंबन्धात्साध्यत्वमलं योग्यमित्यर्थः । न द्वितीय इत्याह—यत इति । अश्रुतमपि कल्प्यत इति चेन्न न्यायविरोधादित्याह——न खल्विति । श्रुतं प्रसक्तक्रियायाः फलप्रार्थनाप्रतिषेधमकस्मात्परित्यज्याश्रुतपाल्यत्वाविधिकल्पनं न्यायपथानारूढमित्यर्थः ॥ ४३६ ॥

सु० टी०—कथं श्रुतहानिरिति चेत्तत्राऽऽह—

उदासीनता च श्रुता नञ्पदार्थो
नियोगे सति त्याज्यता याति सद्यः ।
अतद्योग्यभावादयोग्यः पदार्थो
न वाक्यार्थभागिष्यते जैमिनीयैः ॥ ४३७ ॥

उदासीनतेति । निषेधे श्रुते या वधादिप्रवृत्तेर्वारितोऽस्मीत्युदासीनता प्रतीता सैव नञर्थः श्रौतः सा नियोगपक्षे त्यज्यते प्रवर्तकत्वकल्पनात् । ननु लिङर्थानियोगत्यागेऽपि श्रुतहानिरिति नेत्याह—अतद्योग्येति । नियोगस्योक्तन्यायेन नञर्थान्वयायोग्यत्वादित्यर्थः । जैमिनीयैर्भाट्टैः ॥४३७॥

अ० टी०—ननु यो नञो मुख्योऽर्थः प्रतिषेधः श्रुतः स एव नियोगविषयस्तस्य तु पालनानुप्रवेशेनानुष्ठेयत्वमित्येतावदिह वयं ब्रूमोऽतो न श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इति चेन्नैवमप्युपपद्यत इत्याह—उदासीनता चेति । चशब्दोऽवधारणार्थः । नञ्पदार्थ इहोदासीनतैव श्रुता या सा नियोगेऽभ्युपगम्यमाने सति सद्यस्त्याज्यतामेति । कुतः—अतद्योग्यभावाद्विधिं प्रति विषयत्वेनान्वययोग्यत्वाभावात् । न ह्यौदासीन्यमनुष्ठेयं भवत्यनुष्ठेयं च न विधिविषय इत्यर्थः । अयोग्यस्यार्थस्य वाक्यार्थतया परिग्रहो न न्यायवित्संमत इत्याह—अयोग्यः पदार्थ इति ॥ ४३७ ॥

सु० टी०–किं च नियोगपक्षे प्रत्यवायासिद्धिरपि दूषणमिति प्रागुक्तं समुच्चिनोति—

निषिद्धक्रिया प्रत्यवायाय नेति
स्वकर्णौ जनः प्रोर्णुते पापभीरुः ।

समाकर्ण्य दुर्भाषितं पार्श्ववर्ती
न पापाक्षरं किंचिदेतादृगन्यत् ॥ ४३८ ॥

निषिद्धेति । इष्टापत्तिं निरस्यति—स्वकर्णाविति । ततश्च शिष्टविगर्हणमिति भावः । किं चैवं वदन्स्वजनैरपि परिहार्यः स्यादित्याह—पार्श्वेति । कर्मविपाकप्रायश्चित्तादिश्रुतिस्मृतिविरुद्धाभ्युपगमान्नास्तिक्यमपीत्याह—दुर्भाषितमिति । इतश्चेदं दुर्भाषितम् । न हि दुरिताभावकामादन्यो नियोज्यः संभवति भक्षणप्रवृत्तस्य नियोज्यत्वानुपपत्तेर्नञर्थविशेष(*णीभूतस्य भक्षणस्य नियोज्याविशेषणत्वादुभयविशेषणत्वे वाक्यभेदात् । नञ्विशेष )णस्यैव सत आर्थं नियोज्यविशेषणत्वमिति चेदेवमश्रुतस्यापि तथात्वे जीवतः शुचेरेव विश्वजिदादावपि नियोज्यत्वसंभवान्नियोज्यान्तरकल्पना न स्यात्स्वर्गकामधर्मिकल्पनात आख्यातार्थाक्षिप्तकर्तृसामर्थ्यप्राप्तस्य जीवनस्य विशेषणत्वमात्रकल्पने लाघवाच्चेति तन्न्यायभङ्गः प्रयुक्तिलाघवाय तत्कल्पनं तु प्रकृतेऽपि तुल्यमिति संक्षेपः ॥ ४३८ ॥

अ० टी०—तदेवमत्र विषयाभावान्न निषेधवाक्यस्य नियोगनिष्ठत्वसंभव इति प्रतिपादितं यत्पुनरुक्तं निवृत्तिपरिपालनेन नियोगकर्तव्यतायां पर्यवस्यति निषेधवाक्यं न तु प्रवर्तमानस्य गर्तपाते तत्प्रमाणमिति तदत्यन्तमसंगतं सर्वलोकप्रसिद्धिविरोधादित्याह—निषिद्धक्रियेति । निषिद्धक्रिया प्रत्यवायाय पापाय नेति दुर्भाषितं ममाऽऽकर्ण्य पापभीरुः पार्श्ववर्ती जनः स्वकर्णौ प्रोर्णुते कर्णरन्ध्रं पूरयत्याच्छादयतीत्यन्वयः । यत एतादृगन्यन्न किंचित्पापाख्यमस्त्यतः प्रोर्णुत इत्यर्थः । अविगीतसज्जनप्रसिद्धेर्भ्रान्तिमूलत्वाभावाद्यथा तत्प्रसिद्धिविरोधो न भवति तथा निषेधवाक्यव्याख्यानमुचितं न विपरीतमिति भावः ॥ ४३८ ॥

सु० टी०—दृष्टविरुद्धश्च प्रत्यवायानभ्युपगम इत्याह—

निषिद्धक्रिया प्रत्यवायाय नो चे-
त्तदा दुःखमाकस्मिकं सर्वपुंसाम् ।
सुखं पुण्यमूलं यथा सर्वपुंसां तथा
दुःखमप्यस्तु वः पापमूलम् ॥ ४३९ ॥

निषिद्धेति । न चादृष्टमेव तद्धेतुस्तस्यैकरूपत्वे सुखदुःखवैचित्र्यानुपपत्तेः । ततश्च सुखहेतुसुकृतवद्दुरितमपि दुःखकारणमुपेयमित्याह—सुखमिति ॥ ४३९ ॥

---

* क. पुस्तके नायं ग्रन्थः ।

अ० टी०—किं च निषिद्धक्रियाव्यतिरेकेण दुःखहेतुत्वनिरूपणात्सैव तद्धेतुरित्यङ्गीकरणीयमित्याह—निषिद्धक्रिया प्रत्यवायाय नो चेदिति । आकस्मिकमकारणकं स्यादित्यध्याहारः । न ह्यकारणकार्योत्पत्तिः संभवत्यतो दृष्टकारणस्य कस्यचिदभावेऽपि कदाचिज्जलाग्निकण्टकादिसंसर्गद्वारकं दुःखं दृश्यमानमदृष्टमेव कारणं कल्पयति । अदृष्टं च क्रियाजन्यं क्रिया च निषिद्धैव पापमूलमिति । निषिद्धक्रियोत्पन्नपापादृष्टमूलकमेव सर्वं सर्वेषां प्राणिनां दुःखमिति भावः । एवं सति यथा सर्वपुंसां सुखं पुण्यमूलमित्यविवादं तथा दुःखमपि वो युष्माकं पापमूलमस्तु नात्रार्धजरतीयं युक्तमित्यर्थः ॥ ४३९ ॥

सु० टी०—नन्वस्तु दुःखं पापजन्यं पापं तु निषिद्धक्रियाजन्यमेवेत्येतत्कुत इति चेत्तत्राऽऽह—

निषिद्धक्रियां चोदितस्याक्रियां वा
विना नास्ति पापस्य निष्पत्तिहेतुः ।
ततस्तद्द्वयं पापनिष्पादकत्वा-
द्भवेत्प्रत्यवायस्य नित्यं निदानम् ॥ ४४० ॥

निषिद्धेति । विहिताविहितक्रिययोरतद्धेतुत्वेन परिशेषान्निषिद्धक्रियैव तद्धेतुः 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन्' इति स्मृतेः । तत्राकुर्वन्नित्यनेन तत्कालीनान्यकरणं निषिद्धमेव लक्ष्यते । तदुक्तं—

'स्वकाले यदकुर्वंस्तत्करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते' इति ॥

एतदेवाऽऽह—अत इति । द्वयं निषिद्धकरणविहितकालीनान्यकरणरूपमित्यर्थः । प्रत्यवायस्य दुःखस्य ॥ ४४० ॥

अ० टी०—ननु दुःखं पापमूलमस्तु पापं तु न निषिद्धक्रियाजन्यं किं त्वन्यत इति चेन्मैवमित्याह—निषिद्धक्रियां चोदितस्येति । चोदितस्याक्रिया विहितस्याननुष्ठानम् । सुगममन्यत् ॥ ४४० ॥

सु० टी०—नन्वकरणस्य यथाश्रुतस्यैव हेतुत्वसंभवे किं लक्षणायां मानमिति चेत्तत्राऽऽह—

निषिद्धक्रिया दुःखनिष्पत्तिहेतु-
र्भवेल्लक्षणं चोदितस्याक्रियाऽस्य ।

---

१ स. क्रियस्य ।

अभावान्न भावस्य निष्पत्तिरिष्टा
भवेल्लक्षणं ज्ञायमानस्वभावः ॥ ४४१ ॥

निषिद्धेति । नित्यक्रियाया आवश्यकत्वान्यथानुपपत्त्या तत्काले कर्मान्तरानिषेधः कल्प्यते । ततोऽक्रियास्थलीयमपि पापं निषिद्धक्रियाजन्यं पापत्वाद्विप्रवधादिपापवदित्यर्थः । अकुर्वन्नित्यादेस्तर्हि का गतिस्तत्राऽऽह—भवेदिति । अस्य दुःखस्य लक्षणं ज्ञापकमित्यर्थः । हेत्वर्थ एव शतृप्रत्ययोऽस्तु कथं लक्षणार्थ इति चेत्तत्राऽऽह—अभावादिति । 'कथमसतः सज्जायेत' [ छा० ६ । २ । १ ] इति श्रुतेः । कथं तर्हि हेतुत्वप्रसिद्धिस्तत्राऽऽह—भवेदिति । सूचकतया लक्षणेऽपि हेतुत्वप्रसिद्धिः केतूदयादावनिष्टहेतुत्वप्रसिद्धिवदित्यर्थः ॥ ४४१ ॥

अ० टी०—नन्वेवमपि चोदितस्याक्रियैव प्रत्यवायनिदानमिष्यते न निषिद्धक्रियैतावतैव दुःखस्याऽऽकस्मिकत्वशङ्कापरिहारादुभयहेतुत्वे चाननुगमाद्गौरवाच्चेति चेन्नेत्याह—निषिद्धक्रिया दुःखेति । दुःखनिष्पत्तौ निषिद्धक्रियैव हेतुर्भवेन्न विहिताकरणमित्यर्थः । चोदितस्याक्रियात्वस्य प्रत्यवायपदवेदनीयस्य दुःखस्य लक्षणं ज्ञापकं भवेन्नोत्पादकमित्यर्थः । एवं व्यवस्थायां नियामकमाह—अभावादिति । अकरणं ह्यभावो न ह्यभावाद्भावस्य दुःखादेर्निष्पत्तिरिष्टा वेदविद्भिरिति शेषः । तथा च श्रुतिः—'कथमसतः सज्जायेत' [ छा० ६ । २ । २ ] इति । यत्तु तार्किकैः प्रागभावप्रतिबन्धकाभावयोर्भावहेतुत्वमिष्यते तदभावस्य निःस्वभावत्वनिर्व्यापारत्वापादनेन निराकरणीयमिति दिक् । तर्हि कथमकरणस्याप्यभावत्वात्प्रत्यवायज्ञापकत्वं स्यादिति चेत्तत्राऽऽह—भवेल्लक्षणमिति । विहितकरणाभावो ज्ञायमानस्वभावः सल्लक्षणं भवेन्न स्वरूपेण केवलं तस्याकारकत्वात् । तज्ज्ञानादेव प्रत्यवायज्ञानमिति भावः ॥ ४४१ ॥

सु० टी०—ननु तवापि निषेधानां निवृत्तिमात्रनिष्ठत्वात्कुतः प्रवृत्तेः पापहेतुत्वसिद्धिस्तत्राऽऽह—

निवृत्तिनिष्ठे तु निषेधवाक्ये
निषिद्धकर्माचरणादनर्थः ।
प्रतीयतेऽर्थादिति तत्र युक्तं
दुःखं नृणां दुश्चरितैकमूलम् ॥ ४४२ ॥

निवृत्तीति । अदृष्टभयरहितनिषिद्धक्रियाफलप्रार्थनानिषेधस्य विशे-

पणसंक्रान्तेरर्थान्निपिद्धकर्मणोऽदृष्टभयसिद्धिरिति सिद्धं पापमूलत्वं दुःखस्येत्यर्थः ॥ ४२ ॥

अ० टी०—निपिद्धक्रियायाः पापहेतुत्वेऽपि निपेधवाक्यस्य कथं प्रामाण्यमुपपन्नमिति तत्राऽऽह—निवृत्तिनिष्ठे त्विति । निपेधवाक्ये निवृत्तिपरे स्थिते सत्यर्थादनुपपत्तिवलान्निपिद्धकर्माचरणनिमित्तकोऽनर्थ इति प्रतीयत इति यतस्तत्रैवं सति नृणां दुःखं दुश्चरितैकमूलमिति युक्तमिति योजना । अदृष्टभयविरहितनिपिद्धफलप्रार्थनानिषेधनं नञ्वता वाक्येन क्रियमाणं निपिध्यमानफलप्रार्थनाहेतुभूतक्रियाया अनिष्टफलहेतुत्वं विनाऽनुपपन्नमित्यनर्थहेतुकक्रियानिवर्तकत्वेन निपेधवाक्यप्रामाण्यमुपपन्नमित्युक्तं भवति ॥४४२॥

सु० टी०—ननु किं विवक्षितार्थस्याऽऽर्थिकत्वकल्पनया निपेधशास्त्रमेव साक्षान्निपिद्धक्रियाया अनिष्टहेतुत्वं बोधयत्विति चेन्नेत्याह—

समीहितोपायतया लिङन्वया-
त्प्रतीयमानस्य तु भक्षणादिनः ।
न पर्युदासाश्रयणेन नञ्पदा-
दनिष्टहेतुत्वमतिर्भविष्यति ॥ ४४३ ॥

समीहितेति । लिङाऽन्वयो यस्येष्टशास्त्रञ्पदादिष्टहेतुत्वेन प्रतीयमानस्यापि भक्षणादेरनिष्टहेतुत्वधीः पर्युदासेनैव स्यात्तत्र च मुख्यार्थत्यागो लक्षणाप्रसङ्गश्चेत्यर्थः ॥ ४४३ ॥

अ० टी०—ननु लिङर्थमिष्टसाधनत्वमाश्रित्य नञश्च तत्पर्युदासमर्थमाश्रित्य कलञ्जभक्षणादेरनिष्टसाधनत्वमिति निपेधवाक्येनाञ्जसैव प्रतिपाद्यतां किं विवक्षितस्यार्थस्याऽऽर्थिकत्वकल्पनयेति चेन्नेत्याह—समीहितेति । समीहितोपायतया प्रतीयमानस्य भक्षणादिनो भक्षणहननादेर्नञ्पदात्पर्युदासाश्रयणेनानिष्टहेतुत्वमतिर्न भविष्यतीति योजना । किंलक्षणान्नञ्पदाल्लिङन्वयात् । लिङाऽन्वयो यस्य नञ्पदस्य तल्लिङन्वयं तस्मादिति विग्रहः ॥ ४४३ ॥

तर्हि पर्युदासः क्वापि न स्यादिति चेन्न मुख्यार्थासंभवे तस्याऽऽपवादिकत्वादित्याह—

तथा हि संबन्ध्युपमर्दबुद्धये
समर्थमुत्सर्गमुपेक्ष्य नञ्पदम् ।

न पर्युदासाय विनाऽपवादकं
ततो निवृत्त्यर्थपरं तदिष्यते ॥ ४४४ ॥

तथा हीति । औत्सर्गिकं हि नञः स्वसंबन्ध्यभावबोधकत्वं बाधके-नापोद्यते यथा नानुयाजेषु येयजामहं करोतीत्यादौ । तेन हि विशेष-निषेधशास्त्रेण बलवताऽपि यजतिषु येयजामहं करोतीति सामान्यशास्त्र-विहितं येयजामहंकरणं नात्यन्तं बाधितुं शक्यते स्वोपजीव्यत्वान्निषे-धस्य प्राप्तिसापेक्षत्वात् । तथा च तुल्यबलयोरष्टदोषविकल्पापत्तेस्तत्प-रिहारायानुयाजव्यतिरिक्तेष्विति पर्युदासलक्षणाश्रयणम् । न च नाद्या-दित्यादौ किंचिद्बाधकमस्तीत्यर्थः ॥ ४४४ ॥

अ० टी०—कुतो न भविष्यतीत्यत आह—तथा हीति । नञ्पदमुत्सर्गे मुख्य-वृत्त्याऽभावनिष्ठत्वमपेक्ष्य संबन्ध्युपमर्दबुद्धये समर्थं यत्तदपवादकं निमित्तं विना लक्षणया पर्युदासाय समर्थं स्यात् । न चापवादकमिह किमप्यस्ति ततः करणान्निवृत्त्यर्थपरं तन्नञ्-पदमिष्यत इति योजना ॥ ४४४ ॥

सु० टी०—इतश्च मुख्यार्थसंभवे न लक्षणा युक्तेत्याह—

अतः प्रसज्यप्रतिषेधसंभवा-
न्न पर्युदासाश्रयणं प्रशस्यते ।
न पर्युदासाश्रयणं विना भवे-
दनिष्टहेतुत्वनञर्थकल्पना ॥ ४४५ ॥

अत इति । न चानिष्टहेतुत्वमपि मुख्यार्थोऽस्त्विति वाच्यमनेकार्थत्व-स्यान्याय्यत्वादित्याह—न पर्युदासेति । लक्षणाश्रयणं विनेत्यर्थः ॥ ४४५ ॥

अ० टी०—तथाऽपि किमत्र युक्तं पक्षद्वयेऽपि दोषदर्शनादेकत्र विवक्षितार्थस्याऽऽर्थि-कत्वमपरत्र नञो लाक्षणिकत्वमिति चेत्तत्राऽऽह—अतः प्रसज्येति । अत इत्यस्य विवरणं प्रसज्यप्रतिषेधसंभवादिति । मुख्यवृत्तिसंभवे लक्षणाश्रयणेनार्थान्तरकल्पनं न प्रशस्यत इत्यर्थः । अतो विवक्षितार्थस्य मुखत एव प्रतीतेरसंभवादार्थिकतत्प्रतीतिरेतादृशे विषये न दोषायेति भावः । तर्हि विनैव पर्युदासं साक्षादेव नञाऽनिष्टहेतुत्वमुच्यतामिति चेन्नासंभवादित्याह—न पर्युदासाश्रयणमिति ॥ ४४५ ॥

सु० टी०—कथं लक्षणा नञ्लिङोः संबन्धादनिष्टहेतुत्वसिद्धेरिति चेन्नेत्याह—

अभीष्टहेतुत्वलिङर्थपृष्ठतो
ह्यनर्थहेतुत्वनञर्थकल्पना ।

न पर्युदासं परिहृत्य कल्प्यते
नपर्युदासः प्रतिषेधसंभवात् ॥ ४४६ ॥

अभीष्टेति । अभीष्टहेतुत्वलिङर्थसंबन्धेन नञ इष्टहेतुत्वाभाव एवार्थः स्यान्नानिष्टहेतुत्वम् । न च स एवार्थोऽस्तु प्रत्यक्षविरोधस्योक्तत्वादिति पर्युदास एव कल्प्यः । न च मुख्यार्थसंभवे स युक्त इत्यर्थः ॥ ४४६ ॥

अ० टी०—कथं न भवेदिति चेत्तदित्थमित्याह—अभीष्टहेतुत्वेति । अभीष्टहेतुत्वलिङर्थमादाय तत्पृष्ठतो लिङो नञन्वयस्वीकारेण वाक्यत्वसंपत्तौ तद्वशादनिष्टहेतुत्वप्रतीतिः स्यात् । तथा चेष्टहेतुत्वपर्युदासमन्तरेण न केवलेन नञा क्रियाया अनिष्टहेतुता प्रत्याययितुं शक्यते । ततश्च विना लक्षणं नञोऽपर्युदासः पर्युदासादृते नानिष्टार्थत्वबोधकतेति तात्पर्यार्थः । तर्ह्यस्तु पर्युदास एवेत्यत आह—न पर्युदासः प्रतिषेधसंभवादिति । प्रागुक्तन्यायेन नञः प्रतिषेधार्थपरत्वोपपत्तेरित्यर्थः । अक्षरार्थः सुगमः॥४४६॥

सु० टी०—एवं च कार्यवादिन उभयतःपाशा रज्जुरित्याह—

प्रमाणमिच्छन्प्रतिषेधचोदनां
समस्तवेदस्य न कार्यगोचरम् ।
प्रमाणभावं प्रतिपत्तुमीश्वरो
निषेधवाक्ये तदसंभवा[1]दतः ॥ ४४७ ॥

प्रमाणमिति । निषेधप्रामाण्यमिच्छसि चेन्न सर्वो वेदः कार्यपरे निषेधवाक्यस्य सिद्धनिष्ठत्वात्कार्यपरस्यैव प्रामाण्यं चेन्निषेधस्याप्रामाण्यमित्यर्थः ॥ ४४७ ॥

अ० टी०—एवं निषेधवाक्यस्य निवृत्तिनिष्ठत्वमेव न कथमपि प्रवृत्तिनिष्ठत्वमिति प्रतिपादनेन तव प्रकृते किमायातमिति चेदिदमायातमित्याह—प्रमाणमिच्छन्निति । प्रतिषेधचोदनां प्रमाणमिच्छन्वादी समस्तवेदस्य कार्यगोचरं प्रमाणभावं प्रतिपत्तुं नेश्वरो न समर्थः । कुतोऽत उक्तन्यायान्निषेधवाक्ये तदसंभवात्कार्यनिष्ठत्वासंभवादिति योजना ॥ ४४७ ॥

सु० टी०—एवं च क्व वेदान्तेषु विधिनिष्ठत्वाशङ्केत्याह—

अतो न वेदान्तवचःसु विद्यते
विधिर्नियोगो न च शब्दभावना ।

---

१ ग. °भावतः ।

न कर्मकाण्डेऽपि नियोगतोऽस्त्यसौ
यतो निषेधेषु न विद्यते विधिः॥ ४४८ ॥

अत इति—विधिरिष्टसाधनता नियोगो वैदिकं कार्यं शब्दभावनाऽभिधाशक्तिश्चकारादर्थभावनाऽपि नास्तीत्यर्थः । नियोगतो नियमतः। तत्र हेतुः—यत इति ॥ ४४८ ॥

अ० टी०—तथा च विनैव नियोगाद्यर्थत्वं वेदान्तानां प्रामाण्यं युक्तमेवेति कैमुत्यन्यायेनाऽऽह—अतो न वेदान्तवचःस्विति । विधिरिष्टसाधनं कृतिसाध्यं विधेयमिति यावत् । नियोगोऽपूर्वाख्यं कार्यं शब्दभावना च न वेदान्तवचःसु विद्यतेऽहेयानुपादेयवस्तुमात्रपर्यवसितत्वाद्वेदान्तानामित्यर्थः । यतः कर्मकाण्डेऽप्यसौ विधिर्नियोगतो नियमेन नास्ति निषेधवाक्येषु विधेरविद्यमानत्वात्तत्र कुतो ज्ञानप्रधाने काण्डे विधेरवकाश इत्यर्थः ॥ ४४८ ॥

सु० टी०—एवं कर्मकाण्डस्य कार्यपरत्वानियम उक्तो यद्यपि स्यात्तथाऽपि न वेदान्तेषु तत्संभव इत्याह—

उपेत्यवादं परिगृह्य चोच्यते
नियोगनिष्ठाऽस्तु निषेधगीरपि ।
तथाऽपि वेदान्तवचःसु विद्यते
विधेर्न गन्धोऽपि विरोधकारणात् ॥ ४४९ ॥

उपेत्येति । गन्धोऽपि लेशोऽपीत्यर्थः । तत्र हेतुमाह—विरोधेति । विधिपरत्वे वस्तुपरत्वाभावाद्ब्रह्मासिद्धिरुभयपरत्वे च वाक्यभेद इत्यर्थः ॥ ४४९ ॥

अ० टी०—निषेधवाक्यानां स्वरूपतोऽर्थतश्च विचार्यमाणे न नियोगपरत्वं संभवतीति प्रतिपादितमिदानीं यदि निषेधवाक्यानामपि विधिपरत्वं विधेश्च नियोगत्वमभ्युगम्येत तदाऽपि न वेदान्तेषु विधेरवसरोऽस्तीत्याह—उपेत्यवादमिति । उपेत्यवादोऽङ्गीकारवादस्तं परिगृह्याऽऽश्रित्येति यावत् । तमेवाऽऽह—नियोगेति। निषेधगीरपि नियोगनिष्ठाऽस्तु भवतु न नः काचित्क्षतिरित्यर्थः । तथाऽपीति सुगमम् ॥ ४४९ ॥

सु० टी०—विरोधकारणादित्युक्तमेव प्रपञ्चयति—

ज्ञानं विधातुं न हि शक्यमेत-
न्न शक्यते कर्तुमकर्तुमेतत् ।

तथाऽन्यथा कर्तुमशक्यमेत-
त्प्रमाणमेयैकनिबन्धनत्वात् ॥ ४५० ॥

ज्ञानमिति । यद्धि कर्तुमकर्तुमन्यथा कर्तुं शक्यं तदेव विधीयते । न च ज्ञानं पुरुषतन्त्रं वस्तुप्रमाणपरतन्त्रत्वादित्युक्तमित्यर्थः ॥ ४५० ॥

अ० टी०—विरोधकारणादित्युपक्षिप्तहेतुं प्रपञ्चयति पद्यत्रयेण—ज्ञानं विधातुमित्यादिना । वेदान्ता अपि विधिपरा इति वदतेदं वक्तव्यं किमत्र विधेयमिति ब्रह्मज्ञानं विधेयमिति चेन्न तदशक्तेरित्याहाऽऽद्येन पद्येन । यत्पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं तद्विधेयं यथा गमनादि न तथा ज्ञानमित्यतो न विधेयं तदित्यर्थः । तत्र हेतुमाह—प्रमाणमेयैकनिबन्धनत्वादिति । मानमेयपरतन्त्रत्वादपुरुषतन्त्रत्वादित्यर्थः ॥ ४५० ॥

सु० टी०—ब्रह्मज्ञानकर्तव्यताविधौ च विशेषणीभूतं ब्रह्मज्ञानं विधेः प्रागवगन्तव्यं तदज्ञाने तदसंभवादित्याह—

ब्रह्मज्ञानं जानता ब्रह्मबुद्धेः
कर्तव्यत्वं शक्यते ज्ञातुमेतत् ।
न ह्यज्ञात्वा ब्रह्मबुद्धिं तदीयं
कर्तव्यत्वं कश्चिदीष्टे ग्रहीतुम् ॥ ४५१ ॥

ब्रह्मज्ञानमिति ॥ ४५१ ॥

अ० टी०—किं च विधेयब्रह्मज्ञानस्य स्वरूपानवबोधे तस्य कर्तव्यत्वं न ह्यवबोद्धुं शक्यतेऽतस्तद्विज्ञेयं तच्चाशक्यमित्याह—ब्रह्मज्ञानं जानतेति । स्पष्टार्थम् ॥ ४५१ ॥

सु० टी०—ज्ञायतां ब्रह्मज्ञानं को दोष इति चेन्न ब्रह्मात्मकविषयानिरूपणादित्याह—

ब्रह्मज्ञानं ब्रह्मणि ज्ञायमाने
ज्ञातुं शक्यं नान्यथा तच्च तद्वत् ।
विज्ञातं चेद्ब्रह्मणस्तत्त्वमस्य
प्राप्ता मुक्तिर्नास्ति कृत्यं विधीनाम् ॥ ४५२ ॥

---

१ ग. अतोऽन्य° ।

ब्रह्मेति। विषयोऽपि निरूप्यतामिति चेत्तर्हि विधिफलीभूतमुक्तिप्राप्तेर्विधिवैयर्थ्यमित्याह—विज्ञातमिति। तत्त्वं स्वरूपं 'ब्रह्मविद्ब्रह्मैव भवति' [मुण्ड० ३।२।९] इतिश्रुतेः ॥ ४५२ ॥

अ० टी०—ज्ञायतां तर्हि विधेयं ब्रह्मज्ञानमिति चेत्तत्र वक्तव्यं विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वाद्विशेषणीभूतं ब्रह्मानवगतमवगतं वेत्युभयथाऽपि नात्र ज्ञानविधिसंभव इत्यभिप्रेत्याऽऽह—ब्रह्मज्ञानं ब्रह्मणि ज्ञायमान इति। तच्च ब्रह्मज्ञानमिति संबन्धः। नान्यथाऽज्ञाते ब्रह्मणीत्यतोऽस्मिन्पक्षे न विधिरित्यर्थः। तद्वत्तथैव पक्षान्तरेऽपि न विधिसिद्धिरित्यर्थः। तदेवाऽऽह—विज्ञातमिति। अस्य विदुषः प्राप्ते फले तदर्थकृत्याभावादित्यर्थः ॥ ४५२ ॥

सु० टी०—ननु न ब्रह्मज्ञानादेव झटिति मुक्तिस्तस्या विधेयज्ञानफलत्वेन स्वर्गादिवत्कालान्तरभावित्वादिति चेन्नेत्याह—

दृशो विराट्सूत्रशरीरगोचरं
परस्पराध्यासमबोधसंभवम्।
अनर्थमाहुः श्रुतिमस्तके स्थिता-
स्ततोऽस्य विद्यासमयैव मुक्तता ॥ ४५३ ॥

दृश इति। चैतन्यस्य विराट्सूत्रशब्दितसमष्टिव्यष्ट्यात्मकस्थूलसूक्ष्मशरीरद्वयमन्योन्याध्यासं बिभेमि न रम इत्याद्यध्यासकोटिसंकुलमनर्थमबोधसंभवमाहुरौपनिषदाः। अतोऽस्यानर्थस्याविद्यात्मकत्वात्तद्ध्वंसरूपा मुक्तता बोधसमकालैव न स्वर्गादिवद्विलम्बितेति न तस्या विधिफलत्वमित्यर्थः ॥ ४५३ ॥

अ० टी०—ब्रह्मज्ञानमात्रेण कथं मुक्तिप्राप्तिर्ज्ञानमात्रात्पुरुषार्थादर्शनादिति प्रसङ्गप्राप्तामाशङ्कां परिहरति—दृशो विराडिति। विराट्स्थूलं सूत्रं सूक्ष्मं च यत्समष्टिव्यष्ट्यात्मकं शरीरमभिमानास्पदं भोगायतनं तद्गोचरं तद्विषयमबोधसंभवमनाद्यज्ञानोत्थं परस्पराध्यासं चिज्जडयोस्तादात्म्यावभासलक्षणं दृशः प्रत्यगात्मनोऽनर्थमाहुः श्रुतिमस्तके स्थिता वेदान्तविद इति योजना। यत एवमात्मन्यध्यस्त एवायं संसारानर्थस्ततोऽस्य विदुषो विद्यासमयैव विद्योत्पत्तिसमय एव मुक्तता निवृत्तबन्धनता रज्जुतत्त्वज्ञानोदयसमय इव भयादिनिवृत्तिरित्यर्थः। तथा च भ्रमगृहीतस्य बन्धस्य ज्ञानोदयमात्रान्निवृत्तौ पुमर्थत्वदर्शनान्न ज्ञानसिद्धावन्यदपेक्षणीयमिति भावः ॥ ४५३ ॥

सु० टी०—ननु बन्धस्याविद्यात्मकत्वेऽप्यनादित्वेन दृढमूलत्वान्न विद्याजन्ममात्रान्निवृत्तिः शक्येत्यस्ति ज्ञानाभ्यासविधेरवकाश इति चेन्नेत्याह—

अनाद्यविद्यापटनेत्रबन्धनं
प्रसह्य वेदान्तनिबन्धना मतिः ।
स्वजन्ममात्रेण दृढाऽऽत्मगोचरा
समूलदाहं दहतीति हि श्रुतिः ॥ ४५४ ॥

अनाद्यविद्येति । यद्यप्यविद्यातत्संबन्धतच्चिदाभासजीवत्वेश्वरत्वतद्विभागाः षडनादय इत्यनादिरविद्या सैव च नेत्रबन्धनं यथा पटो नेत्रस्य दर्शनहेतोरावरकत्वाद्बन्धनमेवमविद्याऽपि दृगात्मन आवरकत्वेन मोक्तृत्वादिनिबन्धकारणं तथाऽपि वेदान्तजन्याखण्डाकारा दृढा विचारनिरस्तापराधकोटित्वादविचालिनी बुद्धिवृत्तिरपरोक्षत्वाद्धियां वस्तुपक्षपातित्वाच्च बलवती प्रसह्य बलात्स्वजन्ममात्रेण तेन न जन्मैव विषये बुद्धेर्व्यापार इष्यत इति न्यायात्तद्बन्धनं समूलमुन्मूलयतीति । 'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] इति श्रुतिराहेत्यर्थः ॥ ४५४ ॥

अ० टी०—अनर्थस्याध्यस्तत्वेऽपि दृढभावितस्य सहसा ज्ञानोदयमात्रेण निवृत्तिः संभवतीति तदर्थमभ्यासो विधेय इति चेन्मैवमज्ञानकल्पितस्याज्ञाननिवृत्तौ निवृत्त्युत्पत्तेरज्ञाननिवृत्तेश्च ज्ञानोदयमात्रायत्तत्वादित्याह—अनाद्यविद्येति । वेदान्तनिबन्धना वेदान्तप्रमाणजाता मतिरात्मगोचराऽऽत्मतत्त्वब्रह्माकारा दृढाऽसंभावनादिदोषैरचालिता स्वजन्ममात्रेणानाद्यविद्यापटरूपनेत्रबन्धनं चिदात्मनो यथावदवभासनाच्छादनरूपं समूलदाहं यथा स्यात्तथा प्रसह्य दहति नाशयतीति हि प्रसिद्धा श्रुतिः 'ब्रह्म वेद ब्रह्मैव भवति' [ मुण्ड० ३ । २ । ९ ] इत्याद्येति योजना । उत्पन्नेऽपि यथोक्तविज्ञाने केषांचित्सम्यग्बन्धनिवृत्त्यदर्शनं केवलात्मतत्त्वाकारेण दृढतया विज्ञानस्यानुदयादिति द्रष्टव्यमत एव दृढेति विशेषितेति ॥ ४५४ ॥

सु० टी०—तस्माद्ब्रह्मज्ञानाज्ञानविकल्पग्रासान्न ब्रह्मज्ञाने विधिसंभव इत्याह—

विज्ञाते ब्रह्मणि स्याद्विधिरयमफलः प्रत्यये तस्य तद्व-
त्त्वाज्ञातब्रह्मकर्मा विधिविषय इति प्रत्ययो बुद्धियोग्यः ।

---

१ क. 'दृढो ज्ञा' ।

ब्रह्मात्मप्रत्ययेऽतो विधिरनवसरः सर्वथा चिन्त्यमान-
स्तस्माद्ब्रह्मात्मवस्तुन्यवसितमखिलं विद्धि वेदान्तवाक्यम् ॥ ४५५ ॥

विज्ञात इति। ब्रह्म ज्ञातं चेत्तस्य प्रत्यये ज्ञाने योऽ(*यं विधिः स निष्फलः स्यादित्यर्थः। अज्ञातं चेन्न शक्यो विधिरित्याह—तद्वदित्यादि। अज्ञातं ब्रह्म कर्मविपयो ) यस्य प्रत्ययस्य स तथा ततश्च तृतीयप्रकाराभावान्न ब्रह्मज्ञाने विध्यवसर इत्याह—सर्वथेति। तर्हि किमनर्थका वेदान्ता इति नेत्याह—तस्मादिति ॥ ४५५ ॥

अ० टी०—प्रासङ्गिकं परिसमाप्य प्रकृतं विध्यसंभवमुपपादितमुपसंहरति—विज्ञाते ब्रह्मणीति। ब्रह्मणि विज्ञाते सति तस्य ब्रह्मणः प्रत्ययेऽयं विधिरफलः स्यादिति योजना। पुमर्थसिद्धेः कर्तव्यानवशेषादित्यभिप्रायः। तद्वत्तथाऽज्ञातब्रह्मकर्मा प्रत्ययो विधिविषय इति न युद्धियोग्य इत्यन्वयः। न ज्ञातुं शक्यो विषयास्फुरणे विधेरवगमस्याशक्यत्वादित्यर्थः। ब्रह्मात्मप्रत्ययेत्युत्तरार्धं स्पष्टार्थम् ॥ ४५५ ॥

सु० टी०—इतश्च न ब्रह्मज्ञाने विधिरित्याह—

विरुद्धत्रिकस्य द्वयापत्तिदोषा-
न्न शक्यं विधानं धियः संग्रहीतुम्।
यथा वाजपेये गुणस्येह तद्व-
त्ततो नास्ति वेदान्तवाक्ये विधानम् ॥ ४५६ ॥

विरुद्धेति। यथा 'वाजपेयेन स्वाराज्यकामो यजेत' इतिस्वाराज्यफलकयागविधिपरे वाक्ये वाजपेयशब्दः किं गुणविधिरुत नामधेयमिति संदेहे यागे वाजपेयात्मकगुणविधानं वक्ष्यमाणविरुद्धत्रिकद्वयापत्तिदोषादशक्यमिति नामधेयत्वं सिद्धान्तितं तद्वदिहापि द्रष्टव्य इति वाक्ये तत एव दोषान्न ब्रह्मज्ञाने विधिः शक्यत इत्यर्थः ॥ ४५६ ॥

अ० टी०—इतश्च न ब्रह्मज्ञाने विधिसंभव इत्याह—विरुद्धत्रिकस्येति। धियो विधानं संग्रहीतुं न शक्यं विरुद्धत्रिकस्य द्वयापत्तिदोषादित्यन्वयः। प्रकृते ज्ञानविधौ विरुद्धत्रिकद्वयापत्तिमुत्तरपद्ये वक्ष्यति। यत्र विरुद्धत्रिकद्वयप्रसङ्गस्तत्र विधिर्न संभवतीत्यत्रोदाहरणमाह—यथा वाजपेये गुणस्येति। अयमर्थः—'वाजपेयेन स्वाराज्यकामो यजेत' इति श्रूयते। तत्र संशयः किमयं गुणविधिरुत कर्मनामधेयमिति। गुणविधिरिति तावत्प्राप्तं वाजमन्नं तत्पेयमस्मिन्नस्तीति वाजपेयगुणविशिष्टतया प्रकृतज्योतिष्टोमस्यैव

---

* चिह्नितोऽयं ग्रन्थः ख. पुस्तकस्थ

विधिसंभवात्स्वाराज्यफलस्य गुणविधिनिबन्धनत्वोपपत्तेः । 'दध्नेन्द्रियकामस्य' इत्यादाविवेति चेदत्र ब्रूमः—नात्र गुणविधिरुपपद्यते विरुद्धत्रिकद्वयापत्तेः । तथा हि यदा यागमुद्दिश्य वाजपेयगुणस्तस्मिन्विधीयते तदा यागस्योद्देश्यत्वमनुवाद्यत्वं प्रधानत्वमिति त्रिकं प्राप्नोति । यदा पुनः स्वाराज्यफलमनूद्य तादर्थ्येन यागविधिस्तदा फलापेक्षया यागस्य तस्यैवोपादेयत्वं विधेयत्वं शेषत्वं चेति त्रिकं प्राप्नोति । तथाचोद्देश्यत्वोपादेयत्वयोरनुवाद्यत्वविधेयत्वयोः प्रधानत्वगुणत्वयोरेकस्मिन्नेकदा विरोधादेकेन वाक्येनोभयात्मबोधानुपपत्तेर्नेदं वाक्यं गुणविधिपरं किं तु कर्मनामधेयमिति प्रमाणलक्षणे स्थितम् । दधिविधिवाक्ये तूत्पत्तिसिद्धजुहोत्यनुवादेन दधिविधिपरत्वात्संयोगपृथक्त्वाच्च न तत्र विरुद्धत्रिकद्वयापत्तिरिति द्रष्टव्यं यथा वाजपेयविधौ पूर्वपक्षे गुणविधौ विरुद्धत्रिकद्वयापत्तिरिहापि तद्वद्विद्याविधानेऽपि तदापत्तिः स्यादतो वेदान्तवाक्ये नास्ति विधानमित्यर्थः ॥ ४५६ ॥

सु० टी०—किं तद्विरुद्धत्रिकद्वयमिति चेत्तत्राऽऽह—

उद्दिश्यमानत्वमनूद्यमान-
भावः प्रधानत्वमितीदमेकम् ।
तथाऽप्युपादेयविधेयशेष-
भावप्रभेदं त्रिकमन्यदत्र ॥ ४५७ ॥

उद्दिश्यमानेति । अत्र यथासंख्यक्रमेण त्रिकयोर्विरुद्धत्वमुपादेयत्वं ह्यनुष्ठेयत्वं कृतिसाध्यतया निर्देश्यत्वमुद्देश्यत्वस्यानुष्ठेयत्वरूपस्य सिद्धवन्निर्देश्यत्वस्य विरोधि सिद्धं हि फलाद्युद्दिश्य यच्छब्दादिना निर्दिश्यं यागादिकं कर्तव्यतया विधीयते । तथा (* विधेयत्वमप्राप्तत्वे सति प्रापणीयत्वमनूद्यमानत्वस्य प्राप्तत्वेन कीर्त्यमानत्वस्य विरोधि । तथा) शेषत्वमन्योद्देशप्रवृत्तकृतिव्याप्यत्वमनन्यार्थत्वलक्षणप्राधान्यविरोधि । तत्राप्रवृत्तप्रवर्तनमज्ञातज्ञापनं च विधिव्यापारस्तत्राऽऽद्यमुपादेयत्वमन्त्यं विधेयत्वं शेषत्वं तु तद्व्याप्यमिति विवेकः ॥ ४५७ ॥

अ० टी०—विरुद्धत्रिकस्वरूपं तावदाह—उद्दिश्यमानत्वमिति । सिद्धवन्निर्दिश्यमानत्वमुद्दिश्यमानत्वमनुपादेयत्वमित्यर्थः । अनूद्यमानभावोऽनुवाद्यत्वं प्रधानत्वं शेषित्वमित्येकं त्रिकम् । तथाऽत्रान्यत्त्रिकमिति संबन्धः । अपिशब्दस्त्रिकयोर्यथासंख्यं विरोधस्फोरणार्थः । उपादेयत्वमुद्देश्यत्वविरुद्धमनुष्ठेयत्वमितियावत् । पुरुषस्य कृतिर्ह्युपादानम् । सा च किंचिदुद्दिश्य किंचिद्गोचरीकृत्य भवति । यथा स्वर्गादिफलमुद्देश्यं सिद्धवन्निर्दिश्यते

---

* अयं ग्रन्थः ख. पुस्तकस्थः ।

नोपादीयते । देशकालादि च तदवच्छेदेन च साध्यतया निर्देश्यं सर्वमुपादेयं यथा यागादि । तथा च पुरुषकृतिसाध्यत्वाभ्यामनयोर्विरोधः सुप्रसिद्धः । विधेयत्वमनुवाद्यत्वविरोधिप्रमेयत्वं पूर्वसिद्धं ह्यनूद्यतेऽसिद्धं च प्रमीयत इत्यनयोरपि सिद्धसाध्यभावो विरोधः । शेषशेषिणोश्चोपकारकत्वोपकार्यत्वाभ्यां भेदे सति स्वरूपविरोधः प्रसिद्ध एव । तदेवमनयोस्त्रिकयोरेकत्र विरोधादेकेन वाक्येन क्वचित्प्रतीतिरुपपद्यत इति तात्पर्यार्थः ॥ ४९७ ॥

सु० टी०—कथं पुनर्ब्रह्मधीविधौ विरुद्धत्रिकद्वयमिति तदाह—

एकेन वाक्येन धियो विधानं
प्रत्यक्प्रमित्सा च यदि प्रतीचि ।
त्रिकं द्वयं तत्र विरुद्धमेत-
त्प्रसज्यते कष्टमतः किमन्यत् ॥ ४५८ ॥

एकेनेति । यदि 'आत्मा द्रष्टव्य' इत्येतेनैव वाक्येनाऽऽत्मधीविधानमात्मापरोक्षप्रमित्सा चाऽऽश्रीयते तदा प्रतीच्येव त्रिकद्वयमुक्तं प्रसज्यत इत्यर्थः ॥ ४५८ ॥

अ० टी०—ज्ञानविधिपक्षे कथं विरुद्धत्रिकागम इत्यत आह—एकेन वाक्येनेति । यद्येकेन वाक्येन 'आत्मा वा अरे द्रष्टव्यः' [ बृ० २ । ४ । ५ ] इत्यादिनाऽऽत्मतत्त्वधियो विधानं प्रत्यगात्मनः प्रमित्सा स्वरूपावधारणेच्छा चाभिमता तत्र तदा प्रतीच्यात्मन्येतद्विरुद्धं त्रिकद्वयं प्रसज्यतेऽतः किमन्यत्कष्टं वाक्यस्याप्रामाण्यापत्तेरित्यर्थः ॥ ४५८ ॥

सु० टी०—कथमिति चेत्तत्राऽऽह—

उद्दिश्यमानं तदनूद्यमान-
भूतं प्रधानं च धियो विधाने ।
प्रमीयमाणं पुनरात्मवस्तु
तदास्पदं स्यादितरत्त्रिकस्य ॥ ४५९ ॥

उद्दिश्यमानमिति । तथा हि यः प्रत्यक्तं( क्त्वं ) जानीयाज्ज्ञानेनाऽऽप्नुयादिति प्रत्यञ्चमुद्दिश्य तदनुवादेन तच्छेषतया धीर्विधेयेत्यतः प्रथमत्रिकं स्यात् । पुनश्च प्रत्यगपरोक्षप्रमामिच्छतस्तदुद्देशेन परोक्षब्रह्मज्ञानाभ्यासविधानाद्विधिप्रमेयस्य प्रतीचोऽज्ञातस्य ज्ञाप्यत्वाद्विधेयत्वम् । विधि

विना तदसिद्धेर्विध्युद्देशप्रवृत्तकृत्यधीनसत्ताकत्वेन यागादिवदुपादेयत्वं विधेयज्ञानविशेषणत्वाद्गुणभावश्च स्यादित्यर्थः ॥ ४५९ ॥

अ० टी०—आत्मनि कस्मिन्पक्ष एकं त्रिकं कस्मिंश्चापरमित्यपेक्षायामाह—उद्दि- श्यमानमिति । तदात्मवस्तु धियो विधाने ज्ञानविधिपक्ष उद्दिश्यमानमनूद्यमानभूतं प्रधानं चेति त्रिकात्मकं स्यात् । तदेवाऽऽत्मवस्तु प्रमीयमाणं पुनरितरत्रिकस्याऽऽ- स्पदं स्यादिति योजना । एतदुक्तं भवति—आत्मानं जानीयादित्यात्मतत्त्वमुद्दिश्य तदनूद्य तच्छेषतया च यदा ज्ञानं विधेयं तदोद्देश्यत्वादित्रिकं तत्र भवति । आत्मनः प्रमीयमाणत्वे पुनरुपादेयत्वादित्रिकं प्रविशति । तद्यथा मोक्षकाम आत्मानं जानीयादिति विधि- स्वरूपे प्रत्यगात्मविशेषितज्ञानविषयके मोक्षोद्देशेन विधेयज्ञानविषयतयाऽऽत्मनो विधेयत्वा- दुपादेयत्वविधेयत्वशेषत्वानि प्राप्नुयुः । यद्यप्यात्मनोऽनुष्ठेयत्वरूपमुपादेयत्वं नास्ति तथाऽपि मोक्षोद्देशेन प्रवृत्तायाः कृतेः प्रत्यग्ज्ञानसाधनविषयायाः प्रत्यगात्मतत्त्वानुभवपर्यन्तमनुपरमा- त्तस्यैवानुभवद्वारा प्रत्यग्विषये भवतीत्यनुष्ठेयत्वमुच्यते । शेषत्वं तु मोक्षसाधनज्ञानविशेषणत्वा- दुपपन्नम् । विधेयत्वं चास्याऽऽत्मनः प्रयेयत्वं विधेरज्ञातज्ञापनरूपत्वादिति द्रष्टव्यम् । यदा त्वात्मनः प्रमेयत्वमपि तदा ज्ञानं प्रति तस्योद्देश्यत्वानुवाद्यत्वशेषित्वानि प्राप्नुयुस्तदेतद्दुर्घट- मिति ॥ ४५९ ॥

सु० टी०—दृष्टान्तेऽपि त्रिकद्वयमाह—

> प्रथमत्रिकं यजिनिगद्यगतं
> गुणसंगतेरवगमे भवति ।
> चरमत्रिकं यजिनिगद्यगतं
> फलसंगतेरवगमे तु पुनः ॥ ४६० ॥

प्रथमेति । यद्यजेत तद्वाजपेयेनेत्येवं यागमुद्दिश्य यवाग्वात्मकगुणवि- धानुद्देश्यत्वादित्रिकं यागे भवति स्वाराज्यमुद्दिश्य यागविधौ पुनरुपा- देयत्वादित्रिकं यागे स्यादिति विरुद्धमित्यर्थः ॥ ४६० ॥

अ० टी०—वाजपेये दृष्टान्ते विरुद्धत्रिकद्वयमुक्तमुपपादयति—प्रथमत्रिकमिति । 'वाजपेयेन यजेत' इति वाक्येन वाजपेयाख्यगुणसंगतेरवगमे गुणविधिपरत्वाभ्युपगमे यजिनिगद्यगतं यागगतं प्रथमत्रिकमुद्देश्यत्वानुवाद्यत्वप्रधानत्वरूपं भवति । तथा फलसंगते- रवगमे स्वाराज्यफलोद्देशेन यागविध्यभ्युपगमे तस्मिन्नेव यजिनिगद्ये चरमत्रिकमुपादेयत्व विधेयत्वशेषत्वरूपं संगतं भवतीति योजना ॥ ४६० ॥

सु० टी०--नन्वस्तु क्रमेण यागे गुणफलसंबन्धो विरोधाभावा-दिति नेत्याह—

सकृदुच्चरन्यजतिरेष गुणं
न फलं च संगमयितुं क्षमते ।
कथितत्रिकद्वयविरोधवशा-
द्यजिवस्तुनीति ननु नीतिविदः॥ ४६१ ॥

सकृदिति। सकृच्छ्रुतस्य यजेतेतिविधेः क्रमिकसंबन्धद्वयबोधन आवृत्ति-प्रसङ्गाद्यौगपद्ये तूक्तविरोधादुभयथाऽपि वाक्यभेद इत्यर्थः ॥ ४६१ ॥

अ० टी०—किमतः सिद्धं भवतीत्यपेक्षायां विरुद्धयोस्त्रिकयोरेकत्र यौगपद्याप्रमिते-र्वाक्याप्रामाण्यं सिध्यतीत्यभिप्रेत्याऽऽह--सकृदुच्चरन्निति । एष यजतिः सकृदुच्चर-न्नुचार्यमाणो यजिवस्तुनि यागस्वरूपे गुणं फलं च संगमयितुं संगतमवगमयितुं न क्षमते । कुतः--कथितत्रिकद्वयविरोधवशादिति । ननु नीतिविदो वदन्तीति योजना ॥ ४६१ ॥

सु० टी०—ततश्चोक्तन्यायेनाध्यात्मज्ञाने विध्यसंभवादात्मवस्तुप्र-तिपादनमात्रपरैवोपनिषदित्युपसंहरति—

इति वाजपेयगतनीतिवशा-
दपि नाऽऽत्मवस्तुविषयावगतौ ।
विधिरस्ति तेन विधिशून्यतया
परमात्मवस्तुविषयोपनिषत् ॥ ४६२ ॥

इतीति ॥ ४६२ ॥

अ० टी०—तदेवमात्मज्ञानविधौ विरुद्धत्रिकद्वयापत्तिं दृष्टान्तोक्तिपूर्वकमुपपाद्य तत्फल-माह—इति वाजपेयेति । वाजपेयवाक्यप्रवृत्तिपर्यालोचनादध्यात्मवस्तुविषयावगतावात्म-प्रमितौ विधिर्नास्तीत्यन्वयः । विध्यसंभवे सिद्धमर्थमुपसंहरति—तेनेति ॥ ४६२ ॥

सु० टी०—ननु भिन्नफलसगुणनिर्गुणविद्याभेदप्रसिद्धेरर्थानेकत्वा-द्विभज्यमानसाकाङ्क्षत्वाभावाच्च न सर्वोपनिषदामात्मसमन्वयादेकवाक्य-त्वमिति चेन्नेत्याह—

सगुणवाक्यमपीह समन्वितं
भवति निर्गुणवस्तुनि सर्वशः ।

न खलु निर्गुणवस्तुसमन्वयं
न सहते सगुणस्य समन्वयः ॥ ४६३ ॥

सगुणेति । सगुणवाक्यमपि सर्वं निर्गुण एव समन्वितमैश्वर्यादीनां फलाभासत्वाद्गुणांशस्य च प्रमेयाभासत्वाद्वास्तवफलस्य चैक्येन कल्पा-(?)काङ्क्षत्वादत एकवाक्यत्वमविरुद्धमित्यर्थः । तर्हि सगुणविद्यात्वव्याघात इति चेन्न तत्राप्यवान्तरतात्पर्यादित्याह—न खल्विति । अस्य सगुणवाक्यस्य सगुणे समन्वयो महातात्पर्येण निर्गुणवस्तुसमन्वयं सहत एवेत्यर्थः ॥ ४६३ ॥

अ० टी०—तदेवं ज्ञानविधिपरा वेदान्ता इति पक्षं निराकृत्योपासनाविधिपरा वेदान्ताः स्युः कथं विधिशून्यता ब्रह्मात्मवस्तुविषयोपनिषदित्येकदेशिमतान्तरमाशङ्क्योपासनावाक्यानां न शेष्यर्थपरत्वमिति प्रतिपादयति—सगुणवाक्यमपीति । सर्वशः सर्वमपि सगुणवाक्यमिह निर्गुणवस्तुनि समन्वितं भवति न विपरीतमित्यर्थः । कथमित्यत आह—न खल्विति । यद्यपि सगुणवाक्यं सगुणपरमिव प्रतिभाति तथाऽपि सगुणसमन्वयस्य निर्गुणे समन्वयाविरोधात्सगुणवाक्यं निर्गुणे समन्वयं न सहत इति न खलु किं तु सहत एवेत्यर्थः ॥ ४६३ ॥

सु० टी०—कथं सहत इत्याह—

सत्यासत्यवपुस्तथा हि सगुणं ब्रह्मास्य विद्या तथा
तद्वत्तद्विषयस्य वेदवचसस्तात्पर्यमेवंविधम् ।
तेनावान्तरमस्य वेदवचसस्तात्पर्यमन्यादृशं
चान्यन्निर्गुणवस्तुतत्त्वविषयं संकीर्त्यते भागशः ॥ ४६४ ॥

सत्येति । निर्गुणमेव ह्यविद्याकल्पितोपाधिशबलं सगुणं तच्च स्वरूपेण सत्यं शाबल्येनासत्यमिति सत्यासत्यात्मकमेवं सगुणविद्यासगुणवाक्यतात्पर्यं तत्फलं च सर्वं सत्यासत्यविषयमेवेत्यर्थः । ततः किमित्यत आह—तेनेति । अस्य वाक्यस्य विशिष्टकेवलविषयं तात्पर्यद्वयं तत्राऽऽद्यमुपासनाङ्गमवान्तरतात्पर्यं बुद्धिशुद्धिमात्रहेतुत्वादमुख्यं तरत्यादिवृक-श्रुतेर्मृषागुणेषु वस्तुतोऽतात्पर्यात् । निर्गुणविषयं तु महातात्पर्यं मुख्यं

१ क, ग. °सायां स° ।

मृषागुणाधिष्ठानस्य तत्कालेऽपि तच्छून्यत्वादिति न मुख्यामुख्ययोर्विरोध इत्यर्थः ॥ ४६४ ॥

अ० टी०—कथमित्थं व्यवस्थाऽऽस्थीयते विनिगमनायां हेत्वभावादिति तत्राऽऽह—**सत्यासत्यवपुरिति**। यत्सगुणं ब्रह्म तत्सत्यासत्यवपुर्यतः स्वरूपतः सत्यं सद्ब्रह्माविद्यातत्कार्योपाध्युपधानवशात्सगुणं ब्रह्म भवत्यतः सत्यासत्यवपुः सगुणं ब्रह्मेत्यर्थः। तत्र श्रुतिप्रसिद्धं प्रमाणयति—**तथा हीति**। तथा हि श्रुतिः—'सर्वकर्मा सर्वकामः सर्वगन्धः' [ छा० ३ । १४ । २ ] 'वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादः' [ छा० ३ । १८ । २ ] 'प्राची दिक्कला प्रतीची दिक्कला' [ छा० ४ । ५ । २ ] इत्याद्या। न हि निरञ्जनस्य निरवयवस्यासङ्गकूटस्थात्मनो ब्रह्मणः स्वतः पादा वा कला वा कर्मादिर्वा विशेष उपपद्यत इति। तथा यथा ब्रह्म सगुणं सत्यासत्यवपुस्तथाऽस्य विद्या सगुणब्रह्मविषया विद्या सत्यासत्यवपुरित्यर्थः। यथाविषयं हि ज्ञानमिति तदपि तथेति भावः। यथा विषयतज्ज्ञाने तद्वत्तद्विषयस्य सगुणब्रह्मविषयस्य वेदवचसस्तात्पर्यं स्वार्थप्रामाण्यलक्षणमेवंविधं सत्यासत्यवपुरित्यर्थः। सत्यासत्यशबलितविषयत्वादिति भावः। यत एवं तेन हेतुनाऽस्य सगुणब्रह्मविषयस्य वेदवचसो वेदवाक्यस्य तात्पर्यमवान्तरसंज्ञितमन्यादृशं निर्गुणवाक्यतात्पर्याद्विलक्षणं सत्यानृतशबलविषयमित्यर्थः। चस्त्वर्थः। निर्गुणवस्तुतत्त्वविषयं तु तात्पर्यमन्यादृशं परमार्थैकरसवस्तुविषयमिति भागशो विभागेन संकीर्त्यते श्रुतिषु सूत्रशास्त्रेषु चेत्यर्थः। एतदुक्तं भवति—यद्यपि सगुणवाक्यानामुपासनाविषयाणामुपासनाविधिपरत्वादुपास्यस्वरूपपरत्वं नास्त्युभयपरत्वे वाक्यभेदप्रसङ्गात्तथा निर्गुणवस्तुप्रकरणस्थानामपि सविशेषवाक्यानामपवादशेषाध्यारोपविषयत्वाद्विशेषे तात्पर्यं नास्ति तथाऽपि विशिष्टस्य तेषु प्रतीयमानत्वादन्यतश्चाप्रमितत्वाद्विशिष्टेऽपि वस्तुनि तात्पर्यमङ्गी क्रियते विशिष्टस्य स्वरूपाव्यभिचारादतो विशिष्टविषयतात्पर्यं विशेष्यस्वरूपमपि स्पृशतीति कृत्वा विशिष्टविषयं स्वरूपविषयं चेति प्रकरणविभागेन विशिष्टविषयमवान्तरतात्पर्यं स्वरूपविषयं महातात्पर्यमिति च विभागेनोच्यत इति ॥ ४६४ ॥

सु० टी०—ननु कथं सगुणवाक्यं सत्यासत्यविषयं सत्यासत्ययोर्विरुद्धत्वेन विशिष्टबुद्ध्यसंभवादिति चेन्नेत्याह—

रूप्यज्ञानं रजतमिदमित्येवमुत्पद्यमानं
सत्यासत्यं विषयमपृथग्दर्शयत्येकमेव ।
तद्वन्मानं सगुणविषयं सत्यमिथ्यावभासं
संसृष्टार्थद्वयमिति दृढं दर्शयत्येकमेतत् ॥ ४६५ ॥

१ क. तस्मान्मानं । २ क. "यमानं" ।

रूप्येति। शुक्तावुत्पद्यमानं रूप्यज्ञानमधिष्ठानं सत्यमारोप्यं चासत्यमिति न भेदेन दर्शयति किं त्वेकमेव सत्यानृतावभासमिदंवृत्ति रजतवृत्त्यवच्छिन्नं स्फुरणं जनयतीत्युक्तं तद्वत्सगुणवाक्यमपि सत्यमिथ्यावभासमेकमित्यर्थः ॥ ४६५ ॥

अ० टी०—ननु सत्यासत्ययोर्विरुद्धस्वरूपयोः कथं वैशिष्ट्यमिति चेन्नायं दोषो दृष्टत्वादित्याह—रूप्यज्ञानमिति। निगदव्याख्यातं पद्यम्। न चैवंसति शुक्तिरजतज्ञानवत्सगुणज्ञानस्य मिथ्याज्ञानत्वात्सगुणवाक्यस्याप्रामाण्यं स्यादिति वाच्यं गुणवैशिष्ट्यस्यापि व्यावहारिकसत्यत्वाद्व्यावहारिकप्रामाण्योपपत्तेश्चोदनाया इव धर्माधर्मयोः स्वार्थे प्रत्यक्षादीनामिव च तत्त्वदृष्ट्या तु नास्त्येव सगुणवाक्यस्य सगुणे तत्त्वे प्रामाण्यं किं तु तस्यापि निर्गुण एव पर्यवसानं कल्पितमेव निर्गुणवस्तुप्रतीत्यङ्गतयाऽनूद्यतेऽतो न कोऽपि विरोध इति गमयितव्यम् ॥ ४६५ ॥

सु० टी०—ननु विशिष्टविधौ पृथक्तात्पर्यादर्शनाद्विशिष्टविषयसगुणवाक्यस्य विशेष्ये विशिष्टे च तात्पर्यभेदे वाक्यभेद इति नेत्याह—

तद्बुद्धिमात्रफलतैव च तत्परत्वं
वेदान्तवादिसमये न तु शेषभावः।
शेषत्वमक्षरकलापगताप्तिमात्रं
प्रत्येव नाध्ययनमर्थधियो विशेषः ॥ ४६६ ॥

तद्बुद्धीति। न ह्यस्माकं मीमांसकानामिव तत्प्रतीतिशेषत्वं तात्पर्यं येन सगुणप्रतीतिशेषस्य निर्गुणधीशेषत्वं विरुध्येत किं तु तद्बुद्धिमात्रफलत्वम्। तच्चैकस्यापि वाक्यस्य नानाबुद्धिफलत्वसंभवादविरुद्धम्। अस्ति च सगुणवाक्यजज्ञानादुपासनेनाभ्युदयस्तत्त्वविषयतया मुक्तिश्च फलमिति नानार्थता विशिष्टविधिस्त्वेकफल इति विशेष इत्यर्थः। अत एव तेषामध्ययनविधिरर्थावबोधेऽध्ययनं तद्द्वारा स्वाध्यायं च विनियुङ्क्त इत्यर्थप्रतीतिशेषत्वादध्ययनस्यार्थबोधपरता। अस्माकं तु न तस्यार्थबोधे विनियोगस्तस्याशाब्दत्वात्। किं त्वक्षराप्तौ तस्याः कर्माभिधायितव्यप्रत्ययलभ्यत्वादन्यथा श्रुतहानाश्रुतकल्पनापत्तेरिति। अर्थधीफलकत्वमेव वेदस्यार्थपरत्वमित्याह—शेषत्वमिति ॥ ४६६ ॥

अ० टी०—सगुणवाक्यं सत्यासत्यविषयकं तथात्वेऽपि तस्य नाप्रामाण्यमित्युक्तं तत्रेदमाशङ्क्यते वाक्यस्य सत्यासत्यपरतया तात्पर्यद्वैविध्यमिष्यते विशिष्टस्वरूपयोरन्यतर

स्मिन्नेव चैकं तात्पर्यमिति तत्राऽऽद्ये वाक्यभेदप्रसङ्ग एको दोषोऽपरश्चाशक्यप्रत्ययत्वं यथा सोमेन यजेतेत्यादौ विशिष्टैक्यपरत्वव्यतिरेकेण न विशेषणे विशेष्ये वा तात्पर्यं प्रत्येतुं शक्यते तथा सति वाक्यस्य विशिष्टपरत्वायोगात्तथाऽत्रापि गुणविशिष्टब्रह्मपरत्वव्यतिरेकेण सगुणे परित्यक्तगुणे च ब्रह्मणि न तात्पर्यमवगन्तुं शक्यते तदा विशिष्टविषयत्वासंभवा-दुपास्यत्वाद्यप्रतीतावुपासनाद्यसिद्धिप्रसङ्गात् । द्वितीयेऽन्यतरस्यासिद्धिर्गुणविशिष्टैकवस्तुपरत्वे केवलस्वरूपासिद्धिः केवलस्वरूपपरत्वेऽन्यासिद्धिरिति तत्राऽऽह–**तद्बुद्धिमात्रफलतै-वेति** । तस्मिन्नर्थे बुद्धिस्तद्बुद्धिस्तदेव फलं यस्य वाक्यस्य तत्तद्बुद्धिमात्रफलं तस्य स्वभावस्तत्त्वेदमेव वाक्यस्य तत्परत्वं वेदान्तवादिसमये मतं न तद्व्यवधानेन बुध्यन्तरमिति योजना । ननु शेषत्वं तात्पर्यं मीमांसका इच्छन्ति तत्कथं भवद्भिर्नानुमन्यते तत्राऽऽह— **न तु शेषभाव इति** । तात्पर्यं मतमिति योज्यम् । शेषत्वं तात्पर्यं चेत्तदैकस्योभयं प्रति शेषत्वायोगात्सगुणे निर्गुणे चैकस्य वाक्यस्य तात्पर्यं विरुध्येत फलं त्वेकस्यापि वाक्यस्यानेकमपि न विरुध्यते तत्रोदाहरणं वक्ष्यत इति । ननु शेषत्वं चेन्न तात्पर्यं कथं तर्ह्यध्ययनस्यार्थावबोधशेषतया तत्तात्पर्यकत्वं मीमांसकैरिष्यत इति चेदिष्यतां नाम तैस्तथा नास्माभिरध्ययनाङ्गत्वमर्थावबोधस्याभ्युपेयतेऽक्षरावाप्तेरेव तथात्वाङ्गीकारादित्याह—**शेषत्व-मक्षरेति** । अर्थावबोधस्यानुष्ठानाद्याक्षिप्ततयैव सिद्धेर्न तत्राध्ययनं विधिना विनियुज्यत इति भावः ॥ ४६६ ॥

**सु० टी०—नन्वध्ययनस्यार्थधीशेषत्वाभावे तत्फलकत्वमपि कथ-मित्यत्राऽऽह—**

> **तच्छेषभावमनपेक्ष्य च तत्फलं स्या-**
> **दाधानवन्न हि तदङ्गमिह क्रतूनाम् ।**
> **अग्न्यङ्गमेव हि तदिष्टमथापि तस्य**
> **सर्वक्रतुष्वधिकृतिः फलमभ्युपेतम् ॥ ४६७ ॥**

तच्छेषभावमिति । **यथाऽऽधानं प्रकरणाद्यभावादक्रत्वङ्गमप्याहवनीया-दिनिष्पत्तिद्वारा क्रतुसिद्धिफलकमेवमध्ययनमप्यर्थधीशेषत्वं विनाऽपि तत्फलकमक्षरावाप्तेरपुरुषार्थत्वादित्यर्थः । ननु क्रत्वङ्गाग्न्याश्रितमाधानमस्तु पर्णमयीन्यायेन क्रत्वङ्गमिति नेत्याह**—न हीति । **प्रागाधानादग्नीनामा-हवनीयत्वाद्यभावेनाक्रत्वङ्गत्वान्न तदाश्रितत्वेन क्रत्वङ्गमित्यर्थः । किमङ्गं तर्हि तदित्यत्राऽऽह**–अग्न्यङ्गमिति । **अग्नीनादधीतेति द्वितीयाश्रुतेरित्यर्थः । कथमपुरुषार्थानामग्नीनां फलत्वमित्यत्राऽऽह**—अथापीति । **अपिः समु-**

न्वये । तस्याऽऽधानस्याध्ययनस्य चाग्निमत्ताविद्वत्तासंपादनेन सर्वक्रत्व-धिकारः फलमित्यर्थः ॥ ४६७ ॥

अ० टी०—ननु यद्यर्थबोधं प्रति स्वाध्यायाध्ययनस्य शेषत्वं न स्यात्तर्हि नार्थावबोधस्तस्य फलमपि स्यादिति चेन्मैवं तच्छेषत्वं विनाऽपि तत्फलत्वदर्शनादित्युदाहरणेनाऽऽह—तच्छेषभावमनपेक्ष्येति । अप्यर्थे चकारोऽनपेक्ष्यापीत्यर्थः । आधानवदित्युक्तं दृष्टान्तं स्पष्टयति—न हीत्यादिना । श्रुत्यादेर्वा प्रकरणादेर्वा विनियोजकप्रमाणस्यात्राभावात्तदभावे च क्रत्वङ्गत्वानिश्चयादित्यर्थः । तर्हि किमाधानं न कस्याप्यङ्गमेव नेत्याह—अग्न्यङ्गमेव हि तादृष्टमिति । व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यर्थत्ववदग्नीनादधातीति द्वितीयाश्रुतेराधानस्याप्यग्न्यर्थत्वावगमात् । अत एव फलान्तरकल्पनाया अनवकाश इत्यग्न्यङ्गत्वमेवाऽऽधानस्येत्यर्थः । तर्हि निष्प्रयोजनमेवाऽऽधानं स्यादग्निनिष्पत्तेरफलत्वादिति चेत्तत्राऽऽह—अथापीति । यद्यप्याधाननिबन्धनं किमपि फलं साक्षान्नास्त्यथापि तस्याऽऽधानस्य सर्वक्रतुष्वधिकृतिः पुरुषस्याधिकारसिद्धिः फलमभ्युपेतं मीमांसकैरपीति शेषः । आहवनीयादीनामग्नीनां क्रत्वङ्गत्वात्क्रतुनिष्पादनद्वारेण क्रतूपकारादाधानस्याग्निद्वारा क्रतुफलत्ववदधीतस्वाध्यायस्यार्थावबोधहेतुत्वात्स्वाध्यायावाप्तिद्वारेणाध्ययनस्यार्थावबोधफलत्वोपपत्तेर्नाङ्गत्वकल्पनेति भावः ॥ ४६७ ॥

सु० टी०—ननु यदि तद्धीमात्रफलत्वं तत्परत्वं तर्हि मन्त्रार्थवादानामपि स्वार्थधीहेतुत्वात्तत्परत्वं स्यादिति चेन्न फलवत्तद्धीफलकत्वस्यैव तात्पर्यादित्याह—

मन्त्रार्थवादगतमध्ययनं तदर्थ-
मात्रप्रतीतिफलमित्यपि नाभ्युपेतम् ।
विध्यर्थबुद्धिमनुसृत्य फलावसाना
सा तद्वतीति तदतत्परतोपपत्तिः ॥ ४६८ ॥

मन्त्रेति । स्वाध्यायविधिना वेदस्य पुरुषार्थे विनियोगान्मन्त्रार्थवादयोः स्वार्थप्रतीतिस्तज्जन्याऽप्यपुरुषार्थत्वान्न फलत्वेनेष्टा विध्यर्थधीस्तु फलवतीति तामनुसृत्य तदपेक्षितानुष्ठेयस्मृतिप्राशस्त्यधीलक्षणैव मन्त्राद्यर्थधीः फलवतीति तत्र तत्परतेत्यर्थः ॥ ४६८ ॥

अ० टी०—यद्येवं तद्बुद्धिमात्रफलत्वं तत्परत्वं तर्हि मन्त्रार्थवादानामपि तत्परत्वप्रसङ्गस्तेषामपि स्वार्थबुद्धेः कार्यत्वात्कार्यस्य च कारणं प्रति फलत्वादिति चेन्नेत्याह—मन्त्रार्थवादेति । नाभ्युपेतं जैमिनीयैरिति शेषः । मन्त्रार्थवादयोः स्वार्थबुद्धेः पुमर्थानुपयोगित्वेनाना-

काङ्क्षितत्तया फलत्वासंभवादफले च तात्पर्यानुपपत्तेरित्यर्थः। कथं तर्हि तयोः प्रामाण्यमित्ति तत्राऽऽह—विध्यर्थबुद्धिमिति। विध्यर्थबुद्धिर्हि पुमर्थसाधनविषयत्वेन फलवत्त्या-काङ्क्षितविषयत्वात्तथा च फलावसानां विध्यर्थबुद्धिमनुसृत्य सा मन्त्रार्थवादजनिता बुद्धि-स्तद्वती फलवतीति तदतत्परतोपपत्तिर्विध्यर्थप्राशस्त्यादिद्वारेण विध्यर्थपरत्वं तत्परत्वं तात्पर्य-वत्त्वमुपपद्यते स्वार्थे च फलाभावादतत्परत्वं चेत्यर्थः। तद्बुद्धिमात्रफलतैव तत्परत्वमित्यत्र मन्त्रादिव्यावृत्त्यर्थं मात्रपदमिति ज्ञेयम्। प्रयोजनवती हि बुद्धिर्वाक्यस्य फलं नेतरेति भावः॥ ४६८॥

सु० टी०—एतच्च तत्परत्वान्यपरत्वनिर्वचनं सर्ववेदवित्संमतमित्याह—

सप्रयोजनकबुद्धिकारणं वाक्यमाहुरिह तत्परं बुधाः।
सप्रयोजनकबुद्धिशेषधीहेतुमन्यपरमाश्रयन्ति च॥ ४६९॥

सप्रयोजनेति। यद्वाक्यं फलवद्यदर्थधीजनकं तत्तत्परं यच्च फलवद्वा-क्यान्तरार्थधीशेषभूतधीजनकं तदन्यपरमित्याहुरित्यर्थः ४६९॥

अ० टी०—ननु वाक्यजन्यत्वे समाने बुद्धेः प्रयोजनवत्याः फलत्वं नेतरस्या इत्येत-त्कथमवगम्यत इति चेद्वृद्धव्यवहारादित्याह—सप्रयोजनकेति। स्पष्टार्थं पद्यम्॥४६९॥

सु० टी०—तर्हि किं देवतास्वर्गादिबोधकानामपि मन्त्रादीनां न स्वार्थपरत्वमिति नेत्याह—

मन्त्रार्थवादवचसामपि गोचरेषु
सौवेष्ववान्तरमुशन्ति च तत्परत्वम्।
केचित्त्रयीशिरसि खिन्नधियो मुनीन्द्रा-
स्तत्ताद्धियो विधिषु शेषतया निवेशात्॥ ४७०॥

मन्त्रेति। अनुपयुक्तार्थानां प्राप्तार्थानां चान्यपरत्वं युक्तं विध्यपेक्षिता-प्राप्तार्थानां तु सौवेषु स्वसंबन्धिष्वप्यर्थेषु तात्पर्यमवान्तरमिच्छन्तीत्यर्थः। तथा च विधौ महातात्पर्यमस्त्येवेति भावः। कथमुशन्तीत्यत्राऽऽह—तत्ताद्धिय इति। देवतास्वर्गादिधियस्तां ध्यायेद्वषट्करिष्यन्निति स्वर्ग-कामो यजेतेत्यादिविधिपूपयोगितया निवेशादित्यर्थः॥ ४७०॥

अ० टी०—ययेवं प्रयोजनबुद्धिर्वाक्यस्य फलं तत्फलत्वमेव तत्परत्वं न स्वार्थबु-द्धिमात्रं वाक्यफलं तथा तर्हि कथमङ्गवाक्यानां स्वार्थबुद्धिफलं स्यादिति चेत्कश्चिद्ब्रूया-

---

१ क. ग. परत्वमुक्तं।

त्तदाऽयं समाधिर्बोद्धव्यः । आकाङ्क्षितार्थबुद्धेर्वाक्यफलत्वादङ्गवाक्यानां च प्रधानाकाङ्क्षितेत्थंभावसमर्पकत्वेन तद्धियः फलत्वादस्ति तद्वाक्यानां स्वार्थे तात्पर्यं न चैवंसति प्रधानविधिशेषार्थत्वानुपपत्तिः साक्षात्पुमर्थाकाङ्क्षया तदुपेतवाक्यान्तरार्थशेषतया तत्रैव महातात्पर्येऽपि स्वार्थविषयेऽवान्तरतात्पर्यमिति व्यवस्थोपपत्तेः साङ्गस्यैव कर्मणः फलवत्त्वादङ्गप्रधानविषयं सर्वमेव वाक्यं स्वार्थे फलवन्न तथाऽर्थवादादिवाक्यं तस्याऽऽरादुपकारकत्वेऽप्यनुष्ठानाङ्गत्वाभावादित्यङ्गवाक्यानामर्थवादादिवाक्यानां च विशेष इत्येवं मन्त्रार्थवादानां न स्वार्थे तात्पर्यमित्युक्तस्योत्सर्गस्यापवादं बादरायणमतमाश्रित्याऽऽह—**मन्त्रार्थवादवचसामपीति** । सैवेषु स्वकीयेषु गोचरेषु मन्त्रार्थवादवचसामपि तत्परत्वं त्रयीशिरसि खिन्नधियः क्षुण्णधियः केचिन्मुनीन्द्रा उशन्ति जानन्त्यङ्गी कुर्वन्तीति योजना । मन्त्रार्थवादानां न स्वार्थपरत्वं तेषां विधिपरत्वादिति शङ्कावारणायावान्तरमिति विशेषणम् । एतदुक्तं भवति—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ॥

इतिन्यायेनोक्तस्याद्गुणवादानुवादयोः स्वार्थपरत्वाभावेऽपि भूतार्थवादेषु प्रमाणान्तरविरोधतत्पूर्वकत्वयोरभावादस्ति स्वार्थपरत्वं तथाऽपि स्वार्थबुद्धेरनाकाङ्क्षितार्थत्वात्साक्षात्फलवत्त्वाभाव इत्यवान्तरतात्पर्यं स्वार्थेऽभ्युपगम्यते । अन्यथा यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति ध्यानविधेर्ध्येयविषयाकाङ्क्षितत्वात्तस्य चान्यतोऽसिद्धेः शब्दमात्रस्याध्येयत्वाच्च ध्यानविध्यसिद्धिप्रसङ्गोऽतः स्वार्थस्यानन्यलभ्यतया तात्पर्यगोचरत्वमिति । नन्वेवमपि स्वार्थबुद्धेरफलत्वान्मन्त्रार्थवादानां तद्बुद्धिमात्रफलत्वं तात्पर्यं न लभ्यत इति तत्राऽऽह—**तत्तद्धिय इति** । देवताविग्रहवत्त्वादिधिय इत्यर्थः । विधिषु स्वर्गाद्यर्थयागादिविधिष्वित्यर्थः । **शेषतयेति** । यस्यै देवताया इति प्रयोगोपयोगितया तत्तत्स्वर्गादिफलविशिष्टविध्यर्थप्रतिपत्त्युपयोगितया वा शेषतया निविष्टत्वादित्यर्थः । तदेवमुक्तविधायाः स्वार्थधियः फलवत्त्वात्तद्बुद्धिमात्रफलत्वमेव सर्वत्र तात्पर्यं न शेषभाव इति व्यवस्थितमेव तदिति भावः ॥ ४७० ॥

सु० टी०—ननु सगुणवाक्यानामवान्तरतात्पर्येणोपासनापरत्वे नियोगनिष्ठत्वं पुनरापन्नमिति नेत्याह—

**श्रेयःसाधनता लिङर्थ इति च प्रागुक्तमत्यादरा-**
**च्छ्रेयःसाधनयागदानहवनाद्यर्थैकनिष्ठं ततः ।**
**सर्वं कर्मवचो नियोगपरता तस्यापि नाऽऽलोचने**
**वक्तव्यं किमुतास्य वेदशिरसः सा नेति भूयोऽपि नः ॥१७१॥**

---

१ ग. °क्थ्या कि° ।

श्रेय इति । श्रेयःसाधनतैव लिङर्थो न नियोगादीति प्रागेवोक्तत्वात् । कर्मविधिवाक्यमपि सकलं श्रेयोहेतुत्वपरमेवेति तदालोचने क्रियमाणेऽपि चेन्नियोगादिपरता नास्ति तदा वेदशिरसः सा नास्तीति किं भूयो वक्तव्यमिति संबन्धः ॥ ४७१ ॥

अ० टी०—उक्तन्यायेन सगुणवाक्यानामपि निर्गुणे ब्रह्मणि महातात्पर्यं गुणविशिष्टे तस्मिन्नवान्तरतात्पर्यमुपासनावाक्यगतानां तु विधिपदानां स्वार्थ एव तात्पर्यं न ब्रह्मणि तत्प्रत्यायकत्वाभावात्तेषां विहितोपासनानां तु चित्तैकाग्र्यसंपादनद्वारा ब्रह्मावगत्युपयोगित्वादिति कर्मकाण्डानां नियोगनिष्ठत्वेऽपि सर्वेषां वेदान्तानां निर्विशेषब्रह्मपरत्वमेव न नियोगस्पर्शित्वं भावनास्पर्शित्वं वा कर्मकाण्डेऽपि प्रतिषेधचोदनानां न नियोगनिष्ठत्वमितीयता प्रबन्धेन प्रतिपादितमिदानीं कर्मकाण्डेऽपि न नियोगो भावना वा भावी किमुत वेदान्तेष्विति वक्तुं पूर्वोक्तमाकर्षति तद्गतविशेषनिरूपणाय—श्रेयःसाधनतेति । यतः श्रेयःसाधनता लिङर्थ इति प्रागस्माभिरत्यादराद्युक्तिभिरुपपाद्योक्तम् । चोऽवधारणे । उक्तमेवेति संबध्यतेऽतः सर्वं कर्मवचः श्रेयःसाधनयागदानहवनाद्यर्थैकनिष्ठं न नियोगनिष्ठमिति योजना । यद्येवं तस्यापि कर्मकाण्डस्याप्यालोचने निरूप्यमाणे न नियोगपरता लभ्यते भावनापरता वा तदा भूयोऽपि पुनरपि किमु वक्तव्यमस्य वेदशिरसः सा नियोगादिपरता नास्तीति नोऽस्माकमाकूतमित्यर्थः ॥ ४७१ ॥

सु० टी०—तर्हि भट्टगुरुप्रभृतिभिः कर्मकाण्डस्य भावनानियोगनिष्ठतया व्याख्यानं कथं कृतमिति चेन्न सूत्रभाष्यविरोधेन तस्यापव्याख्यानत्वादित्याह—

> श्रेयःसाधनयागदानहवनाद्यर्थेषु कार्यात्मसु
> सर्वं कर्मवचः प्रमाणमिति तु ग्राह्यं वचो जैमिनेः ।
> भाष्यं पश्यत शाबरं स्फुटतरं यो यागमित्यादिकं
> श्रेयःसाधनयागमात्रवचनं धर्माभिधानं वदत् ॥ ४७२ ॥

श्रेय इति । यागादिषु श्रेयःसाधनत्वात्कर्तव्यात्मकेषु सर्वं विधिवाक्यं प्रमाणमिति बोधयत् 'चोदनालक्षणोऽर्थो धर्मः' [जै० १ । १ । २] इति यज्जैमिनेर्वचनं तद्न्यायानुगतत्वाद्ग्राह्यमित्यर्थः । ननु श्रेयोहेतुत्वमेव चोदनाशब्दोदितस्य विधेरर्थस्तस्याभिमत इति कुतो निर्णीतमिति चेद्भाष्यानुसारादित्याह—भाष्यमिति । यो यागमनुतिष्ठति तं धार्मिक

---

१ क. °र्हि वेद्गु° ।

इत्याचक्षत इति श्रेयस्करत्वं धर्मशब्दार्थं वदता तत्प्रमापकस्य विधेस्तदर्थत्वं सुव्यक्तमेवोक्तमित्यर्थः ॥ ४७२ ॥

अ० टी०——न चास्माकमेवेदमाकूतमपि तु जैमिनेः सूत्रकारस्य तत्सूत्रभाष्यकारस्य चास्मद्विवक्षानुसारित्वदर्शनात्तद्भाष्य इत्याह—श्रेयःसाधनयागेति । जैमिनेराचार्यस्य 'अथातो धर्मजिज्ञासा' [ जै० १ । १ । १ ] 'चोदनालक्षणोऽर्थो धर्मः [ जै० १ । १ । २ ] इत्यत्र यद्धर्मवचस्तत्कार्यात्मसु साक्षात्कृतिसाध्येषु श्रेयःसाधनयागाद्यर्थेषु प्रमाणं ग्राह्यं न नियोगे भावनायां वेति योजना । प्रयत्नपरतन्त्रश्रेयःसाधनविषय एव सौत्रधर्मशब्दो विवक्षितोऽवगन्तव्य इत्यर्थः । कुत इत्यत आह—भाष्यमिति । यो यागमनुतिष्ठति तं धार्मिक इत्याचक्षत इत्यादिकं शाबरं भाष्यं सौत्रधर्मपदव्याख्यानपरं स्फुटतरं संदेहविपर्ययशङ्काकलङ्करहितं यथा स्यात्तथा सूत्रगतधर्माभिधानं श्रेयःसाधनयागमात्रवचनं वदत्पश्यतेति योजना । भाष्यकारेण सौत्रधर्माभिधानस्य श्रेयःसाधनयागादिवाचकत्वेन व्याख्यातत्वात्सूत्रकारस्याप्येषोऽर्थो विवक्षित एवेति गम्यत इत्यर्थः ॥ ४७२ ॥

सु० टी०—नन्वेवं धर्मशब्दस्य यागवाचित्वे नपुंसकता स्यात् 'तानि धर्माणि प्रथमान्यासन्' इत्यादिवैदिकप्रयोगादतोऽपूर्ववाचित्वं तस्येति चेत्तत्राऽऽह—

पुंलिङ्गताऽपि घटते क्रतुगामिनोऽस्य
सूक्ष्मात्मना भवति हि क्रतुरप्यपूर्वम् ।
तेन क्रतोरुपचरन्नभिदां पुमान्स्यात्
क्लीबस्तु धर्ममिति हि क्रतुवाचकत्वे ॥ ४७३ ॥

पुंलिङ्गतेति । यद्यपि 'अदृष्टे पुंसि धर्मः स्यात्क्लीबो यागादिके मतः' इति कोशात्क्रतुवाचिनो नपुंसकतैव तथाऽपि क्रतुरेव सूक्ष्मात्मनाऽपूर्वं भवतीति क्रतोरपूर्वाभेदमुपचर्य सूत्रे पुंलिङ्गप्रयोग इत्यर्थः ॥ ४७३ ॥

अ० टी०—ननु धर्म इति द्वितीयसूत्रे पुंलिङ्गप्रयोगस्य स्पष्टत्वात्क्रियावाचित्वमवगन्तुं न शक्यतेऽपूर्ववाचित्वमेव हि तदा युक्तं वैदिकप्रयोगेषु 'धर्मो विश्वस्य जगतः प्रतिष्ठा' [ महाना० २२ । १ ] 'तानि धर्माणि प्रथमान्यासन्' इत्यादिष्वपूर्वे पुंलिङ्गतया क्रतौ च नपुंसकलिङ्गतया प्रयोगदर्शनादिति चेत्तत्राऽऽह—पुंलिङ्गताऽपीति । अस्य धर्मशब्दस्य क्रतुगामिनोऽपि पुंलिङ्गता घटते हि यस्मात्क्रतुरेव सूक्ष्मात्मनाऽपूर्वं भवति 'ते वा एते आहुती हुते उत्क्रामतः' 'पञ्चम्यामाहुतावापः पुरुषवचसः' [ छा० ५ । ३ । ३ ] इति श्रुत्योः फलारम्भकापूर्वस्य क्रियापरिणामत्वावगमादित्यर्थः । तेन

हेतुना क्रतोरभिदामुपचरन्पुमान्स्यात् । कार्यकारणयोरभेदोपचारात्क्रतावपि धर्मशब्दः पुंलिङ्गः स्यादित्यर्थः । केवलक्रतुवाचकत्वे तु धर्ममिति क्लीबः स्यात् । तथा च फलसाधनत्वाकारविहितक्रियावाची धर्मशब्दः सूत्रभाष्ययोर्नानुपपन्न इत्यर्थः ॥ ४७३ ॥

सु० टी०—नन्वेवं श्रेयोहेतुक्रियाविधौ तस्याः कर्त्रपेक्षत्वेन स्वर्गकामादिपदं तत्समर्पकं स्यान्नाधिकारिपरमिति स्वर्गकामाधिकरणविरोध इति चेन्न तत्र भावनावादिपरिहारस्य मयाऽभ्युपेयत्वादित्याह—

इष्टाभ्युपायवचनो लिङिति स्थितौ च
स्याद्भावनावचनताऽस्य यदा तदा च ।
कर्तुर्भवेदधिकृतिस्तु नियोगवादे
स्वाम्ये स्थिते सति भवेदथ कर्तृभावः ॥ ४७४ ॥

इष्टेति । यदि हीष्टहेतुत्वं लिङर्थो यदि वा भावनोभयथाऽपि विध्यर्थस्य क्रियारूपत्वात्प्रथमं कर्त्रपेक्षेति स्वर्गकामः कर्तृत्वेनान्वेति । भाट्टानां तु पश्चाद्भावना इष्टभाव्यकत्वानुरोधेन स्वर्गस्य भाव्यत्वात्तत्कामस्याधिकारित्वान्वयः। अस्माकमपि यागे मत्कर्तृकत्वज्ञानेऽपि स्वस्य तत्फलभोक्तृत्वाज्ञाने तदनुष्ठानासंभवात्कर्तुरेवाधिकारित्वान्वय इति न विशेषः । नियोगपक्षे तु नियोगस्यैव प्राधान्यात्तस्य च कार्यरूपस्य कृत्यधीनत्वात्तस्याश्च कर्त्रपेक्षत्वादनधिकारिणश्चाकर्तृत्वादनियोज्यस्य चानधिकारित्वात्प्रथमं नियोज्य एवापेक्षित इति तथैव स्वर्गकामस्यान्वयः। तस्य च स्वप्रवृत्तिविषये धात्वर्थे मन्नियोगसाधनत्वान्मदीयमिदं कर्माहमत्र स्वामीति मादृश्यज्ञानाधिकारित्वान्वयः । ततस्तत्रैव धात्वर्थे मत्कृतिसाध्योऽयमिति कर्तृत्वान्वय इति क्रममात्रभेदान्नाधिकरणविरोध इत्यर्थः ॥ ४७४ ॥

अ० टी०—ननु श्रेयःसाधनक्रियाया विधिवाक्यार्थत्वे क्रियाकाङ्क्षया स्वर्गकामपदस्य कर्तृसमर्पणार्थत्वं स्यादधिकारपरत्वं न सिध्येत्तथा च स्वर्गकामाधिकरणविरोधस्तत्र स्वर्गकामपदस्याधिकारिपरत्वनिर्णयादिति चेन्नेत्याह—**इष्टाभ्युपायवचन इति** । लिङिष्टाभ्युपायवचन इत्यस्मत्पक्षस्थितौ चापरमस्य लिङो यदा भावनावचनता स्यात्तदा भट्टमते चाधिकृतिस्त्वधिकारः कर्तुर्भवेत् । प्रथमं क्रियापेक्षया कर्तृत्वेनान्वितस्य क्रियासाध्यफलस्वाम्यादधिकारित्वेनान्वयो भवेन्नियोगवादे तु स्वाम्येऽधिकारान्वये स्थिते सत्यथानन्तरं कर्तृभावः कर्त्रन्वयो भवेदित्यक्षरार्थः । इदमिह विवक्षितं—यदा नियोगो लिङर्थस्तदा तस्य

विषयनियोज्याभ्यामेव प्रतीतेर्नियोगप्रतीत्यनुबन्धित्वेन नियोज्यतयैव प्रथमं पुमानन्वेति ममेदं कार्यमिति प्रतिपद्यमानो हि नियोज्य उच्यते । यस्मादुक्तं—'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते ' इति । स एव स्वर्गकामस्य ममायं नियोग इति प्रतिपद्यमानोऽधिकार्युच्यते श्रुतनियोगस्यानिष्पन्नाकारत्वात्तन्निष्पत्तिमन्तरेण च स्वर्गादिफलासिद्धेर्नियोगस्य कार्यत्वे सति तस्य प्राग्विषयत्वेनावगतधात्वर्थस्य करणत्वेन संमतस्यानुष्ठानद्वारा नियोगनिष्पादकत्वात्कर्तृत्वं पश्चात्प्रतिपद्यत इति स एव कर्तोच्यत इति प्रक्रिया । यदा भावना लिङर्थस्तदा शब्दभावनाभाव्यार्थभावनायाः प्रयत्नस्य क्रियानुकूलतया तद्वतः प्रथमकर्तृत्वेन क्रियायामन्वये सति फलकामिनः कर्तृत्वात्कर्तुरधिकार इति प्रक्रिया । यदा तु क्रियायाः श्रेयःसाधनत्वं लिङर्थस्तदाऽपि भावनावाद इव कर्त्रन्वयपूर्वक एवाधिकारान्वयोऽभ्युपगत इति भावनावादिभिरुक्त एव स्वर्गकामाधिकरणसिद्धान्तोऽस्माभिरभ्युपगम्यतेऽतो नियोगानादरेऽपि नाधिकरणविरोधोऽस्माकं स्यात् । न चैकस्य द्विरन्वयासंभवश्चोदनीयो नियोगवादिभिरपि स्वाम्यन्वयानन्तरं कर्त्रन्वयस्य स्वीकारात्केवलं पौर्वापर्यमात्रे विरोधो नत्वेकस्य द्विरन्वयकल्पनायामिति । स्वर्गकामाधिकरणे चाधिकारान्वयस्य कर्त्रन्वयात्प्राथम्यं नोक्तं प्रतीयते किं त्वधिकारिपरं फलपरं वा स्वर्गकामपदं न कर्तृपरमित्येतावदेव तत्रोक्तं गम्यते । यजेतेत्यत्र श्रेयःसाधनतावच्छिन्नस्य भावनावच्छिन्नस्य वा धात्वर्थस्य कर्तुरर्थसिद्धत्वात् । स्वर्गकामपदस्य फलपरत्वे चाधिकारान्वयोऽर्थसिद्धो भवति कर्तुः क्रियायाः फलनिर्देशे तत्कामितया तत्र तस्याधिकृतत्वोपपत्तेः । न चैवमार्थिकत्वेऽधिकारान्वस्य तात्पर्यगोचरत्वायोगः शङ्क्योऽनन्यलभ्यत्वप्रयुक्तत्वात्तात्पर्यगोचरत्वस्य न मुखतो गम्यमानत्वापेक्षा तस्येति श्रेयःसाधनता लिङर्थ इति वादे न कोऽपि विरोध इति ॥ ४७४ ॥

सु० टी०—नन्विष्टसाधनतापक्षे विधेर्नाप्रवृत्तप्रवर्तकत्वं फलेच्छयैव पुंसः प्रवृत्तत्वादिति नेत्याह—

इष्टाभ्युपायो विधिरात्मनीच्छामुत्पादयन्प्रेरकतामुपैति ।
इष्टाभ्युपायेऽवगते लिङादेरिच्छा फलादेनमुपैति सद्यः ॥४७५॥

इष्टेति । विधिर्हि रागात्फले प्रवृत्तस्यापि पुंस उपायविशेषाज्ञानात्तत्राप्रवृत्तस्य स्वात्मनीष्टोपाय इच्छामुत्पादयंस्तत्र प्रेरयतीति सोऽपि प्रवर्तनात्मक एवेत्यर्थः । दुःखात्मके तत्र कथमिच्छेति चेत्तत्राऽऽह—इष्टेति । ज्ञानेच्छाकृतीनां समानविषयत्वान्नाज्ञात इच्छेति लिङादित इष्टाभ्युपाये ज्ञाते फलमहिम्नैव तदभ्युपायमिच्छा विषयी करोतीत्यर्थः ॥ ४७५ ॥

अ० टी०—नन्वज्ञातज्ञापकत्वमप्रवृत्तप्रवर्तकत्वं च विधेः स्वरूपमाचक्षते तत्रेष्टाभ्युपायत्वज्ञानस्याप्रवृत्तप्रवर्तनात्मकत्वरूपं विधिलक्षणं न विद्यत उपायज्ञानमात्राप्रवृत्त्यदर्शनात्फलेच्छायाश्च सामान्यतः प्रवृत्तविषयत्वान्नियोगस्य त्वप्रवृत्तविषयत्वात्कुर्विति साक्षात्प्रवर्तनारूपत्वाच्च युक्तं प्रवर्तकत्वमिति चेत्तत्राऽऽह—**इष्टाभ्युपायो विधिरिति।** फलेच्छुत्वात्सामान्यतः प्रवृत्तोऽपि य उपायाज्ञानादुपायविशेषे न प्रवृत्तस्तस्मिन्नात्मनि पुरुष इष्टाभ्युपायो विधिरिच्छामुत्पादयन्प्रेरकतामुपैतीति योजना। यद्वा यथोक्तो विधिरात्मनीष्टाभ्युपाये पुरुषस्येच्छामुत्पादयन्प्रेरकतामुपैतीति योजना। तत्रोक्तेऽर्थे युक्तिमाह—**इष्टाभ्युपायेऽवगत इति।** यद्यपि फले रागः पूर्वमुत्पन्नोऽपि न प्रवर्तक उपायविशेषाज्ञानात्तथाऽपि लिङादेः सकाशादिष्टाभ्युपायेऽवगते सत्युपायविशेषे ज्ञाते सति फलात्सकाशादिच्छैनमुपायविशेषं प्रति सद्यस्तत्क्षणमेवैति। फलेच्छया साधनविशेषमिच्छतः साधनविशेषज्ञानानन्तरं तत्रेच्छा जायते। सा तत्र पुरुषं पूर्वं फलेच्छामात्रदशायामप्रवृत्तं फलसाधनविशेषे प्रवर्तयतीतीष्टाभ्युपायविधिपक्षेऽपि न लक्षणांशाभाव इति सिद्धम्। फलेच्छा साधनेच्छाहेतुः साधनेच्छा च प्रवृत्तिहेतुः सा च साधनज्ञानाधीनेति भावः॥ ४७५॥

सु० टी०—ननु नियोगादिः साक्षात्प्रवर्तको ननु रागादिद्वारेति स एव विधिः स्यान्नेष्टसाधनतेति चेन्नेत्याह—

नियोगकोट्याऽपि नरो न कश्चि-<br>दिच्छां विना दुःखनिदानभूतम्।<br>करोति कर्मेह पुमर्थरागा-<br>त्प्रवृत्तिरेवेति हि राजमार्गः॥ ४७६॥

नियोगेति। अनिच्छतो हि नियोगभावनालक्षैरपि न प्रवृत्तिरतः सोऽपि स्वविषये फलहेतौ रागमुत्पाद्यैव प्रवर्तयेन्न वाद्यादिवत्साक्षादित्यर्थः। ननु नित्ये फलाभावान्नियोग एव प्रवर्तक इति नेत्याह—पुमर्थेति। नित्येऽपि 'कर्मणा पितृलोकः' [ बृ० १।५।१६ ] इत्यादिफलश्रवणाद्राग एव प्रवर्तक इत्यर्थः॥ ४७६॥

अ० टी०—स्वपक्षे रागोत्पादनद्वारा विधेः प्रवर्तकत्वोपपादनेन शङ्कितं दोषं परिहृत्य यदुक्तं नियोगः साक्षात्प्रवर्तक इत्यत्यन्तासंभवीति दूषयति—**नियोगकोट्याऽपीति।** नियोगकोट्या नियुज्यमानोऽपि नरः कश्चिदिच्छां विना न कर्म करोति यतः कर्मकरणं दुःखनिदानभूतमिति योजना। तस्मादिह कर्मणि पुमर्थरागात्तत्प्रयुक्तसाधनरागादेव प्रवृत्ती राजमार्गः सर्वदोषपरिमोपिरहितः पन्था इत्यर्थः। नियोगो हि नियुज्यमानविषये

रागमुत्पादयन्नेव प्रवर्तको न तु रागवत्साक्षाज्ज्ञातेऽपि नियोगे रागहीनस्य प्रवृत्त्यदर्शनात्। रागस्तु न नियोगमात्राद्भवति तस्य दुःखात्मकत्वात्किं तु फलसाधनताबोधात्तस्मात्फलरागिणो नियोगादपि साधने रागोत्पादादेव प्रवृत्तिर्न नियोगमात्रादिति स्थितौ स्वेष्टसाधनत्वज्ञानस्यावश्याभ्युपेयत्वात्तत एव साध्यफलरागिण इच्छया प्रवृत्तिरित्यस्मिन्पक्षे न कोऽपि दोष इति भावः ॥ ४७६ ॥

सु० टी०—नन्विष्टसाधनत्वेन कार्यत्वे मेघच्छायादेरपि तदापत्तिरिति नेत्याह—

इष्टाभ्युपायस्य च कार्यभावः
प्रयत्ननिष्पाद्यतयोपपन्नः।
स चावसेयो वचनाल्लिङ्गादेः
प्रत्यक्षतो रागनिबन्धनस्तु ॥ ४७७ ॥

इष्टेति। प्रयत्ननिष्पाद्यतया विशिष्टस्येष्टाभ्युपायस्य कार्यभाव उपपन्न एवेत्यर्थः। तथा चेष्टकरणताज्ञानं प्रवर्तकं करणत्वं च कर्तृव्यापारविषयत्वं तद्व्यापारश्च कृतिस्तेनैतद्गोचरप्रवृत्त्येष्टं भवतीति ज्ञानं प्रवर्तकमिति भावः। ननु कृत्युद्देश्यत्वं कार्यत्वं तच्च प्रत्यक्षमेव स्वयमेव हि जानन्तीति न्यायादिति। कथं तस्य लिङादि (* बोध्यत्वमित्यत्राऽऽह—स चेति। कृतिसाध्यतालक्षणं हि कार्यत्वं ज्ञातं प्रवर्तकं तच्चाप्राप्तत्वाल्लिङादि)बोध्यं न तु फलविषयं कृत्युद्देश्यत्वमित्यर्थः ॥ ४७७ ॥

अ० टी०—नन्विष्टसाधनज्ञानस्य चन्द्रातपादावपि भावाद्रागद्वारेणापि न नियमेन प्रवर्तकतेति व्यभिचारमाशङ्क्याऽऽह—इष्टाभ्युपायस्येति। कार्यभावो नियमेन कर्तव्यता प्रयत्ननिष्पाद्यतयोपपन्नः प्रयत्ननिष्पाद्यत्वलक्षणकार्यत्वविशिष्टेष्टसाधनत्वज्ञानस्य न प्रवर्तकत्वव्यभिचार इति भावः। उक्तलक्षणमिष्टसाधनत्वं कुतोऽवसीयते त्वयेति तदाह—स चेति। स उक्तलक्षण इष्टाभ्युपायस्य कार्यभावो लिङादेर्वचनाच्छब्दादवसेयो विज्ञेयो रागनिबन्धनस्तु कार्यभावः प्रत्यक्षतो मानप्रत्यक्षात्साक्षिप्रत्यक्षाद्वाऽवसेय इत्यक्षरार्थः। एतदुक्तं भवति लिङादिशब्दो हि प्रवर्तकार्थवाचक इत्यविवादं तत्र कृत्युद्देश्यताविशिष्टं

---

* ख. पुस्तकेऽयं ग्रन्थः।

---

१ क. ग. °तु कृत्युद्देश्यत्वं फलविषयमि°।

यत्कार्यत्वं परैः प्रवर्तकत्वेनाभिमतं तन्न लिङादिशब्दार्थस्तस्य चिकीर्षाविषयीकृतस्य प्रत्यक्षावसेयत्वाच्छब्दार्थत्वायोगादनन्यलभ्यो हि शब्दार्थोऽभिमतः । तस्मादन्य एव प्रवर्तको लिङाद्यर्थः । स च प्रयत्ननिष्पाद्यत्वलक्षणकार्यताविशिष्टेष्टाभ्युपायः । सोऽपि ज्ञायमानः सन्प्रवर्तकस्तादृगुपायज्ञाने सति फलरागिणः प्रवृत्त्यवश्यंभावात्तत्र चेष्टाभ्युपायांशस्यानन्यलभ्यतया लिङाद्यर्थत्वं प्रयत्ननिर्वर्त्यांशस्य तु यद्यपि स्वरूपेणानन्यलभ्यत्वं नास्ति तथाऽपीष्टाभ्युपायविशेषविशिष्टत्वाकारेण तदस्तीति सर्वथा प्रयत्नपरतन्त्रश्रेयःसाधनत्वमेव ज्ञायमानं प्रवर्तकं तज्ज्ञानं च लिङादेरेवेति नास्मन्मते कोऽपि दोष इति ॥ ४७७ ॥

**सु० टी०—एवं कार्यताद्वैविध्ये किं मानमिति चेत्तत्राऽऽह—**

**कार्यत्वमिच्छावशवर्ति किंचि-**
**दिष्टाभ्युपाये निजमस्य किंचित् ।**
**निजं लिङादेरवसेयमस्य**
**साक्षिप्रसादादितरप्रतीतिः ॥ ४७८ ॥**

कार्यत्वमिति । **कृतिर्हि किंचिदुद्दिश्य किंचिद्विषयीकृत्योत्पद्यते तत्र यत्कृतिविषयत्वलक्षणं कार्यत्वमुपायविषयं तन्निजं स्वाभाविकं कृतेस्तत्पर्यन्तत्वात्तच्चानन्यलभ्यत्वाद्विधिप्रमेयमन्यच्च कार्यत्वं रागनिबन्धनत्वेन प्रत्यक्षत्वान्न शास्त्रीयमित्यर्थः ॥ ४७८ ॥**

अ० टी०—ननु कार्यत्वस्यैकत्वात्कथमित्थं विभागः केवलं कार्यं प्रत्यक्षावसेयमिष्टाभ्युपायत्वविशिष्टं लिङाद्यवसेयमिति तत्राऽऽह—**कार्यत्वमिति**। इष्टाभ्युपाये यागादौ किंचित्कार्यत्वमिच्छावशवर्ति यथा नियोगवादिनां कृत्युद्देश्यत्वरूपं कार्यं तत्रैवेष्टाभ्युपाये किंचिन्निजमसाधारणं कार्यत्वमस्ति कृतिसाध्यत्वरूपस्य कार्यत्वस्य स्वाभाव्यात् । तत्रास्य यन्निजं कार्यत्वं लिङादेरवसेयं तत्क्रियास्वभावत्वात्क्रियायाश्चाऽऽख्यातावसेयत्वाल्लकारसामान्यवाच्यमित्यर्थः । इतरप्रतीतिः कृत्युद्देश्यतारूपकार्यत्वप्रतीतिः साक्षिप्रसादात्प्रत्यक्षत इति यावत् । चिकीर्षितत्वं हि कृत्युद्देश्यत्वं चिकीर्षा तु रागः स जायमान एव नियतविषयः सन्साक्षिणाऽवभास्यमान एव जायते मनसाऽवसेयतया वेति प्रत्यक्ष इतरप्रतीतिरित्यर्थः ॥ ४७८ ॥

**सु० टी०—कृतिसाध्येष्टसाधनत्वस्य लिङर्थत्वे विद्वत्संमतिमप्याह—**

**जानात्यर्थे लिङ्पदं गौणमाहु-**
**र्जानात्यर्थः कर्तृतन्त्रो न हीष्टः ।**

यागाद्यर्थे कर्तृतन्त्रे हि मुख्यो
लिङ्लोडादिः श्रेयसो हेतुभूते ॥ ४७९ ॥

जानातीति । आत्मानं जानीयादित्यपुरुषतन्त्रे ज्ञाने कृतिसाध्यांशाभावाल्लिङ्पदं गौणमाहुराचार्याः । मुख्यार्थमाह—यागादीति । तत्रांशद्वयस्यापि संभवादित्यर्थः ॥ ४७९ ॥

अ० टी०—कृतिसाध्यत्वविशिष्टमेवेष्टसाधनत्वं लिङर्थ इत्यत्र विद्वत्संमतिमाह—जानात्यर्थ इति । ज्ञाधात्वर्थे यल्लिङ्पदं प्रवर्तते जानीयादिति तद्गौणमाहुराचार्या अनियोज्यविषयत्वात्कुण्ठी भवन्तीत्यत्र तत्र हेतुमाह—जानात्यर्थ इति । साध्यत्वांशाभावात्प्रमाणवस्तुपरतन्त्रस्य ज्ञानस्य कृतिसाध्यत्वासंभवादित्यर्थः । तर्हि कुत्र लिङादिर्मुख्यस्तदाह—यागाद्यर्थ इति । कर्तृतन्त्रहेतुगर्भं विशेषणम् । श्रेयसो हेतुभूत इति विशेषणमुभयत्र योज्यम् ॥ ४७९ ॥

सु० टी०—अस्तु जानात्यर्थेऽपि श्रेयोहेतुत्वाभावादेव गौणत्वमिति चेन्नेत्याह—

जानात्यर्थे श्रेयसो हेतुभाव-
भागोऽबुद्धो बोध्यते लिङ्पदेन ।
यागाद्यर्थे श्रेयसो हेतुभावो
मुख्यो बोध्यः कर्तृतन्त्रो न गौणः ॥ ४८० ॥

जानातीति । ब्रह्मज्ञानस्य वाक्यशेषोपस्थितमोक्षहेतुत्वमज्ञानं लिङा बोध्यते नतु कृतिसाध्यत्वमकर्तृतन्त्रत्वात्तस्येति । तत एव गौणत्वमित्यर्थः । यागादीति । श्रेयसो हेतुभावस्तद्वाचको लिङादिरित्यर्थः । स मुख्यो ज्ञेयः कर्तृतन्त्रत्वादित्यर्थः ॥ ४८० ॥

अ० टी०—ननु जानात्यर्थे विधेरमुख्यमिष्टसाधनत्वबोधासंभवादेव भवत्वितरत्र च मुख्यत्वं तत्संभवादेवास्तु किमिति तत्र कृतिसाध्यत्वांशभावाभावाभ्यां तथा कल्प्यत इति चेन्मैवमिष्टसाधनत्वांशबोधस्य जानात्यर्थेऽपि संभवादित्याह—जानात्यर्थे श्रेयस इति । ज्ञाधात्वर्थेऽपि ब्रह्मज्ञानादौ श्रेयसो मोक्षादेर्हेतुभावभागः प्रागबुद्धो लिङा बोध्यते । 'तद्विजिज्ञासस्व' [ तै० ३ । १ । १ ] 'तमेवैकं जानथ, आत्मानम्' [ मुण्ड० २ । २ ५ ] 'स म आत्मेति विद्यात्' [ कौ० ३ । ८ ] इत्यादिवाक्येषु लिङ्लोडादिपदैर्ब्र-

१ क. वाक्यांशोप° ।

ह्यात्मज्ञानस्य मोक्षरूपश्रेयःसाधनत्वं बोध्यते तथाऽपि तत्र कृतिसाध्यता नास्तीति तत्र लिङादिर्गौण इत्यर्थः । इतरत्र तु न गौणस्तस्य कर्तृतन्त्रत्वादेवेत्याह—**यागाद्यर्थे श्रेयस इति** ॥ ४८० ॥

**सु० टी०—यागादिवच्च श्रवणादिष्वपि कृतिसाध्यत्वाद्विधेर्मुख्यत्वमित्याह—**

> **यागाद्यर्थे मुख्यता यद्वदस्य**
> **ब्रह्मज्ञानस्यान्तरङ्गेषु तद्वत् ।**
> **तर्कादीनां कर्तृतन्त्रत्वहेतो-**
> **र्ज्ञानादर्वाग्गौणताहेत्वभावात्** ॥ ४८१ ॥

यागादीति । ननु श्रवणादेरपि ज्ञानात्मकत्वेनाकर्तृतन्त्रत्वात्कथं तत्र मुख्यतेति नेत्याह—तर्कादीनामिति । तेषां युक्त्यनुसंधानादिरूपत्वेन तर्काद्यात्मत्वात्कर्तृतन्त्रत्वेन गौणत्वहेत्वभावादित्यर्थः॥ ४८१ ॥

अ० टी०—ननु ब्रह्मज्ञानस्य ज्ञेयावगतितन्निबन्धनसंसारनिवृत्तिरूपफलसाधनत्वस्यान्वयव्यतिरेकाभ्यामवगम्यमानत्वान्नानवबुद्धताऽस्त्यतो न तत्र लिङादिभिः साधनत्वांशोऽपि बोध्यत इति चेत्तत्राऽऽह—**यागाद्यर्थे मुख्यतेति** । अयमर्थः—श्रुतवेदान्तस्य यद्यपि न लिङादेः साधनत्वावगमस्तथाऽप्यश्रुतवेदान्तस्य सामान्यत उक्तप्रकारेण साधनत्वप्रतीतावप्यनन्तरं फलादर्शनाच्छङ्काग्रस्ततया साधनत्वमवबुद्धमिति शास्त्रबोध्यं तत्स्याद्ब्रह्मज्ञानसाधने श्रवणादौ तु तादृशेऽपि कृतिसाध्यत्वस्यापि सत्त्वान्मुख्य एव लिङादिरिति । अक्षरयोजना तु अस्य लिङादेर्यागाद्यर्थे यद्वन्मुख्यता तद्वद्ब्रह्मज्ञानस्यान्तरङ्गे श्रवणादावपि मुख्यता । तत्र हेतुमाह—**तर्कादीनामिति** । कर्तृत्वं तत्र हेतोर्यागादिवत्कृतिसाध्यत्वांशस्य तत्र भावादित्यर्थः । मननादीनां कर्तृतन्त्रत्वं साधयति—**ज्ञानादर्वागिति** । आत्मसाक्षात्कारोदयात्प्राक्कर्तुः करोमीत्यभिमानस्यानपायाच्छ्रवणादिविधौ लिङादेर्गौणत्वकल्पनायां प्रमाणाभावादिति । तथा च कृतिसाध्यत्वतदभावाभ्यामेव लिङादेर्मुख्यामुख्यत्वव्यवस्था न श्रेयःसाधनत्वतदभावाभ्यामिति निर्णयः ॥ ४८१ ॥

**सु० टी०—ननु तर्हि भूतस्य भव्यार्थत्वादात्मवाक्यानां श्रवणाद्यर्थत्वं स्यादिति नेत्याह—**

> **भूतस्य भव्याय यथोपदेशः**
> **क्रियापरे वस्तुपरे तु काण्डे ।**

---

१ क. 'तामुख्यभा° । २ क. °णत्वाभा° ।

न हीष्टमेवं विपरीतमस्मि-
न्भव्यस्य भूताय सदोपदेशः ॥ ४८२ ॥

भूतस्येति । क्रियापर इत्यादि हेतुगर्भं कर्मकाण्डे हि क्रियाप्राधान्या-त्तथेह तु सर्ववाक्याणां वस्तुपरत्वाद्भव्यस्य भूतार्थत्वमिति विपरीतमि-त्यर्थः ॥ ४८२ ॥

अ० टी०—यद्येवं ब्रह्मज्ञानेऽपि लेशतो विधिरज्ञातश्रेयःसाधनत्वबोधाद्गत्रच्छ्रवणादौ च सर्वात्मना मुख्यस्तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' [ बृह० २ । ४ । ५ ] इत्यादिवि-धिश्रवणानुरोधेन विधिनिष्ठत्वमेव वेदान्तानामभ्युपेयं न वस्तुनिष्ठत्वं ' भूतं भव्यायोपदि-श्यते ' इतिन्यायादिति चेत्तत्राऽऽह—भूतस्येति । वस्तुपरे तु काण्ड एवं न हीष्टमि-त्यन्वयः ॥ ४८२ ॥

सु० टी०—कथं विपरीतमिति चेत्तत्राऽऽह—

भव्यप्रतीतावुपयोगभाजो
भवन्ति कार्त्स्न्येन च सिद्धवादाः ।
क्रियाप्रधाने न तथाऽत्र किं तु
भूतप्रतीतौ खलु भव्यवादाः ॥ ४८३ ॥

भव्येति । कर्मकाण्डे हि नामार्थानां द्रव्यगुणादीनां क्रियासाधनत्वा-द्भूतार्थवाक्यानां भव्यप्रतीतावुपयोगित्वमिह त्वद्वैतपराणां सिद्धवादानां न विधावुपयोग इत्यर्थः । श्रवणादीनामपि भूतब्रह्मबुद्धौ नास्त्युपयोग इति चेन्नेत्याह—भूतेति । तद्विषयप्रतिबन्धनिरासादेरुक्तत्वादित्यर्थः॥४८३॥

अ० टी०—कुत एवं विभागव्यवस्था काण्डयोरुभयोरपि शब्दप्रमाणत्वाविशेषाद्वेद-त्वाविशेषाच्चेतिचेदर्थवशादित्याह—भव्यप्रतीताविति । क्रियाप्रधाने काण्डे सिद्ध-वादा भव्यप्रतीतौ कार्त्स्न्येनोपयोगभाजो भवन्ति भव्यशेषविषया एव भवन्ति भव्यप्रती-तेरेव तत्र पुरुषार्थानुबन्धित्वाद्भूतप्रतीतेरफलार्थत्वात् । ' फलवत्संनिधावफलं तदङ्गम् ' इति न्यायादित्यर्थः । ज्ञानकाण्डे विपरीतमेतदित्याह—न तथाऽत्रेति । वैपरीत्यमेव विमृश्य स्फुटयति—किं तु भूतेति ॥ ४८३ ॥

सु० टी०—ननु विषयसमर्पणेनोपनिषदामस्तु श्रवणादिशेषत्वमिति चेन्न फलवत्संनिधावफलस्यैवाङ्गत्वादित्याह—

भव्यप्रतीतौ न हि कश्चिदर्थो
भूतप्रतीतौ पुनरस्ति मुक्तिः ।

१ क. सिद्धवा° ।

श्रोतव्य इत्यादि ततो विधानं
भूतोपदेशानुगुणं समस्तम् ॥ ४८४ ॥

भव्येति । न हि श्रवणादौ फलान्तरमस्ति । आत्मधीपरिपाकफलत्वे तु फलवदात्मधीफलानामुपनिषदामेव प्राधान्यमित्यर्थः । ततश्च सर्वमपि श्रवणादिवाक्यं तत्त्वमस्यादिवाक्यस्यैवोपकरणमित्याह—श्रोतव्य इति ॥ ४८४ ॥

अ० टी०—किमित्येवमननुगमोऽभ्युपगम्यते वेदान्तेष्वपि पूर्वकाण्डतुल्यत्वाय भव्यनिबन्धन एव फलसंबन्धः कल्प्यतामिति चेन्नासंभवादित्याह—भव्यप्रतीतौ न हीति । वेदान्तेषु भव्यप्रतीतौ कश्चिदर्थः पुरुषार्थो न हि दृश्यते श्रूयते वा नापि कल्पयितुं शक्यते कल्पकाभावादित्यर्थः । कथमित्यत आह—भूतप्रतीतौ पुनरस्ति मुक्तिरिति । 'ब्रह्म वेद ब्रह्मैव भवति' [ मुं. ३ । २ । ९ ] इत्यादौ भूतब्रह्मप्रतीतौ मुक्तिश्रवणाद्विद्वत्प्रत्यक्षभावाच्चास्य प्रामाणिकत्वे सतीतरत्र फलकल्पनया शेषित्वकल्पनायोगादित्यर्थः । तस्मात् 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायेन वेदान्तेषु सर्वो विधिस्तत्त्वमस्यादिभूतोपदेशशेष एवेत्युपसंहरति—श्रोतव्य इत्यादीति ॥ ४८४ ॥

सु० टी०—ननु प्रवृत्तिपराः श्रवणादिविधयो निवृत्तिपराद्वैतश्रुतीनां कथमनुगुणा इति चेत्सत्यमेकवाक्यत्वकल्पितलाक्षणिकाद्यर्थद्वारेत्याह—

आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-
र्भव्यप्रतीतिजनकैः सह भूतवादाः ।
संबन्धिनो विधिवचःसु तथाऽत्र सर्वे
भव्यार्पणाः परिवृढप्रतिपादकेन ॥ ४८५ ॥

आदायेति । यथा विधिकाण्डे भूतवादा मन्त्रादयो नानावृत्तिपुरस्कारेण विधिभिः संबद्धा यथैन्द्र्यादिमन्त्रा गार्हपत्याद्यर्थाः क्षेपिष्ठाद्यर्थवादा वायव्यादिविध्यर्थास्तथा श्रवणादिविधयोऽपि निवृत्तिपराः सन्तो ब्रह्मप्रतिपादकमहावाक्येन संबद्धा इत्यर्थः ॥ ४८५ ॥

अ० टी०—कथं वेदान्तेषु भव्योपदेशस्य भूतवस्तुप्रतीत्युपयोगप्रकार इत्यपेक्षायां तद्दर्शयन्द्रष्टव्य इत्यादिविधौ 'न विधौ परः शब्दार्थः' इति न्यायेन दर्शनस्यापि कर्तृ-

---

१ क. °त्वेऽपि फ° ।

तत्रत्वमेष्टव्यमित्येप पूर्वपक्ष्याग्रहोऽपि निराकृत इत्याह—**आदाय मुख्येति** । यथा विधिरूचःसु कर्मकाण्डे भूतवादा मुख्यगुणलक्षणिकाप्रवृत्तीरादाय भव्यप्रतीतिजनकैः सह संबन्धिनो भवन्ति तथाऽत्र वेदान्तेषु सर्वे भव्यार्पणा भव्योपदेशाः परिवृढस्य प्रभोर्ब्रह्मात्मनः प्रतिपादकेन सह संबन्धिनो भवन्तीति योजना । एतदुक्तं भवति—भव्याभिधाय्याख्यातविरोधे नामपदानामर्थवादादिपदानां च तत्संबन्धसिद्धये क्रियाकाण्डे लक्षणाद्याश्रयणं युक्तं तत्र भव्यप्राधान्यात् । इह तु सिद्धब्रह्मप्राधान्यात्तदभिधायिना ब्रह्मादिपदेन तत्त्वमस्यादिवाक्येन वाऽविरोधेन संबन्धसिद्धये विधयो लक्षणाद्यादाय पर्यवस्यन्ति । न विधौ परः शब्दार्थ इति विधिशब्दोऽपि विवक्षितार्थपरो न लिङादिपरोऽतो न न्यायविरोधोऽपीति ॥ ४८५ ॥

**सु० टी०—ननु मन्त्रादीनामनुवादत्वाद्युक्तं लक्षणाश्रयणं श्रवणादौ तु न विधौ परः शब्दार्थ इत्ययुक्तमिति चेन्न गुणे त्वन्यायकल्पना इति गुणत्वस्यैवोपचारप्रयोजकत्वाद्विधावपि ‘ व्रीहीनवहन्ति ’ इत्यादावपूर्वसाधनत्वलक्षणाश्रयणाच्चेत्याह—**

> **सिद्धार्थवादिवचनेषु न गौणतादि-**
> **दोषाय कर्मपरवाक्यगतेषु यद्वत् ।**
> **कार्यार्थवादिवचनेषु न गौणतादि-**
> **दोषस्तथोपनिषदीति समानमेतत् ॥ ४८६ ॥**

सिद्धार्थेति । यथा तत्र प्रधानान्वयसिद्ध्यर्थत्वाद्गौणत्वादिर्न दोपस्तथोपनिषदीत्यर्थः । एतदेवोक्तमौदासीन्यविशेषमित्यादिना ॥ ४८६ ॥

अ० टी०—एवमप्यमुख्यार्थत्वं दोष एवेति चेन्नायं दोपः कर्मकाण्ड इव नामपदानां प्रधानान्वयसिद्ध्यर्थत्वादित्याह—**सिद्धार्थेति** । स्पष्टा योजना ॥ ४८६ ॥

**सु० टी०—न केवलमत्र काण्डे भूतभव्यन्यायव्यत्यये मानमेयादिभावोऽपि विपरीत इत्याह—**

> **मानेन मेयावगतिश्च युक्ता**
> **धर्मस्य जाड्याद्विधिनिष्ठकाण्डे ।**
> **मेयेन मानावगतिश्च युक्ता**
> **वेदान्तवाक्येष्वजडं हि मेयम् ॥ ४८७ ॥**

मानेनेति । तत्र बीजमाह—धर्मस्येति । जडस्य मानविषयत्वसंभवादि-

१ ख. वाङ्ग ।

त्यर्थः । इह तु मेयस्य ब्रह्मणश्चित्त्वेनाविषयत्वात्तदेव स्वाकारवृत्त्यात्मकमानसाधकमित्यर्थः ॥ ४८७ ॥

अ० टी०—ननु वेदप्रमाणत्वाविशेषेऽपि पूर्वोत्तरकाण्डयोर्वैरूप्यकल्पनमयुक्तमेवेति चेदत्यल्पमिदमुच्यते सर्वप्रसिद्धयोरपि मानमेययोर्गम्यगमकभावोऽप्यत्र विपरीतो न चायमपि दोष एवेति वाच्यं वस्तुस्वरूपानुसारित्वान्मानमेयभावस्येत्याह—**मानेन मेयेति** । जडं हि स्वयमप्रकाशस्वभावत्वात् । परतः प्रकाशमपेक्ष्य प्रमितं भवेत् । तत्प्रकाशकं च प्रमाणं यद्यपि स्वरूपतो जडं तथाऽपि चिदाभासव्याप्तमेव सत्तदन्यावभासकमित्यजडेन जडं मेयमिति स्थितिः । तथा च धर्मस्य जडत्वान्मानमेयता कर्मकाण्डे । ज्ञानकाण्डे तु मेयस्य ब्रह्मणः स्वप्रकाशस्वभावत्वादजाड्यात्तेन मेयभूतेन मानस्यावगतिर्युक्ता । तस्मान्मेयाभासकमपि मानं येन सिध्यति तत्र मानमेयं किं तु विपरीतम् । न चैतावता ब्रह्मणो वेदान्तवेद्यत्वप्रसिद्धिविरोधः स्वयं नित्यप्रकाशमानस्यैव ब्रह्मात्मनः प्रकाशावरणाविद्यापसारमात्रेण यथावदभिव्यक्त्यपेक्षत्वाद्वेदान्तवेद्यत्वप्रसिद्धेरिति भावः ॥ ४८७ ॥

सु०टी०—आख्यातप्रधानं वाक्यमित्यप्यत्र विपरीतमित्याह—

कर्मप्रधानेऽतिगते च काण्डे
वाक्यत्वमाख्यातपदप्रयुक्तम् ।
ब्रह्मप्रधाने श्रुतिमस्तकेऽस्मि-
न्नामप्रधानं वचनं समस्तम् ॥ ४८८ ॥

कर्मप्रधान इति । अतिगतेऽतीते काण्डे कर्मप्राधान्यात्तदर्थाख्यातान्वयप्रयुक्तमन्येषामेकवाक्यत्वमिह तु ब्रह्मधियः फलवत्त्वात्तत्प्रधानं सर्वमित्यर्थः ॥ ४८८ ॥

अ० टी०—न चैतावदेवापि च नैरुक्तप्रभृतिभिरुक्तं वाक्यलक्षणमप्यत्र विपरीतमित्याह—**कर्मप्रधानेति** । अतिगतेऽतिक्रान्ते पूर्वस्मिन्नित्यर्थः । चशब्दः किंचेत्यर्थे । तत्र वाक्यत्वमाख्यातपदप्रयुक्तं तत्प्रधानमेव भव्यावगतेरेव तत्र फलवत्त्वादित्यभिप्रायः । श्रुतिमस्तके तु भूतब्रह्मावगतेरेव फलवत्त्वात्प्रधानं समस्तं वचनमिति हेतुरनुसंधेयः ॥ ४८८ ॥

सु० टी०—किमत्राऽऽख्यातवैलक्षण्यमित्यत्र प्रागुक्तं स्मारयति—

कार्यप्रधानमखिलं च पदं सुबन्त-
माख्यातमेव फलतः खलु कर्मकाण्डे ।
तद्वत्तिङन्तमपि वेदशिरःसु सर्वं
नामैव तद्धि परिनिष्ठितवस्तुनिष्ठम् ॥ ४८९ ॥

कार्येति । तत्राऽऽग्नेयादि सुबन्तं फलत आख्यातमत्र तु तिङन्तमप्यस्यस्मीत्यादि फलतो नामैवेत्युक्तमित्यर्थः ॥ ४८९ ॥

अ० टी०—एतादृशवैरूप्यं न मयैवाऽऽश्रितं भवद्भिरप्यर्थवशादाश्रितं दृश्यत इत्याह— **कार्यप्रधानमिति** । कर्मकाण्डे खलु सुबन्तपदं नामत्वेन प्रसिद्धमपि यत्कार्यप्रधानं कार्यार्थनिष्ठमस्ति तदखिलं फलतोऽर्थवशादाख्यातमेव युष्माभिरभ्युपगतमिति शेषः । तद्वद्वेदशिरःसु सर्वं तिङन्तमप्याख्यातत्वेन प्रसिद्धमपि पदं नामैव नामार्थकमेव तद्धि यतः परिनिष्ठितवस्तुनिष्ठमस्माभिरर्थवशादभ्युपगतमिति योजना ॥ ४८९ ॥

**सु० टी०—उक्तमेवोदाहरणेन व्यनक्ति—**

**आग्नेयमाश्विनमथैन्द्रमितीदृशं हि**
**सर्वं सुबन्तमपि भव्यपरं प्रसिद्धम् ।**
**साऽस्येतितद्धितसमन्वितसंनिधाने**
**नामैव तद्भवति यद्भवतीति तद्वत् ॥ ४९० ॥**

आग्नेयमिति । '**आग्नेयोऽष्टाकपालो भवति**' '**ऐन्द्रं दधि**' '**आश्विनं धूम्रमालभेत**' **इत्यादौ द्रव्यदेवतासंबन्धान्यथानुपपत्त्या** '**आग्नेयेन यजेत**' **इत्यादिविधिकल्पनेन भव्यपरत्वात्सुबन्तमप्याख्यातमित्यर्थः । तथा** '**साऽस्य देवता**' **इतिसूत्रविहिततद्धितसंनिधौ यद्भवतीत्याख्यातं तदसाध्यार्थत्वान्नाऽऽत्मेत्यर्थः । तद्वदित्युत्तरश्लोके योज्यम् ॥ ४९० ॥**

अ० टी०—कर्मकाण्डे नामपदस्याऽऽख्यातत्वं कुत्राऽऽश्रितं दृश्यत इति तदाह— **आग्नेयमिति** । आग्नेयादिपदानां भव्यपरत्वप्रसिद्धौ निमित्तमाह—**साऽस्येतीति** । '**साऽस्य**' इतिसूत्रेण हविषो देवतैदमर्थ्ये तद्धितस्य विधानात् । द्रव्यदेवतासंबन्धात्मकत्वाच्च यागस्य तत्प्रसिद्धिरित्यर्थः । नाम्नामाख्यातत्वापत्तिमुक्त्वाऽऽख्यातानां नामत्वापत्तिप्रकारमाह—**तद्धितसमन्वितेति** । यद्भवतीत्याख्यातं तदप्याग्नेयमित्यादितद्धितसमन्विततया संनिधाने नामैव भवति नामार्थक एवार्थवशाद्भवतीति योजना । यत् '**आग्नेयोऽष्टाकपालो भवति**' इत्यत्रोक्तविधया तद्धितस्य नाम्नोऽपि क्रियार्थत्वं नामात्मकतद्धितान्वयात् क्रियार्थस्यापि भवतिपदस्य नामत्वं च भवद्भिरिष्टमिति समुदितार्थः । यथैवं भवतामर्थवशात्प्रसिध्यति क्रमस्तथाऽस्माकमपीत्याह—**तद्वदिति** ॥ ४९० ॥

**सु० टी०—क्व वेदान्तेषु तिङन्तं नामेति तत्राऽऽह—**

**अस्त्यस्म्यसीति च तिङन्तपदानि सन्ति**
**वेदान्तवाक्यनिलयानि तथाऽपि तानि ।**

नाऽऽख्यातशब्दनिजशक्तिधुरं वहेयु-
रस्तित्वमात्रविषया हि निपक्तिरेषाम् ॥ ४९१ ॥

अस्तीति । अस्ति ब्रह्म तत्त्वमस्यहं ब्रह्मास्मीति यानि तिङन्तानि तान्यपि तद्वद्यथाऽऽग्नेयवाक्ये भवतीति पदं नाऽऽख्यातशक्तेर्धुरं विषयं भव्यरूपं वहति तथेत्यर्थः । तत्र हेतुः—अस्तित्वेति । अस्तित्वं सत्ता निपक्तिरन्वयः ॥ ४९१ ॥

अ०टी०—तदेवोदाहरति—अस्त्यसम्यसीतीति । कथं न वहेयुरित्यत्र हेतुमाह—अस्तित्वमात्रेति । स्वरूपसन्मात्रे निपक्तिः पर्यवसानमेषामस्त्यादीनामित्यर्थः । अन्यत्राप्यस्त्यादेराख्यातत्वं वस्तुस्वरूपसत्तायाः क्रियात्वोपचारेणाङ्गी क्रियते न तु भाव्यवाचित्वेन । न हि घटोऽस्तीत्यत्र घटस्वरूपसत्तातिरिक्तं किंचिद्भव्यमनुष्ठानसाध्यं प्रतीयते । तथा च सामान्यवत्स्वप्यर्थेषु प्रयुज्यमानोऽस्त्यादिर्यदा वस्तुसत्तामात्रपरस्तदा वेदान्तेषु निःसामान्यविशेषवस्तुपरेषु किमु वक्तव्यमस्त्यादेर्भव्यार्थत्वासंभव इति भावः ॥ ४९१ ॥

सु० टी०—अस्त्यादेरपि धात्वर्थत्वेन क्रियात्वात्तन्निष्ठस्याऽऽख्यातत्वाविरोध इति चेन्नेत्याह—

पूर्वापरीभूतपदार्थनिष्ठ-
माख्यातमाख्यातविदो वदन्ति ।
कूटस्थसत्तावगतिप्रधान-
माख्यातवत्साधु तिङन्तमाहुः ॥ ४९२ ॥

पूर्वेति । न हि धात्वर्थमात्रं क्रिया किं तु पूर्वापरीभूतं साध्यस्वभावं वस्तु क्रियेति तद्वाचकमाख्यातं मुख्यं यत्तु सत्तामात्रावगत्यर्थं तदुपचारादेव साधु न तु मुख्याख्यातमित्यर्थः ॥ ४९२ ॥

अ० टी०—ननु धात्वर्थस्य क्रियात्वादस्त्यादेरपि पच्यादिवत्क्रियात्वाविशेषाद्युक्तमाख्यातत्वमेवेति चेन्नेत्याह—पूर्वापरीभूतेति । पूर्वापरीभूतः साध्यस्वभावो यः पदार्थो विक्लेदाद्यात्मकस्तन्निष्ठं पदमाख्यातमित्याख्यातविदो वदन्ति । क्रिया ह्याख्यातार्थः । सा च साध्यस्वभावेति । तत्रैवाऽऽख्यातत्वं मुख्यमिच्छन्त्याख्यातविद इत्यर्थः । असाध्यस्वभावे गौणं तदित्याह—कूटस्थसत्येति । तिङन्तं पदं यत्कूटस्थसत्तावगतिप्रधानमस्त्यादिरूपं तदाख्यातवदाख्यातसदृशं न साक्षादाख्यातमिति साध्वाद्युक्तमेव वदन्तीत्यर्थः । सत्तावादिनस्तिङन्तपदस्याऽऽख्यातत्वं गौणं तद्वाच्यस्य कल्पितक्रियात्वाश्रयणेन शब्दसाधुत्वमात्रार्थं तत्प्रयोगादिति भावः ॥ ४९२ ॥

सु० टी०—प्राभाकरः शङ्कते—

अस्तित्ववस्तुविषयोपनिषन्निपक्ति-
राश्रीयते यदि तदा प्रमितं प्रमेयम् ।
तस्यास्तवाऽऽपतति मानमितत्वमेव
ह्यस्तित्वमात्मगतमभ्युपयन्ति धीराः ॥ ४९३ ॥

अस्तित्वेति । अस्तित्वं सत्ता स एव वस्तु परमार्थस्तद्विषयोपनिषदि-त्युक्तौ तस्या अनुवादित्वं स्यान्मानमितत्वमेव ह्यस्तित्वं नान्यदित्यभ्यु-पगमादित्यर्थः ॥ ४९३ ॥

अ० टी०—अस्तित्वमात्रनिष्ठं वेदान्तवाक्यमित्येतदुपश्रुत्यासहमानः प्राभाकरश्चो-दयति—अस्तित्वेति । निपक्तिः पर्यवसानं तस्या उपनिषदः प्रमेयं प्रमितं मानवि-षयीकृतं तव मत आपततीति योजना । एतदेव विद्वत्प्रसिद्ध्योपपादयति—मानमित-त्वमेव हीति । मानाधीनत्वात्सर्वत्र सत्तावगमस्येत्यर्थः ॥ ४९३ ॥

सु० टी०—तर्हि मानमितत्वस्य क्षणिकत्वात्ततः प्रागूर्ध्वं वा सत्त्वं न स्यादिति चेत्तत्राऽऽह—

अथवा मितियोग्यताऽस्तिता
निरवद्याऽस्तु समस्तवस्तुषु ।
परमात्मनि तत्प्रतीयते
सकलं वेदशिरः प्रवर्तताम् ॥ ४९४ ॥

अथवेति । मितियोग्यताया यावद्द्रव्यभावित्वात्सैव सत्ताऽतो ब्रह्मणि तत्प्रतीत्यर्थमित्यर्थः । तथा च तत्र तदभावेऽप्रामाण्यं भावे चानुवादि-त्वमिति भावः ॥ ४९४ ॥

अ० टी०—यदि मानविषयत्वमेवास्तित्वं तदा मानसंबन्धस्य क्षणिकत्वात्क्षणि-कमेव वस्तु स्यादित्याशङ्क्य मानयोग्यत्वमेव मेयत्वमिति पक्षान्तरं स एवाऽऽह—अथ वेति । समस्तवस्तुष्वात्मन्यनात्मसु च मितियोग्यता निरवद्या समस्तदोषरहिता शङ्कि-तदोषरहिताऽशङ्कितदोषरहिता वाऽस्तिताऽस्तु योग्यताया यावद्वस्तुभावित्वादित्यर्थः । उक्तं सामान्यन्यायं प्रकृते योज्यमित्याह—परमात्मनीति । तथा च मानान्तरसापेक्षत्वं स्यादिति भवतामनपेक्षत्वलक्षणं वेदान्तप्रामाण्यं न सिध्येन्मानान्तरायोग्ये सिद्धे शब्दप्र-वृत्तेरसंभवादिति भावः ॥ ४९४ ॥

सु०टी०—मानयोग्यत्वं कदाचिन्मानविषयत्वमबाधयत्वं वाऽऽद्यं दूषयति—

तदसुन्दरमात्मसंविदोरपि सत्ता भवताऽभ्युपेयते ।
न तयोर्विषयत्वहीनयोर्मितियोग्यत्वमितत्वसंभवः ॥४९५॥

तदिति । एवं च तवाप्यात्मनि संविदि च सत्ताभ्युपगमविरोधस्तयोरुक्तलक्षणाभावादित्यर्थः । त्रिपुटीप्रत्यक्षे ह्यात्मा प्रमातैव न प्रमितिविषयः संविच्च स्वप्रकाशा न मित्यन्तरविषय इति । द्वितीये तु नानुवादित्वप्रसङ्ग इति भावः ॥ ४९५ ॥

अ० टी—मानविषयत्वं मानयोग्यत्वं वा सर्वस्यास्तित्वं तदभावे नास्तित्वमेवेति प्राप्तो दोषो न मयैव परिहरणीयस्तथापि तुल्यत्वादित्यभिप्रेत्य तन्मतेन व्यभिचारमाह—तदसुन्दरमिति । भवता प्राभाकारेण । विषयत्वहीनयोरिति । आत्मनो विषयसंविदाश्रयत्वेनैव स्फुरणं न विषयत्वेन संविदश्च स्वयंप्रकाशमानतया न वेद्यतयेत्यभ्युपगमान्न तयोर्मितियोग्यत्वमितत्वसंभवः । तथाचैतदेव चेद्वस्तुनः सत्त्वं तदाऽऽत्मसंविदोस्तत्रासत्त्वप्रसङ्गः ॥ ४९५ ॥

सु० टी०—तदेवं तत्त्वमस्यादेः सत्यज्ञानादिवाक्यस्य च ब्रह्मणि समन्वयमुपपाद्य 'यतो वा इमानि' [तैत्ति० ३।१।१] इत्यादेस्तटस्थलक्षणवाक्यस्य जन्मादिसूत्रन्यायेन समन्वयं विवक्षुर्यज्जगज्जन्मादिकारणमित्यनूद्य तद्ब्रह्मेत्युपदेशो नोपपद्यते प्रसिद्धकार्याणां प्रसिद्धहेतुजन्यत्वात्क्षित्यादीनां च कार्यत्वे मानाभावादित्याशङ्क्य जगतः कारणसिद्ध्यर्थं तस्य कार्यत्वं साधयति—

क्षितिजलदहनानिलाम्बराणां
जनिमनुमाय विभक्ततावलेन ।
जगति हि जनिमद्विभज्यमानं
घटघटिकादि समीक्ष्यते समस्तम् ॥ ४९६ ॥

क्षितीति । क्षित्यादयो जनिमन्तोऽन्याधीनसत्ताका इत्यर्थः । तेनानाद्यज्ञानतत्संबन्धादौ न व्यभिचारो विभक्तत्वात्, धर्मिसमानसत्ताकभेदप्रतियोगित्वादित्यर्थः । तेन ब्रह्मणि न व्यभिचारः । तत्राऽऽकाशादिभेदस्याताात्त्विकत्वात् । तथा चायमर्थः—क्षित्यादीनां विभक्तत्वेन जन्यत्वमनुमाय तत्र कारणं तर्कयन्तीत्युपरितनेन संबन्धः । न च परा-

भिमतात्मनि व्यभिचारस्तस्याहंकारात्मत्वेन जन्यत्वात् । बलशब्दसूचितां व्याप्तिमाह—जगतीति । यद्विभक्तं तज्जनिमद्यथा घटादीति समीक्ष्यते प्रत्यक्षेण व्याप्तिर्गृह्यत इत्यर्थः ॥ ४९६ ॥

अ० टी०—एवमियता ग्रन्थसंदर्भेणाखण्डे ब्रह्मात्मनि सिद्धे तत्त्वमस्यादिमहावाक्यस्य सत्यज्ञानाद्यवान्तरवाक्यस्य च पर्यवसानप्रकारः पूर्वोद्भावितदोषनिराकरणेन प्रपञ्चित इदानीं जगत्कारणवादिवाक्यजातस्य तत्पदार्थे ब्रह्मणि समन्वयप्रकारकथनायोत्तरसंदर्भः प्रवर्तते त्वंपदार्थनिरूपणपूर्वकं वेदान्तानां ब्रह्मात्मनि समन्वयः पूर्वमुपपादित इदानीं तत्पदार्थोपलक्षणभूतवाक्यजातसमन्वयप्रकारानिरूपणेन स एव समन्वयो दृढी क्रियते यतो यावदुपलक्षणवाक्यं प्रकृतब्रह्मगामितया नावधार्यते तावदुपलक्षितस्य सत्यज्ञानादिरूपता पूर्वोपपादिता न सिध्येदित्यतस्तदुपपादनीयमिति तत्र सृष्ट्यादिवाक्यैर्जगत्कारणमुद्दिश्य तस्मिन्ब्रह्मत्वं विधीयते ब्रह्म चोद्दिश्य तस्मिञ्जगत्कारणत्वं नोभयथाऽपि जगतोऽकार्यत्वात्तत्कारणस्याप्रसिद्धेर्ब्रह्मणश्चात्यन्तमलौकिकत्वादेवासिद्धेर्द्वयोरन्यतरानुवादेनान्यतरप्रतिपादनासंभवादित्याशङ्क्य जगत्कारणमनूद्य तस्य ब्रह्मत्वप्रतिपादनं शक्यमिति वक्तुं जगतः कारणवत्त्वसिद्धये कार्यत्वं तावत्साधयति—**क्षितिजलदहनानिलाम्बराणामिति** । अयमर्थः—पञ्चभूतात्मकं हि जगदभिमतं तत्र भौतिकेषु तावत्कार्यत्वे विप्रतिपत्तिर्नास्त्यतस्तत्साधर्म्याद्भूतेष्वपि कार्यत्वमनुमेयमेव विभक्ततावलेन विभक्तत्वादिति हेतुसामर्थ्येन क्षितिजलदहनानिलाम्बराणां जनिमनुमाय तर्कयन्तीत्युत्तरपद्यगतेन संबन्धः । विमतानि महाभूतानि जनिमन्ति विभक्तत्वादिति । अवयवद्वयमुक्त्वा तृतीयं व्याप्त्याख्यमवयवमाह—**जगतीति** । यद्यद्विभक्तं तत्तज्जनिमत् । यथा घटघटिकादीति व्याप्तिर्निरवद्येत्यर्थः । न च विभक्तत्वहेतुरात्मन्यनैकान्तिकस्तस्य सर्वसत्तारूपतया कुतश्चिद्विभागासंभवात्पक्षे च तदनुभवसिद्धमिति नासिद्धिशङ्काऽपीति गमयितव्यम् ॥ ४९६ ॥

सु० टी०—हेत्वन्तरेणानुमानमाह—

क्षितिजलदहनेषु तत्प्रदेशा-
ज्जनिसहितानुपलभ्य तद्बलेन ।
क्षितिजलदहनत्वलिङ्गमार्गा-
दपि जनिमेष्वनुमाय तर्कयन्ति ॥ ४९७ ॥

क्षितीति । अत्र वाय्वाकाशयोरतीन्द्रियत्वादनुक्तिः । महाक्षित्यादीनां विप्रतिपन्नजनिमत्त्वानां प्रदेशान्भागान्वेदिकाचन्द्रकान्तजलनिर्मथ्यादीञ्जनिमतो दृष्ट्वा तद्दृष्टान्तेन क्षितित्वाज्जलत्वात्तेजस्त्वादित्यादिलिङ्गैः

नापि जन्यत्वमनुमाय तर्कयन्ति । इदं कारणपूर्वकं कार्यत्वाद्घटादिव-दिति ॥ ४९७ ॥

अ० टी०—विगतानि महादीनि भूतानि जनिमन्ति विभक्तत्वाद्घटादिवदित्यनुमानं सर्वभूतपक्षीकरणेनाभिधाय प्रत्येकपक्षीकरणेनाप्यनुमानान्तराण्याह—क्षितिजलेति । अत्राविप्रतिपन्नेनैकदेशेनैकदेशान्तरं विप्रतिपन्नं साध्यत इत्यनुमानप्रकारभेदो दर्शितः । तथा हि विप्रतिपन्ना क्षितिर्जनिमती क्षितित्वान्नदीस्रोतसा समुह्यमानमृत्सिकताकृतभूप्रदेशवत् । तथा विमतं जलं विमतं तेजो विमतो वायुरित्येते जनिमन्तो जलत्वात्तेजस्त्वाद्वायुत्वाच्चन्द्रकान्तजनितजलवदरणिमथनोद्भूततेजोवद्व्यजनाभिघातजन्यवायुवदिति प्रत्येकं क्रमेण प्रयोक्तव्यम् । एवं सिद्धे भूतचतुष्टयस्योत्पत्तिमत्त्वे वियतोऽप्युत्पत्तिरनुमेया । विमतं वियदुत्पत्तिमद्भूतत्वात्पृथिव्यादिवदिति । न च वियदनुत्पत्तिमन्निरवयवद्रव्यत्वादात्मवदिति सत्प्रतिपक्षताशङ्काऽवियेतरत्वे सति चेतनावत्त्वोपाधेः संभवाद्वेदान्तिनः प्रतिदृष्टान्ते साधनवैकल्याच्च । न हि द्रव्यत्वमात्मनो वेदान्तिनो मन्यन्ते निर्गुणत्वाभ्युपगमादात्मनो निर्गुणस्य च द्रव्यत्वायोगात्तस्माद्वियदप्युत्पत्तिमदिति द्रष्टव्यम् । एवं कार्यत्वे सिद्धे कारणं विना कार्यासंभवात्सिद्धकार्यभावस्य जगतः कारणं तर्कयन्ति केनचिदस्य कारणेन भवितव्यं किं तद्युक्तं चेतनमचेतनं वेत्यर्थः ॥ ४९७ ॥

सु० टी०—न केवलं कारणमात्रं किं तु तस्य चेतनत्वमपि तर्कयन्तीत्याह—

जनिमदभवदेतच्चेतनादेव हेतो-
र्घटवदिति पुनस्तत्कारणे चेतनत्वम् ।
अनुमिमत उदर्के कार्यतालिङ्गतोऽमी
जगति हि परिदृष्टं चेतनादेव कार्यम् ॥ ४९८ ॥

जनिमदिति । जनिमत्क्षित्याद्यदृष्टाद्वारकचेतनहेतुकं कार्यत्वादिति । पुनस्तत्कारणे चेतनत्वमुदर्के कार्यत्वनिश्चयानन्तरमनुमिमत इत्यर्थः । व्याप्तिमाह—जगतीति ॥ ४९८ ॥

अ० टी०—इदं कारणपूर्वकं कार्यत्वात्संमतवदिति तर्किते कारणे चेतनत्वमप्यनुमानादुन्नेतुं शक्यत इत्याह—जनिमदिति । एतज्जगच्चेतनादेव हेतोः कारणान्नाचेतनादित्येवकारार्थो जनिमदभवदिति । पुनरुदर्के उत्तरकाले कार्यतालिङ्गतः कार्यत्वेन हेतुना घटादिदृष्टान्तेन तत्कारणे चेतनत्वमप्यनुमातारोऽनुमिमत इति योजना । घटादिदृष्टान्ते

व्याप्तिं घटयति—जगति हीति । विमतं चेतनकारणकं कार्यत्वाद्घटवद्घटादिश्चेतनकारणको निश्चित एवेति वाक्यार्थः ॥ ४९८ ॥

सु० टी०—एवमनुमानसिद्धजगत्कारणत्वानुवादिनी श्रुतिरिति शङ्कामेकत्वसर्वज्ञत्वाद्यसिद्ध्यापत्त्या दूषयति—

जगदुदयनिमित्तं चेतनं किं तु नाना
किमु भवतु तदेकं सर्ववित्सर्वशक्ति ।
इति भवति तु पश्चात्कारणे चेतनेऽस्मि-
न्ननवगतिनिमित्तः संशयो दुर्निवारः ॥ ५९९ ॥

जगदिति । यद्यपि किंचिज्जगत्कारणमनुमानात्सिध्यति तथाऽपि तत्किं नानाऽनेककर्तृकगृहकुड्यादिदर्शनात् । अथैवैकं सर्वज्ञं सर्वशक्तीत्येवमस्मिन्ननुमिते चेतने पश्चादज्ञाननिमित्तः संशयो न निवार्यते लाघवादेककर्तृत्वेन निश्चितेऽपि पटादौ पश्चादन्यथात्वदर्शनादित्यर्थः । एकत्वसर्वज्ञत्वादिभिर्व्याप्त्यग्रहात्सामान्यतो दृष्टाच्च विशेषासिद्धेः पक्षधर्मतायाश्च पक्षीयत्वमात्रसाधकत्वात्सोपाधित्वप्रत्यनुमानादिभिश्च तार्किकानुमानानामसाधकत्वादित्यन्यत्र विस्तरः ॥ ४९९ ॥

अ० टी०—एवं चेतने जगत्कारणेऽनुमानतः सिद्धेऽपि पुनस्तस्मिन्नेकानेकविषयः संशयो भवति । न च तदेकत्वं नानात्वं वाऽनुमानमात्रान्निश्चेतुं शक्यत एकस्यापि गोपुरस्तम्भादेरनेकचेतनपूर्वकत्वदर्शनादनेकेषामपि सूपौदनशाकानामेकेन निर्माणदर्शनाच्च । अतोऽनुमानाज्जगत्कारणस्य न सर्वज्ञत्वसर्वेश्वरैकत्वानां सिद्धिरित्यभिप्रेत्य संशयोत्पत्तिप्रकारमाह—जगदुदयेति । अनवगतिनिमित्तः श्रुतेरन्यस्य निर्धारणहेतोरभावादज्ञाननिमित्तः संशयो दुर्निवारोऽनुमानशतेनापीत्यर्थः । सामान्यतो दृष्टानुमानाद्विशेषानिश्चयासंभवात्सर्वज्ञत्वादिविशेषणवत्तया व्याप्तिग्रहाभावादेवानुमातुमशक्यत्वात्पक्षधर्मतायाश्च सपक्षदृष्टरूपान्तरासाधकत्वादन्यथा जगत्कारण ईश्वरे सांख्यादीनां विप्रतिपत्त्यभावप्रसङ्गात् । तार्किकानुमाने च शरीरत्वोपाधेः संभवाद्विप्रतिपन्नं न सर्ववित्कर्तृकमसर्ववित्कर्तृकमिति वा शरीरिकर्तृकमिति वा कार्यत्वात्संमतवदिति प्रयोगसंभवाच्च । न च विशेषणस्य प्रसिद्ध्यप्रसिद्ध्योर्व्याघातः सर्वज्ञशब्दार्थस्य लोके सामान्यतः सिद्धत्वेऽपि प्रकृते जगत्कारणे तदसिद्धेः । यदीदं चेतनकर्तृकं स्यात्तर्हि शरीरिकर्तृकमपि स्यादशरीरस्य चेतनावतः सत्त्वे प्रमाणादर्शनादित्यादितर्कबाधितत्वाच्चानुमानाच्च विवक्षितेश्वरासिद्धिरिति भावः ॥ ४९९ ॥

सु० टी०—कथं पुनः श्रुतितोऽप्येकत्वसर्वज्ञत्वादिसिद्धिरिति चेत्त-त्राऽऽह—

श्रुतिवचनविशेषाच्चेतने कारणेऽस्मि-
न्यत इति निरवद्यादेकताधीरथाऽऽद्या ।
प्रकृतिरिति च तस्मिन्कारणे पञ्चमीयं
जनयति दृढबुद्धिं तद्विधानादिहैव ॥ ५०० ॥

श्रुतीति । अस्मिन्ननुमानसिद्धे चेतने 'यतो वा इमानि' [ तैत्ति० ३ । १ । १ ] इतिसिद्धवत्कारणं दर्शयन्त्याः श्रुतेर्यो वचनविशेषः पञ्चम्येकवचनरूपस्तस्मात्तज्जगत्कारणमेकमिति निश्चितमित्यर्थः । किं च तच्चेतनं किं कर्तृमात्रमुतोपादानमपीत्येतदनुमानशतैरप्यगम्यमित्याह—प्रकृतिरिति । तत्र कारणे प्रकृतिरितीमां बुद्धिं पञ्चम्येव जनयितुमर्हति 'जनिकर्तुः प्रकृतिः' इति तद्विधानान्न त्वनुमानादीत्यर्थः । सर्वज्ञत्वादिबोधिकाश्च 'यः सर्वज्ञः सर्ववित् (मुण्ड० १ । १ । ९ ) इत्यादयः प्रसिद्धा एवेति भावः ॥ ५०० ॥

अ० टी०—एवं सर्वज्ञत्वाल्पज्ञत्वैकत्वानेकत्वादिसंशयवदुपादानमप्यस्य जगतः कर्तुश्चेतनान्यत्स्यात् । कुलालादेरन्यस्य मृत्पिण्डादेर्घटाद्युपादानस्य लोके दर्शनात्किं वा स एव कर्ता चेतनवदुपादानमप्यूर्णनाभिवदूर्णानां तार्किकात्मवद्वाऽऽत्मगुणानां स्यादिति संदेहः स्यात्तथा सहकारिकारणमप्यूर्णतन्तुनिर्माण ऊर्णनाभेरिव बाह्यं नास्ति किं वा कार्पाससूत्रनिर्माण इव काष्टयन्त्रादि बाह्यमप्यस्तीति संशयो भवेदेतदपि संशयजातं न श्रुतेरन्यतो निवर्तयितुं शक्यत इत्यभिप्रेत्य श्रुतिवशान्निर्णयप्रकारमाह—श्रुतिवचनेति । 'यतो वा इमानि' [ तै० ३ । १ । १ ] इत्यस्मिन्वेदान्तवाक्ये यत इति निरवद्याच्छ्रुतिवचनविशेषादिति संबन्धः । निरवद्यान्निरपेक्षप्रमाणरूपाच्छ्रुतिविशेषाद्वचनविशेषाच्चेत्यर्थः । यत इत्यत्र पदे प्रातिपदिके यच्छब्दः श्रुतिविशेष एकवचनान्तत्वं वचनविशेष इति विभागः । तथा चेतनमनुमानात्सिद्धं कारणं यत इति यच्छब्दप्रातिपदिकेनानूद्यैकवचनश्रुत्या तस्मिंश्चेतने कारण एकताधीराद्या प्रथमा जायते । अथानन्तरं यत इति यस्मादर्थे तसेः प्रयोगादियं पञ्चमी विभक्तिस्तस्मिन्प्रागुक्ते कारण एकस्मिन्प्रकृतिरुपादानमिति दृढबुद्धिं जनयति । कथं पञ्चम्याः प्रकृत्यर्थत्वमित्यत आह—तद्विधानादिति । 'जनिकर्तुः प्रकृतिः' इति विशेषविधानादित्यर्थः । इहैवास्मिन्नेवोपादाने पञ्चम्या विधानादित्यर्थः ।

१ ग. °थाऽगात् ।

यच्चेतनं कारणमुपादानं चेति 'यत' इति श्रुत्या निरपेक्षया निर्णीयतेऽत एव स्वाङ्ग-बाहिर्भूतं सहकारि कारणान्तरमप्यत्र नास्तीति सिद्धमस्यैकत्वं सर्वशक्तित्वं चेति भावः ॥ ५०० ॥

सु० टी०—ननु प्रत्ययार्थयोरेकत्वप्रकृतित्वयोः प्रकृत्यर्थान्वयात्कथं परस्परान्वय इति शङ्कते—एकत्वमिति श्लोकाभ्याम्—

एकत्वमेकवचनादवगम्यमानं
यच्छब्दवाच्यनिलयं यत इत्यमुष्मिन् ।
वाक्ये जगत्प्रकृतिगामितयां निविष्टां
संख्यां विभक्त्यभिहिते वचनं हि नाऽऽह ॥५०१॥

एकवचनावगतमेकत्वं प्रकृतिरेकेत्येवंविधविभक्त्यर्थप्रकृतिगामितया न विघ्नो वचनस्य विभक्त्यर्थगतसंख्यानभिधायकत्वादित्यर्थः ॥ ५०१ ॥

अ० टी०—अत्र वचनविभक्तिबलादुक्तामेकत्वप्रकृतिसिद्धिं पूर्ववाद्याक्षिपति—एकत्वमिति । यत इत्यमुष्मिन्वाक्य एकवचनादवगम्यमानं यदेकत्वं तद्यच्छब्दवाच्यनिलयं यच्छब्दप्रातिपदिकगतमेव न विभक्त्यर्थप्रकृतित्वगतमिति योजना । कुत एवमित्यत आह—जगत्प्रकृतीति । हि यस्माद्वचनं विभक्त्यभिहिते पञ्चमीवाच्ये जगत्प्रकृतिगामितया निविष्टां जगदुपादानगतत्वेन प्राप्तां संख्यां नाऽऽह न कथयतीति योजना । एकत्वविवक्षायां यदेकवचनं विधीयते तत्प्रकृतिभूतप्रातिपदिकगतमेवैकत्वं गमयति न प्रत्ययात्मविभक्त्यर्थगतं वचनवाच्यसंख्याया विभक्त्यर्थगततया क्वाप्यनुपलम्भादिति तात्पर्यार्थः ॥ ५०१ ॥

सु० टी०—कुत इत्याह—

न हि विभक्त्यभिधेयपदार्थगं
वचनमाह निजं विषयं क्वचित् ।
वचनवाच्यगतं न वदन्ति च
स्वमभिधेयमशेषविभक्तयः ॥ ५०२ ॥

न हीति । वचनस्य विभक्त्यर्थकारकान्वितस्वार्थबोधकत्वं न संभवति कारकस्यासत्त्वभूतस्य संख्यान्वयायोग्यत्वाद्योग्यप्रातिपदिकार्थातिक्रमे हेत्वभावाच्चेत्यर्थः । एवं विभक्तेरपि वचनार्थान्वितस्वार्थबोधनासामर्थ्यमित्याह—वचनेति ॥ ५०२ ॥

---

१ ग. °या न विघ्नः सं° ।

अ० टी०—नन्वाकाङ्क्षादिवशाद्विभक्तिवाच्यगततयाऽपि संख्याऽभिधीयतामिति चेन्नै-षमेवमपि काप्यदर्शनादित्याह—न हि विभक्तीति । वचनं कर्तृ तन्निजं विषयं स्ववाच्यमेकत्वादिकमर्थं विभक्त्यभिधेयपदार्थगतं कारकगतं न ह्याह न कथयति क्वचिदिति योजना । तर्हि विभक्तिर्वचनार्थगतं स्वार्थमभिदध्यादिति चेत्तदप्यप्रसिद्धमेवेत्याह—वचन-वाच्यगतामिति ॥ ५०२ ॥

सु० टी०—'पशुना यजेत' इत्यत्रैवौपादानिकान्वयबलेन परिहर्तुं चोद्यमनुवदति—

प्रातिपदिकार्थगतमेव वचनानि
स्वं स्वमभिधेयमभिधातुमलमर्थम् ।
प्रातिपदिकार्थगतमेव निजमर्थं
वक्ति च विभक्तिरपि नेह वचनार्थे ॥ ५०३ ॥

पशुनेतिपदे तृतीयया
करणत्वं हि पशोर्निवेद्यते ।
वचनेन पशोरिहैकता
न पुनः सा करणस्य कथ्यते ॥ ५०४ ॥

प्रातिपदिकेतिद्वाभ्याम् । वचनविभक्ती प्रातिपदिकार्थगतमेव स्वं स्वमर्थम-भिधातुमलं न परस्परार्थगतं तयोः प्रकृत्यर्थान्वितस्वार्थान्वयबोधकत्व-व्युत्पत्तेः । तेन पशुनेत्यत्रापि विभक्त्या पशोः करणत्वमुच्यते तस्यैव मुख्यत्वात्तस्यैव च संख्येयत्वादेकत्वं न तु करणकारकस्यैकत्वमिति यद्यपि वक्तुं शक्यते तथाऽपि यथा तत्र पशुरेकः करणमिति धीस्तथाऽ-त्रैकं जगदुपादानमित्यपि धीरविरुद्धेति भावः ॥ ५०३ ॥ ५०४ ॥

अ० टी०—सत्यं विभक्तिवचने प्रातिपदिकार्थगततयैव स्वार्थमादधतो नान्योन्यार्थ-गततया तथाऽपि प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्रत्ययस्तु प्राधान्येनेति न्यायात्प्रत्य-यार्थोपरक्त एव प्रकृत्यर्थः प्रतीयते न केवलं प्रातिपादिकार्थस्तथा प्रातिपादिकार्थोपरक्त एव प्रत्ययार्थोऽपि प्रतीयते न केवल इति स्थितौ प्रातिपादिकार्थः प्रतीयमानो विभक्ति-वचनार्थान्वित एवावगम्यतेऽतो विभक्त्यर्थान्वितप्रातिपादिकार्थगतत्वेन वचनार्थः प्रतीयते विभक्त्यर्थो वचनार्थान्वितप्रातिपादिकतयेति युगपद्वचनविभक्त्यर्थान्वितत्वेनैव यत इत्यत्र एकत्वार्थप्रतीतिस्तस्मिन्नेकप्रकृतित्वे शब्दसामर्थ्यादेव सिध्यत इत्येतत्सर्वमभिप्रेत्य परिहार-

माह—प्रातिपदिकार्थेति । वचनानि प्रातिपदिकार्थगतमेव स्वं स्वमर्थमभिधातुमलं समर्थानि प्रकृत्यर्थोपरक्तमेव स्वार्थमभिदधति वचनानि न विभक्त्यर्थोपरक्तमित्यर्थः । तथा विभक्तिरपि प्रातिपदिकार्थगतमेव निजमर्थं वक्तीह यत इति पदेन च पुनर्वचनार्थान्वित-स्वार्थं न च वक्तीत्यर्थः । तस्मादत्र यत इति प्रातिपदिकवाच्यश्चेतन एकः प्रकृतिश्चेति प्रतीतिर्न तु प्रकृत्येकत्वयोः परस्परावच्छेदः शब्दशक्त्या भातीत्यभिप्रायः ॥ ५०३ ॥

ननु ' पशुना यजेत ' इत्यत्रैकप्रत्ययोपात्तयोः करणत्वैकत्वयोः संनिकर्षा-तिशयात्प्रथमं परस्परसंबन्धावगतिः पश्चात्तु पदश्रुत्या प्रातिपदिकार्थेन संबन्धोऽवगम्यत इत्याहुर्न्यायविदोऽतोऽत्रापि कथं न स्यादिति चेन्नैवमत्रापि पशुरूपप्रकृत्यर्थगततयैव करण-त्वैकत्वयोरभिधानाद्युगपत्प्रतीयमानयोर्विशिष्टप्रतीत्यसंभवादित्याह—पशुनेतीति । पशुने-त्यस्मिन्पदे या तृतीया विभक्तिस्तया पशोः करणत्वं हि निश्चितं निवेद्यते केवलवचना-भिहितस्यैकत्वस्येत्यर्थः । तथा च वचनेनापीह पदे पशोरेकता निवेद्यते न पुनः सैकता करणस्य कथ्यतेऽतो नानेनास्मदुक्तिविरोध इत्यभिप्रायः ॥ ५०४ ॥

सु० टी०—कथं तत्रापि व्युत्पत्तिं परिभूयैकः पशुः करणमिति धीरिति चेत्तत्राऽऽह—

अनुपपत्तिबलेन विधेस्तयोः
करणतैकतयोरवगम्यते ।
करणतैकपशोरिति संगति-
र्न घटते हि विधिर्विरहय्य ताम् ॥ ५०५ ॥

अनुपपत्तीति । करणत्वैकत्वान्वितपशुविध्यनुपपत्त्या तयोः संगतिर-वगम्यत इत्यर्थः । कथं तत्संगतिं विना विध्यनुपपत्तिरिति चेत्तत्राऽऽह—न घटत इति । कारकस्य किंचिद्धर्मावच्छेदं विना क्रियानन्वयात्प्रकृ-त्यर्थान्वितमेकत्वमेवावच्छेदकं कल्प्यते तथा पश्वन्वितैकत्वस्यापि कार-कद्वाराऽपूर्वसंबन्धात्तन्निर्वाहाय करणावच्छेदकत्वमित्येकः पशुः करण-मिति संगतिः कल्प्यत इत्यर्थः ॥ ५०५ ॥

अ० टी०—कथं तर्हि तत्रैकपशुकरणत्वावगतिरिति चेत्तत्र गुरुमतमाश्रित्याऽऽह—अनुपपत्तिबलेनेति । विधेरनुपपत्तिबलेन विध्यन्यथानुपपत्तिरूपेणोपादानप्रमाणेनै-कपशोः करणतेति तयोः करणैकतयोः संगतिरवगम्यते न वचनविभक्तिसामर्थ्यादिति योजना । विध्यनुपपत्तिमेव स्फुटयति—न घटत इति । तां करणत्वैकत्वयोः संगतिं विरहय्य विधिर्नियोगो न घटते । नियोगो हि स्वसंनिधिश्रुतसमस्तार्थजन्यधात्वर्थनिर्वर्त्यतया

प्रमीयमाणस्तदनुरोधेन करणैकत्वयोरपि संगतिं विना न प्रमीयत इति तामाक्षिपतीत्यर्थः ॥ ५०५ ॥

सु० टी०—नन्वेवमेकपशोः करणत्वमिति संगतिराक्षेपलभ्यत्वादार्थिकी स्यान्न शाब्दी तथा च यश्चार्थादर्थो न स चोदनार्थ इति शब्दतात्पर्याविषयत्वान्न तस्य नियोगप्रवेश इत्याशङ्क्यौपादानिकस्यापि शाब्दत्वं गुरुणाऽभ्युपगतमित्याशयेनाऽऽह—

उपादानतः संख्यया संगतिः स्या-<br>
दवच्छेदकत्वेन संख्यानिवेशात् ।<br>
पशोरेतयोस्तेन मार्गेण कार्ये<br>
निवेशोपपत्तेरुपादानमानात् ॥ ५०६ ॥

उपादानत इति । विध्याक्षेपादित्यर्थः । पशोः करणस्यावच्छेदकत्वेन द्विसंख्यादिव्यावर्तकत्वेनैकत्वसंख्यया संगतिः स्यादित्यर्थः । अस्त्वियं संगतिः शाब्दी किं तत इत्याह—एतयोरिति । एतयोः करणत्वैकत्वयोस्तेन मार्गेण स्वाश्रयपशुद्वारेण संगतयोरुपादानप्रमाणेन नियोगनिवेशोपपत्तेर्नोक्तदोष इत्यर्थः ॥ ५०६ ॥

अ० टी०—ननूपादानप्रमाणं संगतिमात्रमाक्षिपेत्संगतिं विना विध्यनुपपत्तेरिति तत्र संगतिविशेष एकपशुकरणकनियोगलक्षणः कुतः सिध्येदिति तत्राऽऽह—**उपादानत इति।** उपादानतो विध्याक्षेपात्संख्ययैकत्वसंख्यया करणत्वस्य संगतिः स्यात् । करणत्वस्य हि धात्वर्थसंबन्धः स्वभावसिद्धः पशोश्च धात्वर्थावच्छेदकत्वेन करणता तृतीयाश्रुत्यैव समधिगता। तत्रैकत्वसंगतौ किं कारणमित्यपेक्षायामाह—**अवच्छेकत्वेनेति।** पशोरवच्छेदकत्वेनेत्यन्वयः। तत्रैवैकवचनश्रुत्या पशोरवच्छेदकत्वेन संख्यानिवेशाद्धेतोरित्यर्थः । एवं सति तेन मार्गेण धात्वर्थकरणत्वमार्गेणोपादानमानादेतयोः पश्वेकत्वयोरपि कार्ये निवेशोपपत्तेरित्यक्षरयोजना । एतदुक्तं भवति—' पशुना यजेत ' इति तृतीयाश्रुत्या पशोर्यागकरणता तावदभ्युपगम्यते तत्र पशुपदस्य जातिवचनत्वात्तेन संख्याविशेषानवगमात्पशुपदावगतस्य पशोः कया संख्ययाऽवच्छिन्नोऽहं यागं निर्वर्तयेयेति भवत्याकाङ्क्षा तथैकवचनावगतैकत्वसंख्यायाश्च ग्राहकप्रयोगवचनवशात्कार्यार्थितयाऽवगतायाः केन द्वारेणाहं कार्ये निविशेयेति भवत्याकाङ्क्षा । एवंसति पशोरेकत्वसंख्यावच्छिन्नस्य करणमेकसंख्यायाश्च पश्ववच्छेदेन धात्वर्थकरणत्वमित्येकपशोः करणत्वमिति तद्विध्यन्यथानुपपत्तिलक्षणात्प्रमाणादेकपशुकरणकयागविषयकरणको नियोग इति धात्वर्थद्वारा कार्ये निवेश इत्येकपशोः करणत्वावगम इति ॥ ५०६ ॥

सु० टी०—अस्तु पशुनेत्यत्र विध्याक्षेपाद्वचनविभक्त्य( +र्थान्वयः प्रकृते तु विधेरभावान्न स्यादिति शङ्कते—

न चैवं विधिः कश्चिदत्रेति न स्या-
दुपादानतः संगतिर्यत्पदार्थे ।
विभक्त्यर्थसंख्यार्थयोर्नेह कश्चि-
यतो वा इमानीति वाक्ये विधिर्नः ॥ ५०७ ॥

न चेति। यत इत्यत्र विभक्त्य ) र्थप्रकृतित्वस्य सम्यक् ख्यायतेऽनेनेति। संख्यैकवचनं तदर्थस्य च संबन्धो न स्यादित्यर्थः। नन्वत्रापि 'तद्विजिज्ञासस्व' [ तै० ३। १। १ ] इति विधिरस्तीति चेत्सत्यं स तु तद्ब्रह्मेति वाक्यशेषात्पुरुषार्थब्रह्मविचारपरो न च तस्य पशुविधिवत् संख्याद्यपेक्षेति न तदाक्षेपकत्वमित्याह—नेहेति ॥ ५०७ ॥

अ० टी०—तर्हात्राप्युपादानमानादेवास्तु प्रकृतित्वैकत्वयोः संगतिप्रमितिरिति चेन्मैवमिह विध्यभावादित्याह—न चैवमिति। अत्र 'यतो वा' [ तै० ३।१।१ ] इत्यस्मिन्वाक्य एवंविधो विधिर्विभक्त्यर्थसंख्यार्थयोरेकत्वसंगतिं विनाऽनुपपद्यमानो न च नैव विद्यत इति हेतोर्यत्पदार्थे यच्छब्दप्रातिपदिकार्थे विभक्त्यर्थसंख्यार्थयोरुपादानतः संगतिर्न स्यादिति योजना। इहापि विधिरभ्युपेयतां कार्यगौरवादिति चेन्नेत्याह—कश्चिदिति। नोऽस्माकं सिद्धान्त इति शेषः। विध्यभ्युपगमे सिद्धान्तभङ्गप्रसङ्गादिति भावः ॥ ५०७ ॥

सु० टी०—विध्यभावेऽप्यनुपपत्तिरेवात्र तयोः संबन्धसाधिकेति समाधत्ते—

अवितथमिदमेवमेतदस्मि-
न्न खलु विधेर्वचनं पठन्ति वाक्ये ।
यत इति घटते तथाऽपि योगो
वचनविभक्तिनिगययोरिहापि ॥ ५०८ ॥

अवितथमिति। सत्यं यत इति वाक्ये विधिशब्दं न पठन्ति तथाऽपि पशाविवात्रापि वचनविभक्त्यर्थयोः संबन्धो घटत इत्यर्थः ॥ ५०८ ॥

---

+ ख. पुस्तकस्थोऽयं ग्रन्थः।

अ० टी०—तर्हि कथमिह विभक्त्यर्थसंख्यार्थयोः संगत्यधिगतिरिति चेद्विध्यभावेऽप्य-नुपपत्तिः संगत्यधिगमे हेतुरित्याह—**अवितथमिति** । अस्मिन्वाक्ये विधिर्नास्तीत्य-स्मन्मतमिदमवितथं सत्यमेवैवमेतन्नान्यथेति योजना । वाक्यस्य ब्रह्मवस्तुलक्षणपरत्वाद्विधि-कल्पने तदसिद्धप्रसङ्गादित्याकूतम् । विधिप्रत्ययाश्रवणादप्यत्र न विधिरित्याह—**अस्मि-न्निति** । यत इत्यस्मिन्वाक्य इति संबन्धः । यद्यप्येवं विध्यभावस्तथाऽपि वचनविभक्ति-निगदयोरिहापि योगो घटत इति योजना ॥ ५०८ ॥

सु० टी०—कस्यात्र संबन्धं विनाऽनुपपत्तिरिति तत्राऽऽह—

एकत्वमेकवचनेन समर्पितं य-
यच्छब्दवाच्यनिलयं यत इत्यमुष्मिन् ।
पञ्चम्युपात्तमपि यत्प्रकृतित्वमस्मि-
न्संगच्छते तदुभयं पशुवस्तुनीव ॥ ५०९ ॥

एकत्वमिति । अत्र यद्वचनसमर्पितं यच्छब्दार्थगतमेकत्वं यच्च पञ्चम्यु-पात्तं प्रकृतित्वं तद्द्वयं विधिनाऽप्यस्मिंश्चेतने संगच्छतेऽन्यथा प्रकृतिप्र-त्ययार्थान्वयाच्चेतनस्य प्रकृतित्वैकत्वसिद्धावप्येकत्वप्रकृतित्वावच्छिन्न-चेतनानुवादेन ब्रह्मत्वोपदेशादुपपत्तेरित्यर्थः ॥ ५०९ ॥

अ० टी०—विध्यभावे च कयाऽनुपपत्त्या वचनविभक्तिनिगदयोर्योगो घटत इत्यपे-क्षायामाह—**एकत्वमिति** । यत इत्यमुष्मिन्वाक्ये यच्छब्दवाच्यनिलयं प्रातिपदिकार्थ-निष्ठमेकवचनेन समर्पितं यदेकत्वं पञ्चम्युपात्तमपि यत्प्रकृतित्वं तदुभयमस्मिन्यच्छब्दार्थे चेतने पशुवस्तुनीव संगच्छते संगतं भवतीति योजना । एकवचनपञ्चम्योरपि विशिष्टार्थपरतया प्रयुक्तत्वाद्विशेष्यसंगतिमन्तरेण तदनुपपत्तेर्विनाऽपि विधिं पशुवस्तुनीवात्रापि चेतनसंगति-सिद्धिरिति भावः ॥ ५०९ ॥

सु० टी०—एतदेव विवृणोति—

एका या प्रकृतिः समस्तजननी तद्ब्रह्म जिज्ञास्यता-
मित्यत्रापि हि वस्तुनिष्ठवचने शक्यैव तत्संगतिः ।
विज्ञातुं विधिमन्तरेण च तथाऽऽनर्थक्यभीत्या न हि
स्वाध्यायाध्ययनैकगोचरविधेरापातमर्थं विना ॥ ५१० ॥

एकेति । विधिं विनाऽप्येकत्वप्रकृतित्वावच्छिन्नजगत्कारणानुवादेन ब्रह्मणो जिज्ञास्यत्वोपदेशाद्वस्तुलक्षणपरैतद्वाक्यलक्ष्यस्य ब्रह्मपदप्रतिपा-

ध्यत्वानुपपत्तिरैवैकत्वप्रकृतित्वयोः संबन्धमाक्षिपतीत्यर्थः । विध्यनुपप-त्तिरप्यस्त्येवेत्याह—तथेति । न हीदमर्थं विना स्वाध्यायविधेः सकाशा-दायातमिति संबन्धः । प्रकृतित्वैकत्वयोरन्वयं विनाऽऽनर्थक्याद्दृष्टा-र्थस्वाध्यायविधिविषयत्वानुपपत्तिरित्यर्थः ॥ ५१० ॥

अ० टी०—तथाऽप्यत्र संबन्धाक्षेपकं विविच्यतामिति चेदुच्यत इत्याह—एका येति । यत इत्यादौ 'तद्विजिज्ञासस्व तद्ब्रह्म' [तै० ३ । १ । १] इत्यन्ते वाक्ये यत इति पदेन वचनविभक्तिभ्यां प्रमीयमाणैका प्रकृतिरिमानि भूतानीति सर्वनामश्रुतेः संकोचकाभावात्समस्तजननीव तद्ब्रह्म जिज्ञास्यतामित्यत्र वस्तुनिष्ठवचनेऽपि हि तत्संगति-श्चेतनवस्तुसंगतिर्विज्ञातुं शक्यैवेति योजना । एतदुक्तं भवति ब्रह्मलक्षणपरत्वाद्वाक्यस्य लक्ष्यमाणं ब्रह्मैव जगतः कारणत्वानुगुणं संबन्धमाक्षिपेत्तथा च यादृशेन लक्षणेन ब्रह्म स्व-पदशक्त्यविरोधेन पूर्णात्मतया लक्षितं स्यात्तादृशलक्षणसिद्ध्यनुगुणप्रकृतित्वैकत्वयोरपि यच्छब्दवाच्यताधिष्ठातृचेतनावच्छेदद्वारेणैका प्रकृतिः सर्वजननीति विज्ञातुं शक्यते विधिं विनैवेति । यदि विधावाग्रहस्तर्हि सोऽप्यत्रास्त्येव संसर्गावगतिनिमित्तभूत इत्याह—तथाऽऽनर्थक्यभीत्येति । अध्ययनविधेरानर्थक्यभीत्यैतद्विधिप्रयुक्ताक्षेपसं-भवादित्यर्थः । तामेव विध्यनुपपत्तिं स्फोरयति—न हीति । यत इत्यादिवाक्यस्याऽऽ-पाततः स्वभावतः स्वसामर्थ्यसिद्धमर्थं विना स्वाध्यायाध्ययनैकगोचरविधेर्न ह्युपपत्तिरिति योजना । अयं भावः—विधेः फलवत्त्वनियमादध्ययनविधेश्चार्थावबोधफलत्वादक्षरग्रहणा-न्तविधिपक्षेऽप्यधीतस्वाध्यायस्याऽऽनर्थक्यपरिहारायार्थावबोधहेतुत्वाभ्युपगमादध्ययनविधिमू-ल्यानुपपत्त्या संसर्गसिद्धिरितीहाभ्युपपन्नेति ॥ ५१० ॥

सु० टी०—एवं च पशुनेत्यत्र विध्यनुपपत्त्येव लक्षणवाक्यगते यत इति पदेऽपि विशिष्टलक्ष्यबोधनानुपपत्त्यैव वचनविभक्त्यर्थान्वयसिद्धि-रित्युपसंहरति—

वचनार्थविभक्तिवाच्ययोरुपपन्नाऽन्वयबुद्धिरर्थतः ।
पशुनेतिपदे यथा तथा यत इत्यादिपदेऽपि लक्षणे ॥५११॥

वचनार्थेति ॥ ५११ ॥

अ० टी०—अभ्युपगम्येदमुक्तमध्ययनवशात्संसर्गसिद्धिरिति वस्तुतः सा सर्वत्र शब्द-सामर्थ्यादर्थसामर्थ्याद्वा संसर्गसिद्धिरभ्युपेयाऽन्यथा स्वाध्यायविध्यादिगतसंसर्गस्याद्विविधा-र्थावबोधः सति च विशिष्टार्थबोधे दृष्टतया तस्य विधिं प्रति फलत्वकल्पनेतरेतराश्रयत्व-प्रसङ्गात् । तस्मादेतादृशे विषयेऽर्थसामर्थ्यमेव संसर्गाक्षेपकमभ्युपेयं तदत्राप्यस्तीत्याह—

वचनार्थेति । पशुनेतिपदे यथा तथा यत इतिपदे लक्षणे लक्षणपरेऽपि । आदिपदात् 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' [ मुं० १ । १ । ९ ] 'एतस्माज्जायते प्राणः' [ मुं० २ । १ । ३ ] 'तस्माद्वा एतस्मादात्मनः' [ तै० २ । १ । १ ] इत्यादौ वचनार्थविभक्तिवाच्ययोरर्थत एकप्रातिपदिकगतविशिष्टार्थप्रत्यायनसामर्थ्यादन्वयबुद्धिरुपपन्नेति योजना ॥ ५११ ॥

सु० टी०—विधिं विना कथमत्राऽऽक्षेप इति चेत्प्रधानापेक्षाया अविशेषादित्याह—

विधिनिष्ठवाक्यमपि बोधयति
स्वमपेक्षितं विषयमर्थवशात् ।
परमात्मनिष्ठमपि तुल्यमिदं
वचसोर्द्वयोरपि तु रूपमतः ॥ ५१२ ॥

विधीति । विधिरपि हि विशिष्टार्थपरत्वात् प्रधानापेक्षितं संबन्धं बोधयति तत्परत्वं चात्रापि तुल्यमित्यर्थः । सर्वं चैतद्गुरुमतेनोक्तं भट्टमते त्वेकाभिधानश्रुतेरेकपदश्रुतितोऽन्तरङ्गत्वाद्वचनविभक्त्यर्थान्वयानन्तरं प्रकृत्यर्थान्वय इति नानुपपत्तिः ॥ ५१२ ॥

अ० टी०—ननु पशुनेतिपदे विधिरेवाऽऽक्षेपकस्तत्र विधेर्भावात्किमिदमुच्यतेऽर्थसामर्थ्यादाक्षेपस्तत्रापीति चेत्तत्राऽऽह—विधिनिष्ठेति । परमात्मनिष्ठमपि वाक्यमर्थवशात्स्वमपेक्षितं विषयं बोधयतीत्यन्वयः । अत इदं तुल्यं द्वयोरपि वचसोर्विधिमदविधिमद्वाक्ययो रूपमिति योजना । तुशब्दः पादपूरणार्थः । विधेरपि हि संसर्गार्थबुद्धत्वबलादेव संसर्गाक्षेपकत्वं तच्च पदान्तरार्थानामविशिष्टमतः सर्वेषामपि पदार्थानां तुल्यमाकाङ्क्षाद्यनुरोधेन संसर्गविशेषाक्षेपकत्वमिति भावः ॥ ५१२ ॥

सु० टी०—ननु जगत्कारणत्वस्य ब्रह्मणश्चाप्रसिद्धत्वात्कथं लक्षणत्वं लक्ष्यत्वं चेति तत्राऽऽह—

एकं चेतनमस्य यत्प्रकृतितामापन्नमुत्प्रेक्ष्यते
तद्ब्रह्मेति निशामयेति निपुणं ब्रूते परब्रह्मणः ।
सिद्धं लक्षणमादरेण महता व्यावर्तयद्ब्रह्मण-
स्तत्त्वं तत्त्वमसीतिवाक्यनिलयं तच्छब्दलक्ष्यं वचः ॥५१३॥

एकमिति । यत इत्यादिवाक्यं हि यज्जगतः कारणमुत्प्रेक्ष्यते तद्ब्रह्मेत्य-

नुमानसिद्धं जगत्कारणमनूद्य तद्ब्रह्मेति विद्धीत्येवं लक्षणं वदति । तच्च निपुणमप्रसिद्ध्यभावादित्यर्थः । नापि लक्ष्याप्रसिद्धिरित्याह—तत्त्वमसीति । तद्वाक्यस्थब्रह्मादिपदसामर्थ्यसिद्धं तत्त्वमित्यर्थः । महावाक्यादेव ब्रह्मसिद्धेः किं लक्षणेनेति चेन्न प्रधानादिव्यावृत्तब्रह्मासिद्धौ महावाक्याप्रवृत्तेरित्याह—व्यावर्तयदिति । ब्रह्मणस्तत्त्वमनवच्छिन्नचिदानन्दैकरूपं परिच्छिन्नजडानर्थरूपेभ्यः प्रधानादिभ्यः प्रयत्नेन व्यावर्तयदित्यर्थः । महावाक्ये च तत्पदार्थशोधनमेव लक्षणस्योपकार इत्याह—तच्छब्देति ॥ ५१३ ॥

अ० टी०—ननु तथाऽपि कथं 'यतो वा इमानि' [ तै० ३ । १ । १ ] इति सिद्धवन्निर्देशो न ह्यन्यतः सिद्धमनपेक्ष्य तत्संभवः सिद्धवन्निर्देशभङ्गेन वाक्यस्य विशिष्टकारणत्वप्रतिपादनपरत्वे च ब्रह्मलक्षणपरत्वासंभवादुभयपरत्वे वाक्यभेदप्रसङ्गादेवंविधं यज्जगत्कारणं तद्ब्रह्मेति च विशिष्टतया विधानायोगादिति चेत्तत्राऽऽह—एकं चेतनमिति । चेतनं जगत्कारणमस्तीत्यनुमानात्तावत्सिद्धं तथैकमिति यद्यप्यनुमानान्न निश्चयस्तथाऽपि संभावनामात्ररूपोत्कटकोटिविषयलाघवतर्केणोत्प्रेक्षिताऽस्त्येवैकतासिद्धिः । अत्रैवा-(पाऽ)क्षरयोजना—अस्य जगतः प्रकृतितामुपादानतामापन्नं यदेकं चेतनमुत्प्रेक्ष्यते संभाव्यते तद्ब्रह्मेति निशामय जानीहीति सिद्धमुत्प्रेक्षासिद्धं ब्रह्मणो लक्षणं निपुणं विवक्षितलक्ष्यसिद्ध्यनुगुणं यथा स्यात्तथा ब्रूते 'यतो वा' इत्यादिवाक्यमिति शेषः । किं कुर्वन् महताऽऽदरेण परमतात्पर्येण ब्रह्मणस्तत्त्वं व्यावर्तयदब्रह्मरूपात्परपरिकल्पितजगत्कारणकलापात्कार्याच्च ब्रह्म व्यवच्छिन्ददित्यर्थः । तथा चानुमानसंभावनाभ्यां सिद्धचेतनैककारणस्वरूपानुवादेन ब्रह्मणो लक्षणाभिधानं न विरुध्यत इति भावः । निपुणं यदुत्प्रेक्ष्यत इति यदा संबन्धस्तदा जगत्कारणे विपरीतोत्प्रेक्षा प्रकाराणामाभासत्वं यथा स्यात्तथा यदुत्प्रेक्ष्यत इत्यर्थः । भवत्वेवं लक्षणस्य कथंचित्प्रसिद्धिर्लक्ष्यस्य ब्रह्मणः कथं सिद्धिस्तस्यापि हि सिद्धिर्वक्तव्याऽन्यथा कस्येदं लक्षणानुमानमित्यनध्यवसायादित्याह—तत्त्वमसीति । तत्त्वमस्यादिमहावाक्यगतं सद्ब्रह्मेत्यादिपदं तच्छब्दलक्ष्यब्रह्मणस्तत्त्वं स्वरूपं ब्रूत इति योजना । महावाक्यादिनिविष्टब्रह्मादिपदसामर्थ्यसिद्धं ब्रह्म लक्ष्यमिति भावः ॥ ५१३ ॥

सु० टी०—लक्ष्यासंबद्धस्यास्य कथं लक्षणत्वमित्याशङ्क्य लक्ष्यबहिर्भूतमेवेदं लक्षणमुपलक्षणत्वादिति वक्तुं लक्षणप्रकारानाह—

लक्ष्यस्य लक्षणमिह त्रिविधं प्रसिद्धं
लोके स्वलक्षणममुष्य विशेषणं वा ।

यद्वोपलक्षणमिमानि च लक्षणेन
व्यावर्णयामि पृथगेव तु तत्प्रतीहि ॥ ५१४ ॥

लक्ष्यस्येति । स्वरूपविशेषणोपलक्षणभेदात्त्रिविधं लक्षणमित्युक्त्वा किमेषां भेदकमित्यत्राऽऽह—इमानीति ॥ ५१४ ॥

अ० टी०—तदेवं यतो वा इत्यादिवाक्यस्य लक्षणपरत्वे न कोऽपि दोष इति निर्णीतमिदानीं लक्षणमिदं स्वलक्ष्यं लक्षयत्स्वासंबद्धत्वेन तल्लक्षयेत्स्वसंबन्धित्वेन वा नाऽऽद्योऽतिप्रसङ्गान्न द्वितीयोऽसङ्गस्य ब्रह्मणो लक्षणसंबन्धाभावादतः कथं लक्ष्यलक्षणसंभव इति शङ्कायां वास्तवसंबन्धाभावेऽपि कथंचिदस्ति संबन्ध इति स्वसंबन्धितयैव लक्ष्यं लक्षयेदिदं लक्षणमिति दर्शयितुं लक्षणभेदं व्युत्पादयति—लक्ष्यस्येति । इह लोके व्यवहारभूमौ स्वलक्षणं स्वरूपलक्षणममुष्य स्वरूपस्य विशेषणं विशेषलक्षणमुपलक्षणं कदाचित्कथंचित्संगतिमात्रेण लक्षणमिति लक्ष्यस्य लक्षणमिह त्रिविधं प्रसिद्धमिति संबन्धः । किमेषामसंकीर्णं लक्षणमुदाहरणारूढमिति वीक्षायामाह—इमानीति । पृथगेव तु लक्षणेन व्यावर्णयामीत्यन्वयः । लक्षणभेदेनेत्यर्थः ॥ ५१४ ॥

सु० टी०—सामान्यलक्षणं विना विभागासंभवात्तदाह—

लक्ष्यार्थनिष्ठमुपलब्धमतोऽन्यतोऽर्था-
न्निःशेषतो यदतिरिच्य तदर्थवस्तु ।
लक्ष्यं निवेदयति लक्षणमेतदाहुः
सामान्यलक्षणमिदं त्रिषु लक्षणेषु ॥ ५१५ ॥

लक्ष्यार्थेति । लक्ष्येतरसमानासमानजातीयव्यावृत्तलक्ष्यनिवेदकं लक्षणमित्यर्थः । लक्ष्यार्थनिष्ठमिति संभवप्रदर्शनार्थम् ॥ ५१५ ॥

अ० टी०—लक्षणविभागकथनं प्रतिज्ञातं तस्य विभागस्य धर्मिसामान्यकथनमन्तरेण सम्यक्कथनाशक्तेर्लक्षणसामान्यलक्षणं तावदाह—लक्ष्यार्थेति । यद्धर्मरूपं वस्तु तदर्थवस्तु लक्ष्यं निवेदयत्येतल्लक्षणमाहुरित्यन्वयः । स चासावर्थश्चेति तदर्थस्तदेव वस्तु परमार्थमिति तदर्थवस्त्विति विग्रहः । किं कृत्वाऽतोऽन्यतोऽर्थान्निःशेषतोऽतिरिच्य । अतो लक्षणीयात्सकाशाद्योऽन्योऽर्थस्तस्मादन्यस्मादर्थाल्लक्ष्यसजातीयाद्विजातीयाच्चार्थान्निःशेषतः । सर्वस्मादतिरिच्य व्यावर्त्येत्यर्थः । लक्ष्यार्थनिष्ठमुपलब्धमिति च मध्ये निर्दिष्टयच्छब्दार्थस्य लक्षणस्य विशेषणे । अन्यनिष्ठस्यानुपलब्धस्यार्थस्यान्यव्यावृत्तिबुद्धिव्युत्पादनाशक्तेरित्यत एतच्छङ्काव्यावृत्तय इदं विशेषणद्वयम् । यच्चास्य निःशेषतः सजातीयविजातीयव्यावर्तकं

सचन्निष्टमुपलभ्यते तत्तस्य लक्षणमित्युक्तं भवति । एतत्कथनोपयोगमाह—सामान्यल-
क्षणमिति । त्रिपु वक्ष्यमाणेष्वित्यर्थः ॥ ५१५ ॥

सु० टी०—स्वरूपलक्षणं लक्षयति—

लक्ष्यस्वरूपमपि सयदमुष्य साक्षा-
दर्थान्तराद्भवति भेदकमेतदाहुः ।
अस्य स्वलक्षणतयैव तु लक्षणं खं
छिद्रं जलं द्रवमितीदृशमत्र लोके ॥ ५१६ ॥

लक्ष्येति । अन्यव्यावर्तकं निरुपाधिकं रूपमित्यर्थः । धर्मस्येव स्वरू-
पस्यापि विलक्षणत्वेन व्यावर्तकत्वसंभवादाद्यं जलादेः स्वच्छत्वादौ
स्फटिकादिसाधारणेऽतिव्याप्तिवारकं द्वितीयं तटस्थलक्षणे तृतीयं विशे-
षणे । उदाहरणमाह—खं छिद्रमिति । न च छिद्रत्वं धर्म आकाशाति-
रिक्तछिद्रत्वे मानाभावाद्द्रवत्वमपि धर्म्यभेदाभिप्रायेणोक्तम् ॥ ५१६ ॥

अ० टी०—तत्र स्वरूपलक्षणस्य लक्षणमुद्देशक्रममनुरुध्याऽऽह—लक्ष्यस्येति ।
अत्र स्वरूपग्रहणेन विशेषलक्षणादौ प्रसङ्गो व्यावर्त्यत एवमुत्तरत्रापि विशेषणद्वयमनुसं-
धेयम् । अमुष्य लक्ष्यस्यार्थान्तराद्यत्साक्षाद्भेदकं भवत्येतस्य लक्ष्यस्य स्वलक्षणतयैव स्वरूप-
भूततयैव लक्षणमाहुर्लक्षणविद इति योजना । अस्योदाहरणमाह—खं छिद्रमि-
त्यादि ॥ ५१६ ॥

सु० टी०—किं विशेषणलक्षणमिति तदाह—

स्वानुरक्तमतिजन्मकारणं यत्पुनर्भजति लक्ष्यवस्तुनि ।
तद्विशेषणतयाऽस्य लक्षणं केसरादिकमिवाश्ववस्तुनः ॥५१७॥

स्वानुरक्तेति । लक्ष्यव्याप्त्या स्वानुरक्तधीकारणत्वे सत्यन्यव्यावर्त-
कत्वं व्याप्त्येति क्षितिविशेषणसुगन्धित्वादौ स्वानुरक्तेति तटस्थलक्षणे
व्यावर्तकेत्युद्देश्यविशेषणेऽतिव्याप्तिवारणाय ॥ ५१७ ॥

अ० टी०—विशेषलक्षणस्य लक्षणमाह—स्वानुरक्तेति । स्वानुरक्ततया नित्यस्व-
संबद्धतया लक्ष्यस्वरूपावियुक्ततयेति यावत् । यत्पुनर्लक्षणं वस्तुनि स्वानुरक्तमतिजन्मनि
हेतुतां भजति तदस्य लक्ष्यस्य विशेषणतया लक्षणमिति योजना । उदाहरणं—केसरा-
दिकमिति । आदिपदं शोणत्वादिसंग्रहार्थम् ॥ ५१७ ॥

---

१ ग. घ. °भवति ।

सु० टी०—उपलक्षणलक्षणमाह—

स्वानुरक्तमतिजन्महेतुतां
लक्ष्यवस्तुनि निरस्य लक्षणम् ।
अस्वरूपमपि तस्य यद्भवे-
त्काकवत्तदुपलक्षणं विदुः ॥ ५१८ ॥

स्वेति । लक्ष्यगोचरस्वानुरक्तधीहेतुत्वशून्यमस्वरूपं स्वेतराखिलव्यावृत्तलक्ष्यनिवेदकमुपलक्षणमाद्यं विशेषणे द्वितीयं स्वरूपलक्षणे तृतीयं लक्षणाभासेऽतिव्याप्तिवारकम् ॥ ५१८ ॥

अ० टी०—उपलक्षणस्य लक्षणमाहोत्तरपद्येन—स्वानुरक्तेति । लक्ष्यवस्तुनि स्वानुरक्तमतिजन्महेतुतां निरस्य तद्व्यतिरेकेणेत्यर्थः । एतेन विशेषलक्षणव्यावृत्तिः सिद्धा । अस्वरूपमपीति स्वरूपलक्षणव्यावृत्तिः । तस्य लक्ष्यस्यैवंविधं यल्लक्षणं भवेदुपलक्षणं विदुरिति योजना । उदाहरणमाह—काकवदिति । यथा काकनिलयं यद्दृश्यते तद्देवदत्तगृहमित्यत्रोपलक्ष्यस्य गृहस्यास्वरूपभूतस्तत्र विशेषणतया न तु प्रविष्टः काको देवदत्तगृहं लक्षयत्येवंविधमुपलक्षणमित्यर्थः ॥ ५१८ ॥

सु० टी०—नन्वीदृशस्योपलक्षणत्वेऽपि प्रकृते किमायातमिति तत्राऽऽह—

विश्वोद्भवस्थितिलयप्रकृतित्वमस्य
चिद्वस्तुनो यदसहायपरिग्रहस्य ।
तद्वर्णनीयमुपलक्षणमेव कस्मा-
द्ब्रह्मेति लक्ष्यपदशक्त्यविरोधहेतोः ॥ ५१९ ॥

विश्वेति । अस्य चिद्वस्तुनोऽकृतस्वव्यतिरिक्तकर्तृपरिग्रहस्य यज्जगत्प्रकृतित्वं लक्षणं तदपि काकादिवदुपलक्षणमेवेति नास्य ब्रह्मणा सह वास्तवसंबन्धापेक्षेत्यर्थः । विशेषणमेव तत्कुतो नेति चेत्तत्राऽऽह—ब्रह्मेति । प्रधानभूतलक्ष्यब्रह्मपदार्थविरोधान्न तत्तथेत्यर्थः ॥ ५१९ ॥

अ० टी०—एवं लक्षणभेदे स्थिते प्रकृते यात्र्य उपलक्षणार्थत्वमेवेति प्रकृतिमुपपादयँल्लक्षणान्तरपरत्वमस्य प्रतिषेधति—विश्वोद्भवेति । अस्य चिद्वस्तुनोऽसहा-

१ क. हेतुः । २ क. ग. °नोऽकर्तृस्व° । ३ क. °दृण एवार्थ° ।

यपरिग्रहस्याद्वितीयस्य लक्ष्यभूतस्य यद्विश्वोद्भवस्थितिलयप्रकृतित्वं लक्षणं तदुपलक्षणमेव वर्णनीयं न लक्षणान्तरमिति योजना । प्रतिज्ञायां हेतुमाह—कस्मादित्यादिना । ब्रह्मेति यल्लक्ष्यपदं तस्य या शक्तिस्तस्या अविरोधसिद्ध्यर्थं पदशक्तेरसंकोचार्थमित्यर्थः ॥ ५१९ ॥

सु० टी०—कुतस्तद्विरोध इति चेत्तत्राऽऽह—

विश्वोद्भवस्थितिलयप्रकृतित्वरूप-
मेकाकिनो यदिह लक्षणमुच्यमानम् ।
तद्ब्रह्मणो यदि विशेषणरूपमिष्टं
ब्रह्मेति लक्ष्यविषयस्य पदस्य भङ्गः ॥ ५२० ॥

विश्वेति । यदिदं लक्षणमुच्यमानं दृश्यते तच्चेद्विशेषणं स्यात्तस्य ब्रह्मधर्मत्वेन सत्यत्वाद्बृहत्यर्थस्यापरिच्छेदस्य भङ्गाल्लक्ष्यवाचिब्रह्मपदशक्तिसंकोचः स्यादित्यर्थः । उपलक्षणत्वे त्वाविद्यकं तदिति नोक्तदोषः ॥ ५२० ॥

अ० टी०—उक्तलक्षणस्य विशेषलक्षणत्वे को विरोध इत्युक्त इत्यत आह—विश्वोद्भवेति पद्यान्तरेण । एकाकिनोऽखण्डाद्वयस्येत्यर्थः । जगत्कारणत्वस्यापि लक्ष्यविशेषणत्वे बृहत्यर्थस्याद्वयत्वस्य भङ्गाल्लक्ष्यवाचिब्रह्मपदशक्तिसंकोचप्रसङ्ग इत्यर्थः । तत्संकोचे च वाक्येनानेनाखण्डं ब्रह्म लक्षितं न स्यात्तस्य चालक्षणे 'अधीहि भगवो ब्रह्म' [ तै० ३ । १ । १ ] इत्युपक्रमविरोध इति भावः ॥ ५२० ॥

सु० टी०—ननु स्थितेऽपि लक्ष्यस्य काल्पनिकत्वात्तद्वाचिपदभङ्गस्तुल्य इति लक्ष्यलक्षणपदयोः किं मुख्यं किममुख्यमिति संशये लक्षणमेव पूर्वचोदितत्वेनासंजातविरोधित्वान्मुख्यमस्त्विति चेन्नेत्याह—

लक्ष्यार्थवाचि पदमत्र हि लक्षणार्थे
वाक्ये प्रधानमितरद्गुणभूतमाहुः ।
ब्रह्मेति लक्ष्यविषयं च पदं समर्थं
भूमानमेव वदितुं न तु मर्त्यमल्पम् ॥ ५२१ ॥

---

१ क. ग. 'द्भवाद्य लक्ष' ।

लक्ष्येति । अत्र हि वाक्ये पश्चादुपात्तमपि लक्ष्यपदमेव प्रधानं तदर्थस्य जिज्ञास्यत्वात् । लक्षणं तु तदङ्गतया गुणभूतमिति लक्ष्यानुरोधेनैव नेयमङ्गगुणविरोधे च तादर्थ्यादिति न्यायादित्यर्थः । नन्वीपद्भेदाङ्गीकारे कथं ब्रह्मपदमङ्ग इति तत्राऽऽह—ब्रह्मेति । ब्रह्मपदं हि बृहिधातोर्व्युत्पन्नं भूमानमेव 'यत्र नान्यत्पश्यति' [ छा० ७ । २४ । १ ] इत्यादिना लक्षितं वक्तुं समर्थं न तु यदल्पं तन्मर्त्यमित्यादिना लक्षितं परिच्छिन्नमित्यर्थः ॥ ५२१ ॥

अ० टी०—ननूपलक्षणत्वपक्षेऽपि लक्षणस्य काल्पनिकत्वात्तद्वाचिपदभङ्गप्रसङ्गस्तुल्यस्तत्र किं वरमिति विशेषनियामकं वाच्यमित्यत आह—लक्ष्यार्थवाचीति । अत्र हि लक्षणार्थे वाक्ये लक्ष्यार्थवाचि पदं प्रधानमुद्देश्यविषयत्वादितरल्लक्षणवाचि सर्वं शब्दजातं गुणभूतं तच्छेषभूतार्थविषयत्वादित्याहुस्तद्विद इत्यर्थः । गुणानुरोधेन प्रधानभङ्गो दोषायाप्रधानानुरोधेन गुणभङ्गो न दोषाय प्रत्युत गुणार्थैव प्रधानार्थत्वाद्गुणस्येत्यभिप्रायः । ननु ब्रह्मपदस्य लक्ष्यार्थतया प्रधानत्वेऽपीपद्भेदाङ्गीकारेण लक्षणधर्मकब्रह्मविषयकत्वाभ्युपगमे न विरोध इति चेन्नैवं पदस्वारस्यस्याकस्मादेव भङ्गप्रसङ्गादित्यभिप्रेत्याऽऽह—ब्रह्मेतीति । न च ब्रह्मपदस्येपदपि भेदमादाय वृत्तिसंकोचो युक्तो भूमलक्षणवाक्ये सर्वभेदरहितं ब्रह्म भूमेति प्रतिष्ठापितत्वात्तेन विरोधापत्तेरिति सूचयति—भूमानमिति । तथा च श्रुतिर्भूमलक्षणपरा पठ्यते 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' [ छा० ७ । २४ । १ ] इति । सर्वभेदरहितमविषयभूतं वस्तु भूमेत्यभिधाय तद्ब्रह्मिम्ने तद्विपरीतस्य परिच्छिन्नस्याब्रह्मणः स्वरूपमाह श्रुतिः 'अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्' [ छा० ७ । २४ । १ ] इति विशेषलक्षणपरत्वनिराकरणेनैवास्य स्वरूपलक्षणार्थत्वमपि निराकृतं वेदितव्यं यस्य धर्मत्वमपि नास्ति न नितरां तस्य स्वरूपमपीति ॥ ५२१ ॥

सु० टी०—तस्मात्प्रधानानुरोधेन लक्षणमुपलक्षणत्वेन नेयं 'गुणे त्वन्यायकल्पना' इतिन्यायादित्याह—

तस्मात्प्रधानपदभङ्गभयाद्गुणानां  
युक्तं ग्रहीतुमुपलक्षणगोचरत्वम् ।  
ब्रह्मेति चैतदुपलक्ष्य समर्पणार्थ-  
मेवं समञ्जसमिदं पदजातमस्मिन् ॥ ५२२ ॥

तस्मादिति ॥ ५२२ ॥

अ० टी०—उपपादितमर्थमुपसंहरति—तस्मादिति । प्रधानपदभङ्गभयाद्ब्रह्मपदस्वारस्यभङ्गभयाद्गुणानां लक्षणार्थानां पदानामुपलक्षणगोचरत्वं ग्रहीतुं युक्तमिति योजना। ब्रह्मेति चैतत्पदमुपलक्ष्यब्रह्मवस्तुसमर्पणार्थमिति च ग्रहीतुं युक्तमिति पूर्वेणान्वयः । एवमुक्तप्रकारेणास्मिन्वाक्य इदं पदजातं विभागेनान्वितार्थं सत्समञ्जसमाकाङ्क्षितार्थसमर्पकतयेत्यर्थः ॥ ५२२ ॥

सु० टी०—ननु यदि लक्षणं न ब्रह्मणः स्वरूपं तद्धर्मो वा तर्हि किमर्थमिदमित्याशङ्क्य प्रागुक्तमेव प्रयोजनं स्मारयति—

लक्ष्यस्वरूपकथनाय न लक्षणानि
नाप्यस्य वाचकमिदं पदमित्यमुष्मै ।
व्यावृत्तमेतदखिलादितरार्थजाता-
दित्येतदेव वदितुं ननु लक्षणानि ॥ ५२३ ॥

लक्ष्येति । न हि तटस्थलक्षणं (*स्वरूपकथनाय । न हि यः पर्यङ्के शेते स राजेत्युक्ते पर्यङ्कशायित्वमपि राज्ञः) स्वरूपं भवत्येवं जगत्कारणत्वमपीत्यर्थः । नापीति । तस्य लक्ष्यपदाप्रवृत्तिनिमित्तत्वादित्यर्थः । अमुष्मै प्रयोजनायेति शेषः ॥ ५२३ ॥

अ० टी०—तदेवं 'यतो वै' [ तै० ३ । १ । १ ] इत्यादिवाक्यस्य लक्षणपरत्वं निर्धारितं लक्षणं चैतदुपलक्षणमेवेति च तत्रेदं लक्षणं किमर्थमुपादीयत इति वीक्षायां वस्तुस्वरूपज्ञप्त्यर्थमिति केचिन्मन्यन्ते. मानान्तरैरज्ञातस्वरूपं ब्रह्म लक्षणवाक्यैर्हि ज्ञाप्यत इत्येतदेव लक्षणकृत्यमिति तेषामभिप्रायः । अन्ये तु श्रुतिः स्वयमेव सत्यज्ञानादिकं वस्तु प्रतिपाद्य यदेवंविधं वस्तु तत्तत्पदस्यार्थ इति वक्तीति संज्ञासंज्ञिसंबन्ध एव लक्षणकृत्यं नान्यदित्याहुस्तदुभयं दूषयन्स्वमतं लक्ष्यस्येतरेभ्यो व्यावृत्तिरेव लक्षणप्रयोजनमित्युपपादयति—लक्ष्यस्वरूपकथनायेति । सजातीयविजातीयव्यावृत्तिरेव लक्षणकृत्यं नाज्ञातवस्तुस्वरूपज्ञप्तिरिति ॥ ५२३ ॥

सु० टी०—लक्ष्यस्वरूपासिद्धौ तत्र लक्षणेन व्यावृत्त्यसिद्धेस्तत्सिद्ध्यर्थं तदिति चेन्न लक्ष्यलक्षणयोर्मानान्तरसिद्धत्वादित्याह—

लक्ष्यस्वरूपमुपलभ्य तदेकनिष्ठं
दृष्ट्वा च लक्षणमनेन तदेव लक्ष्यम् ।

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

व्यावर्त्य बोधयितुमुत्सहते जनोऽयं
तत्त्वान्तरादिति यतः प्रतिपन्नमेतत् ॥ ५२४ ॥

लक्ष्येति । इतरव्यावर्तकत्वेनैव तत्प्रसिद्धेर्नैवमित्यर्थः ॥ ५२४ ॥

अ० टी०–कुतो निर्णय इति चेत्तत्राऽऽह–लक्ष्यस्वरूपमुपलभ्येति । अयमर्थः–लक्षणं हि लक्ष्यगततयाऽवगतं सत्तल्लक्ष्येऽन्यानवगतमिति सर्वेषामनुभवमार्गागतम् । तथा च यन्निष्टं तल्लक्षणमवगम्यते तदपि लक्ष्यं नात्यन्तमज्ञातं तथा सति लक्ष्यसंबद्धतया लक्षणप्रतीत्यसंभवात्कस्येदं लक्षणं स्यादिति तस्माल्लक्ष्यस्वरूपं पदसामर्थ्याद्वा प्रमाणान्तराद्वोपलभ्य लक्षणं च तदेकनिष्ठं लक्ष्यस्यासाधारणधर्मरूपं दृष्ट्वाऽवगम्यानेन लक्षणेन तदेव लक्ष्यं तत्त्वान्तरादलक्ष्यभूतादर्थान्तराद्व्यावर्त्य पृथगुद्धृत्य परं बोधयितुमयं जन उत्सहते नान्यथेति यत एतत्प्रतिपन्नं सर्वजनप्रसिद्धमतो नाज्ञातज्ञापनं लक्षणकृत्यमित्यक्षरार्थः ॥ ५२४ ॥

सु० टी०—अत एव पृथिव्याः स्वरूपं तत्पदवाच्यत्वं च जानन्त एव गन्धवत्त्वादिना जलादिव्यावृत्तिमात्रं वादिनः साधयन्तीत्याह—

संज्ञासंज्ञिसमन्वयावगतये नेष्टं क्वचिल्लक्षणं
व्यावृत्तिप्रतिपत्तिमात्रजनकं लक्ष्ये भवेदन्यतः ।
लक्ष्यं लक्षणवर्त्मना हि जगति व्यावर्तयन्तोऽन्यत-
स्तत्तल्लक्षणमादरेण महता संगृह्णते वादिनः॥५२५॥

संज्ञेति ॥ ५२५ ॥

अ० टी०—अज्ञातवस्तुज्ञापनार्थं लक्षणमिति मतं निराकृत्य संज्ञासंज्ञिसंबन्धप्रतीत्यर्थं लक्षणमिति मतं निराकरोति—संज्ञासंज्ञीति । क्वचिदिति गोसदृशो गवय इत्यादावपि लक्षणे गवयादिसंज्ञायाः संज्ञिना सह संबन्धप्रतीत्यर्थता नावगम्यते किं त्वन्यव्यावृत्त्यर्थतैव । यतो व्यावृत्ततया प्रतिपन्नस्यैकसंज्ञासंज्ञिसंबन्धावगतिरित्यतो न लक्षणं क्वापि यथासंबन्धसिद्धिफलमिष्टमित्यर्थः । सर्वथाऽपि लक्षणकथनमन्यतो व्यावृत्तिप्रतिपत्तिमात्रार्थमिति परिशेषात्सिद्धमित्याह—व्यावृत्तीति । सजातीयविजातीयव्यावृत्तिरेव लक्षणकृत्यमित्येतदेव सर्ववादिनामपि संमतमित्यतोऽयं सर्वतन्त्रसिद्धान्त इत्यभिप्रेत्याऽऽह—लक्ष्यं लक्षणवर्त्मनेति ॥ ५२५ ॥

सु० टी०—उक्तन्यायं प्रकृत उपसंहरति—

तस्माद्ब्रह्मणि वाच्यवाचकयुजासिद्ध्यै श्रुतिर्नाभ्यधा-
ज्जन्माद्यस्य समीक्षितस्य जगतो यद्ब्रह्मणो लक्षणम् ।

नापीदं स्वकरूपबोधनपरं संकीर्तितं ब्रह्मणः

किंत्वब्रह्मपदार्थतोऽस्य सकलाद्व्यावृत्ततासिद्धये ॥ ५२६ ॥

तस्मादिति । अस्येत्यस्यार्थः समीक्षितस्येति । जन्मादि जन्मादिहेतुत्वम् ॥ ५२६ ॥

अ० टी०—तस्मादस्मन्मतं निर्दुष्टं सिद्धमित्युपसंहरति—तस्माद्ब्रह्मणीति । वाच्यवाचकयुजासिद्ध्या इति । संज्ञासंज्ञियोगसिध्यर्थमित्यर्थः । अस्येत्यस्य व्याख्यानं—समीक्षितस्येति । प्रत्यक्षादिप्रमाणसंनिधापितस्येत्यर्थः । जगतो जन्मादि यल्लक्षणमिति संबन्धः । ब्रह्मणः स्वकरूपेति संबन्धः । अज्ञातब्रह्मस्वरूपबोधार्थमपि नेदं लक्षणमित्यर्थः । सुगममन्यत् ॥ ५२६ ॥

सु० टी०—ननु सजातीयविजातीयव्यावृत्तिर्लक्षणार्थो न चाद्वितीयस्य ब्रह्मणस्तदस्तीति किमस्य लक्षणेनेति तत्राऽऽह—

परिच्छिन्नवस्तुव्यवच्छेदसिद्ध्यै

जगाद श्रुतिर्लक्षणं ब्रह्मणस्तत् ।

परिच्छिन्नता प्रापिता पूर्वपक्षे

परब्रह्मणस्तन्निषेधार्थमेतत् ॥ ५२७ ॥

परिच्छिन्नेति । वास्तवस्य तस्याभावेऽप्यविद्याकल्पितपरिच्छिन्नवस्तुव्यवच्छेदार्थमेव तदित्यर्थः । नन्वेकमेवेति प्रतिज्ञया ब्रह्मपदसामर्थ्याद्वा तत्सिद्धेः किं लक्षणेनेति चेत्तत्राऽऽह—परिच्छिन्नतेति । प्रधानपरमाण्वादिकारणत्वपूर्वपक्षे ब्रह्मणः परिच्छिन्नता प्राप्तेति तां निषेद्धुमित्यर्थः । न च नित्यानित्यसंयोगविरोधः श्रुतिवत्तर्काणामनादित्वात् ॥ ५२७ ॥

अ० टी०—नन्वद्वैतवादे व्यवच्छेद्याभावात्कथमन्यव्यावृत्त्यर्थं लक्षणमिति चेत् सत्यं परमार्थतो ब्रह्मणोऽन्यस्य सजातीयस्य विजातीयस्य चाभावेऽपि भ्रान्तिकल्पितमस्ति चेतनाचेतनात्मकं जगत्परिच्छिन्नं ततो व्यवच्छेदार्थं लक्षणकथनमित्याह—परिच्छिन्नेति । ननु यथोक्ताज्जगतः परिच्छिन्नाद्ब्रह्मणो व्यावृत्तिरपि परिबृढत्वार्थकब्रह्मपदसामर्थ्यवशात्सिद्धेति किं लक्षणेनेति चेत्तत्राऽऽह—परिच्छिन्नतेति । यद्यपि शब्दसामर्थ्यात्परिबृढमपरिच्छिन्नं किंचिद्ब्रह्मेति भवति प्रतीतिस्तथाऽपीदं तदिति लोके शास्त्रान्तरेषु चाऽप्रसिद्धमित्यतस्तत्स्वरूपमन्यैरन्यथोत्प्रेक्षितमापेक्षिकमहत्त्वोपेतमेव किंचिद्ब्रह्म पदार्थ इति

तन्निषेधार्थमेतल्लक्षणमपेक्षितमेवेत्यर्थः । सामान्यतः पदसामर्थ्यादवगतस्य वस्तुनः स्वरूप-विशेषप्रसिद्धये लक्षणमर्थवदिति भावः ॥ ५२७ ॥

सु० टी०—कुत्र पूर्वपक्षे ब्रह्मणः परिच्छेदप्रसक्तिरिति चेत्तत्राऽऽह—

कालस्वभावपरमाण्वसुभृत्प्रधान-
स्कन्धप्रतीत्यखिलशून्यकथाप्रसङ्गे ।
जन्मादिसूत्रमवतीर्णमियं श्रुतिश्च
तस्मादिदंपरमिदं द्वितयं प्रवृत्तम् ॥ ५२८ ॥

कालेति । कालविशेषाच्छुभाशुभप्राप्तेः स एव कारणमिति ज्योतिर्विदः । अतिप्रयत्नेनापि मृदादिभ्यो दधि न भवतीति स्वभाव एव हेतुरिति चार्वाकाः । परमाणव इत्यार्हतवैशेषिकादयः । असुभृत्समष्टिर्जीव इति नैरुक्ताः । असुभृतो व्यष्टिजीवा एव कर्मद्वारेति मीमांसकाः । प्रधानमिति सांख्याः । रूपं संज्ञा संस्कारो वेदना विज्ञानमिति पञ्च स्कन्धा इति सौत्रान्तिकवैभाषिकौ । विज्ञानमिति योगाचारः । अखिलं शून्यमिति माध्यमिकः । एवं वादात्मिकायां प्रसक्तायां जन्मादिसूत्रं यत इत्यादिका 'सदेव' [छा० ६।२।१] इत्यादिका श्रुतिश्चावतीर्णेत्यर्थः । तत्र हि सदेकं चेतनं प्रकृतिश्च ब्रह्मेत्युक्तं तत्र कालस्वभावपरमाणुप्रधानानामचेतनत्वाच्छून्यस्यासत्त्वाज्जीवविज्ञानस्कन्धानामनेकत्वाद्धिरण्यगर्भस्य विकृतित्वान्निरासः । तस्मादिति । इदंपरं कालादिव्यावृत्तिपरमित्यर्थः ॥ ५२८ ॥

अ० टी०—किं तत्परिच्छिन्नं ब्रह्म पूर्वपक्षे प्रतिपन्नमिति चेत्तदाह—कालस्वभावेति । जगतः कारणं काल इति ज्योतिर्विदः स्वभाव इति स्वभाववादिनो नास्तिकविशेषाश्चार्वाकादयः, परमाणव इति वैशेषिकाः, असुभृज्जीवः कारणमिति हैरण्यगर्भाः, प्रधानमिति सांख्याः, स्कन्ध इति स्कन्धवादिनो बौद्धाः, प्रतीतिरेवेति विज्ञानवादिनोऽखिलशून्यमसदेव कारणमिति माध्यमिकाः, एतेषां कथाप्रसङ्गे वादुप्रेक्षितकारणविचारप्रसङ्गे तन्निरासाय जन्मादिसूत्रमवतीर्णमियं 'यतो वा इमानि' [तै० ३।१।१] इतिश्रुतिश्चावतीर्णा यस्मात्तस्मादिदं द्वयं सूत्रं श्रुतिश्चेदंपरं कारणमात्रपरं प्रवृत्तम् । अतः परिच्छिन्नकारणव्युदासेनापरिच्छिन्नं किमपि कारणं सिध्येत्कालो वा प्रधानं वाऽन्यदेव वा स्वकार्यापेक्षया परिवृढं जगत्कारणं श्रुतिसूत्राभ्यां निगद्यते न त्रिविधपरिच्छेदरहितमद्वयमखण्डं वस्त्विति पूर्वपक्षिभिः परिच्छेदः प्रापित इति भावः ॥ ५२८ ॥

सु० टी०---नन्वधिष्ठात्रधिष्ठेययोर्भेदस्याऽऽवश्यकत्वान्न परिच्छिन्नस्य व्यवच्छेद इति शङ्कते—

अधिष्ठात्रधिष्ठेयभावेन योनि-
र्निमित्तं च यत्कारणं जन्मभाजाम् ।
परिच्छिन्नताऽस्यापि संभावितैव
प्रतीचोऽस्य भेदे परैरुच्यमाने ॥ ५२९ ॥

अधिष्ठात्रिति । जन्मभाजामुपादानं चेद्ब्रह्म तस्य परमाणूनामिवाधिष्ठाता कश्चन वक्तव्यः । तेनास्यास्य चोपादाननिमित्तयोर्भेदे तार्किकैरुच्यमाने प्रतीचः परिच्छिन्नता पुनः संभावितेत्यर्थः ॥ ५२९ ॥

अ० टी०—ननु श्रुतिवचनविरोधादित्यादिभिः पद्यैर्लौकत एव सामान्यतोऽनुमानासिद्धस्य चेतनकारणत्वस्य तर्कितसंभावितैकत्वस्य विशेषतो निर्णीतत्वाद्वाक्यस्य च समस्तपरिच्छिन्नार्थव्यावृत्तपरिपूर्णब्रह्मलक्षणपरतायाः सिद्धत्वात्कुतः पुनः परिच्छिन्नत्वशङ्केत्याशङ्क्य प्रकारान्तरेण परिच्छेदशङ्काप्राप्तिं दर्शयन्नाह—अधिष्ठात्रिति । जन्मभाजां कार्याणां योनिरुपादानं निमित्तं च यत्कारणमस्यापि कारणस्याप्यधिष्ठात्रधिष्ठेयभावेन नियम्यनियामकत्वेनास्य प्रसिद्धस्य कारणात्मनः प्रतीचो जीवात्मनश्च भेदे परैस्तार्किकैरुच्यमाने परिच्छिन्नता संभावितैवेति योजना । अतस्तटस्थेश्वरपरमिदं सूत्रं श्रुतिश्चेति पूर्वपक्षप्राप्तिरिति भावः ॥ ५२९ ॥

सु० टी०---परिहरति—

ततस्तन्निषेधार्थमेतद्बभाषे
श्रुतिर्ब्रह्म तद्भिन्नता तस्य कस्मात् ।
प्रतीचोऽपि हि ब्रह्मता नित्यसिद्धा
दृशो भेदसिद्धिर्निरालम्बनेति ॥ ५३० ॥

तत इति । तन्निरासार्थमेव 'यतः' [ तै० ३ । १ । १ ] इत्यादिश्रुतिरेतदभिन्ननिमित्तोपादानं ब्रह्म बभाषे । तस्योपादानस्येश्वराद्भिन्नता कुत एकेनैवोभयसिद्धेरित्यर्थः । तथाऽपि जीवाद्भेदः प्रत्यक्ष इति नेत्याह—प्रतीच इति । प्रत्यगपि हि नित्यसिद्धं ब्रह्मैव दृग्रूपत्वाद्दृशश्च स्वप्रकाशत्वेन भेदग्राहकासंभवात्तद्गतभेदधीर्निरालम्बनेत्यर्थः ॥ ५३० ॥

अ० टी०---यत एवं पूर्वपक्षप्राप्तिः शब्दमात्रान्न समाधीयतेऽतो लक्षणं तत्समा-

धानार्थं युक्तमुपपादयितुमित्याह—तत इति । यत एवं पूर्वपक्षशङ्का ततो हेतोस्तन्निषेधार्थं शङ्कितपरिच्छेदनिषेधार्थमेतद्ब्रह्म श्रुतिर्विभाषे लक्षयामासेत्यर्थः । अतस्तस्य प्रतीचस्तद्भिन्नता कस्मात्स्यात्कस्मान्न स्याद्विरुद्धधर्माक्रान्त[त]या तयोर्भेदस्योक्तत्वादित्यत आह—प्रतीचोऽपि हीति । नित्यसिद्धा स्वभावसिद्धा चिद्रूपत्वविशेषादित्यर्थः । चिद्रूपत्वेऽपि भेदः किं न स्यादित्यत आह—दृश इति । दृशो ज्ञानरूपस्वयंप्रकाशस्वभावस्य भेदसिद्धिर्भेदप्रतीतिर्निरालम्बना विषयशून्या भ्रान्तिरेवेत्यर्थः । उपाधिभेदमन्तरेण स्वरूपभेदानिरूपणादित्यर्थः ॥ ५३० ॥

सु० टी०—तस्मादिदं लक्षणमेव निमित्तोपादानजीवभेदाशङ्कामुच्छिनत्ति स्वरूपसिद्ध्यादिपरत्वस्य निरस्तत्वादित्याह—

जगत्कारणत्वं पुनर्यत्र दृष्टं
न तल्लक्षणं तत्स्वरूपप्रसिद्ध्यै ।
स्वरूपे यतो लक्षणे दृश्यमाने
प्रसिद्धं ततो लक्ष्यवस्तुस्वरूपम् ॥ ५३१ ॥

जगदिति । लक्षणकाले स्वरूपस्य प्रसिद्धत्वाद्व्यवच्छेद एव तत्फलमित्यर्थः ॥ ५३१ ॥

अ० टी०—तदेव महावाक्यप्रयुक्तब्रह्मपदेनावयवशक्त्या परिवृढवस्तुनि प्रतिपन्ने सति तस्य संकोचकारणाभावेन नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञसर्वशक्तितया संभाविते तस्मिन्पुनरपि पूर्वोक्तप्रकारेण परिच्छेदशङ्काप्राप्तौ तद्व्यवच्छेदार्थं जगत्कारणत्वलक्षणतेत्थं परिच्छेदव्यावृत्तिसिद्धिरित्युपपादितमतो यदुक्तं स्वरूपसिद्ध्यर्थमिदं ब्रह्मणो लक्षणमुच्यत इति तदसंगतमेवेति सिद्धमित्युपसंहरति—जगत्कारणत्वमिति । यत्र जगत्कारणत्वं लक्षणं दृष्टं तल्लक्षणं तत्स्वरूपसिद्ध्यै न भवति किं त्वन्यव्यावृत्तिसिद्ध्य इत्यर्थः । कुत इत्यत आह—स्वरूपेति । यतो यस्मात्स्वरूपे लक्ष्यस्वरूपे लक्षणे तन्निष्ठतया दृश्यमाने सत्येव ततो लक्षणाल्लक्ष्यवस्तुस्वरूपं प्रसिद्धं लक्ष्यस्थतया चाप्रसिद्धस्य क्वचिल्लक्षणत्वादर्शनान्न स्वरूपसिद्ध्यर्थत्वं लक्षणस्येत्यर्थः ॥ ५३१ ॥

सु० टी०—तथाऽप्यभिन्ननिमित्तोपादानत्वस्य मानान्तरासिद्धत्वात्कथं सिद्धवल्लक्षणत्वेनोक्तिरिति शङ्कते—

निमित्तं च योनिश्च यत्कारणं त-
त्परं ब्रह्म सर्वस्य जन्मादिभाजः ।

इति स्पष्टमाचष्ट एषा श्रुतिर्नः
कथं सिद्धवल्लक्षणं सिद्धिबाह्यम् ॥ ५३२ ॥

निमित्तमिति। सर्वस्य यन्निमित्तं योनिश्च तद्ब्रह्मेति संबन्धः। सिद्धिबाह्यं मानान्तरासिद्धम् ॥ ५३२ ॥

अ० टी०—ननु जगतः कारणमात्रमनुमानादिसिद्धमनूद्यानेन लक्षणेन तस्य ब्रह्मत्वं विधीयते किं वा भिन्ननिमित्तोपादानरूपं नाऽऽद्यस्तस्य लोकदृष्टयनुसारेणैव परिच्छिन्नाचेतनत्वसंभवे तस्मिंस्तद्विपरीतब्रह्मत्वविधानायोगादित्यभिप्रेत्य द्वितीये वस्तुसत्तासिद्धिपरमेव वाक्यं स्यान्न लक्षणपरमिति शङ्कते—निमित्तमिति। निमित्तं च योनिरुपादानं चेत्येकं यत्सर्वस्याशेषस्य जन्मादिभाजो जन्मस्थितिलयभाजः कारणं तत्परं ब्रह्मेति नोऽस्मान्प्रत्येवं 'यतो वै' [तै० ३। १। १] इत्यादिश्रुतिः स्पष्टमसंदिग्धं यथा स्यात्तथाऽऽचष्टे कथयति। एतादृशस्य कारणस्य लोके प्रसिद्ध्यभावाज्जगज्जन्मादिनिमित्तोपादानतयाऽपूर्वं ब्रह्मैषा श्रुतिः प्रतिपादयतीत्यर्थः। एवं सति कथमिदं सिद्धिबाह्यं स्वरूपासाधकं सिद्धवल्लक्षणं स्यान्न कथमपीत्यर्थः ॥ ५३२ ॥

सु० टी०—लक्षणवाक्यस्य स्वांशेऽनुवादत्वात्तदंशप्रसिद्धिरवश्यं वाच्येत्याह—

न खल्वीदृशं कारणं लोकसिद्धं
यतोऽनूद्य तल्लक्षणं तेन लक्ष्यम्।
व्यवस्थापयन्ती प्रवृत्तैवमेषा
विधत्तेऽनुवक्तीति चैतद्विरुद्धम् ॥ ५३३ ॥

न खल्विति। ततश्च कथं तदनुवादेन लक्ष्यव्यवस्थापनाय श्रुतिः प्रवृत्तेत्यर्थः। नन्विदमेव वाक्यं बोधकमनुवादकं च स्यादिति नेत्याह—विधत्त इति। सकृच्छ्रुतस्योभयार्थत्वासंभवादित्यर्थः ॥ ५३२ ॥

अ० टी०—एतादृशस्यापि कारणस्य 'एकं चेतनमस्य यत्प्रकृतितामापन्नमुत्प्रेक्ष्यते' इत्यत्र प्रसिद्धमवोचामेति चेत्तत्राऽऽह—न खल्वीदृशमिति। लोकशब्देन प्रत्यक्षादिप्रमाणमभिप्रेयते। जनश्रुतिमात्रमीदृशं कारणं प्रत्यक्षादिप्रमाणान्यतमेनापि न खलु सिद्धमित्यर्थः। यद्यप्येकं चेतनमित्यादौ संभावनोक्ता तस्या उत्प्रेक्षामात्रत्वादुत्प्रेक्षायाश्चार्थनियमाभावात्तत्सिद्धं न सिद्धमेवेति भाव्यं यतः प्रमाणसिद्धस्तत्कारणलक्षणमनूद्य तेन लक्षणेन तल्लक्ष्यं व्यवस्थापयन्त्येषा श्रुतिः प्रवृत्तेति मतं तदीदृशं कारणं न खलु लोकसिद्धमिति योजना। मा भूत्तर्हि लोकतः सिद्धिः श्रुतिरेवैषा यत इत्येकवचनपञ्चमीभ्यामेतादृशं कारणं

साधयत्विति चेन्नैवमस्याः श्रुतेरनुवादस्वरूपत्वात्तदनुवादविधानयोरेकस्मिन्वाक्ये प्रत्येतुमशक्यत्वादित्याह—**विधत्तेऽनुवक्तीति चैतद्विरुद्धमिति** ॥ ५३३ ॥

**सु० टी०—परिहरति—**

**अनुवददिदमेव वाक्यमर्था-**
**दुपनयतीदृशकारणं प्रसिद्धम् ।**
**अनुवदनमशक्यमन्यथा स्या-**
**दवगतगोचरमेव हीदमिष्टम् ॥ ५३४ ॥**

अनुवददिति । **यदीदृशं तद्ब्रह्मेत्येवं सिद्धवदनुवददिदमेव यत इति-वाक्यप्रसिद्धस्यानुवादानुपपत्तेरीदृशमभिन्ननिमित्तोपादानमर्थाद्बोधयतीत्यर्थः** ॥ ५३४ ॥

अ० टी०—परिहरति—**अनुवददिदमिति** । इदमेव वाक्यमेकं चेतनं सर्वज्ञं सर्वशक्ति जगतोऽधिष्ठातृ प्रकृतिश्चेति यत्कारणं संभाव्यते तद्ब्रह्मेत्यनुवदत्सिद्धवन्निर्दिशदर्थात्सिद्धवन्निर्देशसामर्थ्यादीदृशं कारणं प्रसिद्धमुपनयति विदधाति । अर्थसिद्धिमेवोपपादयति—**अनुवदनमिति** । इदमनुवदनमित्यर्थः । एतदुक्तं भवति प्रमितिं विनाऽनुवादायोगादन्यतश्चाप्रमितेः प्रामाण्यभूतया श्रुत्यैतादृशस्य जगत्कारणस्य सिद्धवदनुवादादेवेदं ब्रह्म कारणं प्रामाणिकं नान्यदन्यैरुत्प्रेक्षितं प्रधानादीत्यर्थाद्विधिरपि सिध्यतीति ॥ ५३४ ॥

**सु० टी०—तत्र दृष्टान्तमाह—**

**यथा विशिष्टस्य विधानतोऽर्था-**
**द्विशेषणानां घटते विधानम् ।**
**स्थितेऽनुवादेऽपि तथेह योज्य-**
**मनूयमानेऽपि जगन्निदाने ॥ ५३५ ॥**

यथेति । **यथा ' सोमेन यजेत ' ' आग्नेयोऽष्टाकपालः ' इत्यादिविशिष्टविध्यन्यथानुपपत्त्याऽर्थाद्विशेषणानामपि विधिः सिध्यति तथेहाप्यनुवादसामर्थ्यादेव तादृक्कारणसिद्धिरित्यर्थः । अनुवादत्वमेव कुत इति चेत्तत्राऽऽह**—स्थित इति । **यच्छब्दादियोगित्वेनेति शेषः** ॥ ५३५ ॥

अ० टी०—अनुवादबलादेवार्थाद्विधिसिद्धौ दृष्टान्तमाह—**यथा विशिष्टस्येति** । ' सोमेन यजेत ' इत्यादौ यथा सोमादिविशिष्टस्य यागस्य विधानादर्थाद्विशेषणानां सोमादीनामपि विधानं घटते विशिष्टविधौ हि विशेषणमपि विधीयते तस्य चाप्रसिद्धत्वे सिद्ध-

वत्कारेण विशिष्टविधानायोगाद्विपयस्य दध्यादाविव वाक्यन्तरप्रापितस्येहाभावाद्यथा विशेषणविधानमर्थसिद्धमिति दृष्टान्तभागार्थः । दार्ष्टान्तिकमाह—**स्थित इति** । तथेहापि वाक्येऽनुवादे स्थिते सत्यनुवादबलादनूद्यमानेऽपि जगन्निदानेऽर्थाद्विधानं योज्यमित्यर्थः । यतो भूतोत्पत्तिस्थितिलया भवन्ति तद्ब्रह्मेति भूतोत्पत्त्यादिहेतुत्वाधारस्य ब्रह्मत्वविधानं भूतोत्पत्त्यादिहेतुसिद्धिमन्तरेण नोपपद्यतेऽसिद्धसद्भावस्यानुवादासंभवादतोऽनुवादसामर्थ्यादेतादृक्कारणवस्तुसिद्धिरित्यवसीयते । यथा 'सोमेन यजेत' इत्यत्र सोमविशिष्टयागविधाने विधेयविशेषणस्य सोमस्य कुतश्चित्सिद्धिराक्षिप्यते तद्वत् । यद्यपि दृष्टान्ते सोमस्य विशेषणत्वं दार्ष्टान्तिके जगदुत्पत्त्यादिहेतुत्वस्योपलक्षणत्वमिति वैषम्यमिति तथाऽपि सिद्धवन्निर्देशसामर्थ्यादर्थस्वरूपसिद्धौ दृष्टान्ते न विरोध इति गमयितव्यम् ॥ ५३५ ॥

**सु० टी०—नन्वनुवादिश्रुतेरेवार्थादपि तादृक्कारणप्रमितौ व्यापारभेदाद्वाक्यभेद इति चेन्नानुवादानुपपत्तिकल्पितवाक्यान्तरादेव तत्प्रमितेर्भट्टसिद्धान्तादित्याह—**

**अथ वाऽनुवादमुपलभ्य ततो-**
**नुपपद्यमानवपुषः प्रमितेः ।**
**अपरं निमित्तमिह कल्प्यमिति**
**प्रवदन्ति केचिदभियुक्ततराः ॥ ५३६ ॥**

अथ वेति । **अपरं निमित्तं वाक्यान्तरं कल्प्यं न त्विदमेव तत्प्रमापकमित्यर्थः ॥ ५३६ ॥**

अ० टी०—यदा प्रमाणभूतया श्रुत्याऽनुवादादेवेदं प्रामाणिकमिति कल्प्यते तदा प्रमाणेन सहैव तत्कल्प्यत इत्यन्यदेवात्र प्रमाणमनुवादबलात्कल्पितं स्यान्न त्वनुवादश्रुतेरर्थाद्विधायकत्वक्लृप्तिरर्थादपि विधौ वाक्यभेदस्यापरिहरणीयत्वादिति पूर्वापरितोषेणाऽऽह—**अथ वाऽनुवादमिति** । प्रमितिं विनाऽनुपपद्यमानवपुषोऽसंभावितार्थस्यानुवादमुपलभ्य ततोऽनुवादादुपपादिकायाः प्रमितेरुत्पादकमपरं निमित्तं प्रमाणमिह कल्प्यं न त्विदमेव वाक्यं तस्याः प्रमितिर्निमित्तमिति केचिदभियुक्ततराः प्रवदन्तीति योजना । अत्र तरपः प्रयोगादयमेव पक्षोऽत्र युक्त इति भावः ॥ ५३६ ॥

**सु० टी०—कथं तर्हि विशिष्टविधावर्थाद्विशेषणविधिरुक्त इति चेन्न सा हि गुरोरपव्याख्यैवेत्याह—**

**अपि विशिष्टविधौ वचनान्तरा-**
**दनुपपत्तिबलानुमितादिह ।**

विधिरशेषविशेषणगोचरो
न तु पुनस्तत एव विधानतः ५३७ ॥

अपीति । तत्रापि सिद्धवद्विशेषणविशिष्टविध्यनुपपत्तिकल्पिततत्तद्विध्यन्तरादेव तस्य तत्तद्विशेषणविशेष्यविषयत्वं न तु स एव विधिस्तन्त्रेणाऽऽवृत्त्या वा विशेषणादौ व्याप्रियते विशिष्टपरत्वविरोधाद्वाक्यभेदप्रसङ्गाच्चेत्यर्थः ॥ ५३७ ॥

अ० टी०—तर्हि विशिष्टविधौ कथमिति चेत्तत्रापीत्थमेव युक्तमित्याह—अपि विशिष्टविधाविति । विशिष्टविधावपीह विशिष्टविधिवाक्ये विशेषणत्वसिद्धवत्कारेण विशिष्टविधानानुपपत्तिबलानुमिताद्वचनान्तराद्विशेषणविधायकविषयादेवाशेषविशेषणगोचरो विधिः कल्प्यते न तु नैव पुनस्तत एव विधानतो विशिष्टविधायकादेव वाक्याद्विशेषणविधिसिद्धिः कल्प्येति योजना । किं तद्विशेषणविधायकं वाक्यान्तरमिहानुपपत्तिबलात्सिद्धमित्यन्वेषणान्नैवं सति स्यादिति न शङ्काया अस्मादेवानुवादबलात्तत्सद्भावस्य तत्प्रकारस्य च निश्चितत्वोपपत्तेस्तथैव प्रकृतवाक्येऽपि प्रमाणान्तरान्वेषणप्रसङ्गानवसर इति द्रष्टव्यम् ॥ ५३७ ॥

सु० टी०—नन्वेवमनुवादसामर्थ्यादेव जगत्कारणसिद्धौ न स्वरूपसिद्ध्यर्थं लक्षणमित्युक्तविरोध इति नेत्याह—

जन्मादिलक्षणमिदं जगतो यदुक्तं
सद्ब्रह्मणस्तदिह चिह्नतयोपदिष्टम् ।
नास्मिन्प्रमाणमपरे पुनरेतदेव
ब्रह्मप्रमाणमनुमानमुदीरयन्ति ॥ ५३८ ॥

जन्मादीति । इदं ब्रह्मणश्चिह्नतया व्यावर्तकतयैवोपदिष्टं न प्रमाणतया मानान्तरसिद्धानुवादित्वादित्यर्थः । अस्तु लक्षणवाक्यमेवानुमानत्वेन ब्रह्मणि प्रमाणमिति तार्किकाशङ्कामनुवदति—अपर इति ॥ ५३८ ॥

अ० टी०—तदेवमुक्तप्रकारेणानुवादमुखेनाद्वितीयचेतनकारणसमर्पणसंभवात्तेन लक्षणेन ब्रह्मणो महावाक्यगतब्रह्मपदशक्त्या सामान्यतः प्रसिद्धस्य परिच्छिन्नवस्तुव्यवच्छेदेन निरङ्कुशमहत्त्वोपेततया लक्षयितुं शक्यत्वाद्यथाश्रुतिलक्षणार्थमेवेदं 'यतो वा इमानि भूतानि' [ तै० ३ । १ । १ ] इत्यादिजगत्कारणवादिवाक्यं नत्वत्यन्तमप्रसिद्धब्रह्मणि प्रमाणकथनार्थमिति सिद्धमिति स्वमतमुपसंहरति—जन्मादीति । यदिदं जगतो जन्मा-

दिलक्षणं जन्मस्थितिलयरूपमुक्तं श्रुत्या तत्सद्ब्रह्मणः सच्छब्दनिर्दिष्टस्य प्रकाशसन्मात्रतत्त्वस्य ब्रह्मणश्चिह्नतयोपदिष्टं लक्षणत्वेनैवाऽऽख्यातं न पुनरस्मिन्ब्रह्मणि प्रमाणमिदं वाक्यमभिमतमित्यर्थः । नास्मिन्प्रमाणमिति निषेधस्य कुतः प्राप्तिरिति तत्राऽऽह—अपरे पुनरिति । लक्षणकथनमुखेनापीदं वाक्यं ब्रह्मणि प्रमाणमेवेति युक्तं यतोऽपरे नैयायिकादय एतदेव वाक्यं ब्रह्मसद्भावसाधकप्रमाणमनुमानं कार्यलिङ्गमुक्तमित्युदीरयन्त्यतः प्राप्तेः प्रतिषेधः कृत इत्यर्थः ॥ ५३८ ॥

सु० टी०—तेषामभिप्रायं विवृणोति—

कार्यानुमानपरतन्त्रमिदं हि शास्त्रं
शास्त्रस्य नोपकरणं तदितीक्षमाणाः ।
तद्दुर्घटं न खलु कारणमद्वितीयं
चैतन्ययुक्तमिति कार्यवशात्प्रतीमः ॥ ५३९ ॥

कार्येति । इदं शास्त्रं न स्वतन्त्रमर्थान्तरशङ्काग्रस्तत्वात् । किं तु कार्यानुमानसिद्धजगत्कारणानुवादकत्वात्तत्परतन्त्रमिति पश्यन्तोऽनुमानतुल्यविषयत्वाल्लक्षणवाक्यानामनुमानतया योजनमिच्छन्ति । अस्तु को दोष इति चेत्तत्राऽऽह—तदिति । कार्यलिङ्गकानुमानाद्धि कर्त्रेकत्वमपि न सिध्यति कुत उपादानाभिन्नः सर्वज्ञः । नित्यकृतिस्वीकारे हि तस्य ज्ञानसिद्धिरेव दुर्लभा जन्यकृतिस्त्वशरीरस्य बाधितैव यदर्थं ज्ञानापेक्षेत्याह—चैतन्येति । कार्येति । कार्यत्वादीनामीशेन कर्त्रा व्याप्त्यग्रहादित्यर्थः ॥ ५३९ ॥

अ० टी०—अनुमानवादिनामभिप्रायं प्रकटयति—कार्यानुमानपरतन्त्रमिति । कार्यलिङ्गानुमानपरतन्त्रं हि इदं शास्त्रं 'यतो वै' [ तै० ३ । १ । १ ] इत्यादिरूपं संभावनापनयेन शास्त्रोपकारकं न निश्चितमेव तदनुमानं शास्त्रस्य नोपकरणं शास्त्रोक्तेऽर्थे संभावनापनयेन शास्त्रोपकारकं भवतीतीक्षमाणा एतदनुमानमुदीरयन्तीति पूर्वेणान्वयः । कार्यलिङ्गकानुमानसिद्धेश्वरप्रणीततयाऽऽप्तवाक्यत्वाद्धि वेदप्रामाण्यमतो ब्रह्मणि वाक्यवृत्तिसंभवेऽपि तस्यानुमानगम्याधिकार्थसमर्पकत्वाभावादनुमानात्मनैवैवंविधवाक्ययोजनमुचितमिति भावः । एवं युक्तिसिद्धं मतं दूषयति—तद्दुर्घटमिति । दुर्घटमेव कस्माद्भवद्भिरपनेष्यत इति चेदसंभवादेवेति तन्मतं प्रकटयति—न खल्विति । अक्षरार्थस्त्वतिरोहितः । एतदुक्तं भवति—अस्य वाक्यस्यानुमानोपन्यासार्थत्वमेव यदाऽऽश्रीयते तदा यादृशं ब्रह्मेह जगत्कारणतया प्रतिपिपादयिषितं तादृशं न सिध्येत्सर्वचेतनस्वभावविलक्षणं हि ब्रह्मेह कारणत्वेनोपलिलक्षयिषितं न

हि कार्यत्वादिलिङ्गानां तादृशे व्याप्तिसिद्धिरस्ति दृष्टान्तभूतस्य तादृशस्यासंभवाद्द्वितीया-खण्डवस्तुनश्चेतनस्यानङ्गीकारे च ब्रह्मपदशक्तिरकस्मात्संकुचेत्तरमात्सामान्यतः प्रसिद्धस्य जगत्कारणस्य सर्वोपादाननिमित्ततया सर्वानुस्यूतसन्मात्रत्वेन परिपूर्णब्रह्मत्वमन्यतोऽप्रसिद्धं लक्षयितुमेवेदं वाक्यमनन्यशेषभूतं प्रवृत्तमिति ॥ ५३९ ॥

सु० टी०—ननु यथा लिङ्गस्य सर्वज्ञेन सह न व्याप्तिरेवं शब्दस्यापि न तत्र शक्तिरिति तुल्यमिति चेत्तत्राऽऽह—

वेदान्तवाक्यमिह येन यथा प्रवृत्तं
लोकप्रसिद्धपदशक्तिमुपाददानम् ।
विश्वोद्भवस्थितिलयप्रकृतौ निमित्ते
सच्चित्सुखात्मनि परात्मनि नैवमन्यत् ॥ ५४० ॥

वेदान्तेति । लोकसिद्धपदशक्त्यनुसाराद्विलक्षणयाऽपि शब्दस्य तत्र प्रवृत्तिरुपपादिता लिङ्गस्य तु न व्याप्त्या पक्षधर्मतया वा विना सामर्थ्य-मित्यर्थः ॥ ५४० ॥

अ० टी०—नन्वागमोऽपि कथमीदृशे मानान्तरागोचरे कारणे ब्रह्मणि मानं स्यात्तस्यापि मानान्तराधीनव्युत्पत्त्यधीनत्वादर्थबोधनप्रवृत्तेरिति चेन्नैवमागमस्य ब्रह्मणि प्रामाण्यप्रकारस्य पूर्वमुपपादित्वादिति तदेव स्मारयति—वेदान्तवाक्यमिति । इह ब्रह्मणि परमात्मनीति संबन्धः ॥ ५४० ॥

सु० टी०—ननु यादृशमनुमानात्कारणं सिध्यति तत्परतयैव श्रुतिर्योज्या तत्सापेक्षत्वात्तस्या इति चेन्न श्रुतहान्यादिप्रसङ्गादित्याह—

भङ्क्त्वा कथंचिदनुमानवशेन सिद्धे
सर्वेश्वरे कणभुगादिभिरुच्यमाने ।
वेदान्तवाक्यमपि योज्यमतोऽनुमाने
सापेक्षतोपनिषदां यदि साहसं तत् ॥ ५४१ ॥

भङ्क्त्वेति । अनुमानलभ्ये सर्वेश्वरे परिच्छिन्ने वेदान्तवाक्यं भङ्क्त्वा कथंचिद्गौण्यादिनाऽपि योज्यमिति दर्पणोपनिषदां सापेक्षतोक्तिरतीन्द्रियमात्रसिद्धिप्रत्यनीकत्वात्साहसमित्यर्थः ॥ ५४१ ॥

---

१ ग. न यथा । २ ग. °मानसा° ।

अ० टी०—सत्यमेतादृशं कारणमनुमानान्न सिध्यत्येव तथाऽपि यादृशं तु सिध्यत्य-नुमानात्तद्विषयमेव वेदान्तवाक्यमपि योज्यमतोऽनुमानसापेक्षत्वात्तस्येति कणादिदिमतमाश-ङ्क्य श्रुतहान्यश्रुतकल्पनाप्रसङ्गान्नैवमित्याह—मङ्क्त्वेति । अद्वितीये ब्रह्मणि जगतोऽभिन्ननिमित्तोपादाने श्रुतेः प्रवृत्तिस्वारस्यं शब्दसामर्थ्यनिबन्धनं भङ्क्त्वाऽनुमानवशेन सिद्धे सर्वेश्वरे तटस्थे वेदान्तवाक्यमपि कथंचिद्योज्यमित्यतोऽनुमान उपनिषदां यदि सापेक्षता कल्प्येत तत्साहसमिति योजना । पुरुषोत्प्रेक्षितानुमानवशादपौरुषेयवेदवाक्यस्य स्वारस्यभङ्गेनानुमानानुगुणत्वकल्पनं प्रामाणिकानां न युक्तमिति भावः ॥ ५४१ ॥

सु० टी०—ननु त्वयाऽपि क्वचिद्वेदान्तवाक्यानामुपचाराङ्गीकारात्क-थमत्र तदाश्रयणं साहसमिति चेत्तत्राऽऽह—

निष्कारणं श्रुतिशिरोवचनस्य भङ्गं
ये वर्णयन्ति सहसा स्वमनोरथेन ।
दीप्तस्य दावदहनस्य न ते किमर्थं
ज्वालां पिबन्ति कथनीयमिदं बहुज्ञैः ॥ ५४२ ॥

निष्कारणमिति । सर्वथा यत्र मुख्यार्थानुपपत्तिस्तत्र तथाऽस्तु तां विना तु लौकिकवाक्येष्वपि मुख्यार्थभङ्गः साहसमेव श्रुतिवाक्यस्य तु माना-न्तरागोचरार्थस्य न्यायानुगतमुख्यार्थसंभवेऽपि सहसा बलेन तात्पर्य-मज्ञात्वाऽपि स्वकल्पितन्यायविरोधानुसंधानमात्रेणोपचरितार्थत्वं ये वर्ण-यन्ति ते दावदहनज्वालामपि कृतकत्वाज्जलवच्छीतलामनुमाय पिबेयु-रित्यर्थः ॥ ५४२ ॥

अ० टी०—ननु सर्वेषां वेदान्तानां न मुख्यार्थलाभः क्वाप्यस्ति लाक्षणिक्या वृत्तेरपि बाहुल्येनोपलम्भादतोऽत्रापि केषांचित्पदानामनुमानगुणतया तादृशवृत्त्याश्रयणं न साहस-मिति चेन्नैवमतिसाहसत्वादिह तत्कल्पनाया इत्याह—निष्कारणमिति । निगदव्या-ख्यातं पद्यम् । सर्वत्रापि मुख्यार्थस्यान्वयासंभवप्रकारप्रयुक्ता लक्षणेति स्थितिरिह च मुख्यार्थसंभव उपपादितो निष्कारणमेव मुख्यार्थत्यागोऽतिसाहसमेव विशेषतो वेदवाक्येषु वेदार्थस्य मानान्तरागम्यत्वाद्यथाशब्दमेवाऽऽश्रयणीयत्वान्मानान्तरागम्ये त्वर्थे तदनुरोधा-दपि स्यात्क्वचिच्छब्द उपचारवृत्तिरिति भावः ॥ ५४२ ॥

---

१ क. °क्यस्यानुपा° ।

सु०टी०—अस्त्यत्रापि लक्षणाबीजमन्वयायोग्यत्वमिति कथं निष्कारणत्वमिति शङ्कते—

ननु सच्चिदादिवपुषो जगतः
प्रकृतित्वबोधनमकारणकम् ।
परमात्मनो न हि पदार्थयुजा
रहितेह संभवति योग्यतया ॥ ५४३ ॥

नन्विति । सच्चिदद्वितीयकूटस्थस्य यच्छब्दार्थस्य पञ्चम्या जगत्प्रकृतित्वबोधनमहेतुकमेव तस्योपादानत्वायोग्यत्वेन प्रकृतिप्रत्ययार्थयोरन्वयासंभवादित्यर्थः ॥ ५४३ ॥

अ० टी०—नन्वत्रापि मुख्यार्थान्वयासंभवोऽस्ति लक्षणानिमित्तमिति चोदयति—ननु सच्चिदादिवपुष इति । सच्चिदादिवपुषः कूटस्थस्य परमात्मनो जगतः प्रकृतित्वबोधनमकारणकं संभावनाकारणरहितम् । कुत इत्यत आह—न हीति । योग्यतया रहिता पदार्थयुजा पदार्थयोग इह शब्देऽर्थे वा न हि क्वचित्संभवतीति योजना । कार्योपादानत्वायोग्ये तत्प्रतिपादकशब्दवृत्तिमुख्यत्वं युक्तमित्यर्थः ॥ ५४३ ॥

सु० टी०—कथमुपादानत्वायोग्य आत्मेति चेत्तत्राऽऽह—

उपादनता सच्चिदानन्दमूर्ते-
र्विरुद्धा जडेष्वेव सा दृश्यते हि ।
विरुद्धैः पदार्थैर्न वाक्यार्थसिद्धि-
र्न खल्वग्निनोक्षेदितीहान्वयोऽस्ति ॥ ५४४ ॥

उपादानतेति । चेतनोपादानकत्वे कार्यमपि जगच्चेतनं स्यादिति तत्र जाड्यप्रत्यक्षविरोधोऽप्रसिद्धकल्पना चेत्यधिष्ठाता चेतन उपादानं त्वचेतनमेवोचितमित्यर्थः ॥ ५४४ ॥

ननु काऽत्रोपादानयोग्यत्वायोग्यतेति तामाह—उपादानतेति । अचेतनं जगत्प्रति सच्चिदानन्दरूपस्य चेतनस्योपादानता विरुद्धप्रमाणान्तरबाधितेत्यर्थः । तत्र हेतुमाह—जडेष्वेवेति । हि यतो यत्रोपादानत्वं दृष्टं तत्राचेतनत्वमेवोपलब्धमित्यर्थः । अचेतनस्य चेतनोपादानकत्वासंभवफलमाह—विरुद्धैरिति । विरुद्धार्थासंगतावुदाहरणमाह—न खल्विति । तस्मादयोग्यानामन्वयाभावस्य लोकसिद्धत्वाद्भवतां च संप्रतिपन्नत्वाच्चेतनस्याचेतनोपादानत्वानिश्चये सति वाक्ये प्रतीयमानमप्युपादानत्वं न विवक्षितं किं तु

कार्योत्पत्त्यादौ नियतस्याधिष्ठातुरीश्वरस्य सद्भावप्रतिपादनानुकूलेन लक्षणया गौण्या वृत्त्या वेदान्तवाक्यं योज्यमित्यभिप्रायः ॥ ५४४ ॥

सु टी०—परिहरति—

उपादानता चेतनस्यापि दृष्टा
यथा स्वप्नसर्गे विचित्रे प्रतीचः ।
यथा चोर्णनाभस्य सूत्रेषु पुंसां
यथा केशलोमादिसृष्टौ च दृष्टा ॥ ५४५ ॥

उपादानेति । चेतनस्यापि प्रतीच उपादानत्वं स्वप्नसृष्टौ दृष्टमन्यस्य तत्रासंभवादविद्यायाश्च द्वारमात्रत्वादेवं जागरेऽपीत्यर्थः । तथाहि घटः सन्निति सत्तादात्म्यानुभवो न पराभिमतसत्ताजातिविषयस्तज्जातौ माना-भावात् । न च सदनुगतधीरेव तन्मानं तस्याः सत्संबन्धमात्रविषयतया मृद्घट इतिवद्धर्मिविषयत्वेनाप्युपपन्नत्वेन धर्मासाधकत्वात् । न च घट-निष्ठत्वेन प्रतीतेः सा धर्मस्तस्या बाधायोग्यत्वरूपाया घटेऽवृत्तेः । न हि घटस्याबाध्यत्वे मानमस्तीति कालत्रयाबाध्यश्चिदात्मैव सर्वत्रोपा-दानतयाऽनुस्यूतः सद्बुद्धिविषयो जाड्यबुद्धिस्त्वविद्याकृतेति द्रष्टव्यम् । एवं लूताकीटस्य सूत्रे पुंसां केशलोमादावुपादानत्वश्रुतेः । न च लूता तन्तोर्निमित्तं तत्र तन्तोर्लयविरोधात् । नापि केशादेर्देह उपादानं मृते दर्शनात् ॥ ५४५ ॥

अ० टी०—यदचेतनं कार्यं तदचेतनोपादानकं न क्वापि चेतनोपादानकमिति व्याप्ते-र्व्यभिचारं वदन्परिहरति—उपादानतेति । प्रतीचः प्रत्यगात्मनो निद्राभिभूतसकल-करणग्रामस्येत्यर्थः । ऊर्णनाभो लूताकीटः । अन्यत्प्रसिद्धं दृश्यते त्विति सिद्धान्तस्तत्रैतद्वा-व्यकारैः प्रपञ्चितमिह संगृहीतमिति द्रष्टव्यम् । न चोर्णनाभपुरुषयोरचेतनभाग एवाचेतनो-पादानं न चेतनभागोऽपीति वाच्यं लोकप्रसिद्धस्यैव दृष्टान्तितत्वाल्लोके चोर्णनाभादौ चेत-नत्वप्रसिद्धेः । न हि घटकुड्यादिवदूर्णनाभपुरुषादिरूपमचेतनं मन्यन्ते लौकिकास्तस्मान्न काचिदिहानुपपत्तिरिति भावः ॥ ५४६ ॥

सु० टी०—परेषामपि चेतनोपादानत्वं प्रसिद्धमित्याह—

बुद्ध्यादिकार्येष्वपि चेतनोऽयं
भवेदुपादानमितीष्यते च ।

---

१ क. ग. न्भस्य च त्रि° । २ क. ग. °न चेतनप° ।

आत्मा गुणी ते च गुणाः प्रसिद्धा
गुणी गुणानां प्रकृतिश्च सिद्धा ॥ ५४६ ॥

बुध्यादीति । बुद्धिसुखादिषु ज्ञानशक्त्याधार आत्मोपादानमिति तार्किकैरिष्यते गुणगुणिभावाभ्युपगमादित्यर्थः ॥ ५४६ ॥

अ० टी०—लोकदृष्ट्या व्याप्तेर्व्यभिचारमुक्त्वा वैशेषिकादिदृष्ट्याऽप्याह—बुद्ध्यादीति । इष्यते च वैशेषिकादिभिरिति शेषः । एतदेव स्पष्टयति—आत्मा गुणीति । आत्मा बुद्ध्यादिगुणोपादानं गुणत्वात्पटादिवदित्यर्थः ॥ ५४६ ॥

सु० टी०—ततश्च श्वेतनोपादानानुवादो युक्त इत्युपसंहरति—

आकाङ्क्षादिर्विद्यते योग्यतान्ता
यस्मादस्मिन्नागमे जायमाने ।
सामग्री या वैदिकैरस्य दृष्टा
तस्माद्युक्ता योनिता चेतनस्य ॥ ५४७ ॥

आकाङ्क्षेति । अस्मिंश्चेतने विषय आगमसंबन्धिनि ज्ञाने जायमानेऽस्य यत इतिवाक्यस्याऽऽकाङ्क्षादिरूपा सामग्री वैदिकैर्दृष्टा यस्माद्विद्यते तस्माद्योनिता तस्य युक्तेत्यन्वयः ॥ ५४७ ॥

अ० टी०—एतौ च चोद्यपरिहारौ यद्यप्यविरोधाध्यायसंगतौ तथाऽपीह जगत्कारणवादिवाक्यगतपदानामन्वययोग्यतासिद्ध्यर्थमानीतावतो योग्यतायाः सद्भावाच्चेतनोपादानकत्वमचेतनस्य वाक्यादवगन्तुं शक्यमित्यवान्तरप्रकृतमुपसंहरति—आकाङ्क्षादीति । आदिपदात्संनिधिर्गृह्यते । यस्मादस्मिन्ब्रह्मण्यागमे वेदान्तवाक्ये बोधकतया जायमानेऽभिव्यज्यमानेऽस्मिन्नागम इति सामानाधिकरण्यं वाऽस्याऽऽगमस्य या सामग्री वैदिकैर्दृष्टा साऽऽकाङ्क्षादिर्योग्यतान्ता विद्यत इति योजना । शब्दस्य स्वार्थमुख्यत्वे सिद्धे फलितमाह—तस्माद्युक्तेति । योनितोपादानता । यद्वाऽस्मिन्यत इत्याद्यागमे या सामग्री वैदिकैर्दृष्टा साऽऽकाङ्क्षादिर्योग्यतान्ता जायमाने जनिमद्विषये विद्यते यत्प्रकृतित्वं ब्रह्मणः प्रतिपाद्यत इति योजना । शेषं समानम् । अथवा शब्दस्यार्थबोधने याऽऽकाङ्क्षादिरूपा सामग्री वैदिकैर्दृष्टा साऽस्मिन्नागमे जायमाने विषये विद्यत इति योजना । सर्वथाऽपि योग्यार्थसंबन्धोऽस्मिन्विद्यत इत्यर्थः ॥ ५४७ ॥

---

१ ग. °गमाज्जाय° ।

सु० टी०—तस्माज्जिज्ञास्यत्वेनोक्तस्य ब्रह्मणो लक्षणार्थमेव यत इत्यादि न त्वनुमानार्थमित्याह—

तस्मादेतल्लक्षणं चिह्नमाहु-
र्नैतत्तस्मिन्ब्रह्मणि स्यात्प्रमाणम् ।
आम्नायस्य स्वप्रधानत्वहेतो-
र्लिङ्गस्यास्मिञ्छेषभावाच्च नित्यम् ॥ ५४८ ॥

तस्मादिति । न प्रमाणमनुमानात्मकमित्यर्थः । श्रुतिः संदिग्धार्थत्वादनुमानसापेक्षेति चेत्तत्राऽऽह—आम्नायस्येति । श्रुतिरपौरुषेयत्वात्स्वतः प्रमाणं कार्यलिङ्गं तु तत्र तर्कमात्रमित्यर्थः ॥ ५४८ ॥

अ० टी०—तस्मान्मुमुक्षोर्जिज्ञास्यब्रह्मलक्षणार्थमेव यतो वा इत्यादिवाक्यं नानुमानोपन्यासार्थमिति सिद्धमिति परमप्रकृतमुपसंहरति—तस्मादिति । एतज्जगज्जन्मादिहेतुत्वं ब्रह्मणो लक्षणमाहुर्वैदिका इति योज्यम् । लक्षणशब्दस्य क्वचित्प्रमाणेऽपि प्रयोगदर्शनात्प्रमाणतेह मा भूदित्यर्थं चिह्नमित्युक्तम् । एतद्वाक्यं तस्मिञ्जगत्कारणे ब्रह्मणि प्रमाणमनुमानरूपं न स्यान्नैतदनुमानविधया ब्रह्मणि प्रमाणमित्यर्थः । कुत इत्यत आह—आम्नायस्येति । स्वप्रधानत्वमाम्नायस्यापौरुषेयतया मानान्तरानपेक्षत्वं तस्माद्धेतोः । न ह्यपौरुषेयस्यात्यन्तातीन्द्रियार्थबोधनसामर्थ्यस्याप्यागमस्य पुरुषबुद्ध्युत्प्रेक्षितव्याप्त्यादिसहायमपेक्ष्यानुमानतया बोधकत्वं वैदिकैरभ्युपगन्तुं युक्तमित्यर्थः । न चेश्वरसद्भावानुमानापेक्षत्वाद्वेदस्यानुमानसिद्धेश्वरप्रणीततया वेदप्रामाण्यस्य लक्षयितव्यत्वात्कथं न सापेक्षत्वमागमस्येति वाच्यमस्याः शङ्कायाः पूर्वं मीमांसकैरेव प्रथमपादे परिहृतत्वादत्रापि तद्विशेषस्य वक्ष्यमाणत्वादिति भावः । किंचास्मिन्नाम्नाये लिङ्गस्य कार्यत्वलक्षणस्य नित्यं सदा शेषभावादुपजीव्यत्वादित्यर्थः । दृष्टव्याप्त्युपजीव्यर्थवादतयैव तस्य श्रुतिपूपन्यासादनुमानस्यैवास्य श्रुतिसापेक्षतेत्यर्थः । विनो लिङ्गस्यात्यन्तातीन्द्रियार्थे बुद्धिजननसामर्थ्याभावाच्चेति चकारार्थः ॥ ५४८ ॥

सु० टी०—तेन सृष्टिवाक्यानां नानाविधोपक्रमविरोधान्न सृष्टौ तात्पर्यं किं तूक्तक्रमेण ब्रह्मण्येवेत्याह—

इत्थं जगत्कारणवादिवाक्यं
समन्वितं ब्रह्मणि तत्पदार्थे ।
तल्लक्षणं तस्य तटस्थभूत-
मानन्त्यसिद्ध्यै कथयद्यथोक्तम् ॥ ५४९ ॥

इत्थमिति । कथमित्याह—तदिति । तत्तटस्थलक्षणं तत्पदार्थे परिच्छेदव्यावृत्त्यै कथयदित्यर्थः ॥ ५४९ ॥

अ० टी०—यतो वा इत्यादिजगत्कारणवादिवाक्यस्य ब्रह्मणि समन्वयप्रकारमुपपादितमुपसंहरति—इत्थमिति । इत्थमुक्तप्रकारेण तत्पदार्थे ब्रह्मणि जगत्कारणत्ववादिवाक्यं समन्वितमित्यन्वयः । किं कुर्वदित्युच्यते तस्य ब्रह्मण आनन्त्यसिद्धयै परिच्छेदव्यावृत्त्यर्थं तटस्थभूतमुपलक्षणभूतं यथोक्तं जगज्जन्मादिहेतुत्वं तल्लक्षणं तस्य ब्रह्मणो लक्षणं कथयत्सादिति योजना ॥ ५४९ ॥

सु० टी०—तर्हि ब्रह्मातिरिक्तनिमित्ताभावे कथं सृष्टिवैचित्र्यमित्याशङ्क्य वाक्यं विशिनष्टि—

स्वात्मानमेव जगतः प्रकृतिं यदेकं
सर्गे विवर्तयति तत्र निमित्तभूतम् ।
कर्माऽऽकलय्य रमणीयकपूयमिश्रं
पश्यन्नृणां परिवृढं तदितीर्यमाणम् ॥ ५५० ॥

स्वात्मानमिति । यदेकं चेतनं सर्गकाले तन्निमित्तभूतं नृणां जीवानां रमणीयं पुण्यं कपूयं पापं तदुभयमिश्रं च त्रिविधं कर्मास्येदमस्येदमित्यसंकीर्णं पश्यद्भोगनिमित्तं यत्तत्तेन सृजामीत्याकलय्य तदनुरूपेण स्वात्मानमेव मायया विवर्तयति 'तदात्मानं स्वयमकुरुत' [ तैत्ति० ७।८ ] इति श्रुतेः । तद्ब्रह्मेतीर्यमाणे लक्षणं कथयदिति पूर्वेण संबन्धः ॥ ५५० ॥

अ०टी०—विवक्षितब्रह्मानुगुणसमर्पिकां वाक्यवृत्तिमुपपादितामभिनयेनाऽऽह—स्वात्मानमिति । यदेकं वस्तु सर्गे सर्गकाले प्राप्ते तत्र तस्मिन्सर्गे निमित्तभूतं नृणां प्राणिनां नृग्रहणं श्रैष्ठ्यात् । रमणीयं शुभं कपूयमशुभं मिश्रं शुभाशुभसाम्यलक्षणमिति त्रिविधं कर्म पश्यदवगच्छदाकलय्य संगृह्य सहकारितयोपादाय च तदनुसारेण स्वात्मानमेव जगतः प्रकृतिं कृत्वा विवर्तयति मायया जगद्रूपतामापादयति तत्परिवृढं ब्रह्म सर्वज्ञं सर्वशक्ति नित्यशुद्धत्वादिस्वभावमितीर्यमाणमित्येवं लक्षणं कथयदिदं वाक्यं ब्रह्मणि समन्वितमिति पूर्वेणैव योजना ॥ ५५० ॥

सु० टी०—तर्हि किं समन्वयसूत्रेण जन्मादिसूत्रेणैव वाक्यार्थसिद्धेरिति चेत्तत्राऽऽह—

पदवृत्तिसमन्वयावुभौ प्रतिपाद्यौ प्रथमे हि लक्षणे ।
तदवान्तरवाक्यवर्त्मना पदवृत्तिः प्रथमं प्रकीर्तिता ॥ ५५१ ॥

पदेति । प्रथमाध्याये हि पदार्थवाक्यार्थौं निरूप्यौ तत्र पदलक्ष्यनिरूपणप्राप्तावान्तरवाक्यद्वारा पदवृत्तिरेव निरूपिता न वाक्यार्थ इति तदर्थं तत्र सूत्रमित्यर्थः ॥ ५५१ ॥

अ०टी०—तदेवं जन्मादिसूत्रे जगत्कारणवादिवाक्यानां समन्वयो निरूपित इत्युक्तं तत्रेदमाशङ्क्यते यथा समन्वयसूत्रे सर्वेषामेव वेदान्तवाक्यानां प्रत्यक्स्वरूपे ब्रह्मणि समन्वय इत्युत्सर्गतः सिद्धौ पुनः 'आनन्दमयोऽभ्यासात्' [ ब्र० सू० १ । १ । १२ ] इत्यारभ्येदमिदं वाक्यमस्मिन्नस्मिन्स्वरूपेण समन्वयं गच्छतीति तत्तदाशङ्कानिराकरणेन पश्चादेव विचारितस्तथा 'यतो वा' इत्याद्यपि जगत्कारणवादिवाक्यजातं विचार्यतां किमिति प्रथममस्य विचारः कृत इति तत्रोपपत्तिमाह—पदवृत्तिसमन्वयाविति । हि यस्मात्प्रथमे लक्षणे समन्वयाध्याये पदवृत्तिस्तत्त्वंपदयोः स्वार्थे वृत्तिः समन्वयो नाम तयोरेव पदयोर्वाक्यतामापन्नयोरखण्डे ब्रह्मात्मनि पर्यवसानमेतौ पदवृत्तिसमन्वयावुभौ प्रथमाध्याये प्रतिपाद्यौ न समन्वयमात्रं प्रतिपाद्यं तत्तस्मादवान्तरवाक्यवर्त्मना पदार्थमात्रविषयवाक्यगतिप्रकारेण प्रथमं पदवृत्तिः प्रकीर्तिता पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य पदार्थपरवाक्यविचारो युक्त एव । आनन्दमय इत्यादिविचारस्तु सर्वोऽ[पि] समन्वयविषय एवेति सामान्यतः सिद्धसमन्वयस्य विषयविशेषेण वाक्यविशेषयोजनार्थं इति तस्य युक्त एव पश्चाद्विचार इत्यर्थः ॥ ५५१ ॥

सु० टी०—उद्देश्यार्थत्वात्तर्हि त्वंपदवृत्तिरेव प्रथमं वाच्येति चेत्सत्यमुक्तैव सा प्रथमसूत्र इत्याह—

आद्ये सूत्रे त्वंपदस्योदितत्वा-
द्वृत्तेरस्मिंस्तत्पदस्योच्यमाना ।
वृत्तिर्ज्ञेया तत्पदार्थे द्वितीये
प्रत्यङ्मात्रे त्वंपदस्योदितैव ॥ ५५२ ॥

आद्य इति । जिज्ञासासूत्रे हि त्वंपदवृत्तिरथातःशब्दाभ्यामधिकारिनिरूपणच्छलेनोक्तेति द्वितीयसूत्रे तत्पदस्याद्वैते वृत्तिः क्रमप्राप्तैव ज्ञेयेत्यर्थः । तर्हि सूत्रद्वयोक्तयोर्भिन्नत्वादभेदवाक्यार्थविरोध इति न चेत्तत्राऽऽह—प्रत्यगिति । अद्वैताभेदाविरोधिनि प्रत्यङ्मात्रे लक्ष्य इत्यर्थः ॥ ५५२ ॥

अ० टी०—तर्हि त्वंपदवृत्तिरपि प्रथममेव वक्तव्या सत्यं साऽप्युक्तैव प्रथमसूत्र इत्याह—आद्य इति । त्वंपदस्य वृत्तेरिति संबन्धः । अस्मिन्द्वितीयसूत्र उच्यमाना वृत्तिस्तत्पदस्य

ज्ञेयेति संबन्धः । कस्मिन्नर्थे पदयोरनयोर्वृत्तिरिति तत्राऽऽह—तत्पदार्थ इति । अद्वितीये तत्पदार्थे, तत्पदस्य वृत्तिः प्रत्यङ्मात्रे सर्वान्तराचिद्रूपे त्वंपदस्य वृत्तिरित्यदितैवोक्तिर्भवतीत्यर्थः ॥ ५५२ ॥

सु० टी०—प्रत्यङ्मात्रस्य शुद्धस्य कथमधिकारित्वं साधनसंपत्त्यभावादिति चेत्तत्राऽऽह—

अनधिकारिणि शुद्धचिदात्मके
दृगदृशोरितरेतरविभ्रमात् ।
शमदमादिसमन्वितंतेष्यते
भवति तेन चितोऽप्यधिकारिता ॥ ५५३ ॥

अनधिकारिणीति । यद्यपि शुद्धः शमदमादिसंपदभाजनत्वान्नाधिकारी तथाऽप्यात्मानात्मनोः परस्पराध्यासादनात्मभूतलिङ्गधर्मशमदमाद्यन्वितता प्रतीचोऽप्याध्यासिकी संभवतीत्यर्थः ॥ ५५३ ॥

अ० टी०—ननु कथं प्रथमसूत्रे त्वंपदस्य प्रत्यङ्मात्रे वृत्तिरुक्ता तस्याधिकारिनिरूपणपरत्वादधिकारिणश्च साधनचतुष्टयविशिष्टस्य प्रत्यङ्मात्रत्वायोगादिति चेन्नैवं प्रत्यङ्मात्रस्यैवाधिकारित्वादित्याह—अनधिकारिणीति । शुद्धचिदात्मस्वरूपे स्वतोऽनधिकारिण्यधिकारित्वधर्मरहिते दृगदृशोः प्रत्यक्पराचोरितरेतरविभ्रमात्परस्पराध्यासान्निमित्ताच्छमदमादिसमन्विततेष्यते । तेनाध्यासनिबन्धनेन शमादिना योगेन चितोऽपि स्वतो निर्विशेषचिद्रूपस्याऽऽत्मनोऽधिकारिता युक्तेति योजना । चिद्रूपात्मनोऽन्यस्य जडस्य शमदमादिमत्त्वस्याधिकारिवत्त्वस्यासंभवादुक्तविधया चिदात्मस्वरूपस्यैवाधिकारितेति प्रथमसूत्रेऽधिकारिनिरूपणद्वारेण त्वंपदस्य प्रत्यगात्मनि वृत्तिरुक्तैवेत्यर्थः ॥ ५५३ ॥

सु० टी०—तथाऽपि स्वतो मुक्तासङ्गचिदात्मनि शुद्धे शमदमाद्यध्यासोऽपि कथमिति चेत्तत्राऽऽह—

अनधिकारितया दृगवस्थिता
स्वरसतः परमेश्वरविग्रहा ।
घनतमःपटलावरणान्वया-
दुपगता श्रवणाद्यधिकारिताम्[1] ॥ ५५४ ॥

---

१ क. ख. ग. °रिता ।

अनधिकारीति । यद्यपि हक्परमेश्वरत्वात्स्वभावतोऽसंसारितयैवाव-
स्थिता तथाऽपि स्वाज्ञानमेव घनं तम इव तदेव हग्रूपस्याऽऽत्मनः पटल
इव चक्षुरावरकमांसखण्ड इव तेन हि हगावियत इव तदन्वयादधि-
कारित्वमापन्नेत्यर्थः ॥ ५५४ ॥

अ० टी०—यदि प्रतीच एवाधिकारित्वमिष्यते तर्हि तस्य स्वाभाविकमेतदिष्यतां
किमध्यासकल्पनयेत्याशङ्क्य स्वतोऽसंभवादित्युक्तं प्रपञ्चयति—अनधिकारितयेति ।
दृशः स्वरसतोऽनधिकारितयाऽवस्थाने हेतुगर्भं विशेषणं—परमेश्वरविग्रहेति । अन-
धिकारिस्वरूपब्रह्मरूपत्वादित्यर्थः । अतोऽध्यासमूलत्वमेव युक्तं परिशेषादित्याह—घनतम
इति । स्पष्टार्थः ॥ ५५४ ॥

सु० टी०—तर्हि न प्रत्यङ्मात्रस्याधिकारित्वं किं तु स्वाध्यस्तलि-
ङ्गविशिष्टस्यैव विशिष्टश्च जड इति कथं तस्य विद्यामुक्ती इति
चेत्तत्राऽऽह—

> अज्ञानतज्जघटना चिदधिक्रियायां
> द्वारं परं भवति नाधिकृतत्वमस्याः ।
> नाचेतनस्य घटतेऽधिकृतिः कदाचि-
> त्कर्तृत्वशक्तिविरहादिति वक्ष्यते हि ॥ ५५५ ॥

अज्ञानेति । चिन्मात्रस्यैवाधिकारित्वे ज्ञानतज्जसंबन्धो द्वारमेव न
तस्याधिकारिकोटिप्रवेश इत्यर्थः । तत्र हेतुमाह—नेति । अचेतनांशस्य
बुद्ध्यादेरधिकर्तव्यगोचरज्ञानाद्यभावादकर्तृत्वमिति 'कर्ता शास्त्रार्थव-
त्त्वात्' [ब्र० सू० २ । ३ । ३३] इत्यत्र सूत्रकृद्वक्ष्यतीत्यर्थः ॥ ५५५ ॥

अ० टी०—एवमपि विशुद्धचिन्मात्रस्याधिकारित्वायोगादध्यस्तानात्मधर्मविशिष्टस्या-
धिकारिता वक्तव्या तथा च तस्यैव मोक्षफलान्वयित्वमपीत्यध्यासनित्यताप्रसङ्ग इति
चेत्तत्राऽऽह—अज्ञानतज्जेति । अज्ञानतज्जघटनाऽविद्यातत्कार्याध्यासंश्चितोऽधिक्रिया-
यामधिकारे द्वारं निमित्तमात्रपरं भवति । अस्या अज्ञानतज्जघटनाया अपि नाधिकृतत्वं
दृगात्मनोऽधिकार उपाधित्वमनात्मसंबन्धस्य न विशेषणत्वमित्यतो नोक्तदोष इत्यर्थः ।
तत्र युक्तिमाह—नाचेतनस्येति । कर्तुरेवाधिकारादचेतनस्य च कर्तृत्वासंभवस्य
रचनानुपपत्तेश्च नानुमानमित्यग्रे वक्ष्यमाणत्वादित्यर्थः ॥ ५५५ ॥

सु० टी०—ननु प्रथमसूत्रे कर्मविचारानन्तर्यस्याथशब्दार्थत्वान्न तस्याधिकारिपरत्वमिति चेन्नेत्याह—

उपसत्तिवाक्यमधिकारिणि य-
त्कथितं समन्विततया प्रथमम् ।
इदमेव चेतसि निधाय तु त-
न्मुनिना प्रकीर्तितमुदारधिया ॥ ५५६ ॥

उपसत्तीति । परीक्ष्य लोकानित्याद्युपसत्तिवाक्यं विशिष्टाधिकारिपरमिति यत्पूर्वमुपससादेत्यादौ कथितं तदर्थमेव चेतसि निधायेदमथात इत्यादि मुनिनोक्तमतस्तादृशस्यैव साधनसंपन्नस्य गुरूपसत्तेर्ब्रह्मविचारविधिसंनिधौ श्रूयमाणाया अपेक्षिताया आनन्तर्यमथशब्दार्थो नानपेक्षितकर्मविचारानन्तर्यमित्यर्थः ॥ ५५६ ॥

अ० टी०—तस्मात्प्रत्यक्चित एवाज्ञानद्वाराऽधिकारित्वादधिकारनिरूपणेन प्रत्यङ्मात्रे त्वंपदस्य वृत्तिनिरूपणाऽऽद्ये सूत्र उपपन्नेति स्थितं तथाऽपि प्रत्यङ्मात्रे त्वंपदस्य वृत्तिकथनमत्र विवक्षितमिति कुतोऽवगम्यत इति चेत्तत्राऽऽह—उपसत्तिवाक्यमिति । अयमर्थः—'अथातो ब्रह्मजिज्ञासा' [ब्र० सू० १ । १ । १] इत्यस्मिन्सूत्रेऽथातःपदाभ्यामधिकार्युक्तो ब्रह्मजिज्ञासापदेन च 'तद्विजिज्ञासस्व' [तै० ३ । १ । १] इति श्रुतिपदमुदाहृतं तत्र च लोण्मध्यमपुरुषेण यो नियुज्यते सोऽत्र साधनचतुष्टयसंपन्नोऽथातःपदाभ्यां सूत्रित इत्यधिकारिसमर्पकमुपसत्तिवाक्यम् । तदेतदाह—अधिकारिणीति । यदुपसत्तिवाक्यं तद्विजिज्ञासस्वेत्यादिरूपं प्रथमं प्रथमसूत्रेऽधिकारिणि समन्विततया यत्कथितं तदिदमेव त्वंपदस्य प्रत्यङ्मात्रे पर्यवसानमित्यस्मदुक्तमेवेति स्वमनसि निधायोदारधिया मुनिना प्रकीर्तितमिति ॥ ५५६ ॥

सु० टी०—कथं तर्हि सूत्रकृता प्रथमसूत्रे शिष्योपसत्तिवाक्यं नोदाहृतमिति चेत्तत्राऽऽह—

शिष्योपसत्तिवचनानि समन्वितानि
शिष्ये चिदात्मनि परात्मनि नित्यमुक्ते ।
इत्येतदत्र कथितं मुनिना त्वमर्थे
त्वंशब्दवृत्तिकथनाय परे प्रतीचि ॥ ५५७ ॥

शिष्येति । तत्र हि 'तद्विजिज्ञासस्व तद्ब्रह्म' [तैत्ति० ३ । १ । १] इत्युदाहृतं तत्र मध्यमपुरुषेण त्वंपदार्थभूतो नियोज्यः साधनसंपन्नोऽथातः-

शब्दाभ्यां समर्पित इत्येवंभूते शिष्ये चिदात्मनि त्वमर्थे सर्वाण्युपसत्तिवाक्यानि समन्वितानीति त्वंपदवृत्तिकथनाय मुनिनोक्तमेवेत्यर्थः ॥ ५५७ ॥

अ० टी०—उक्तमेव स्पष्टयति—शिष्योपसत्तिवचनानीति । परे संघातविलक्षणे प्रतीचि प्रत्यगात्मनि त्वंशब्दवृत्तिकथनायेत्यर्थः । उपसन्नं प्रति तत्त्वमसीत्युपदेशान्महावाक्य उपपन्नस्त्वंशब्दार्थः । अत उपसत्तिवाक्योदाहरणेन त्वंपदवृत्तिविवक्षा लक्ष्यते । स चोपसन्नः शिष्यो नित्यमुक्तः पर एवेति ब्रह्मविपरीतरूपस्य मिथ्यात्वनिरूपणसामर्थ्यसिद्धेर्वाक्यार्थान्वययोग्यप्रत्यङ्मात्रे त्वंपदवृत्तिविवक्षाऽऽद्ये सूत्रे गम्यत इति तात्पर्यार्थः ॥ ५५७ ॥

सु० टी०—ततश्च पदवृत्तिकथनार्थत्वमेव सूत्रयोरित्याह—

उपसदनवचोविचारमार्गा-
त्त्वमितिपदस्य परात्मनीह वृत्तिम् ।
कथयति भगवान्द्वितीयसूत्रे
तदितिपदस्य परात्मनीति भेदः ॥ ५५८ ॥

उपेति । इहाऽऽद्यसूत्रेऽथशब्देनोपसत्तिवाक्यद्वारा त्वंपदस्य वृत्तिमुक्त्वा जन्मादिसूत्रे यत इत्यादिवाक्यार्थविचारेण तत्पदवृत्तिमपि मुनिः कथयतीत्यर्थः ॥ ५५८ ॥

अ० टी०—तस्मात्सिद्धं सूत्रद्वयस्य पदद्वयवृत्तिनिरूपणार्थत्वमित्युपसंहरति—उपसदनेति । परमात्मनि संघातात्परस्मिन्प्रत्यगात्मनि । इह प्रथमसूत्रे पदयोरेवात्र भेदो न पदार्थयोः सरूपेण भेद इति दर्शयितुमुभयत्र परात्मग्रहणमिति द्रष्टव्यम् ॥ ५५८ ॥

सु० टी०—ननु सूत्रद्वयेऽपि पदवृत्तिकथनमात्रेणार्थासिद्धेर्वाक्यार्थबोधोपयोगिनी युक्तिरपि वाच्या तथा च वाक्यभेद इति चेत्तत्राऽऽह—

आवृत्त्या वा तन्त्रवृत्त्याऽथ वेदं
सूत्रं युक्तिं वेदवाक्योपयुक्ताम् ।
अप्याचष्टे बृंहणीमन्तरेण
स्वार्थे युक्तिं वेदवाक्यं न पुष्टम् ॥ ५५९ ॥

आवृत्त्येति । अर्थान्तरविवक्षया पुनरुच्चारणमावृत्तिः । बह्वर्थविवक्षया सकृदुच्चारणं तन्त्रम् । ततश्चेदं सूत्रद्वयं सूत्रत्वेन बह्वर्थसूचकत्वात्

तात्पर्यविषयतत्तदर्थं प्रत्यङ्गत्वेन प्रतिप्रधानं गुणावृत्तिन्यायादावृत्ति-व्याख्यया वा सकृच्छ्रुतस्याप्यर्थद्वयाङ्गत्वेन तन्त्रवृत्त्या वा तत्तद्वेदवाक्योपयुक्तां युक्तिमप्युपदिशतीत्यर्थः । कुत इयं क्लिष्टकल्पनेति चेत्तत्राऽऽह––बृंहणीमिति । स्वार्थे गम्भीरार्थविस्तारिणीं युक्तिं विना वेदवाक्यं न पुष्टं न सम्यग्वाक्यार्थबोधनक्षममित्यर्थः ॥ ५५९ ॥

अ० टी०—ननु कथं वाक्यगतिनिरूपणमात्रेण निमित्तोपादानात्मकमेकमद्वितीयं कारणं सिध्येद्वादिभिस्तु तद्विपरीतस्य कारणस्य युक्तिभिर्निरूपणादिति चेन्नैष दोषो विवक्षितकारणसमर्थनायाऽऽवृत्तेस्तन्त्रेण वा समाश्रयणोपपत्तेरित्याह—आवृत्त्या वेति । जन्माद्यस्य यतो भवति तद्ब्रह्मेति सूत्रवाक्ययोजनायां स्थितायामस्यैव सूत्रस्याऽऽवृत्त्या वा जन्माद्यस्य यतस्तत्र ब्रह्मणोऽर्थान्तरमित्येवं विधयाऽथवा तन्त्रवृत्त्या नान्यद्ब्रह्मणः कारणं जगत इत्यत्रापेक्षितयुक्तीनामपि संग्रहेणोच्चारणं तत्र वृत्तिस्तया वेत्यर्थः । अनेकार्थविवक्षया सकृद्वाक्योच्चारणं तन्त्रमिति तल्लक्षणमुक्तस्यैव वाक्यस्य तदर्थोपपादनपरतया पुनरुच्चारणमावृत्तिरिति तद्विवक्षा । इत्थमक्षरयोजना–' जन्माद्यस्य यतः ' [ ब्र० सू० १ । १ । २ ] इतीदं सूत्रमावृत्त्या वा तन्त्रवृत्त्याऽथ वा वेदवाक्योपयुक्तां बृंहणीं युक्तिमप्याचष्टे वेदवाक्योपयुक्तिमन्तरेण विनेति वाक्यगताक्षरार्थानुकूलयुक्ति[ व्यति ]रेकेण वेदवाक्यं न पुष्टं तस्मात्तदर्थोपपादकयुक्तिमप्याचष्ट इत्यर्थः ॥ ५५९ ॥

सु० टी०––एवं सूत्राभ्यामुक्तवाक्ययोः पदार्थद्वये तात्पर्यमपेक्षितमुक्त्वा महावाक्यार्थमुक्तवानित्याह—

त्वंपदार्थविषयं समन्वयं
तत्पदार्थविषयं ततः क्रमात् ।
तस्य शेषमपरं च वर्णय-
न्नुक्तवानथ महावचोगतम् ॥ ५६० ॥

त्वमिति । तस्य तत्पदान्वयस्यापेक्षितं शेषं न्यायं सर्वज्ञत्वादिसाधकं तृतीयसूत्रे वर्णयन्नित्यर्थः ॥ ५६० ॥

अ० टी०––एवं महावाक्यगतपदवृत्तिमुक्त्वा क्रमप्राप्तं महावाक्यसमन्वयं निरूपयितुं समन्वयसूत्रमित्याह—त्वंपदार्थविषयमिति । त्वंपदार्थविषयं समन्वयमाद्ये सूत्रे वर्णयंस्ततोऽनन्तरं क्रमात्तत्पदार्थविषयं समन्वयं द्वितीये सूत्रे वर्णयन्नथानन्तरं महावचोगतं समन्वयमुक्तवान्महामुनिरिति योजना । तर्हि मध्ये ' शास्त्रयोनित्वात् ' [ ब्र० सू० १ । १ । ३ ] इतिसूत्रं किमर्थमित्यपेक्षायां तस्योपयोगितामाह—तस्य शेषमपरं हीति ।

अयमर्थः—तस्य जन्मादिसूत्रस्य शेपमर्थसिद्धसर्वज्ञत्वसाधनन्यायेन निःश्वासवदबुद्धिपूर्वसृष्टतया वेदस्यानपेक्षत्वलक्षणप्रामाण्याविरोधेन सकलवेदोपादानतया सर्वावभासकज्ञानस्वरूपत्वसिद्ध्यर्थं वर्णयन्मध्ये 'शास्त्रयोनित्वात्' [ ब्र० सू० १ । १ । ३ ] इतिसूत्रं प्रणीतवानिति ॥ ५६० ॥

सु० टी०—तर्हि तत्पदार्थोपयोगित्वादीक्षत्यधिकरणमप्यादौ स्यादिति चेन्न तेन विनाऽपि तत्सिद्धेरित्याह—

त्वंपदस्य दृशि वृत्तिमद्वये तत्पदस्य च निवेदयन्मुनिः ।
प्रत्यगद्वयपरं समन्वयं शेषिणं पुनरथाब्रवीत्तयोः ॥५६१॥

त्वंपदेति । पदयोरर्थद्वये वृत्तिं निवेद्य तयोः शेषिणं प्रत्यगद्वयाभेदपरं समन्वयमब्रवीदित्यर्थः । पदार्थज्ञानमात्रादज्ञानानिवृत्तेस्तन्निवर्तकममेदज्ञानं फलवत्त्वाच्छेषीति भावः । ईक्षत्यादेर्वादिनिरासमात्रार्थत्वेन पश्चादुक्तिः ॥ ५६१ ॥

अ० टी०—एवं पदद्वयवृत्तिनिरूपणानन्तरं महावाक्यनिरूपणं क्रमप्राप्तमेव स्पष्टयति—त्वंपदस्येति । दृशि प्रत्यगात्मनि त्वंपदस्य वृत्तिमद्वये ब्रह्मणि तत्पदस्य च वृत्तिं निवेदयन्मुनिस्तच्छेषभूतां पदद्वयवृत्तिं प्रथमं निवेदयन्निति यावत् । अथानन्तरं क्रमप्राप्तं तयोः शेषिणं प्रत्यगद्वयपरं समन्वयं प्रत्यगद्वये ब्रह्मण्यैक्यरूपेण समन्वयं पुनरत्रवीदिति योजना । सूत्रत्रयेण पदार्थद्वयपदद्वयशक्यसमन्वयं प्रतिपाद्य चतुर्थसूत्रेण तयोर्वाक्यार्थरूपाखण्डाद्वयानन्दात्मनि समन्वयमब्रवीदित्यर्थः ॥ ५६१ ॥

सु० टी०—समन्वयसूत्रसिद्धानर्थान्संक्षिप्यानुभाषते—

शक्नोति सिद्धमवबोधयितुं च वाक्यं
शक्नोति कार्यरहितं वदितुं च वाक्यम् ।
शक्नोत्यखण्डमवबोधयितुं च वाक्यं
शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥५६२॥

शक्नोतीति । सिद्धार्थे व्युत्पत्तिसमर्थनादित्यर्थः । नियोगादिनिरासाच्चाकार्येऽपि शब्दसामर्थ्यादखण्डार्थसिद्धौ महावाक्यस्य फलपर्यवसानमित्यर्थः ॥ ५६२ ॥

अ० टी०-अथ चतुर्थे सूत्रे वाक्यार्थेऽखण्डे समन्वयमब्रवीदित्यादिना विस्तरेण समन्वयसूत्रार्थस्योपपादितत्वात्तदिदानीं संक्षिप्याऽऽह-शक्नोतीति । मानान्तरनैरपेक्ष्येण सिद्धं ब्रह्मात्मवस्त्ववबोधयितुं समर्थं कार्यरहितमिति कार्यशेषत्वरहितं स्वप्रधानमेवेत्यर्थः । अखण्डमिति भेदसंसर्गरहितमित्यर्थः । मुक्तिफलमिति मुक्तिः फलं यस्य तन्मुक्तिफलं तत्त्वसाक्षात्काररूपं ज्ञानमित्यर्थः । स्वार्थे फलवद्विज्ञानजननसामर्थ्यमिति कर्मशेषपार्थपरत्वमनेन निरस्तम् । एतेऽर्थाः पूर्वमेव निपुणतरन्यायतः प्रतिपादिताः स्मर्तव्या इति भावः ॥ ५६२ ॥

सु० टी०—तदेवं निर्गुणनिरूपणप्रवृत्तोऽपि सगुणवाक्यमपीत्यादिना स्पष्टब्रह्मलिङ्गानां वाक्यानां समन्वयमाद्यपादस्यास्पष्टब्रह्मलिङ्गानामुपास्ये ब्रह्मणि द्वितीयस्य तादृशमेव ज्ञेये ब्रह्मणि तृतीयस्यार्थं सामान्यतः संगृह्याव्यक्ताजादिपदानामपि ब्रह्मविषयत्वं चतुर्थपादार्थं भूमादिपदार्थकथनेनैव सिद्धमभिप्रेत्याध्यायार्थस्य समन्वयनिरूपणस्य फलं वर्णयति—

एतत्समन्वयनिरूपणमेवमस्मि-
न्बुद्धिस्थतामुपगते सति वाक्यजन्यम् ।
विज्ञानमद्वयगतं न ततोऽन्यदन्य-
त्पुंसोऽपराधकृतमित्युदियात्प्रतीतिः ॥ ५६३ ॥

इति श्रीदेवेश्वरपूज्यपादशिष्यश्रीसर्वज्ञात्ममहामुनेः कृतौ संक्षेपशारीरके प्रथमोऽध्यायः ॥ १ ॥

---

एतदिति । फले नियोक्तुमनुवदति । अस्मिन्निरूपण एवमुक्तरीत्या बुद्धिस्थे सति प्रत्यगद्वयाभेदज्ञानं तदेव वाक्यजमन्यत्तु यद्भेदविषयमापातज्ञानं न तद्वाक्योत्थं किं तु तात्पर्याज्ञानविजृम्भितमिति निश्चयो भवेदित्यर्थः । विचारादपराधविधूनने तु वाक्यान्मुक्तिफला धीरिति भावः ॥ ५६३ ॥

महाव्रताग्निचिन्मिश्रपुरुषोत्तमनिर्मितौ ।
शारीरकसुबोधिन्यामध्यायः प्रथमोऽगमत् ॥ १ ॥
इति संक्षेपशारीरकव्याख्यायां सुबोधिन्यां प्रथमोऽध्यायः ।

---

१ क ग. र्गुणानि । २ ग. 'तीचि ।

अ० टी०—एवं सूत्रत्रयार्थं विस्तरेण प्रतिपाद्य 'ईक्षतेर्नाशब्दम्' ब्र० सू० १। १। ५ इत्याद्युत्तरसूत्रगतन्यायसंदर्भं भाष्योक्तमेव सिद्धवत्कृत्य समन्वयाध्यायमुपसंहरति—**एतत्समन्वयनिरूपणमिति**। यथाशास्त्रं यथान्यायमस्माभिः कृतमिति शेषः। समन्वयनिरूपणफलमाह—**एवमिति**। एवमुक्तप्रकारेण समन्वये बुद्धिस्थतामुपगते सत्यधीतस्वाध्यायस्य समधिगतशब्दन्यायतत्त्वस्य पुंसो यद्वाक्यजन्यं शब्दस्वारस्यजन्यं विज्ञानं तदद्वयगतं प्रत्यग्ब्रह्मैक्यगतं ततोऽन्यन्न भवत्यर्थान्तरगतं न भवत्येवान्यत्तद्विरुद्धार्थविषयमनेकविधं यद्विज्ञानं तत्पुंसोऽपराधकृतं पुरुषदोषनिबन्धनमेवेत्येव प्रतीतिः प्रत्यय उदियादुत्पद्येतेति योजना। वेदान्तवाक्यरूपप्रमाणगतासंभावनापोहेन वाक्यार्थे बुद्धिनियमासिद्धिः समन्वयविचारफलमित्यर्थः ॥ ५६३ ॥

इति श्रीकृष्णतीर्थशिष्यरामतीर्थकृतायां संक्षेपशारीरकटीकायामन्वयार्थप्रकाशिकायां समन्वयाभिधः प्रथमोऽध्यायः समाप्तः ॥ १ ॥

